# HIKITSASARASA[illegible]

A TREATISE

ON

# HINDU MEDICINE

BY

BANGA SENA.

EDITED AND PUBLISHED BY

*ANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

SECOND EDITION.



CALCUTTA

PRINTED AT THE SIDDHESWAR PRESS.

1893.

b had From Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

## …मुद्रितसंस्कृतपुस्तकानि।

| | |
|---|---|
| … | २ |
| …म् | ॥० |
| …सटीक | २ |
| …न (धातुपा:) | ।० |
| …व्याकरणं वा कातन्त्र | २ |
| …रूपादर्श: | १॥० |
| परिभाषेन्दुशेखर सटीक | १ |
| ८ मुग्धबोधव्याकरणम् सटीक | १॥० |
| ९ वाक्यमञ्जरी (वङ्गाक्षरै:) | ।० |
| १० वैयाकरणभूषणसार | ॥।० |
| ११ लघुकौमुदीव्याकरणम् | ॥० |
| १२ लिङ्गानुशासनं सटीक | ।० |
| १३ शब्दरूपादर्श: | ॥० |
| १४ शब्दार्थरत्नम् | ॥।० |
| १५ सारस्वतव्याकरण सटीक पूर्वार्धम् | १ |
| १६ सारस्वतव्याकरणं सटीक उत्तरार्द्धं | २ |
| १७ सिद्धान्तकौमुदी सरलासहिता | १० |
| १८ ऋतुसंहार काव्य सटीक | ।/ |
| १९ काव्यसंग्रह मूलमात्र | ५ |
| २० काव्यसंग्रह सटीक प्रथमभाग: | ३ |
| २१ काव्यसंग्रह सटीक द्वितीयभाग: | २ |
| २२ काव्यसंग्रह सटीक तृतीयभाग: | २ |
| २३ किरातार्जुनीयकाव्य सटीक | १॥० |
| २४ कुमारसम्भवकाव्यपूर्वखण्ड सटीक | ॥० |
| २५ कुमारसम्भवकाव्य उत्तरखण्डसटीक | ॥ |
| २६ गीतगोविन्द काव्य सटीक | ॥० |
| २७ चन्द्रशेखरचम्पूकाव्य | ३ |
| २८ नलोदय काव्य सटीक | ।/ |
| २९ नैषधचरितम् काव्य सम्पूर्ण सटीक | … |
| ३० नैषधकाव्य नवमसर्गपर्य्यन्त सटीक | २॥ |
| ३१ पुष्पबाणविलास काव्य सटीक | ॥० |
| ३२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ॥० |
| ३३ भट्टिकाव्य टीकाद्वयसहित | २ |
| ३४ भामिनीविलासकाव्य सटीक | ॥० |
| ३५ भामिनीविलास संक्षिप्तटी… | …।० |
| ३६ चम्पूरामायणम् सटीक | १ |
| ३७ (चम्पूरामायणम्) भोजच… | ॥० |
| ३८ शतकावलि: | ॥० |
| ३९ माधवचम्पूकाव्य | ।० |
| ४० मेघदूत मल्लिनाथकृत टीकासहित | ।/ |
| ४१ मेघदूत सटीक सुलभमूल्यकम् | /० |
| ४२ रघुवंश काव्य सटीक | १॥० |
| ४३ रघुवंश मूलमात्र ७,८,१२ सर्गा: | /० |
| ४४ राजप्रशस्ति सटीक | / |
| ४५ शिशुपालवधकाव्य सटीक (माघ) | २ |
| ४६ गद्यकथासरित्सागर सम्पूर्ण | ६ |
| ४७ कादम्बरी विस्तृतव्याख्यासहिता | ३ |
| ४८ दशकुमारचरितगद्यकाव्य सटीक | १ |
| ४९ द्वात्रिंशत्पुत्तलिकासिंहासन | १ |
| ५० पञ्चतन्त्रम् विष्णुशर्मकृत सटीक | १ |
| ५१ बहुविवाहवाद | ।० |
| ५२ वासवदत्ता गद्यकाव्य सटीक | १ |
| ५३ वेतालपञ्चविंशति: (सरलग…) | ॥० |
| ५४ शङ्करविजय | ॥० |
| ५५ भोजप्रबन्ध सरल गद्य | ॥० |
| ५६ हर्षचरित सटीक बाणभट्टकृत | २॥० |
| ५७ हर्षचरितबाणभट्टकृतगद्य | १ |
| ५८ संस्कृतशिक्षामञ्जरी प्रथमभाग: | / |
| ५९ संस्कृतशिक्षामञ्जरी द्वितीयभाग: | … |
| ६० संस्कृतशिक्षामञ्जरी तृतीयभाग: | ॥० |
| ६१ संस्कृतशिक्षामञ्जरी चतुर्थभाग: | ।० |
| ६२ हितोपदेश सटीक | ॥।० |
| ६३ अमरकोष | ॥० |
| ६४ वाचस्पत्यम् (बृहदभिधान) | १०० |
| ६५ मेदिनीकोष | १ |
| ६६ शब्दस्तोममहानिधि: | ८ |
| ६७ अनर्घराघवनाटक सटीक [रुचिर] | २ |
| ६८ अनर्घराघवनाटक मूलमात्र | १ |

# चिकित्सासारसंग्रहः ।

श्रीवङ्गसेनसङ्कलितः ।

पण्डितकुलपतिना

वि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।



द्वितीयसंस्करणम् ।

कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितः ।

इं १८९३ ।

# चिकित्सासारसंग्रहस्य सूचीपत्रम् ।



# चिकित्सासारसंग्रहः।



ध्यात्वा गिरीशमपहाय वचः प्रपञ्चं
वृद्धानुपास्य भिषजस्तदुदाहृतीश्च।
श्रीवङ्गसेनभिषजा खलु वैद्यवृद्ध-
सिद्धप्रयोगनिवहो बहु लिख्यतेऽस्मिन्॥ १॥
नत्वा शिवं प्रथमतः प्रणिपत्य चण्डीं
वाग्देवतां तदनु तातपदं गुरुं च।
संगृह्यते किमपि यत्सुजनैस्तदत्र
चेतो विधातुमुचितं मदनुग्रहाय॥ २॥
हे दुर्जनाः! परगुणेषु भवादृशानां
द्वेषः किमेष सहजो गुणतापहारी।
याञ्चापि दैन्यफलका च वृथा जगत्यां
तादृग्विधस्य पिशुनस्य विमोचनाय॥ ३॥
कान्तिकावासनिर्जात श्रीगदाधरसूनुना।
क्रियते वङ्गसेनेन चिकित्सासारसंग्रहः॥ ४॥
हृदि तिष्ठति यस्यैष चिकित्सासारसंग्रहः।
स निदानचिकित्सायां न दरिद्रात्यसौ भिषक्॥ ५॥
धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च॥ ६॥
तेषां प्रशमनोपायमतिदुर्वारंहसाम्।
ब्रूमहे नातिविस्तीर्णं सनिदानचिकित्सितम्॥ ७॥

अथ निदानपञ्चकमाह।

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ ८ ॥
येनाहारविहारेण रोगाणामुद्भवो भवेत्।
चयो वृद्धिश्च दोषाणां निदानं हि तदुच्यते ॥ ९ ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः।
निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ॥ १० ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः।
लिङ्गमव्यक्तमल्पत्वाद् व्याधीनां तद्यथायथम्।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ११ ॥
हेतुव्याधिविपर्य्यस्ताविपर्य्यस्तार्थकारिणाम्।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ १२ ॥
विद्यादुपशयं व्याधेः सहि सात्म्यमिति स्मृतम्।
विपरीतोऽनुपशयो व्याध्यसात्म्यमिति स्मृतम् ॥ १३ ॥
यथा दुष्टेन दोषेण यथा चानुविसर्पता।
निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्य्यातिरागतिः ॥ १४ ॥
संख्याविकल्पप्राधान्यबलकालविशेषतः।
सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ १५ ॥
दोषाणां समवेतानां विकल्पोऽंशांशकल्पना।
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ १६ ॥
हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम्।
नक्तन्दिनर्तुभुक्तांशैर्व्याधिकालो यथा बलम् ॥ १७ ॥
इति प्रोक्तो निदानार्थस्तद्व्यासेनोपदिश्यते।
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ १८ ॥
निदानार्थकरो रोगो रोगस्याप्युपजायते।

तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्य्यते ॥
रक्तपित्ताज्ज्वरस्ताभ्यां श्वासश्चाप्युपजायते ॥ १९ ॥
प्लीहाभिवृद्ध्या जठरं जठराच्छोफ एव च।
अर्शोभ्यो जाठरं दुःखं गुल्मश्चाप्युपजायते ॥ २० ॥
प्रतिश्यायाद्भवेत्कासः कासात्सञ्जायते क्षयः।
क्षयरोगस्य हेतुत्वे शोषश्चाप्युपजायते ॥ २१ ॥
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः।
उभयार्थकरा दृष्टास्तथैव कार्य्यकारिणः ॥ २२ ॥
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा निवर्त्तते।
न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च ॥ २३ ॥
एवं कृच्छ्रतमो नृणां दृश्यते व्याधिसङ्करः।
तस्माद्यत्नेन सद्वैद्यैरिच्छद्भिः सिद्धिमुत्तमाम्।
ज्ञातव्यो वक्ष्यते योऽयं ज्वरादीनां विनिश्चयः ॥ २४ ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततःकर्म भिषक्पश्चात् ज्ञानपूर्वं समाचरेत् ॥ २५ ॥
यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥ २६ ॥
अथौषधविधानज्ञः सर्वभैषज्यकोविदः।
देशकालप्रमाणज्ञस्तस्य सिद्धिर्न संशयः ॥ २७ ॥
भैषज्याहारचेष्टानां यो न वेत्ति गुणागुणम्।
न स वेत्ति भिषक् सम्यक् तस्य स्वास्थ्यं हिताहितम् ॥२८॥
आदावन्ते रुजां ज्ञाने प्रयतेत चिकित्सकः।
साध्यासाध्यविभागज्ञस्ततः कुर्य्याच्चिकित्सितम् ॥ २९ ॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः।
देशकालप्रमाणज्ञ स्तस्य सिद्धिर्न संशयः ॥ ३० ॥
दर्शनस्पर्शनप्रश्नैर्व्याधिज्ञानं त्रिधा मतम्।

आदौ दृष्टस्ततः स्पर्शाच्छीतादिप्रश्नतः परम् ॥ ३१ ॥
कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते ।
असाध्यो द्विविधो ज्ञेयो याप्यो यश्चाप्रतिक्रियः ॥ ३२ ॥
याप्याः केचित् प्रकृत्यैव साध्या याप्या उपेक्षिताः ।
स्वभावाद्व्याधयः साध्याः केचिद्याप्या उपेक्षिताः ॥ ३३ ॥
साध्या याप्यत्व मायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणां निष्क्रियावताम् ॥ ३४ ॥
जातमात्रश्चिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः ।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥ २५ ॥
स च प्रकुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तरगतश्चापि विकारान् कुरुते बहून् ॥ ३६ ॥
निवृत्तेऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना ।
क्षीणे मार्गे कृते दोषैः शेषः सूक्ष्म इवानलः ॥ ३७ ॥
कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे ।
कर्मदोषोद्भवाश्चान्ये कर्मजास्ते स्वहेतुकाः ॥ ३८ ॥
यथा शास्त्रन्तु निर्णीतो यथा व्याधिश्चिकित्सितः ।
न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः ॥ ३९ ॥
स्वल्पदोषो गरीयान् यः स ज्ञेयः कर्मदोषजः ।
कर्मक्षयात्कर्मकृतो दोषजः स्वस्वभेषजैः ।
कर्मदोषोद्भवो याति कर्मदोषक्षयात् क्षयम् ॥ ४० ॥
नास्ति रोगो विना दोषैर्यस्मात्तस्माच्चिकित्सकः ।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ ४१ ॥
विकाराणामकुशलो न जिह्रीयात् कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ४२ ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ ४३ ॥

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः।
सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम्॥ ४४॥
न चैकान्ते न निर्दिष्टे शास्त्रे निविशते बुधः।
स्वयमप्यत्र भिषजा तर्कणीयम् चिकित्सता॥ ४५॥
उत्पद्यते हि सावस्था देशकालबलं प्रति।
यस्यां कार्य्यमकार्य्यं स्यात्कर्मकार्य्यञ्च वर्जितम्॥ ४६॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥ ४७॥
वर्षा नभो नभस्यौ तु तत्र वायुः प्रकुप्यति।
पित्तं प्रायेण रक्तञ्च शरदाश्विनकार्त्तिके॥ ४८॥
हेमन्तो मार्गपौषौ तु वातलो रूक्ष एव तु।
तद्वच्च शिशिरो माघः फाल्गुनश्च प्रकीर्त्तितः॥ ४९॥
वसन्तश्चैत्रवैशाखौ तस्मिन् श्लेष्मा प्रवर्त्तते।
ज्येष्ठाषाढ़ौ च विख्यातो निदाघः पित्तवानपि॥ ५०॥

अथ जलप्रकरणम्।

यथर्त्तुक्रमनिर्दिष्टजलक्वाथश्च वक्ष्यते।
वर्षासूदकमादाय पचेत्तत्सप्तभागिकम्।
अष्टभागावशिष्टन्तु निर्दोषमुदकं पिबेत्॥ ५१॥
धारापातेन विष्टम्भि दुर्जरं पवनाहतम्।
शृतशीतं त्रिदोषघ्नं वाष्पान्तर्भावितं भुवि॥ ५२॥
प्रावृट् नभो नभस्यौ च ईषोर्जौ तु शरन्मतौ।
मार्गपौषौ तु हेमन्तः शिशिरो माघफाल्गुनौ॥ ५३॥
वसन्तश्चैत्रवैशाखौ निदाघः शुचिः शुक्रभाक्।
प्रावृट्काले शृतं तोयं दद्याच्चाष्टगुणे जले।
अष्टभागावशिष्टन्तु निर्दोषमुदकं पिबेत्॥ ५४॥
शरदि षड्गुणं तोयं दत्त्वा क्वथितमाचरेत्।

षष्ठभागावशिष्टन्तु पिबेद्दोषहरं जलम् ॥ ५५ ॥
हेमन्ते च शृतं तोयं दत्त्वा पञ्चगुणे जले।
पञ्चभागावशिष्टन्तु निर्दोषमुदकं पिबेत् ॥ ५६ ॥
शिशिरे च शृतं तोयं दत्त्वा चतुर्गुणे जले।
चतुर्भागावशिष्टन्तु निर्दोषमुदकं पिबेत् ॥ ५७ ॥
वसन्ते त्रिगुणं तोयं दत्त्वा क्वथितमाचरेत्।
तृतीयभागशिष्टन्तु पिबेद्दोषहरं जलम् ॥ ५८ ॥
ग्रीष्मे च द्विगुणं तोयं दत्त्वा वापि भिषग्वरः।
अर्द्धोदकावशिष्टन्तु पिबेद्दोषहरं जलम् ॥ ५९ ॥
कोपः शरद्वसन्तेषु बहुकालेषु शान्तितः।
कफपित्तानिलाः पूर्वमध्यान्तेषु व्यवस्थिताः।
अथाहोरात्रिभुक्तानां सन्धिष्वपि कफानिलौ ॥ ६० ॥
वायोः प्रत्यूषसायाह्ने जीर्णान्ते च विसर्पणम्।
पित्तस्याह्नो निशश्चार्द्धे जीर्णमाने च लक्षयेत् ॥ ६१ ॥
भुक्तमात्रप्रदोषे तु पूर्वाह्णे श्लेष्मणो भवेत्।
एकद्वित्रिविभागेन दुष्टान् दोषान् विशोधयेत् ॥ ६२ ॥
शीते शीतप्रतीकारमुष्णे चैवोष्णवारणम्।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ६३ ॥
अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया।
क्रियाहीनातिरिक्ता च साध्येष्वपि न सिध्यति ॥ ६४ ॥
यात्युदीर्णं शमयति नान्यव्याधिं करोति च।
सा क्रिया नतु या व्याधिं हृत्वा चान्यमुदीरयेत् ॥ ६५ ॥

इति षड्ऋतुशृतजलपानाध्यायः।

अथ प्रकृतिलक्षणम्।

शुक्रासृग्गर्भिणी भोज्यचेष्टा गर्भाशयान्तरे।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥ ६६ ॥

कृशो रूक्षोऽल्पकेशश्च चलचित्तो न च स्थितः।
बहुवाक् व्योमगः स्वप्ने वातप्रकृतिको नरः॥ ६७॥
अकालपलितो गौरः प्रस्वेदी कोपनो नरः।
स्वप्नेऽपि दीप्तिवत्प्रेक्षी पित्तप्रकृतिको नरः॥ ६८॥
स्थिरचित्तः सुबद्धाङ्गः सुव्रतः स्निग्धमूर्द्धजः।
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः॥ ६९॥
संमिश्रैर्लक्षणैर्ज्ञेया द्वित्रिदोषानुगा नराः।
दोषस्वेद्रससद्भावे व्याधिप्रकृतिकः स्मृतः॥ ७०॥

प्रकृतिमिह नराणां भौतिकीं केचिदाहुः
पवनदहनतोयैः कीर्त्तितास्तास्तु तिस्रः।
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्
शुचिरथ चिरजीवी नाभसः खैर्महद्भिः॥ ७१॥

विषजातो यथा कीटो न विषेण विपद्यते।
तद्वत् प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम्॥ ७२॥
वायुः सामो विबन्धाग्निसादस्तम्भनकूजनैः।
वेदनाशोफनिस्तोदैः क्रमशोऽङ्गानि पीड़येत्॥ ७३॥
विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम्।
स्नेहाद्यैर्वृद्धिमायाति मेघः सूर्य्योदये निशि॥ ७४॥
निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः।
विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः॥ ७५॥
दुर्गन्धं हरितं श्यावं पित्तमम्लरसं गुरु।
अम्लिकाकण्ठहृद्दाहकरं सामं विनिर्दिशेत्॥ ७६॥
आताम्रं पित्तमत्युष्णं रसे कटुकमस्थिरम्।
पक्वं विगन्धि विज्ञेयं रुचि वह्निबलप्रदम्॥ ७७॥
फेनिलस्तन्तुलः श्यावः कण्ठदेशेऽवतिष्ठति।
सामो बलाशो दुर्गन्धः क्षुदुद्गारविघातकृत्॥ ७८॥

फेनवान् पिच्छिलः पाण्डुर्निःसारो बद्ध एव च।
पक्वः स एव विज्ञेयः खेदवान् वक्त्रशुद्धिकृत् ॥ ७९ ॥

अथ देशप्रकृतिमाह।

बहूदकनगोऽनूपः कफमारुतरोगवान्।
जाङ्गलोऽल्पाम्बुशाखी च रक्तपित्तगदोत्तरः ॥ ८० ॥
संश्लिष्टलक्षणोपेतो देशः साधारणो मतः।
समाः साधारणे यस्माद्वर्षाशीतोष्णमारुताः।
समता तेन दोषाणां तस्मात्साधारणो वरः ॥ ८१ ॥
स्वदेशे निचिता दोषास्त्वन्यस्मिन् कोपमागताः।
बलवन्तस्तथा न स्युः जलजा वा स्थलाहृताः ॥ ८२ ॥
उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥ ८३ ॥
मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च।
तथा दुष्परिमृष्टाश्च मोहयेयुश्चिकित्सकान् ॥ ८४ ॥

इति देशप्रकृतिः।

वैद्यो व्याध्युपसृष्टश्च भेषज्यं परिचारकः।
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥ ८५ ॥

इति चिकित्सालक्षणम्।

तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयं कृती।
लघुहस्तः शुचिः शूरः सर्वोपस्करभेषजः ॥ ८६ ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः।
सत्यधर्मरतो यश्च स भिषक् पादमश्नुते ॥ ८७ ॥

इति वैद्यलक्षणम्।

आयुष्मान् सत्यवान् साध्यो द्रव्यवान् मित्रवानपि।
चिकित्स्यो भिषजा रोगी वैद्यवाक्यकृदास्तिकः ॥ ८८ ॥

इति रोगीलक्षणम्।

अथौषधि लक्षणम्।

प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम्।
अल्पमात्रं महावीर्य्यं गन्धवर्णरसान्वितम् ॥ ८९ ॥
दोषघ्नमग्लानिकरमधिकं न विकारि यत्।
समीच्य काले दत्तं च भेषजं स्यात् गुणावहम् ॥ ९० ॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे।
वैद्यवाक्यकृदश्रान्तः पादः परिचरो मतः ॥ ९१ ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक्।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥ ९२ ॥
वैद्यहीना स्त्रयः पादा गुणवन्तो निरर्थकाः।
उद्गातृहोतृब्रह्माणो यथाऽध्वर्युं विनाध्वरे ॥ ९३ ॥
वैद्यस्तु गुणवानेकस्तारयेदातुरं सदा।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥ ९४ ॥

अथ मानम्।

जालान्तरगते भानौ यदणु दृश्यते रजः।
तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षपः ॥ ९५ ॥
षड्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभिः।
गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा ॥ ९६ ॥
चत्वारो माषकाः शाणास्तद्द्वयं कोलसंज्ञितम्।
वटकेन्द्रं चणं चैव कर्षस्तद् द्विगुणो भवेत् ॥ ९७ ॥
अक्षः पिचुः पाणितलं कर्षं तच्च सुवर्णकम्।
विड़ालपदकं तुल्यं किञ्चिच्च कवलग्रहम् ॥ ९८ ॥
द्वाभ्यामर्द्धपलं ताभ्यां शुक्तिश्चापि तदुच्यते।
स्याच्चतुष्कार्षिकं चैव पलं सर्वत्र निश्चितम् ॥ ९९ ॥
तत्प्रकुञ्चपलं मुष्टिस्तथा विल्वं चतुर्थिका।
षोड़शिका समुद्दिष्टा पलमेकं प्रमाणतः ॥ १०० ॥

रक्तिकादिषु मानेषु यावत्तु कुड़वेषु च ।
शुष्कद्रव्यार्द्रयोस्तावत् तुल्यमानं प्रकीर्त्तितम् ॥ १०१ ॥
क्वाथद्रव्यस्य बाहुल्यादुदकं स्वल्पमेव च ।
सम्यक् पाकं न मुञ्चन्ति हीनवीर्य्यन्तु केवलम् ॥ १०२ ॥
आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च ।
शुष्कद्रव्यचतुष्केण कुड़वः समुदाहृतः ॥ १०३ ॥
चतुष्पलास्तु कुड़वः सशरावार्द्ध उच्यते ।
मानिकाष्टौ पलान्येव धरणं दशभिः पलैः ॥ १०४ ॥
द्वाभ्यां पलाभ्यां प्रसृतं तच्च षोड़शकं विदुः ।
खारीच षोड़शद्रोणा दशभिर्धरणैस्तुला ॥ १०५ ॥
चत्वारः कुड़वाः प्रस्थः स शरावद्वयं मतम् ।
पलानि चैव विद्वद्भिः षोड़शैव प्रकीर्त्तिताः ॥ १०६ ॥
प्रस्थाश्चत्वार एव स्युराढ़कोऽष्टशरावकः ।
कंसः स एव विज्ञेयः स तु पात्रं च पण्डितैः ॥ १०७ ॥
अपि मानविदो ह्येषः चतुःषष्टिपलो मतः ।
चत्वारश्चाढ़को द्रोणः स द्वात्रिंशच्छरावकः ॥ १०८ ॥
सूर्पार्द्धनल्वणं चैव कलशो घट एव च ।
अयं च पलसंख्यातः षट्पञ्चाशच्छतद्वयम् ॥ १०९ ॥
द्रोणद्वयं च सूर्पः स्यात् स कुम्भ इति चोच्यते ।
चतुःषष्टिशरावोऽसौ व्यवहारार्थमुच्यते ॥ ११० ॥
स द्वादशपलानीह शतानां पञ्च चोच्यते ।
गोणी द्रोणाश्च चत्वारः स शरावशतं मतम् ।
अष्टाविंशतिसंयुक्तं सर्वथा सूक्ष्मबुद्धिभिः ॥ १११ ॥
पलानां तु सहस्रैकं चतुर्विंशतिकं स्मृतम् ।
प्रस्थादिमानमारभ्य द्रव्यादेर्द्विगुणान्वितम् ।
कुड़वोऽपि क्वचिद्दृष्टं यथादन्ते घृते स्मृते ॥ ११२ ॥

वैणवाश्मायसादीनां भाण्डं तु चतुरङ्गुलम्।
विस्तीर्णमथ वृत्तं च कुड़वं तं विनिर्दिशेत्॥ ११३॥

त्यक्तरोगिणमाह।

चण्डः साहसिको भीतः कृतघ्नो व्यग्र एव च।
यो वैद्यनृपति द्वेष्टा तद्द्वेष्टा शोकपीड़ितः॥ ११४॥
याटृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः।
वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः॥ ११५॥
भिषजामविधेयश्च नोपक्रम्या भिषग्विधाः।
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात्॥ ११६॥
एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः।
नैव कुर्वीत लोभेन चिकित्सापण्यविक्रयम्।
ईश्वराणां वसुमतां लिप्सेतार्थन्तु वृत्तये॥ ११७॥
चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः।
स यत्करोति सुकृतं तत्सर्वं भिषगश्नुते॥ ११८॥

चिकित्सायाः फलमाह।

क्वचिन्मैत्री क्वचिदर्थः क्वचिद्धर्मः क्वचिद्यशः।
कर्माभ्यासः क्वचिच्चैव चिकित्सा नास्ति निष्फला॥११९॥

निषिद्धवैद्यमाह।

कुचैलः कर्कशः स्तब्धः ग्रामीणः स्वयमागतः।
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि॥ १२०॥
सद्वैद्यास्ते न येऽसाध्यानारभन्ते चिकित्सितुम्।
अवैद्यजीविकासिद्धिः स्याद्घुणाक्षरवत् क्वचित्॥ १२१॥
माषान्नं विड्ग्रहे मेहे यवमद्यं मदात्यये।
अबुद्धिपूर्वमप्याशु सेवितं भेषजं भवेत्॥ १२२॥
आयुर्वेदोदितां युक्तिं कुर्वन्ति स्वहिताय ये।
पुण्यायुर्बुद्धिसंयुक्ता नीरोगास्तु भवन्ति ते॥ १२३॥

आयुर्हिताहितं व्याधिनिदानं शमनं तथा ।
विद्यते यत्र विद्वद्भिः स चायुर्वेद उच्यते ॥ १२५ ॥

अथ रोगगणना ।

ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विसूचिका ।
अलसः सविलम्बी च क्रमिरुक् पाण्डुकामलाः ॥ १२५ ॥
हलीमकं रक्तपित्तं राजयक्ष्म उरःक्षतम् ।
कासो हिक्का तथा श्वासः स्वरभेदस्त्वरोचकः ॥ १२६ ॥
छर्दिस्तृष्णा च मूर्च्छा च रोगाः पानात्ययादयः ।
दाहाख्यस्त्वपरोन्माद अपस्मारोऽनिलामयः ॥ १२७ ॥
वातरक्तमूरुस्तम्भ आमवातोऽथ शूलरुक् ।
पङ्क्तिजं शूलमानाह उदावर्त्तोऽथ गुल्मरुक् ॥ १२८ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहो मधुमेहश्च पिटिकाश्च प्रमेहजाः ॥ १२९ ॥
मेदो दोषोदरं शोथो वृद्धिश्च गलगण्डकः ।
गण्डमाला ततो ग्रन्थिरर्बुदं श्लीपदं ततः ॥ १३० ॥
विद्रधिर्व्रणशोफौ च द्वौ व्रणौ भग्ननाड़िकौ ।
भगन्दरोपदंशौ च शूकदोषस्त्वगामयः १३१ ॥
शीतपित्तमुदर्दश्च कोठश्चैवाम्लपैत्तिकः ।
विसर्पश्च सविस्फोटः स्नायुरोग मसूरिका ॥ १३२ ॥
क्षुद्रास्यकर्णनासाक्षिच्छिरः स्त्रीबालकामयाः ।
विषं चेत्ययमेवात्र ज्ञेय उद्देशसंग्रहः ॥ १३३ ॥

## अथ ज्वराधिकारः ।

ज्वरः समस्तरोगाणां यतो राजेति विश्रुतः ।
अतः प्रथमतस्तस्य प्रवक्ष्यामि चिकित्सितम् ॥ १ ॥
दक्षापमानसंक्रुद्धरुद्रनिःश्वाससम्भवः ।
ज्वरोऽष्टधा पृथग् द्वन्द्व सङ्घातागन्तुजः स्मृतः ॥ २ ॥

दुष्टाहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्युः रसानुगाः ॥ ३ ॥
श्रमो रतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छा द्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ ४ ॥
जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ ५ ॥
सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफादन्नारुचिस्तथा ॥ ६ ॥
सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे ।
रूपैरन्यतराभ्यां च संसृष्टैर्द्वन्द्वजं विदुः ॥ ७ ॥
ज्वरस्य पूर्वरूपेषु वर्त्तमानेषु बुद्धिमान् ।
पाययेत घृतं स्वच्छं ततः स लभते सुखम् ॥ ८ ॥
विधिर्मारुतजेष्वेष पैत्तिकेषु विरेचनम् ।
मृदुप्रच्छर्दनं तद्वत् कफजेषु विधीयते ॥ ९ ॥
सर्वं त्रिदोषजेषूक्तं यथा दोषं विकल्पयेत् ।
स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा ।
विकारा युगपत् यस्मिन् ज्वरः स परिकीर्त्तितः ॥ १० ॥
दोषैः सवेगैर्बहुधा समुद्भ्रान्तैर्विमार्गगैः ।
विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः ॥ ११ ॥
रुणद्धि चाप्यपां धातुं यस्मात्तस्माज्ज्वरातुरः ।
भवत्युष्णगात्रश्च न च स्विद्यति सर्वशः ॥ १२ ॥
परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च ।
दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम् ।
क्रोधप्रवातभोज्यांश्च वर्जयेत्तरुणज्वरी ॥ १३ ॥
शोथः छर्दिर्मदो मूर्च्छा तृष्णा भ्रममरोचकः ।
प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात् ॥ १४ ॥

ज्वरितं ज्वरमुक्तं वा भोजयेल्लघुभोजनम्।
श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा।
वेगापायेऽन्यथा तद्धि च ज्वरवेगाभिवर्द्धनम्॥ १५॥
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा॥ १६॥
गुर्वभिष्यन्दकाले च ज्वरी नाद्यात् कथञ्चन।
न तु तस्या हितं भुक्तमायुषे वा सुखाय च॥ १७॥
आनद्धः स्तिमितैर्दोषैर्यावन्तं कालमातुरः।
तावत्कालन्तु लघ्वन्नमश्नीयात् तु विरक्तवत्॥ १८॥
सातत्यात् स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः॥ १९॥
अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम्।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्॥ २०॥

इति तरुणज्वरविधिः।

विनापि भेषजैर्व्याधिः पथ्यादेव निवर्त्तते।
न तु पथ्यविहीनस्य भेषजानां शतैरपि॥ २१॥
शालयो रक्तशाल्याद्याः शस्यन्ते षष्टिकादयः।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः॥ २२॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समकुष्ठकान्।
यूषार्थे यूषसात्म्यानां ज्वरितानां प्रकल्पयेत्॥ २३॥
पटोलपत्रं सफलं कुलकं कारवेल्लकम्।
कर्कोटकं कटिल्लं च विद्याच्छाकं ज्वरे हितम्॥ २४॥
लावान् कपिञ्जलानेणान् पृषतान् शरभान् शशान्।
कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकान्॥
मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत्॥ २५॥
न कषायं प्रशंसन्ति नराणां तरुणज्वरे।

कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः ॥ २६ ॥
दोषाः बद्धा कषायेण स्तम्भितास्तरुणज्वरे ।
स्तभ्यन्ते न विपद्यन्ते कुर्वन्ति विषमज्वरम् ॥ २७ ॥
न च्यवन्ते न पच्यन्ते कषायैस्तम्भिता मलाः ।
तिर्य्यग्विमार्गगा स्थित्वा घोरं कुर्य्युर्नवज्वरम् ॥ २८ ॥

इति पथ्यविधिः ।

आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।
विदधाति ज्वरं घोरं तस्माल्लङ्घनमादिशेत् ॥ २९ ॥
लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले ।
विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते ॥ ३० ॥
शरीरलाघवकरं यद्द्रव्यं कर्म वा पुनः ।
तल्लङ्घनमिति ज्ञेयं बृंहणं तु पृथग्विधम् ॥ ३१ ॥
बलाविरोधेनार्थेनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थो हि क्रियाक्रमः ॥ ३२ ॥
तद्धि मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते ।
कार्य्यं न बाले वृद्धे वा गर्भिण्यां न च दुर्बले ।
न तथाध्वश्रमक्रोधकामशोकभवे ज्वरे ॥ ३३ ॥
सद्योभुक्तस्य वा जाते ज्वरे सामे विशेषतः ।
वमनं वमनार्हस्य पथ्यमित्याह वाग्भटः ॥ ३४ ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ ३५ ॥
स्वेदे जाते रुचौ चैव क्षुत्पिपासा सहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ ३६ ॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशो रुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ ३७ ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्वं वातः क्लमो हृदि ।

देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ ३८ ॥

इति सुलङ्घितादिलक्षणम् ।

तृष्यतः सलिलं चोष्णं दद्याद्वातकफज्वरे ।
तद्धि मार्दवकृद्दोषस्रोतसां शीतमन्यथा ॥ ३९ ॥
पित्तमद्यविषोत्थेषु तिक्तकैः शृतशीतलम् ।
मुस्ता पर्पटकोशीरचन्दनोदीच्यनागरैः ।
शृतं शीतं जलं दद्यात्तृड्दाहज्वरशान्तये ॥ ४० ॥

इति षड़ङ्गपानीयम् ।

पादशेषः कषायः स्यात् प्रसाध्यः षोड़शेऽम्भसि ।
क्वथितोऽन्तः षड़ङ्गादिर्न निषिद्धो नवज्वरे ॥ ४१ ॥
लङ्घिताय हिता पेया यथा स्वं पाचनैः कृता ।
दीपनी पाचनी लघ्वी ज्वरार्त्तानां ज्वरापहा ॥ ४२ ॥
लघुना पञ्चमूलेन पिप्पल्या सह धान्यया ।
महत्या पञ्चमूल्याथ व्याघ्रीदुस्पर्शगोक्षुरैः ॥ ४३ ॥
संसिद्धं भिषगाहारं प्रयुञ्जीत यथाक्रमम् ।
वातपित्ते श्लेष्मपित्ते कफवाते त्रिदोषजे ॥ ४४ ॥
वाते वा सकफे पित्ते सामे वा तरुणज्वरे ।
यवमण्डं प्रशंसन्ति पटोलमगधान्वितम् ॥ ४५ ॥
पेयां वा रक्तशालीनां वस्तिपार्श्वशिरो रुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरीं पिबेत् ॥ ४६ ॥
विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मतीं पिबेत् पेयां ज्वरदोषानुलोमिनीम् ॥ ४७ ॥
कासे श्वासे च हिक्कायां पञ्चमूलीशृतां पिबेत् ॥ ४८ ॥
बला वृक्षाम्लकोलाम्लकलशी धावनी शृता ।
अस्वेदनिद्रातृष्णार्त्तः पिबेत्पेयां सशर्कराम् ॥ ४९ ॥

क्लिन्नां यवागूं मन्दाग्निपिपासार्त्तान्न पाययेत्।
मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफोत्थिते।
ऊर्द्ध्वगे रक्तपित्ते च यवागूर्न हिता ज्वरे॥ ५०॥
तत्र तर्पणमेवाग्रे देयं स्याल्लाजसक्तुभिः।
ज्वरहरैः फलरसैर्युक्तं समधुशर्करैः॥ ५१॥
स्याद्धितः साधितो यूषस्त्वष्टादशगुणे जले।
शृतं पञ्चगुणे भक्तं विलेपे च चतुर्गुणे॥ ५२॥
क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके।
अर्धशृतेन तेनाथ यवाग्वाद्येव कल्पयेत्॥ ५३॥
वृद्धवैद्याः पलं द्रव्यं ग्राहयन्त्याढ़के जले।
भेषजस्यातिबाहुल्यात् कदाचिदरुचिर्भवेत्॥ ५४॥
तदाप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रस्थिकेऽम्भसि।
अर्द्धशृतं प्रयोक्तव्यं पानपेयादिसंविधौ॥ ५५॥
कर्षार्द्धं पिप्पलीशुण्ठ्योः कल्कद्रव्यस्य वा पलम्।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापरान्॥ ५६॥
यूषांश्च रसकांश्चैव कल्केनानेन साधयेत्।
विल्वप्रमाणो घृततैलभृष्टो यूषो रसो वाप्युपकल्पनीयः॥
कषायपानपथ्यान्नैर्द्दशाहेति लङ्घिते।
सर्पिर्दद्यात् कफे क्षीणे वातपित्तोत्तरे ज्वरे॥ ५७॥
पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा।
दशाहात्परतो दाने ज्वरोपद्रववृद्धिकृत्॥ ५८॥
बहुदोषस्य मन्दाग्नेः सप्तरात्रात्परे ज्वरे।
लङ्घनाम्बु यवागूभिर्यदा दोषो न पच्यते॥ ५९॥
तदा तं मुखवैरस्य तृष्णारोचकनाशनैः।
ज्वरघ्नैः पाचनैर्हृद्यैः कषायैः समुपाचरेत्॥ ६०॥

लालाप्रसेकहृल्लासहृदयाशुद्धरोचकाः ।
निद्रालस्या विपाकास्यवैरस्यं गुरुगात्रता ॥ ६१ ॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः ।
आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम् ॥ ६२ ॥
भेषजं ह्यामदोषस्य भूयो वर्द्धयति ज्वरम् ।
शोधनं शमनीयं वा करोति विषमज्वरम् ॥ ६३ ॥
यापयेद्दोषहरणं मोहादामज्वरे तु यः ।
सुसुप्तं कृष्णसर्पं वा कराग्रेण परामृशेत् ॥ ६४ ॥
ज्वरवेगोऽधिका तृष्णा प्रलापश्वसनभ्रमाः ।
मलप्रवृत्ति रुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ६५ ॥
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ॥ ६६ ॥
मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ६७ ॥
दोषप्रवृत्तिवैकृत्यादेतेषां पक्वलक्षणम् ।
पक्वोऽप्यनिर्हृतो दोषो देहे तिष्ठन्महात्ययम् ।
विषमं वा ज्वरं कुर्य्याद्बलव्यापदमेव वा ॥ ६८ ॥
वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः ।
श्लैष्मिको द्वादशाहेन ज्वरः पाकं नियच्छति ॥ ६९ ॥
पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते ।
अचिरज्वरितस्यापि भेषजं दोषपाकतः ॥ ७० ॥
पाययेदातुरं सामं पाचनं सप्तमेऽहनि ।
शमनेनाथवा दृष्ट्वा निरामं समुपाचरेत् ॥ ७१ ॥
पीताम्बुर्लङ्घितः क्षीणोऽजीर्णीभुक्तः पिपासितः ।
न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ७२ ॥
वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् ।

निद्रानाशः चवस्तम्भो गात्राणां रौक्ष्यमेव च ॥ ७३ ॥
शिरो हृद्गात्ररुग्वक्त्रवैरस्यं गाढ़विट्कता।
शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे ॥ ७४ ॥
नागरं देवकाष्ठञ्च धान्यकं वृहतीद्वयम्।
दद्यात्पाचनकं पूर्वं ज्वरितानां ज्वरापहम् ॥ ७५ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा।
सौम्या सौम्यं हिमं हैममाग्नेयं वैन्ध्यमौषधम् ॥ ७६ ॥

सर्वज्वरेषु।

द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ।
ऋते गुड़घृतक्षौद्रधान्य कृष्णाविड़ङ्गतः ॥ ७७ ॥
यत्र येन प्रधानेन द्रव्यं समनुगृह्यते।
तत्संज्ञकः समं योगो भवतीति विनिश्चयः ॥ ७८ ॥
मात्रोत्तमा पलेन स्यात् त्रिभिश्चाक्षैश्च मध्यमाः।
जघन्या स्यात्पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ ७९ ॥
क्वाथद्रव्यपले वारि द्विरष्टगुणमिष्यते।
चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम् ॥ ८० ॥
दीप्तानलं महाकायं दापयेदञ्जलिं जलम्।
अन्ये त्वर्द्धं परित्यज्य प्रसृतिं तु चिकित्सकाः ॥ ८१ ॥
क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम्।
पारम्पर्य्योपदेशेन वृद्धवैद्याः पलद्वयम् ॥ ८२ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलादयः।
ऋषयः सौषधि ग्रामा भूतसङ्घाश्च पान्तु वः ॥ ८३ ॥
रसायणमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमश्नुते ॥ ८४ ॥

अथ औषधकालः।

तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः।

ओषधान् हेमरजतमृद्भाजनपरिस्थितान् ॥ ८५ ॥
पिबेत् प्रसन्नहृदयः पीत्वा पात्रमधोमुखम् ।
निःक्षिप्याचम्य सलिलं ताम्बूलाद्युपयोजयेत् ॥ ८६ ॥

वीर्याधिकं भवति भेषजमन्नहीनं
हन्यात्तथामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवती मृदभिश्च पीतं
ग्लानिं परां समुपयाति बलक्षयञ्च ॥ ८७ ॥

अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ ८८ ॥
औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषान्ने ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ८९ ॥

शीघ्रं विपाकमुपयाति बलं न हिंस्यात्
अन्नावृतं न च मुहुर्वदनान्निरेति ।
प्राग्भुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ९० ॥

विल्वादेः पञ्चमूलस्य क्वाथः स्याद्वातिकज्वरे ।
पाचनं पिप्पलीमूल गुडूची विश्वजोऽथवा ॥ ९१ ॥
न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।
समीकरोति विषमांस्तत् संशमनमुच्यते ॥ ९२ ॥
किराताब्दामृतोदीच्य वृहतीद्वय गोक्षुरैः ।
स स्थिरा कलशी विश्वैः क्वाथो वातज्वरापहः ॥ ९३ ॥
पञ्चमूलीबलारास्ना कुलत्थैः सह पौष्करैः ।
पर्वभेदं शिरःकम्पं निहन्ति पवनज्वरम् ॥ ९४ ॥
पिप्पली शारिवा द्राक्षा बला चांशुमती तथा ।
एषोऽपि परमः सिद्धो वातज्वरविनाशनः ॥ ९५ ॥
द्राक्षा गुडूची काश्मर्य्य त्रायमाणा सशारिवा ।

निष्क्वाथ्य सगुडं क्वाथं पिबेद्वातकृते ज्वरे ॥ ९६ ॥
दर्भं बलां गोक्षुरकं पिबेत्पादावशेषितम्।
शर्कराघृतसंयुक्तं पिबेद्वातज्वरापहम् ॥ ९७ ॥
शर्करा दाड़िमाभ्याञ्च द्राक्षा दाड़िमयोस्तथा।
वैरस्ये धारयेत् कल्कं गण्डूषञ्च तथा हितम् ॥ ९८ ॥
आमं पचेदनिलजे हितो नित्यं रसोदनः।
मुद्रामलकयूषस्तु गाढ़विट्के विधीयते ॥ ९९ ॥

इति वातज्वरः।

तीक्ष्णोष्णदाहतृट् मूर्च्छा मदास्य कटुता भ्रमाः।
प्रलापो घ्राणकण्ठौष्ठमुखपाकोऽक्षिसाश्रुता ॥ १०० ॥
शीताभिलाषिता पीतमलनेत्रनखत्वचः।
पित्तोद्गारातिसारौ च पैत्तिकज्वरलक्षणम् ॥ १०१ ॥
दाहवम्यर्दितं क्षामं निरन्नं तृष्णयान्वितम्।
शर्करा मधुसंयुक्तं पाययेल्लाजतर्पणम् ॥ १०२ ॥
कलिङ्गं कट्फलं मुस्तं पाठा कटुकरोहिणी।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ १०३ ॥
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम्।
चन्दनोशीरश्रीपर्णी परुषकमधूकजः ॥ १०४ ॥
गुडुचीपद्मरोध्राणां शारिवोत्पलयोस्तथा।
शर्करामधुरो क्वाथः शीतः पित्तज्वरापहः ॥ १०५ ॥
दुरालभा पर्पटक पियङ्गु भूनिम्ब वासा कटुरोहिणीनाम्।
जलं पिबेच्छर्करयावगाढ़ं तृष्णा स्रपित ज्वरदाहयुक्तः ॥१०६॥
द्राक्षाभया पर्पटकाब्दतिक्ता क्वाथं स सम्याकफलं विदध्यात्।
प्रलापमूर्च्छाभ्रमदाहमोहतृष्णान्विते पित्तभवेज्वरे तु॥१०७॥
पटोलयवधान्याकमधुकं मधुसंयुतम्।
हन्ति पित्तज्वरं दाहं तृष्णाञ्चैव प्रमाथिनीम् ॥ १०८ ॥

पटोलयवनिःक्वाथो मधुना मधुरीकृतः ।
तीव्रपित्तज्वरोन्मर्दी पानतृट्दाहनाशनः ॥ १०९ ॥
गुडूच्यामलकैर्युक्तः केवलो वापि पर्पटः ।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम् ॥ ११० ॥
रोध्रोत्पलामृतापद्म शारिवाणां सशर्करः ।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ १११ ॥
पर्पटामृतधात्रीणां क्वाथः पित्तज्वरं जयेत् ।
द्राक्षारग्वधयोश्चापि काश्मर्या अथवा पुनः ॥ ११२ ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोशीरनागरैः ॥ ११३ ॥
विश्वपर्पटकोशीर घनचन्दनसाधितम् ।
दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ११४ ॥
गुडूची मुस्तधन्याकं मधूकं कटुरोहिणी ।
तृष्णा शूलारुचिछर्दि पित्तज्वरहरो गणः ॥ ११५ ॥
किरातामृतधान्याक चन्दनोशीरपर्पटैः ।
सपद्मकैः कृतः क्वाथो हन्ति पित्तभवं ज्वरम् ।
दाहं हृल्लासमरुचि मुत्क्लेशवमथूत्कफान् ॥ ११६ ॥
ससितो निशिपर्युषितः प्रातर्धान्याकतण्डुलक्वाथः ।
पीतः शमयत्यचिरादन्तर्दाहं ज्वरं घोरम् ॥ ११७ ॥
चन्दनं मधुकं द्राक्षां कटुकां सदुरालभाम् ।
चन्दनादिगणः प्रोक्तो हन्याद्दाहज्वरारुचिम् ॥ ११८ ॥
मुद्गानामञ्जलीचूर्णं यष्टीमधुकसाधितम् ।
पाक्यं शीतकषायं वा पिबेत्पित्तज्वरापहम् ॥ ११९ ॥
ह्रीवेरं धान्यकं मुस्तं चन्दनं मधुयष्टिका ।
वृषोशीरयुतः क्वाथः शर्करा मधुसंयुतः ।
रक्तपित्तं जयत्युग्रं तृष्णादाहज्वरापहः ॥ १२० ॥

भूनिम्बातिविषा लोध्र मुस्तकेन्द्रयवामृताः।
वासकं नागरं विल्वं कषायो माक्षिकान्वितः।
श्वासं कासञ्च विट्भेदं रक्तपित्तज्वरं जयेत्॥ १२१॥
तिक्ता बालकभूनिम्बश्यामापर्पटवासकैः।
शृतं जलं सितायुक्तं रक्तपित्तज्वरं जयेत्॥ १२२॥
पथ्यां तैलघृतक्षौद्रैर्लिह्याद्दाहज्वरापहाम्।
कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीनपि॥ १२३॥
हर्म्ये शुभ्राभ्रसङ्काशे शशाङ्करशीतले।
मलयोदकसिक्ते वा सुप्यात्पित्तज्वरी नरः॥ १२४॥
जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत्।
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम्॥ १२५॥
हरीतकी प्रियङ्गुश्च पिप्पली लोध्रमेव च।
दार्वी हरिद्रा तेजोह्वा सक्षौद्रामुखधावने॥ १२६॥
एतेन कटुभावाच्च मुखरोगश्च शाम्यति।
वक्त्रं विशदतामेति भक्तच्छन्दश्च जायते॥ १२७॥
मुद्गयूषौदनो देयः सितया पैत्तिके ज्वरे॥

इति पित्तज्वरः।

कासश्वासप्रतिश्याय प्रसेकारुचिच्छर्दयः।
निद्रागुरुत्वं हृल्लासः स्तैमित्यं मधुरास्यता॥ १२८॥
शीतरोमाञ्चिता शौक्ल्यमलाक्षिकरजत्वचम्।
उष्णाभिलाषिता चेति श्लैष्मिकज्वरलक्षणम्॥ १२९॥
मातुलुङ्गशिफा विश्वकायस्था ग्रन्थिकोद्भवम्।
कफज्वरेषु सक्षारं पाचनं वा कणादिकम्॥ १३०॥
त्रिफला त्रिवृता मुस्तं कटुकं सकलिङ्गकम्।
पटोलारग्वधं चैव रोहिणी चित्रकं समम्।
क्वाथः क्षौद्रयुतः श्लेष्मज्वरकासगलामये॥ १३१॥

निम्बविश्वामृता भीरु शठीभूनिम्बपौष्करम् ।
पिप्पली बृहती चेति क्वाथो हन्ति कफज्वरम् ॥ १३२ ॥
कुष्ठमिन्द्रयवं मूर्वा पटोलं वापि साधितम् ।
पिबेन्मरीचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥ १३३ ॥
त्रिफला पटोलवासाछिन्नरुहातिक्तरोहिणीषड्ग्रन्था ।
मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः ॥ १३४ ॥
मात्राक्षौद्रघृतादीनां क्वाथे स्नेहे सुचूर्णवत् ।
सप्तच्छदं गुडूची च निम्बस्फूर्जकमेव च ।
क्वाथयित्वा पिबेत्तोयं सक्षौद्रं कफजे ज्वरे ॥ १३५ ॥
आमलक्यभयाकृष्णाचित्रकश्चेत्ययं गणः ।
सर्वज्वरकफातङ्के भेदी दीपनपाचनः ॥ १३६ ॥
तिक्तानिम्बविषाव्योष शक्राह्वाभिः शृतं जलम् ।
पिबेत्कफज्वरं घोरं हन्ति कासमन्वितम् ॥ १३७ ॥
सिन्धुवारदलक्वाथं कणाढ्यं कफजे ज्वरे ।
जङ्घयोश्च बले क्षीणे कर्णे च पिहिते पिबेत् ॥ १३८ ॥
मुस्तं मधुकवीजानि त्रिफलाकटुरोहिणीम् ।
परूषकादिनिष्क्वाथः कफज्वरविनाशनः ॥ १३९ ॥
कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह ।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ १४० ॥

चातुर्भद्रावलेहिका ।

लिहेज्ज्वरार्त्तस्त्रिफलां पिप्पलीं सममाक्षिकाम् ।
कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ॥ १४१ ॥
कट्फलं पौष्करं शृङ्गीं मुस्तकं कटुकं शठीम् ।
समस्तान्येकशो वापि सूक्ष्मचूर्णानि कारयेत् ॥ १४२ ॥
आर्द्रकस्वरसक्षौद्रैर्लिह्यात्कफविनाशनम् ।
शूलानिलारुचिच्छर्दिकासश्वासक्षयापहम् ॥ १४३ ॥

क्षौद्रोपकुल्यासंयोगः श्वासकासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते ॥ १४४ ॥
कर्षश्चूर्णस्य कल्कस्य गुटिकानाञ्च सर्वशः ।
द्रवः शुक्त्यावलेढव्यः पातव्यश्च चतुर्द्रवः ॥ १४५ ॥
मात्राया नास्त्यवस्थानं दोषमग्निबलं वयः ।
व्याधिकौपञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥ १४६ ॥
अजाज्यशर्करायुक्तो दाड़िमीस्वरसेन तु ।
कदुष्णो मधुनायुक्तः कर्त्तव्यः कवलग्रहः ॥ १४७ ॥
मुद्गयूषौदनश्चापि पेयः कफसमुत्थिते ॥ १४८ ॥

इति श्लेष्मज्वरप्रकरणम् ।

वातापित्तज्वरे देयमौषधं पञ्चमेऽहनि ।
पित्तश्लेष्मज्वरे देयमौषधं सप्तमेऽहनि ॥ १४९ ॥
अत ऊर्द्ध्वञ्च सप्ताहाद्वातश्लेष्मज्वरे पिबेत् ॥ १५० ॥
तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तथा ।
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥ १५१ ॥
संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ।
निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥ १५२ ॥
त्रिफला शाल्मली रास्ना राजवृक्षाटरूषकैः ।
शृतमम्बु हरत्याशु वातपित्तभवं ज्वरम् ॥ १५३ ॥
किराततिक्तममृतां द्राक्षामामलकीं शठीम् ।
निष्क्वाथ्य पित्तानिलजे तं क्वाथं सगुड़ं पिबेत् ॥ १५४ ॥
मधुकं शारिवा द्राक्षा मधुकं चन्दनोत्पलम् ।
काश्मरीफलकं लोध्रं त्रिफला पद्मकेशरम् ॥ १५५ ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।

मधुलाजसितायुक्तं तत्पीतमुषितं निशि ॥ १५६ ॥
वातपित्तज्वरं दाहं तृष्णामूर्च्छारुचिभ्रमान् ।
शमयेद्रक्तपित्तञ्च जीमूतमिव मारुतः ॥ १५७ ॥

इति मधुकादिक्वाथः ।

विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोत्तरं ज्वरम् ॥ १५८ ॥
बला भार्ग्यमृतैरण्डचन्दनोशीरपर्पटैः ।
उपकुल्याब्दह्रीवेरैः कषायञ्च पिबेत्ततः ॥ १५९ ॥
पर्वभेदशिरःकम्पं वातपित्तज्वरं जयेत् ।
गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥ १६० ॥
नीलोत्पलमुशीराणि बलापद्मकमेव च ।
काश्मरीमधुकं द्राक्षा मधुकं सपरूषकम् ॥ १६१ ॥
पेयः शीतकषायोऽयं वातपित्तज्वरापहः ।
सप्रलापं समोहञ्च शमयेत्पैत्तिकं ज्वरम् ॥ १६२ ॥
आरग्वधफलं मुस्तं यष्टीमधुकमेव च ।
उशीरमभया चैव हरिद्रा दारुसाह्वया ॥ १६३ ॥
पटोलं पिचुमर्दश्च तथा कटुकरोहिणी ।
एभिः सिद्धः कषायः स्याद्वातपित्तभवे ज्वरे ॥ १६४ ॥
कफपित्तहरा मुद्गाः कारवेल्लादयस्तथा ।
प्रायेण न तु ते देया वातपित्तोद्भवे ज्वरे ।
शूलोदावर्त्तविष्टम्भजनकाः ज्वरवर्धनाः ॥ १६५ ॥
दाड़िमामलमुद्गानां यूषस्त्वनिलपैत्तिके ।
मुद्गामलकयूषस्तु वातपित्तात्मके हितः ॥ १६६ ॥
महादाहे विधातव्यो यूषः चणकसम्भवः ॥ १६७ ॥

इति वातपित्तज्वरप्रकरणम् ।

मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भौ मुहुर्मुहुः।
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम्।
लिप्ततिक्तास्यता तन्द्रा पित्तश्लेष्मज्वराकृतिः॥ १६८॥
गुडूचीनिम्बधन्याकं पद्मकं चन्दनान्वितम्।
तृष्णादाहज्वरच्छर्दिपित्तश्लेष्मज्वरापहः॥ १६९॥
गुडूचीनिम्बधन्याकं पद्मकं चन्दनानि च।
तृष्णा दाहारुचिच्छर्दिसर्वज्वरहरो गणः॥ १७०॥
पटोलं पिचुमर्दश्च त्रिफला मधुकं बला।
साधितोऽयं कषायश्च पित्तश्लेष्मभवे ज्वरे॥ १७१॥
दीपनं कफविच्छेदि पित्तवातानुलोमनम्।
ज्वरघ्नं पाचनं भेदि सृष्टं धान्यपटोलयोः॥ १७२॥
पटोलं चन्दनं मूर्वा तिक्ता पाठामृता गणः।
पित्तश्लेष्मारुचिच्छर्दि ज्वरकण्डूविषापहः॥ १७३॥
सशर्करामक्षमात्रां कटुकासुष्णवारिणा।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम्॥ १७४॥
त्रिफला त्रायमाणा च मृद्वीका कटुरोहिणी।
पित्तश्लेष्मज्वरे ह्यासां कषायो ह्यनुलोमनः॥ १७५॥
वत्सकं पद्मकाष्ठञ्च नागरं चन्दनामृते।
पटोलं धान्यकञ्चैव क्काथो मधुसमायुतः।
कफपित्तज्वरं शूलं दाहं हन्त्यङ्घ्रिपाणिषु॥ १७६॥
पटोलं बालकञ्चैव मुस्तकं रक्तचन्दनम्।
पाठा मूर्वामृताशुण्ठी चोशीरं कटुरोहिणी।
समभागैः शृतं तोयं सर्वज्वरहरं पिबेत्॥ १७७॥
सनागरं पर्पटकं पिबेद् वा सदुरालभम्।
किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम्।
पाठामुशीरं सोदीच्यं पिबेज्ज्वरस्य शान्तये॥ १७८॥

ज्वरघ्नो दीपनश्चैव कषायो दोषपाचनः।
तृष्णारुचिप्रशमनो मुखवैरस्यनाशनः॥ १७९॥
यवं पर्पटकं धान्यं पटोलं निम्बसाधितम्।
पिबेत्सशर्कराक्षौद्रं पित्तश्लेष्मज्वरापहम्॥ १८०॥
अमृतेन्द्रयवारिष्टं पटोलं कटुरोहिणी।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्।
अमृताष्टकमित्येतत्पित्तश्लेष्मज्वरापहम्॥ १८१॥

इत्यमृताष्टकम्।

कफपित्तवमिकण्डूज्वरविसर्पदाहनुत्।
कषायः परिपीतस्तु शृङ्गवेरपटोलयोः॥ १८२॥
कण्टकार्य्यमृता भार्गी नागरेन्द्रयवासकम्।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी॥ १८३॥
कषायं पाययेदेतत्पित्तश्लेष्मज्वरापहम्।
दाहतृष्णारुचिछर्दिकासहृद्रोगशूलनुत्॥ १८४॥

कण्टकार्य्यादिः।

क्षुद्रामृताभ्यां सह नागरेण
सपुष्करं चैव किराततिक्तम्।
पिबेत्कषायन्त्वथ पञ्चतिक्तं
ज्वरं निहन्त्यष्टविधं समस्तम्॥ १८५॥

भार्गी पुष्करमूलञ्च मुस्तकं कण्टकारिका।
त्रिकण्टकबृहत्यौ च कर्णिनीनागरैः शृतः॥ १८६॥
एष भार्ग्यादिको नाम्ना पित्तश्लेष्मज्वरापहः।
हृल्लासारोचकच्छर्दिं तृष्णादाहविबन्धनुत्॥ १८७॥
नागरेन्द्रयवं मुस्तं चन्दनं कटुरोहिणी।
पिप्पलीचूर्णसंयुक्तं कषायन्तु पिबेन्नरः।
भ्रममूर्च्छारुचिच्छर्दिपित्तश्लेष्मज्वरापहः॥ १८८॥

द्राक्षा शम्याकधान्याक कटुकामुस्तग्रन्थिकः ।
क्वाथो हन्यादुदावर्त्तशूलं पित्तकफज्वरम् ॥ १८९ ॥
पटोलयवधान्याकमुद्गामलकचन्दनम् ।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ १९० ॥
सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः ।
कफपित्तज्वरं हन्ति सास्रक्पित्तं सकामलम् ॥ १९१ ॥
पटोलं पिचुमर्दश्च त्रिफला मधुकं यवाः ।
साधितोऽयं कषायः स्यात्पित्तश्लेष्मभवे ज्वरे ॥ १९२ ॥
मुस्तापर्पटकैरातनिर्यूहेण प्रसाधितः ।
कफपित्तज्वरहरो यूषो धान्यपटोलयोः ॥ १९३ ॥
निम्बकोलकयूषस्तु हितः पित्तकफात्मके ॥

इति पित्तश्लेष्मज्वरप्रकरणम् ।

स्तैमित्यं पर्वणां भेदो निद्रागौरवमेव च ।
शिरोग्रहः प्रतिश्यायः कासः कम्पोऽरुचिस्तथा ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ १९४ ॥
क्षुद्रामृतानागरपुष्कराह्वयैः
कृतः कषायः कफमारुतोत्तरे ।
सश्वासकासारुचि पार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥ १९५ ॥
मुस्तापर्पटकं शुण्ठी गुडूची सदुरालभा ।
कफवातारुचिछर्दिदाहशोषज्वरापहः ॥ १९६ ॥
मातुलुङ्गफलकेसरो घृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जडतामरोचकम् ॥१९७॥
आरग्वधग्रन्थिकमुस्ततिक्ता-
हरीतकीभिः क्वथितः कषायः ।

सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥ १९८ ॥

आरोग्यपञ्चकम् ।

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १९९ ॥

इति पञ्चकोलः ।

किराततिक्तकं मुस्ता गुडूची विश्वभेषजम् ।
चातुर्भद्रकमित्याहुः वातश्लेष्मज्वरापहम् ॥ २०० ॥

चातुर्भद्रकम् ।

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं ज्वरघ्नं प्लीहनाशनम् ॥ २०१ ॥
निम्बामृता विश्वदारु कट्फलं कटुकी वचा ।
कषायं पाययेदाशु वातश्लेष्मज्वरापहम् ॥ २०२ ॥
पर्वभेदः शिरःशूलकासारोचकपीड़ितम् ॥ २०३ ॥
दारुपर्पटभार्ग्यब्दवचाधान्यककट्फलैः ।
साभया विश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः ॥ २०४ ॥
कफवातज्वरे पीतो हिक्काशोषगलग्रहान् ।
श्वासकासप्रमेहांश्च हन्यात्तरुमिवाशनिः ॥ २०५ ॥
दशमूलीरसः पीतः कणाढ्यश्च कफानिले ।
अविपाकेऽतिनिद्रायां पार्श्वरुक् श्वासकासके ॥ २०६ ॥
पर्ण्यौ बृहत्यौ गोकण्टी बिल्वोऽग्निमन्थनोऽरलुः ।
काश्मरी पाटला चेति सन्निपातहरो गणः ॥ २०७ ॥

दशमूलम् ।

तृष्णान्विते वातकफार्त्तिशूले
सश्वासकासारुचिबद्धविट्के ।

हितं जलं दीपनपाचनञ्च
पटोलशुण्ठीयवपिप्पलीनाम् ॥ २०८ ॥
पीनसश्वासवाधिर्य्ये जङ्घापर्वास्थिशूलिनि।
कफवातज्वरे स्वेदं कारयेत्तं विधानवित् ॥ २०९ ॥
खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तबालुकास्वेदः।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ २१० ॥
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम्।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति।
पुष्करमूलयूषस्तु वातश्लेष्मादिके हितः ॥ २११ ॥

वातश्लेष्मज्वरः।

वैरोधिकैरन्नपानैरजीर्णाध्यशनेन च।
व्यामिश्रसेवनाच्चापि सन्निपातः प्रकुप्यति ॥ २१२ ॥
क्षणे दाहः क्षणे शीतमस्थिसन्धिः शिरोरुजा।
सस्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ २१३ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिभ्रमः ॥ २१४ ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम्।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ २१५ ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदिव्यथा।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ २१६ ॥
कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्।
कोष्ठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥ २१७ ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ २१८ ॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २१९ ॥

वातपित्ताधिको यस्य सन्निपातश्च कुप्यति।
तस्य ज्वरो मदस्तृष्णा मुखशोषप्रमीलिकाः।
आध्मानारुचितन्द्राश्च कासश्वासभ्रमक्लमाः॥ २२० ॥
पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति।
अन्तर्दाहो बहिः शीतं तस्य तृष्णा प्रवर्द्धते॥ २२१ ॥
तुद्यते दक्षिणं पार्श्वं मुखशोषगलग्रहाः।
ष्ठीवति रक्तपित्तं च कृच्छ्रात्कण्ठश्च दूयते॥ २२२ ॥
विट्भेदश्वासहिक्काश्च वर्द्धन्ते सप्रमीलिकाः।
विधुः फल्गुश्च तौ नाम्ना सन्निपातावुदाहृतौ॥ २२३ ॥
श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति।
तस्य शीतज्वरो मूर्च्छा क्षुत्तृष्णापार्श्वसंग्रहः॥ २२४ ॥
शूलमस्विद्यमानस्य हिक्काश्वासश्च जायते।
असाध्यः सन्निपातोऽयं शीघ्रमारीति कथ्यते॥
न हि जीवत्यहोरात्रमनेनाविष्टविग्रहः॥ २२५ ॥
कासः श्वासस्तमो मूर्च्छा प्रलापो मोहवेपथुः।
पार्श्वयोर्वेदना जृम्भा कषायत्वं मुखस्य च।
वातोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत्॥ २२६ ॥
एष विस्फोरको नाम्ना सन्निपातः सुदारुणः।
अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च।
गात्रे च विन्दवो रक्ता दाहस्तीव्रः प्रजायते॥ २२७ ॥
पित्तोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत्।
भिषग्भिः सन्निपातोऽयमाशुकारी प्रकीर्त्तितः॥ २२८ ॥
जड़ता गद्गदा वाणी रात्रौ निद्रा भवत्यपि।
प्रस्तब्धे नयने चैव मुखमाधुर्य्यमेव च॥ २२९ ॥
कफोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत्।
मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः॥ २३० ॥

हीनमध्याधिकैर्यस्य वातपित्तकफैः क्रमात्।
सन्निपातः प्रभवति पीड़यन् दोषदर्शनात्॥ २३१॥
अल्पशूलं कटीतोदो मध्यदाहो रुजाभ्रमः।
भृशं क्लमः शिरो वक्त्र मन्याहृदयवाग्रुजः॥ २३२॥
प्रमीलकाः श्वासहिक्का कासजाड्यविसंज्ञताः।
प्रथमोत्पन्नमेतन्तु साधयेत्तु चिकित्सकः॥ २३३॥
एतस्मिन् सन्निपाते तु कर्णमूले सुदारुणा।
पिटका जायते जन्तो र्यया कृच्छ्रेण जीवति॥ २३४॥
सवैदारिकसंज्ञोऽयं सन्निपातः सुदारुणः।
त्रिरात्रात्परमेतस्य व्यर्थमौषधकल्पनम्॥ २३५॥
मध्यहीनाधिकैर्यस्य सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथा दोषबलाश्रयाः॥ २३६॥
अन्तर्दाहो विशेषोऽत्र प्रवक्तुं न च शक्यते।
रक्तमालक्तकेनैव लक्ष्यते मुखमण्डलम्॥ २३७॥
यत्नेनाकर्षितःश्लेष्मा हृदयान्न प्रसिच्यते।
इषुणेवाहतं पार्श्वं तुद्यते खन्यते हृदि॥ २३८॥
प्रमीलका श्वासहिक्का वर्द्धन्ते तु दिने दिने।
जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः॥ २३९॥
विसर्गं नाभिजानाति कूजते च कपोतवत्।
अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठतालुकः॥ २४०॥
तन्द्रानिद्रातियोगार्त्तो हतवह्निर्हतद्युतिः।
न रतिं लभते नित्यं विपरीतानि चेच्छति॥ २४१॥
आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः।
एष कर्कोटको नाम्ना सन्निपातः सुदारुणः॥ २४२॥
प्रवृद्धमध्यहीनैश्च सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथादोषबलाश्रयाः॥ २४३॥

प्रलापायाससम्मोहकम्पमूर्च्छारतिभ्रमाः।
एकपक्षाभिघातस्तु तत्राप्येतद्विशेषतः।
एष सम्मोहको नाम्ना सन्निपातः सुदारुणः॥ २४४ ॥
हीनप्रवृद्धमध्यैस्तु सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथा दोषबलाश्रयाः॥ २४५ ॥
हृदयं दह्यते चास्य यकृत् प्लीहान्त्रफुप्फुसाः।
पच्यन्तेऽत्यर्थमूर्द्ध्वाधः पूयशोणितनिर्गमः॥ २४६ ॥
प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथा रोगबलाश्रयाः।
प्रलापायाससम्मोहः कम्पमूर्च्छारतिभ्रमाः॥ २४७ ॥
मन्यास्तम्भेन मृत्युः स्यात् तत्राप्येतद्विशेषतः।
मध्यप्रवृद्धहीनैश्च सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथा रोग बलाश्रयाः॥ २४८ ॥
मोहप्रलापमूर्च्छाः स्युस्तमः कम्पशिरोग्रहाः।
कासश्वासौ भ्रमस्तन्द्रा संज्ञानाशो हृदि ग्रहः॥ २४९ ॥
खेभ्यो रक्तं विसृजति तत्राप्येतद्विशेषणम्।
अर्वाक् त्रिरात्रान्मृत्युश्च तन्द्री वा स्तब्धलोचनः।
एषां त्रयाणां नामानि याम्यक्रकचपाकलाः॥ २५० ॥
सर्वैर्दोषैः प्रकुपितं सन्निपातं निबोध मे।
त्रयाणामपि दोषाणां सर्वरूपाणि लक्षयेत्॥ २५१ ॥
यानि ज्वरचिकित्सायां रूपाण्युक्तानि कृत्स्नशः।
तैः सर्वैरेव सम्पूर्णैर्विज्ञेयः कूटपाकलः॥ २५२ ॥
व्याधिभ्यो दारुणेभ्यश्च वज्रशस्त्राग्निसन्निभः।
केवलोच्छ्वासपरमः स्तब्धाङ्गः स्तब्धलोचनः॥ २५३ ॥
त्रिरात्रात् परमेतस्य जन्तोर्हरति जीवितम्।
तदवस्थन्तु तं दृष्ट्वा मूढो व्याहरते जनः॥ २५४ ॥

धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये ।
अन्वया ब्रुवते केचिद् यक्षिण्या ब्रह्मराक्षसैः ॥ २५५ ॥
पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हतम् ।
कुलदेवार्चनाहीनं धर्षितं कुलदेवतैः ॥ २५६ ॥
नक्षत्रपीड़ामपरे गरकर्मेति चापरे ।
सन्निपातमिमं प्राहुर्भिषजाः कूटपाकलम् ॥ २५७ ॥
कूटस्थैर्जायते दोषैर्बलिभिः कूटपाकलम् ।
त्रयोदशविधं प्रोक्तं सन्निपातस्य लक्षणम् ॥ २५८ ॥
वर्द्धते वापि हीनस्य क्षीयते चोच्छ्रितस्य च ।
कफस्थानानुपूर्व्या वा सन्निपातज्वरक्रिया ॥ २५९ ॥
हीनस्य वर्धनाद्धानिर्वृद्धयोरिति निश्चयः ।
ह्रायनादतिवृद्धस्य हीनयोर्वृद्धिसम्भवः ॥ २६० ॥
ततः समत्वं दोषाणामामस्थानं कफस्य तु ।
तत्रस्थानां क्रियां तद्वदिति ज्वरविनिर्णयः ॥ २६१ ॥
यथा दोषोच्छ्रयश्चैव ज्वराञ्छेषानुपाचरेत् ।
निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु ।
दुर्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः ॥ २६२ ॥
सन्निपाते क्षुधार्त्तं यो भोजयेत्पिशितौदनम् ।
स कथं भिषगाख्यातिं लभेन्मूढ़ो नराधमः ॥ २६३ ॥
सन्निपाते तु दाहार्त्तं यः सिञ्चेच्छीतवारिणा ।
आतुरः स कथं जीवेद् भिषक् वा स कथं भवेत् ॥ २६४ ॥
सन्निपातेन मनुजं विलपन्तन्तु यो घृतम् ।
पाययेद्भोजयेद्वापि तौ च स्यातामुभौ बधम् ॥ २६५ ॥
सन्निपातेन तृष्यन्तं पार्श्वरुक्तालुशोषिणम् ।
यः पाययेज्जलं शीतं स मृत्युर्नरविग्रहः ॥ २६६ ॥
समुद्रतरणं ह्येतत् वदन्ति भिषगीश्वराः ।

मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता ॥ २६७ ॥
यश्च तत्र भवेत् जेता स जेतामयसङ्कुले ।
सन्निपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ।
कस्तेन न कृतो धर्मः काञ्च पूजां न सोऽर्हति ॥ २६८ ॥
श्लेष्मनिग्रहमेवादौ कुर्य्याद्वाधौ त्रिदोषजे ।
निरस्ते श्लेष्मणि ह्यस्य स्रोतःसूद्घाटितेषु च ।
लाघवं जायते ह्यस्य तृष्णा चैवोपशाम्यति ॥ २६९ ॥
लङ्घनं बालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ २७० ॥
त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥ २७१ ॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित्सहते लङ्घनादिकम् ॥ २७२ ॥
कफपित्ते द्रवे धातू सहेते लङ्घनं महत् ।
आमक्षयादूर्द्ध्वमपि वायुर्न सहते क्षणम् ॥ २७३ ॥
ग्लान्यङ्गगौरवोऽश्रद्धाविकृतिर्हीनलङ्घिते ।
प्रकाङ्क्षालाघवोऽग्लानिः स्वस्थता सुप्रसन्नता ॥ २७४ ॥
उपद्रवनिवृत्तिश्च सम्यग्लङ्घितलक्षणम् ।
सम्मोहः सन्धिशैथिल्यं वातरुक् चातिलङ्घिते ॥ २७५ ॥
शस्तं सुलङ्घितस्यादौ विधाय कवलग्रहम् ॥ २७६ ॥
लाजसक्तुकपथ्यं स्यात्सैन्धवेनावचूर्णितम् ।
तच्चेज्जीर्य्येत्यविघ्नेन रोगी जीवेत्तदा ध्रुवम् ॥ २७७ ॥
इति केचित् ।

रक्तपित्तहरत्वेन दाहज्वरकृते तथा ।
सक्तवः शीतवीर्य्याः स्युर्लाजपूर्वा हिता न ते ॥ २७८ ॥
पाचनो दीपनो लाजमण्डस्तेनोष्ण इष्यते ।

अतोऽयं दशमूलादि साधितोऽयं भिषग्मतः॥ २७९ ॥
पञ्चमुष्टिकयूषेण त्रिकण्टकक्कतेन च।
त्रिदोषशमनात्यर्थं त्रिकण्टेनैव साधयेत्॥ २८० ॥
यवकोलकुलत्थानां मुद्गामलकशुण्ठयोः।
एकैकं मुष्टिमादाय पचेदष्टगुणे जले॥ २८१ ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः।
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे॥ २८२ ॥

इति पञ्चमुष्टिकयूषः।

यवकोलकुलत्थैश्च मुद्गामलकसंयुतैः।
धान्याकविश्वयुक्तैश्च यूषो वातकफापहः॥ २८३ ॥
सप्तमुष्टिक इत्येष सन्निपातज्वरापहः।
कफवातामदोषघ्नः कण्ठहृद्वक्त्रशोधनः॥ २८४ ॥

इति सप्तमुष्टिकः।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम्।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः॥ २८५ ॥
तेनास्य तालुकोष्ठांशमन्यापार्श्वशिरो गलात्।
लीनोऽप्याक्कृष्यते श्लेष्मा लाघवं चास्य जायते॥ २८६ ॥
पर्वभेदो ज्वरो मूर्च्छा निद्राश्वासगलामयाः।
मुखाक्षिगौरवं जाड्यं क्लेशश्चैवोपशाम्यति॥ २८७ ॥
सकृद्द्वित्रिचतुःकुर्य्यात् दृष्ट्वा दोषबलाबलम्।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम्॥ २८८ ॥

इति कवलग्रहः।

सुरसार्जकनिर्यासः समधुव्योषसैन्धवः।
महाश्लेष्मानिलोद्रेक संज्ञानाशविमोक्षणः॥ २८९ ॥
मधूकसारसिन्धूत्थ वचोषणकणाः समाः।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात्संज्ञाप्रबोधनम्॥ २९० ॥

इति मधूकसारादिनस्यम्।

खिन्नमामलकं पिष्ट्वा द्राक्षया सह संसृजेत् ।
विश्वभेषजसंयुक्तं मधुना सह लेहयेत् ॥ २९१ ॥
तेनास्य शाम्यते मूर्च्छाकासः श्वासस्तथैव च ॥ २९२ ॥
अष्टाङ्गं मधुना लिह्यादार्द्रकस्वरसेन वा ।
सम्मोहं दारुणं हन्ति तन्द्राकाससमन्वितम् ॥ २९३ ॥
कट्फलं पुष्करं शृङ्गी व्योषं यासश्च कारवी ।
श्लक्ष्णं चूर्णीकृतञ्चैतन्मधुना सह लेहयेत् ॥ २९४ ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगञ्च नाशयेत् ॥ २९५ ॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजैः रसैः ।
ऊर्द्ध्वजत्रुगदघ्नी या सा सायम् अवलेहिका ।
अधोरोगहरी या सा भोजनात् प्राक् प्रयुज्यते ॥ २९६ ॥

इति अष्टाङ्गावलेहिका ।

मरीचं पिप्पली शुण्ठी पथ्यालोध्रं सपुष्करम् ।
भूनिम्बकटुकाकुष्ठं यवानी कट्फलं तथा ॥ २९७ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
प्रस्वेदे कण्ठरोधे च सन्धौ मर्दनमिष्यते ॥ २९८ ॥
एतदुद्धूलनं प्रोक्तं सन्निपातहरं परम् ।

इति मरीचाद्युद्धूलनम् ।

सर्वेषु सन्निपातेषु न क्षौद्रमवचारयेत् ।
शीतोपचारं क्षौद्रं स्याच्छीतं चात्र विरुध्यते ॥ २९९ ॥
क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्यमिष्यते ।
भिन्नरूपतया तास्तु न कुर्वन्ति हि दूषणम् ॥ ३०० ॥
यदा स्वल्पानिलकफौ तालुक्लोमगतौ स्थितौ ।
कुर्य्यातामधिकं शोषं जिह्वायाः खरतां तथा ॥ ३०१ ॥
तदा तां स्फुटितां जिह्वामुच्छुष्कां मधुपिष्टया ।

द्राक्षया साज्यया चास्यं लेपयेत्सन्निपातिनः ॥ ३०२ ॥
घर्षेज्जिह्वां जड़ां सिन्धुत्र्यूषणैः साम्लवेतसैः ॥ ३०३ ॥

स्वेदोद्गमे भृष्टकुलत्थचूर्ण-
निपातनं शस्तमिति ब्रुवन्ति ।
मृत्युश्च तस्मिन् बहुपिच्छिलत्वात्
शीतेन जन्तोः परितः सरत्वात् ॥ ३०४ ॥
चूर्णं यथा कट्फलकृष्णजीरकं
लोध्रं गवां काननविट् पुरातनम् ।
तिक्ता सपथ्यालवणं तथाञ्जनम्
उद्धूलनं स्वेदविकारजित्परम् ॥ ३०५ ॥

भूनिम्बःकारवी तिक्ता वचा कट्फलजं रजः ।
उद्धूलनं त्रिदोषोत्थे ह्यभिष्यन्दिनि च ज्वरे ॥ ३०६ ॥

इति भूनिम्बाद्युद्धूलनम् ।

विल्वोऽग्निमन्थः श्योनाकः काश्मरी पाटला स्थिरा ।
त्रिकण्टकः पृष्टिपर्णी वृहती कण्टकारिका ।
दशमूलमिदं श्वाससन्निपातज्वरापहम् ॥ ३०७ ॥
अविपाकानिलश्लेष्म तन्द्रा पार्श्वार्त्तिकासनुत् ।
पिप्पलीचूर्णसंयुक्तं हृत्कण्ठग्रहनाशनम् ॥ ३०८ ॥
महान्ति यानि मूलानि काष्ठगर्भाणि यानि च ।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः ॥ ३०९ ॥
दशमूलस्य निर्यूहः कट्फलादि रजो युतः ।
तुल्यार्द्रकरसोपेतो मृत्युकल्पं ज्वरं जयेत् ॥ ३१० ॥
पञ्चमूली किरातादिगणो योज्यस्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया वा कफोत्कटे ॥ ३११ ॥

इति चातुर्भद्रकपञ्चमूलम् ।

चिरज्वरे वातकफोल्बणे वा

त्रिदोषजे वा दशमूलमिश्रः।
किराततिक्तादिगणः प्रयोज्यः
शुद्धार्थिने वा त्रिवृता विमिश्रः॥ ३१२॥
दशमूली शठी शृङ्गी पौष्करं सदुरालभम्।
भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी॥ ३१३॥
अष्टादशाङ्ग इत्येषः सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्का वमीहरः॥ ३१४॥

इति अष्टादशाङ्गक्वाथः।

दशमूली कषायन्तु पुष्कराह्वकणायुतम्।
सन्निपातज्वरे देयं श्वासकासतृषान्विते॥ ३१५॥
वृहती पुष्करं भार्गी शठी शृङ्गी दुरालभा।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ३१६॥
वृहत्यादिगणः प्रोक्तः सन्निपातज्वरापहः।
श्वासादिषु च सर्वेषु हितः सोपद्रवेषु च॥ ३१७॥

इति वृहत्यादिः।

शठीपुष्करमूलं च व्याघ्री शृङ्गी दुरालभा।
गुडूची नागरं पाठा किरातं कटुरोहिणी॥ ३१८॥
एष शठ्यादिको वर्गः सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्तिश्वासे तन्द्रासु शस्यते॥ ३१९॥

इति शठ्यादिः।

शठीपुष्करमूलन्तु गुडूची विश्वभेषजम्।
त्रिकण्टकं त्रायमाणा पिप्पली सदुरालभा॥ ३२०॥
व्याघ्री पर्पटकं रास्नाऽभया कटुकरोहिणी।
देवदारुवचाभार्गीसमभागानि कारयेत्॥ ३२१॥
एष शठ्यादिको वर्गः सन्निपातज्वरापहः।
कासं श्वासं दिवानिद्रां रात्रौ जागरणं तथा।

मुखशोषं तृषां दाहं त्रिदोषञ्च नियच्छति ॥ ३२२ ॥

इति बृहच्छ्याद्यादिः ।

पित्ताधिक्ये तु शठ्यादिर्बृहत्यादिः कफाधिके ।
वातोत्तरे सन्निपाते कट्फलादिः प्रशस्यते ॥ ३२३ ॥
कट्फलाब्दवचापाठापुष्कराजाजिपर्पटैः ।
देवदार्वभया शृङ्गीकणाभूनिम्बनागरैः ॥ ३२४ ॥
भार्गीकलिङ्गकटुकाशठिकतृणधान्यकैः ।
समांशैः साधितः क्वाथो हिङ्ग्वार्द्रकरसैर्युतः ॥ ३२५ ॥
कर्णमूलोद्भवं शोथं हन्ति मन्यागलाश्रयम् ।
कफवातज्वरं श्वासं कासं हिक्कां हनुग्रहम् ॥ ३२६ ॥
दशमूलयुतो ह्येष सन्निपातज्वरं जयेत् ।
अभिन्यासं समस्तञ्च कट्फलादिर्नियच्छति ॥ ३२७ ॥

इति कट्फलादिः ।

दारुनागरभूनिम्ब धान्यतिक्ता कलिङ्गजैः ।
गजाह्वा दशमूलाब्दैर्मृत्युकल्पं ज्वरं जयेत् ॥ ३२८ ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति श्वासहिक्का वमीर्हरेत् ॥ ३२९ ॥

इति अष्टादशाङ्गः ।

गुडूचीचन्दनं पद्मनागरेन्द्रयवासकम् ।
अभयारग्वधोशीरपाठा धान्याब्दरोहिणी ॥ ३३० ॥
कषायं पाययेदेतत् पिप्पलीचूर्णसंयुतम् ।
तन्द्रा कासज्वरश्वासपिपासा दाहनाशनः ॥ ३३१ ॥
विषमूत्रानिलविष्टम्भ त्रिदोषप्रभवस्य च ।
गुडूच्यादिगणो ह्येष पाचनो दीपनः परः ॥ ३३२ ॥

इति गुडूच्यादिः ।

अमृतादशमूलीभ्यां साधितं विधिवज्जलम् ।

सन्निपातज्वरं हन्यात्त्रयोदशविधं नृणाम् ॥ २३३ ॥
विषशुण्ठी दशमूली छिन्ना पाठा च पिप्पलीन्द्रयवैः ।
सकिराततिक्तवासा शमयति हतौजसं सद्यः ॥ २३४ ॥
त्र्यूषणदशमूलशुण्ठी भार्गी छिन्नोद्भवोद्भवः क्वाथः ।
पीतः शमयति सहसा ज्वरमुग्रं सन्निपाताख्यम् ॥ २३५ ॥
द्विपञ्चमूली षड्ग्रन्थी विश्वा गृध्रनखीद्वयम् ।
कफवातहरः क्वाथः सन्निपातहरः परः ॥ २३६ ॥
सिंहास्य पर्पटारिष्टं यष्टिधान्यकनागरम् ।
दारुग्रगन्धेन्द्रयवाः श्वदंष्ट्रा ग्रन्थिकं तथा ॥ २३७ ॥
एषां कषायमहनि सन्निपातज्वरे पिबेत् ।
श्वासातिसारकासघ्नं शूलारुचिहरं परम् ॥ २३८ ॥
कट्फलं त्रिफला दारु चन्दनं सपरुषकम् ।
कटुकं पद्मकोशीरं विपचेत्कार्षिके जले ॥ २३९ ॥
तत्सन्निपातदाहघ्नं पानमात्रे प्रशंसितम् ।
दीर्घकालप्रयुक्तानां ज्वराणाममृतोपमम् ॥ २४० ॥
समुस्तं पञ्चमूलञ्च दद्याद्वातोत्तरे गदे ।
भृशोष्णं वा सुखोष्णं वा दृष्ट्वा दोषबलाबलम् ॥ २४१ ॥
कफोत्तरे बृहत्यादिगणस्य दशमूलजः ।
परुषकाणि त्रिफला देवदारु सकट्फलम् ।
पित्तोत्तरे नृणामेतत् सन्निपाते चिकित्सितम् ॥ २४२ ॥
मुस्ता पर्पटकोशीर देवदारु महौषधम् ।
त्रिफला धन्वयासश्च नीलीकाम्पिल्लकं त्रिवृत् ॥ २४३ ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥ २४४ ॥
अष्टादशाङ्गमुदकं सन्निपातज्वरापहम् ॥ २४५ ॥
पित्तोत्तरे सन्निपाते हितमुक्तं मनीषिभिः ।

मन्या स्तम्भ उरोघाते हनुस्तम्भे शिरोगदे ॥ ३४६ ॥

इत्यष्टादशाङ्गः।

व्योषाब्द त्रिफलारिष्ट पटोली तिक्तवत्सकैः।
सभूनिम्बामृतापाठैस्त्रिदोषज्वरजिज्जलम् ॥ ३४७ ॥
विल्वकं त्रिवृता दन्ती समूलं चतुरङ्गुलम्।
पक्वं कषायं विस्राव्य नीलीचूर्णविमिश्रितम् ॥
ससर्पिष्कं पिबेत्तूर्णं सन्निपाते विरेचनम् ॥ ३४८ ॥
कम्पप्रलापनं यस्य संज्ञानाशश्च दारुणः।
रसैश्च लाववर्त्तैश्च कलिङ्गैः शशतित्तिरैः ॥ ३४९ ॥
तर्पयेत्प्राक् पुराणेन सर्पिषाऽभ्यञ्जयेदपि।
बला रास्ना गुडूच्याद्यैस्तैलैश्च परिषेचयेत् ॥ ३५० ॥
आचितामाशयकफे सन्निपातज्वरे दृढ़े।
शान्तेऽप्यवश्यं तस्याशु तन्द्रा समुपजायते ॥ ३५१ ॥
अभिद्रवरसक्षीर दिवास्वप्ननिषेवणात्।
दुर्बलस्याल्पवातस्य जन्तोः श्लेष्मा प्रकुप्यति ३५२ ॥
वायुमार्गं समावृत्य धमनीरनुसृत्यच।
तन्द्रां सुघोरां जनयेत्तस्या वक्ष्यामि लक्षणम् ॥ ३५३ ॥
उन्मीलिते विनिर्भुग्ने परिवर्त्तिततारके।
भवतस्तस्य नयने लुलिते चलपक्ष्मणी ॥ ३५४ ॥
विवृत्ताननदन्तौष्ठ मुहुरुत्तानशायिनाम्।
पिच्छिलोच्छिन्नतन्तुश्च कण्ठे श्लेष्मास्य गच्छति ॥ ३५५ ॥
कण्ठमार्गावरोधश्च वैकृतं चोपजायते।
सोऽर्वाक् त्रिरात्रं साध्यः स्यादसाध्यस्तु ततः परम् ॥३५६॥
ज्योतिष्मत्यास्तथा तैलं मूलं पिण्डाकरस्य च।
तन्द्राविनाशनं श्रेष्ठं नस्यकर्मणि योजितम् ॥ ३५७ ॥
सैन्धवं श्वेतमरिचं सर्षपः कुष्ठमेव च।

मूत्रेण पिष्टा वत्सस्य नस्यं तन्द्राविनाशनम् ॥ ३५८ ॥
असुराह्वयगन्धस्य विट् चूर्णमधुसंयुतम् ।
अञ्जनाद्बोधयेन्मुग्धं तन्द्रितं सान्निपातिनम् ॥ ३५९ ॥
जातीपुष्पं प्रवालञ्च मरिचं रोहिणी वचा ।
सैन्धवं वत्समूत्रेण तन्द्रानाशनमुत्तमम् ॥ ३६० ॥
अयोरजः श्वेतलोध्रमञ्जनं मरिचं तथा ।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥ ३६१ ॥
सन्निपातज्वरोत्पन्नां युक्त्या तन्द्रां जयेद्भिषक् ।
उपद्रवः कष्टतमो ज्वराणां सविशेषतः ॥ ३६२ ॥
त्रयश्च कुपिता दोषा उरः स्रोतोऽनुगा भृशम् ।
आमा विबद्धा ग्रथिता बुद्धीन्द्रियमनोऽनुगाः ॥ ३६३ ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं नृणाम् ।
प्रस्तब्धगात्रस्त्ववाग्मी नष्टचेष्टो न काङ्क्षते ॥ ३६४ ॥
न च दृष्टिर्भवेत् तस्य समर्था रूपदर्शने ।
न च गन्धरसस्पर्शशब्दांश्चाप्यथ बुध्यते ॥ ३६५ ॥
शिरो लोठयतेऽभीक्ष्ण माहारन्नाभिनन्दति ।
कूजते तुद्यते चैवं प्रतिपत्तिश्च हीयते ॥ ३६६ ॥
कलं प्रभाषते किञ्चिदभिन्यासः स उच्यते ।
प्रत्याख्येयः स भूयिष्ठं कश्चिदेवात्र सिध्यति ॥ ३६७ ॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
ते घ्नन्ति संहिताधातोः पाकान्मुञ्चति चान्यथा ॥ ३६८ ॥
दिवसैर्द्विगुणैः सप्त नवैकादशभिः क्रमात् ॥ ३६९ ॥
दुर्गेऽम्भसि यथा मग्नं भाजनं त्वरया बुधः ।
गृह्णीयात्तलमप्राप्तं तथाभिन्यासपीड़ितम् ॥ ३७० ॥
निद्रोपेतमभिन्यासं क्षिप्रं विद्याद्धत्तौजसम् ॥ ३७१ ॥
कारवीपुष्करैरण्डत्रायन्तीनागरामृता ।

दशमूली शठी शृङ्गी वासा भार्गीपुनर्नवा॥ ३७२॥
तुल्यमूत्रेण निष्क्वाथ्य पीतः स्रोतो विशोधनः।
अभिन्यासज्वरायासमाशु घ्नन्ति समुद्धतम्॥ ३७३॥
मातुलुङ्गाऽश्मभिद्विल्व व्याघ्री पाठा रुबूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ ३७४॥
व्याघ्री दुरालभा भार्गी शठी शृङ्गी सपौष्करम्।
पक्वाम्बुश्लेष्महृद्देयमभिन्यासप्रशान्तये॥ ३७५॥
भार्गीपुष्करमूलञ्च रास्ना विल्वं समुस्तकम्।
नागरं दशमूलञ्च पिप्पली विषसाधितम्॥ ३७६॥
हिङ्ग्वार्द्रकरसोपेतं पिप्पलीचूर्णसंयुतम्।
सन्निपातज्वरं घोरमभिन्यासञ्च दारुणम्।
हृत्पार्श्वशूलमानाहं सद्यः पीतं नियच्छति॥ ३७७॥
वीजपूरकविल्वाश्मभेदकं वृहतीद्वयम्।
सवासकं तथैरण्डं जले चाष्टगुणे शृतम्॥ ३७८॥
पक्वा गोमूत्रसंयुक्तं विडसौवर्चलान्वितम्।
हृद्वस्तिशूलमानाहमभिन्यासे ज्वरे हितम्॥ ३७९॥
दन्तीं द्रवन्तीं वृहतीमैरण्डं वीजपूरकम्।
श्यामां व्याघ्रीञ्च निष्क्वाथ्याभिन्यासे बहुवर्चसि॥ ३८०॥
सिंही व्याघ्रमृता द्राक्षा अजाजी सकटुत्रिकम्।
शृङ्गीविड़ङ्गञ्च समं पक्वा विस्राव्य साधयेत्॥ ३८१॥
घृताक्तैस्तण्डुलैर्भृष्टैः पेयामुष्णां ज्वरी पिवेत्।
हिक्का श्वासी च कासी च तथाभिन्यासपीड़ितः॥
विबद्धवातविण्मूत्रः पानमेतत्प्रयोजयेत्॥ ३८२॥
वृहती पौष्करं भार्गी शठी शृङ्गी दुरालभा।
पक्वा पाने प्रशसन्ति श्लेष्मा तेनोपशाम्यति॥ ३८३॥
त्रिवृद्विशाला कटुका त्रिफलारग्वधैः कृतः।

सच्चारो भेदनः क्काथः पेयः सर्वज्वरापहः ॥ ३८४ ॥
तिक्ताभयात्रिवृद्दन्तीफलं वै राजवृक्षजम् ।
चाराढ्यः सैन्धवोपेतः क्काथो भेदी ज्वरापहः ॥ ३८५ ॥
आर्द्रकस्वरसोपेतं सिन्धूत्थं सकटुत्रिकम् ।
प्रबोधाय मुखे दद्यान्नस्यञ्च मरिचेन वै ॥ ३८६ ॥
मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।
अन्यदा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ ३८७ ॥
शिरीषवीजगोमूत्रकृष्णमरिचसैन्धवैः ।
अञ्जनं स्यात्प्रबोधाय सरसो न शिलावचैः ॥ ३८८ ॥
शिरीषवीजं मरिचं वस्तमूत्रेण तत्समम् ।
अञ्जनं तदभिन्यासे संज्ञा बोधनमिष्यते ॥ ३८९ ॥
मातुलुङ्गरसं तस्य हिङ्गुशुण्ठीयुतं मुखे ।
दद्यात्प्रधमनं तीक्ष्णं कटुतिक्तोपसंहितम् ॥ ४०० ॥
पटोलपत्रं सुषवी बृहती कण्टकारिका ।
मरिचं पिप्पली विल्वं चिरविल्वं सचित्रकम् ॥ ४०१ ॥
करञ्जवीजमञ्जिष्ठा त्रायन्ती विश्वभेषजम् ।
गलप्रबोधनं श्रेष्ठमभिन्यासज्वरापहम् ॥ ४०२ ॥
करञ्जो विल्वमञ्जिष्ठे त्रायन्त्यग्निः पटोलकम् ।
बृहती सुषवीव्योषं क्काथः स्याद्गलशोधनः ॥ ४०३ ॥
चिकित्सिते कृतेऽप्येवं यस्य संज्ञा न जायते ।
ललाटे पादयोर्वापि तस्य दाहः प्रशस्यते ॥ ४०४ ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव विमुच्यते ॥ ४०५ ॥
तं जयेच्छोणितस्रावैः सर्पिःपानप्रलेपनैः ।
प्रदाहैः कफपित्तघ्नैः वमनैः कवलग्रहैः ॥ ४०६ ॥
जीर्णानां रक्तशालिनां ज्वरघ्नक्काथसाधितः ।

प्रसृतस्त्वोदनो द्विस्त्रिः कार्य्यो यूषादिकोऽपि वा ॥४०७॥
स चेज्जीर्य्यत्यविघ्नेन ज्वरी जीवेत्तदा ध्रुवम् ॥ ४०८ ॥
गैरिकं पांशुकं शुण्ठी वचा कट्फलकाञ्जिकैः।
कर्णशोथहरो लेपः सन्निपातज्वरे भृशम् ॥ ४०९ ॥
अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः।
आगन्तुर्जायते दोषैर्यथास्वन्तं विभावयेत् ॥ ४१० ॥
श्यावास्यता विषकृते दाहोऽतीसार एव च।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ ४११ ॥
औषधीगन्धजे मूर्च्छा शिरो रुग्वमथुस्तथा ॥ ४१२ ॥
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम्।
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ॥ ४१३ ॥
भयात् प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः।
अभिचाराभिशापाभ्यां मोहतृष्णा च जायते।
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥ ४१४ ॥
कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ॥ ४१५ ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत्।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ ॥ ४१६ ॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः।
जयेद्भूताभिषङ्गोत्थं मनः स्वास्थ्यैश्च मानसैः ॥ ४१७ ॥
औषधिगन्धविषजौ विषपित्तप्रबाधनैः।
जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक् ॥ ४१८ ॥
क्रोधजे पित्तजित्काम्ये नार्य्याः सद्वाक्यमेव च।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥ ४१९ ॥
कामात् क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः।

याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः ॥ ४२० ॥
विसर्पेण ज्वरो यश्च यश्च विस्फोटकज्वरः ।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरे भवेत् ॥ ४२१ ॥
निम्बदारुकषायं वा हितं सौमनसं तथा ।
श्रमक्षयोत्थे भुञ्जीत घृताभ्यक्तं रसौदनम् ॥ ४२२ ॥
रोगोत्थानप्रकोपाभ्यां यो ज्वरो जायते नृणाम् ।
शमयेत् पाचयेद्वापि यथायोगैश्चिकित्सकः ॥ ४२३ ॥
स्त्रीणामप्यप्रजातानां प्रजातानां तथाऽहितैः ।
स्तन्यावतरणे चैव ज्वरो दोषैः प्रकुप्यति ।
तस्य प्रशमनं कार्य्यं यथादोषविधानतः ॥ ४२४ ॥
अभिघातज्वरे कुर्य्यात् क्रियामुष्णविवर्जिताम् ।
कषायमधुरस्निग्धां यथा दोषमथापि वा ॥ ४२५ ॥
अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः ।
मद्यैर्द्रव्यैश्च सात्म्यैश्च तथा मांसरसौदनैः ॥ ४२६ ॥
व्यधबन्धश्रमात्यध्वभङ्गभ्रंशसमुद्भवान् ।
ज्वरानुपाचरेत् पूर्वं सुस्निग्धक्षीरभोजनैः ॥ ४२७ ॥

इत्यागन्तुकज्वरचिकित्सा ।

दोषोऽल्पो हितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ४२८ ॥
सन्ततो रसधातुस्थः सततो रक्तधातुगः ।
भिषजा चैव विज्ञेयः सोऽन्येद्युः पिशिताश्रितः ॥ ४२९ ॥
मेदो गतस्तृतीयेऽह्नि ह्यस्थिमज्जागतः पुनः ।
कुर्य्याच्चातुर्थिकं घोरमन्तकं रोगसङ्करम् ॥ ४३० ॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ॥ ४३१ ॥
अहोरात्रे सततको द्वौकालावनुवर्त्तते ।

अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ॥ ४३२ ॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः।
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ४३३ ॥
यस्मादनियतात्कालाच्छीतोष्णाभ्यां तथैव च।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥ ४३४ ॥
कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ४३५ ॥
चातुर्थिको दर्शयति प्रभावं द्विविधं ज्वरः।
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः।
मध्यकायन्तु गृह्णाति पूर्वं यस्तु स पित्तजः ॥ ४३६ ॥
विषमज्वर एवान्यश्चातुर्थिकविपर्य्ययः।
अस्थिमज्जागतोदोषश्चातुर्थिकविपर्य्ययः।
स मध्ये ज्वरयत्यह्नि ह्यादावन्ते विमुञ्चति ॥ ४३७ ॥
समौ वातकफौ यस्य हीनपित्तस्य देहिनः।
भवेत्तीक्ष्णो मृदुर्वापि ज्वरस्तस्य तु रात्रिजः ॥ ४३८ ॥
ज्वरास्तु विषमाः सर्वे सन्निपातसमुद्भवाः।
यथोल्वणस्य दोषस्य तेषां कार्य्यं चिकित्सितम् ॥ ४३९ ॥
विषमज्वरनाशाय चिकित्सा वक्ष्यतेऽधुना।
वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः।
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ॥ ४४० ॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥ ४४१ ॥
वमनं पाचनं रूक्षमन्नपानं विलङ्घनम्।
कषायोष्णन्तु विषमे ज्वरे शस्तं कफोत्तरे ॥ ४४२ ॥
त्रायन्ती कटुकानन्ता सारिवाभिः शृतं जलम्।
सन्तताद्ये ज्वरे देयं वातादीनां निवृत्तये ॥ ४४३ ॥

द्राक्षापटोलनिम्बाब्दशक्राह्वा त्रिफलाशृतम् ।
जलं जन्तुः पिबेच्छीतमन्येद्युर्ज्वरशान्तये ॥ ४४४ ॥
पटोलारिष्टमृद्वीकाशम्याकं त्रिफला वृषम् ।
क्वाथ ऐकाहिकं हन्ति शर्करामधुयोजितः ॥ ४४५ ॥
षोड़षाष्टचतुर्भागं वातपित्तकफार्त्तिषु ।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ ४४६ ॥
पटोलेन्द्रयवानन्ता पथ्यारिष्टामृताजलम् ।
ज्वरं सततकं पानं निहन्त्याशु प्रयोजितम् ॥ ४४७ ॥
उशीरं चन्दनं मुस्तं गुडूची धान्यनागरम् ।
अम्भसा क्वथितः पेयः शर्करामधुयोजितः ।
ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ॥ ४४८ ॥
स्थिरासामलकीदारुशिवावृषमहौषधैः ।
शृतं शीतं जलं दद्यात् सितामधुविमिश्रितम् ।
चातुर्थिके ज्वरे तीव्रे मन्दे चैवाथ पावके ॥ ४४९ ॥

शैलूषमण्डनरजः वयसानुरूपं
शुभ्राङ्गवत्ससुरभीपयसा निपीतम् ।
आदित्यवारभवपालदिने नरेण
चातुर्थिकं सुचिरजं जयति क्षणेन ॥ ४५० ॥

कालिङ्गकः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥ ४५१ ॥
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ ४५२ ॥
गुडूच्यामलकं मुस्तमर्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥ ४५३ ॥
कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः ।
नस्यं सर्पिः समायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ४५४ ॥

अगस्त्यपत्रस्वरसेन नस्यं निहन्ति चातुर्थिकमुग्रवीर्य्यम् ॥४५५॥

सहदेवाया मूलं विधिना कण्ठनिबद्धमपहरति।
एकद्वित्रिचतुर्भिर्दिवसैर्भूतज्वरं पुंसाम् ॥ ४५६ ॥

सितवर्षाभूमूलं पयसा पीतं च पैत्तिकं जयति।
चातुर्थिकं सुचिरजं ताम्बूलेनैव भक्षणादथवा ॥ ४५७ ॥

कृष्णामलकीरामठदार्वीवचाराजसर्षपरसोनैः।
छागलमूत्रसुपिष्टैर्नस्यं त्वेकाह्निकादिघ्नम् ॥ ४५८ ॥

वन्दाकं विषजातञ्च तक्रेण विषमज्वरे।
सर्पिषा दधिमण्डेन हिङ्गुना च प्रयोजयेत् ॥ ४५९ ॥

पिप्पली शर्करा क्षौद्रं शृतं क्षीरं घृतं नवम्।
खजेन मथितं पेयं विषमज्वरनाशनम् ॥ ४६० ॥

क्षीराविका रजनिमर्दक सत्रयाणाम्
मूलं ज्वरापहमवश्यमिदं शिखायाम्।
बद्धं दिवाकरदिनेऽप्यथवाष्टमीषु
रात्रिज्वरं हरति रञ्जितसूत्रबद्धम् ॥ ४६१ ॥

घृतं पयः शर्करा च पिप्पली मधुसर्पिषा।
पञ्चसारमिदं देयं मथितं विषमज्वरे ॥
क्षतक्षीणे क्षये कासे हृद्रोगे चापि शस्यते ॥ ४६२ ॥

मुस्तामलकगुडूचीविश्वौषधिकण्टकारिकाक्काथः।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ ४६३ ॥

रसोनकल्कं तिलतैलमिश्रं
योऽश्नाति नित्यं विषमज्वरार्त्तः।
प्रमुच्यते सोऽप्यचिराज्ज्वरेण
वातामयैश्चापि सुघोररूपैः ॥ ४६४ ॥

जीरकं गुड़संयुक्तं विषमज्वरनाशनम्।
अग्निमान्द्यं जयेच्छीघ्रं वातरोगापहं मतम् ॥ ४६५ ॥

क्षीरेण पञ्चवृद्ध्या वा दुग्धान्नाशी कणां पिबेत् ।
यावत्पूर्णं शतं तस्मात्तथा चैवापकर्षयेत् ।
वातास्रश्वासपाण्डुर्शो गुल्मशोफोदरापहम् ॥ ४६६ ॥
विषमज्वरेषु कर्त्तव्यमूर्द्धं चाधश्च शोधनम् ।
शान्तिं नयेत् त्रिवृच्चापि सक्षौद्रा विषमज्वरम् ॥ ४६७ ॥
सुरा समण्डाः पानार्थं भक्ष्यार्थं चरणायुधाः ।
तित्तिराश्च मयूराश्च प्रयोज्या विषमज्वरे ॥ ४६८ ॥
अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
वाराणस्याञ्च यद्दत्तं तत्तदेकाहिके स्मरेत् ॥ ४६९ ॥
योऽसौ सरस्वतीतीरे अपुत्रस्तापसो मृतः ।
तस्मै तिलोदकं दद्यान्मुञ्चत्येकाहिको ज्वरः ॥ ४७० ॥
एतन्मन्त्रेण वाश्वत्थपत्रहस्तः प्रतर्पयेत् ॥ ४७१ ॥
आस्फोटजसहस्रेण दलेन सुकृतां पिबेत् ।
पेयां घृतप्लुतां जन्तुश्चातुर्थिकहरीं त्र्यहम् ॥ ४७२ ॥
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ॥ ४७३ ॥
ऊर्णनाभेश्च जालेन कज्जलं ग्राहयेच्छनैः ।
अञ्जयेन्नेत्रयुगलं द्व्याहिकन्तु ज्वरं जयेत् ॥ ४७४ ॥
निम्बपत्रं वचा कुष्ठं पथ्यासिद्धार्थकं घृतम् ।
विषमज्वरनाशाय गुग्गुलुश्चेति धूपनम् ॥ ४७५ ॥
वैड़ालं वा शकृच्छ्रेष्ठं वेपमानस्य धूपने ।
सहदेवी वचाभद्रानाकुलीभिः प्रधूपनम् ।
प्रदेहोद्वर्त्तनं कुर्यादेभिर्वा ज्वरशान्तये ॥ ४७६ ॥
मयूरचन्द्रकैर्धूपः सर्वज्वरग्रहापहः ॥ ४७७ ॥
पलङ्कषावचाकुष्ठैर्निम्बपत्रयवैर्घृतैः ।
पथ्यासिद्धार्थकैर्धूपः शस्तः सर्वज्वरापहः ॥ ४७८ ॥

पुरध्यामवचासर्जनिम्बार्कागुरुदारुभिः ।
सर्वज्वरहरो धूपः श्रेष्ठोऽयमपराजितः ॥ ४७९ ॥
रुद्रजटा गोशृङ्गं विड़ालविष्ठोरगस्य निर्मोकः ।
मदनफलभूतकेश्यौ वंशत्वग्रुद्रनिर्माल्यम् ॥ ४८० ॥
घृतयवमयूरचन्द्रछागलकरोमाणि सर्षपाः सवचाः ।
हिङ्गुगवास्थिमरिचाः समभागाः छागमूत्रसम्पिष्टाः ॥ ४८१ ॥
धूपनविधिना शमयन्त्येते सर्वान् ज्वरान्नियतम् ।
ग्रहडाकिनीपिशाचप्रेतविकारानयं धूपः ॥ ४८२ ॥

इति माहेश्वरधूपः ।

ज्वरवेगस्य कालञ्च चिन्तयन् ज्वर्य्यते तु यः ।
तस्येष्टैरद्भुतैर्वापि विषयैर्नाशयेत् स्मृतिम् ॥ ४८३ ॥
सततं विषमं वापि चीणस्य सुचिरोत्थितम् ।
ज्वरं सम्भोजनैः पथ्यै ज्वरघ्नैः समुपाचरेत् ॥ ४८४ ॥
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषज्मतम् ॥ ४८५ ॥
बलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत् ।
तिल्वकावापमेतद्धि विषमज्वरनाशनम् ॥ ४८६ ॥
चन्दनं चित्रकं सिंही वत्सकं मुस्तनागरे ।
कटुका त्रायमाणा च धात्र्युशीरे द्विशारिवे ॥ ४८७ ॥
द्राक्षाऽर्द्धपलमात्राणि सौम्यवारेषु संहरेत् ।
चीराढ़कसमायुक्तां सर्पिषोऽर्द्धतुलां पचेत् ॥ ४८८ ॥
चातुर्थिकं हरेत्पीतमुन्मादं विषमज्वरम् ।
त्र्याहिकं श्वासकासौ च सर्वापस्मारमेव च ॥ ४८९ ॥

इति चन्दनाद्यं घृतम् ।

विड़ङ्ग मुस्तत्रिफला मञ्जिष्ठा दाड़िमोत्पलैः ।
श्यामैलवालुकैलाभिः चन्दनामरदारुभिः ॥ ४९० ॥

वर्हिष्ठकुष्ठरजनीपर्णिनीशारिवाद्वयैः ।
हरेणुका त्रिवृद्दन्तीवचातालीशनागरैः ॥ ४९१ ॥
बलाविशालबृहतीमालतीपृश्निपर्णीभिः ।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ ४९२ ॥
चतुर्गुणेन पयसा द्विगुणेन जलेन च ।
एतत्कल्याणकं नाम सर्पिः पक्वं त्रिदोषनुत् ।
विषमज्वरश्वासकासगुल्मोन्मादज्वरापहम् ॥ ४९३ ॥

इति कल्याणघृतम् ।

एतदेव हविः पक्वं जीवनीयोपसंस्कृतम् ।
द्विपञ्चमूलक्वाथेन शतावर्य्याः रसेन च ॥ ४९४ ॥
चतुर्गुणेन पयसा महाकल्याणमुच्यते ।
अपस्मारग्रहं शोषं क्लैव्यं कार्श्यमजीवितम् ॥ ४९५ ॥
घृतमेतन्निहन्त्याशु ये चापि विषमज्वराः ।
जीवनीयगणत्वेन काकोल्यादिगणग्रहः ।
महाकल्याणके कार्य्यो घृते तु दशकार्षिकः ॥ ४९६ ॥

इति महाकल्याणकं घृतम् ।

शुण्ठीकणा चित्रकञ्च चव्यं ग्रन्थिकमेव च ।
कुर्य्यात् पञ्चपलान् भागानेकैकस्य तु कुट्टितान् ॥ ४९७ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
एतैस्तु पलिकैः कल्कैः सैन्धवेन समन्वितैः ॥ ४९८ ॥
षट्पलं नाम विख्यातं विषमज्वरनाशनम् ।
श्वासकासाग्निदौर्बल्य प्रतिश्यायित्वमेव च ।
प्लीहोर्द्ध्ववातश्वयथुपाण्डुरोगांश्च नाशयेत् ॥ ४९९ ॥

इति षट्पलं घृतम् ।

नागरञ्चविकाचारः पिप्पलीमूलचित्रकम् ।
कृष्णा च पलिकान् भागान् घृतप्रस्थे विपाचयेत् ॥५००॥
शृङ्गवेररसं प्रस्थं मस्तुप्रस्थं तथैव च ।

एकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम् ॥ ५०१ ॥
एतान् सर्वज्वरान् हन्ति स्थूलत्वं कुरुते भृशम्।
दुर्नामश्वासकासघ्नं बलवर्णाग्निवर्द्धनम् ॥ ५०२ ॥

इति अमृतषट्पलं घृतम्।

सुवर्च्चिका नागरकुष्ठमूर्वा लाक्षा निशालोहितयष्टिकाभिः।
तैलं ज्वरे षट्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुत्स्यात्॥५०३॥
दध्नः ससारकस्यात्र तक्रं कट्टरमिष्यते।

इति षट्कट्टरतैलम्।

शुक्तारनालैर्दधिमस्तुतक्रैः फलाम्बुभागेन समं हि तैलम्।
कृष्णादिकल्कैर्मृदुवह्निसिद्धमभ्यञ्जनं वातकफज्वराणाम् ॥५०४॥
ऐकाहिकद्वित्रिचतुर्थकानां मासार्द्धमासद्वयमासिकानाम्।
निवारणं तद्विषमज्वराणां तैलन्तु षट्कट्टरकं महत्स्यात् ॥५०५।

कल्के कृष्णादिगणो यथा।

कृष्णा चित्रकषड्ग्रन्था वासकं विषकाघनम्।
ग्रन्थिकैले चातिविषा रेणुकञ्च कटुत्रयम् ॥ ५०६ ॥
यवानी गोस्तनी व्याघ्री भूनिम्बं विल्वचन्दनम्।
भार्गी श्यामा शिवा धात्री स्थिरा मूर्वा सजीरका ॥५०७॥
सर्षपं हिङ्गुकटुकी विड़ङ्गञ्च समांशकम्।
एषः कृष्णादिको नाम्ना गणो ज्वरविनाशनः ॥ ५०८ ॥

इति महाषट्कट्टरतैलम्।

लाक्षारसाढ़के प्रस्थं तैलस्य विपचेद्भिषक्।
मस्त्वाढ़कं समादाय पिष्ट्वा चात्र विनिक्षिपेत् ॥ ५०९ ॥
शतपुष्पा हरिद्रा च मूर्वा कुष्ठं हरेणुकम्।
कटुकं मधुकं रास्ना अश्वगन्धा च दारु च ॥ ५१० ॥
समुस्तं चन्दनं चैव पृथगक्षसमानकैः।
द्रव्यैरेतैस्तु तत्सिद्धमभ्यङ्गं मारुतापहम् ॥ ५११ ॥

विषमाख्यान् ज्वरान् सर्वानाश्वेव प्रशमं नयेत्।
कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम् ॥ ५१२ ॥
त्रिकपृष्ठग्रहं शूलं गात्राणां स्फुटनं तथा।
पाप्मालक्ष्मीप्रशमनं सर्वग्रहनिवारणम् ॥ ५१३ ॥
अश्विभ्यां निर्मितं सम्यक् तैलं लाक्षादिकं त्विदम् ॥

इति लाक्षादितैलम्।

सोमं सानुचरं देवं समातृगणमीश्वरम्।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ ५१४ ॥
त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे।
लक्षणं मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम् ॥ ५१५ ॥

इति विषमज्वरः।

नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥ ५१६ ॥
प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च।
मन्दज्वरविलेपी च सशीतः स्यात्प्रलेपकः ॥ ५१७ ॥
कफवातज्वरप्रोक्तां क्रियां वातबलासके।
प्रयुञ्जीत भिषक् श्लेष्मज्वरघ्नीन्तु प्रलेपके ॥ ५१८ ॥
विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते।
तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते ॥ ५१९ ॥
काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः।
तेनोष्णत्वं शरीरस्य शीतत्वं करपादयोः ॥ ५२० ॥
काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः ॥ ५२१ ॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम्।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥ ५२२ ॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च।

तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥ ५२३ ॥
द्वावेतौ दाहशीतादि ज्वरौ संसर्गजौ मतौ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥ ५२४ ॥

इति दाहशीतादिनिदानम्।

शुण्ठीबराब्दोशीरैश्च पिबेत्तोयं सुसाधितम्।
दाहशीतज्वरहरं पाचनं भिषजां मतम् ॥ ५२५ ॥
शीताभिभूते पुरुषे कुर्य्याच्छीतहरीं क्रियाम्।
दाहाभिभूते तु विधिं कुर्य्याद्दाहविनाशनम् ॥ ५२६ ॥
मधुफाणितमिश्रेण निम्बपत्राम्भसापि वा।
दाहज्वरार्त्तं मतिमान् वामयेत् क्षिप्रमेव च ॥ ५२७ ॥
उत्तानसुप्तस्य गभीरताम्रकांस्यादिपात्रं प्रणिधाय नाभौ।
तत्राम्बुधाराबहुलं पतन्ती निहन्ति दाहं त्वरितं सुशीता॥५२८॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ ५२९ ॥
शतधौतघृताभ्यक्तं लिह्याद्वा यवशक्तुभिः।
कोलामलकसंयुक्तैः शूकधान्याम्लसंयुतैः ॥ ५३० ॥
अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा।
अम्लपिष्टैः सुशीतैश्च पलाशतरुजैर्दिहेत् ॥ ५३१ ॥
वदरीपल्लवोत्थेन फेनेनारिष्टकेन वा।
लिप्तेऽङ्गे दाहतृण्मूर्च्छा सर्वथैव प्रशाम्यति ॥ ५३२ ॥
दाड़िमं वदरं लोध्रं कपित्थं वीजपूरकम्।
पिष्ट्वा मूर्ध्नि प्रलेपोऽयं पिपासादाहनाशनः ॥ ५३३ ॥
कालीयवदरानन्ता यष्टिचन्दनकाञ्जिकैः।
सघृतैः स्याच्छिरोलेपस्तृष्णादाहविनाशनः ॥ ५३४ ॥
स्वरसं मातुलुङ्गस्य संयुक्तं मधुसर्पिषा।
वायुशोषे प्रदेहोऽयं मूर्ध्नि दाहे ससैन्धवः ॥ ५३५ ॥

करवीरस्य पत्त्राणि चन्दनं सारिवातिलः ।
तृष्णाघ्नः शिरसालेप आरणालेन पेषितः ॥ ५३६ ॥
वारिशीतं मधुयुतमाकण्ठाद्वापि पायितम् ।
वामयेत्पाययित्वा तु तेन तृष्णा प्रशाम्यति ॥ ५३७ ॥
पद्मकोत्पलकह्लारमृणालविसपौष्करैः ।
कुमुदोशीरमञ्जिष्ठा पद्मगैरिककट्फलैः ॥ ५३८ ॥
शारिवाद्वयलोध्राब्द चोरीखर्जूरमुस्तकैः ।
धात्रीशतावरीयुक्तैः क्वाथे कल्कैः प्रयोजितैः ॥ ५३९ ॥
सलाक्षाम्भः पयः शुक्तस्वच्छकाञ्जिकमस्तुभिः ।
पक्वं तैलमिदन्त्वच्यं तृष्णादाहज्वरापहम् ॥ ५४० ॥
पद्मप्रभृति यत्र स्युर्द्रव्याणि स्नेहसन्निधौ ।
तत स्नेहसमान्याहुरर्वाक् स्याच्च चतुर्गुणम् ॥ ५४१ ॥

इति पद्मकतैलम् ।

शीते तस्य तु वातघ्नं सुखोष्णाम्भोऽवगाहनम् ।
पट्टकौशेयवासोभिः पत्त्रोर्णादिभिरावृतः ।
निवाते मन्दिरे स्थाप्य कृष्णागुरुसुधूपिते ॥ ५४२ ॥
कायस्था नाकुली तिक्ता वयस्थापुरचोरकैः ।
सहदेवी वचा कुष्ठैः शीतघ्नैर्धूपलेपनैः ॥ ५४३ ॥
एतैरेवौषधैः पिष्टैर्लवणक्षारसंयुतैः ।
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥ ५४४ ॥
सुखोष्णैर्मस्तुगोमूत्रशुक्तैः सेकोऽतिशीतहा ।
सुरसार्जकशिग्रूणां प्रलेपो दलसम्भवः ॥ ५४५ ॥

इति दाहशीतादियुक्तज्वरविधिः ।

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।
रसस्थे तु ज्वरे लिङ्गं दैन्यञ्चास्योपजायते ॥ ५४६ ॥
रक्तनिष्ठीवनं दाहो मोहः छर्दनविभ्रमौ ।

प्रलापः पिड़िकास्तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ५४७ ॥
पिण्डिकोद्वेष्टनं तृष्णासृष्टमूत्रपुरीषता।
उष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ५४८ ॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापः छर्दिरेव च।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ५४९ ॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च।
विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे ॥ ५५० ॥
तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा।
अन्तर्दाहो महाश्वासो मर्मभेदश्च मज्जगे ॥ ५५१ ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे।
शेफसस्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥ ५५२ ॥
रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थोऽपि न जीवति ॥ ५५३ ॥

अथ चिकित्सामाह।

रसस्थे तु ज्वरे तस्मिन् कुर्य्याद्वमनलङ्घने।
सेकः संशमनो लेपो रक्तमोक्षः मसृग्गते ॥ ५५४ ॥
तीक्ष्णं विरेकञ्च तथा कुर्य्यान्मांसगते ज्वरे।
मेदःस्थे मेदसो नाशमस्थिस्थे वातनाशनम् ॥ ५५५ ॥
वस्तिकर्म प्रयोक्तव्यमभ्यङ्गोद्वर्त्तनं तथा।
मज्जाशुक्रे क्रिया नोक्ता मरणं तत्र भाषितम् ॥ ५५६ ॥
कटुका रोहिणी मुस्ता पिप्पलीमूलमेव च।
हरीतकी च तत्तोयमामाशयगते ज्वरे ॥ ५५७ ॥

इति सप्तधातुगतचिकित्सा।

वर्षा शरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥ ५५८ ॥
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।

कुर्य्यात्पित्तञ्च शरदि तस्य चानुबलः कफः ॥ ५५९ ॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ५६० ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव च ।
निदानोक्तानुपशयो विपरीतोपशायिता ॥ ५६१ ॥
अन्तर्दाहोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥ ५६२ ॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ॥ ५६३ ॥
सन्तापो ह्यधिको बाह्य तृष्णादीनाञ्च मार्दवम् ।
वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥ ५६४ ॥
बलवत् स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ५६५ ॥
ज्वरे तुल्यर्त्तु दूष्यत्वं प्रमेहे तुल्यदूष्यता ।
रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम् ॥ ५६६ ॥
न शाम्यति ज्वरो यस्य पक्षादूर्द्ध्वं शरीरिणाम् ।
मन्दवेगानुचारी च स ज्ञेयो जीर्णतां गतः ॥ ५६७ ॥
आसप्तरात्रात्तरुणं ज्वरमाहुर्मनीषिणः ।
मध्यं चतुर्दशाहन्तु पुराणमत उत्तरम् ॥ ५६८ ॥
पुराणेऽपि ज्वरे दोषाः यद्यपथ्यैः पुनस्तथा ।
लङ्घयेत्तत्र तं पश्चाद्यथोक्तां कारयेत् क्रियाम् ॥ ५६९ ॥
निदिग्धिकानागरिकामृतानां तोयं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचक कासशूलश्वासाग्निमान्द्यार्दितपीनसे तु ॥५७०
हन्त्यूर्द्ध्वजान् गदान् प्रायः सायन्तेनोपयुज्यते ॥ ५७१ ॥
पिप्पलीचूर्णसंयुक्तः क्वाथः छिन्नोद्भवोद्भवः ।
जीर्णज्वरकफध्वंसी पञ्चमूलकृतोऽथवा ॥ ५७२ ॥
पिप्पली मधुसंमिश्रं गुडूची स्वरसं पिबेत् ।
जीर्णज्वरकफप्लीहकासारोचकनाशनम् ॥ ५७३ ॥

जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुड़पिप्पली।
कासाजीर्णारुचिश्वास हृत्पाण्डु कृमिरोगनुत्॥ ५७४ ॥
अमृतायाः कषायन्तु शृतं चैव सुशीतलम्।
मधुपादयुतं पीतं जीर्णज्वरहरं परम्॥ ५७५ ॥
अनन्तं बालकं मुस्तं नागरं कटुरोहिणीम्।
सुखाम्बुना प्रागुदयात् पिबेदक्षसमं रवेः।
एष सर्वज्वरं हन्ति दीपयत्याशु चानलम्॥ ५७६ ॥
द्राक्षामृता शठी शृङ्गी मुस्तकं रक्तचन्दनम्।
नागरं कटुकं पाठा भूनिम्बं सदुरालभम्॥ ५७७ ॥
उशीरं धान्यकं पद्मं बालकं कण्टकारिका।
पुष्करं पिचुमन्दञ्च दशाष्टाङ्गमिति स्मृतम्॥ ५७८ ॥
जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम्॥ ५७९ ॥

इति द्राक्षादिक्वाथः।

शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम्।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम्॥ ५८० ॥
मधुना वाथ तैलेन ज्वरघ्नेन प्रयोजयेत्॥ ५८१ ॥
रक्तकरवीरपुष्पं कुष्ठं धात्रीफलं सधान्याम्बु।
कल्कः सुखोष्णो लेपो ज्वरेषु शिरसो रुजं जयति॥५८२॥
हिङ्गुसैन्धवसंयुक्तं नस्यं स्यादनवं घृतम्॥ ५८३ ॥
कणामधुकमृद्वीकाबलाचन्दनशारिवा।
निःक्वाथ्य पयसा पीतो जीर्णज्वरविनाशनः॥ ५८४ ॥
श्वेतजयन्तीमूलं विधिना बद्धं शिखान्तरे हन्ति।
जीर्णज्वरं नराणां खल इव दुरितेन चात्मानम्॥ ५८५ ॥
तिक्ता पर्पटभूनिम्ब मुस्तच्छिन्नरुहां पिबेत्।
अभ्यासेन जयत्येष ज्वरमामृत्युमातुरः॥ ५८६ ॥
धावनं लङ्घनं चिन्ता व्यवायं शोकभीक्रुधः।

एभिरेव च निद्राया नाशः श्लेष्मातिसंचयात् ॥ ५८७ ॥
गुड़ं पिप्पलीमूलस्य चूर्णेनालोड़ितं लिहन् ।
चिरादपि च सन्नष्टां निद्रामाप्नोति मानवः ॥ ५८८ ॥
सायं खिन्नमशेषं कृत्वा वार्त्ताकुमेव पूर्वाह्णे ।
मधुयुतमश्नन् चिरान्नष्टामप्याप्नुयान्निद्राम् ॥ ५८९ ॥
वायसजङ्घामूलं मूलं वा शिरसि काकमाच्याश्च ।
विधृतं निद्राकरणं सुञ्ज्मूलं वाऽशितं सगुड़म् ॥ ५९० ॥
निद्रानाशे प्रकर्त्तव्यं पादयोर्मृदुमर्दनम् ।
तिलतैलारनालाभ्यां शतधौतघृतेन च ॥ ५९१ ॥
छागक्षीरेण विजयां पिष्ट्वा पादौ प्रलेपयेत् ।
तेनायाति पुनर्निद्रा चिरकालगतापि वा ॥ ५९२ ॥
सुस्वरं श्रावयेद्वापि सङ्गीतं मधुरस्वनम् ।
कर्णसम्पूरणाद्वापि निद्रामाप्नोति मानवः ॥ ५९३ ॥
मरिचं लालया घृष्ट्वा कस्तुर्य्याञ्जनमिष्यते ।
त्रिरात्रादपि सन्नष्टां निद्रामाप्नोति मानवः ॥ ५९४ ॥
रक्ताकरवीरपुष्पं कुष्ठं धात्रीफलं सधान्याम्बु ।
कल्कः सोष्णो लेपो ज्वरेषु शिरोरुजं हन्ति ॥ ५९५ ॥
क्षीणे कफे ज्वरे जीर्णे स्वल्पदोषे पिपासिते ।
दाहार्त्ते च पयो योज्यं तन्नवे तु विषं भवेत् ॥ ५९६ ॥
श्वासात्कासाच्छिरः शूलात् पार्श्वशूलात् सपीनसात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ ५९७ ॥
द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ ५९८ ॥
सिताज्यविश्वखर्जूरीमृद्वीकाभिः शृतं पयः ।
शीतं मधुयुतं पीतं तृड्दाहज्वरनाशनम् ॥ ५९९ ॥
त्रिकण्टकबलाव्याघ्री गुड़नागरसाधितम् ।

वर्चो मूत्रविबन्धघ्नं शोथज्वरहरं परम् ॥ ६०० ॥
पृश्नी च विल्ववर्षाभूपयश्चोदकमेव च।
क्षीरावशिष्टं तत्पीतं तद्धि सर्वज्वरापहम् ॥ ६०१ ॥
चूर्णं त्रिवृत्कणा श्यामा त्रिफलानां सिता समम्।
भेदिकोष्णरुजादाहगौरवज्वरनाशनम् ॥ ६०२ ॥
साधितं विल्वपेशिभिर्मूलैर्लोमज्जकस्य च।
सद्यो हन्ति पयः पीतं ज्वरं सम्परिवर्त्तिकम् ॥ ६०३ ॥
मधुकारग्वधद्राक्षा तिक्तायासफलत्रिकैः।
सपटोलैर्जलं भेदि ज्वरं हन्ति त्रिदोषजम् ॥ ६०४ ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामन्तु पायसं तस्य निरूहैर्वा हरेन्मलान् ॥ ६०५ ॥
अरोचके गात्रसादे वैस्वर्य्ये वमनादिषु।
शान्तज्वरेऽपि शोध्यः स्यादनुबन्धभयान्नरैः ॥ ६०६ ॥
ज्वरोष्मणा ज्वरेऽजीर्णे वायुः कुप्यति रूक्षिते।
घृतं संशमनं तस्य दीप्तस्येवाम्बुवेश्मनः ॥ ६०७ ॥
कल्याणकं कट्फलकं घृतं जीर्णज्वरे पिबेत् ॥ ६०८ ॥
कुक्कुटं तरुणं सद्यः कृत्वा पादान्त्रवर्जितम्।
तस्य मांसस्य कुर्वीत शृतं पलशतं भिषक् ॥ ६०९ ॥
बृहती कण्टकारी च शृङ्गीकर्कटकस्य च।
वदराणि कुलत्थानि भार्गी ह्यामलिकी तथा ॥ ६१० ॥
शठीपुष्करमूलञ्च पञ्चमूलं महत्तथा ॥
एतत्तुलाञ्च संगृह्य द्विद्रोणे त्वम्भसः पचेत् ॥ ६११ ॥
पादशेषं परिस्राव्य कषायं ग्राहयेद्भिषक्।
षड्गुणं क्षीरमाहृत्य विपचेत्तु घृताढ़कम् ॥ ६१२ ॥
तत्र कल्कीकृतं दद्यादस्वल्पं पञ्चमूलकम्।
तत्साधु सिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ॥ ६१३ ॥

तस्य काले पिबेन्मात्रां बलं दोषमवेक्ष्य च ।
जीर्णे तस्मिंस्तु भुञ्जीत रक्तशाल्योदनं तथा ॥ ६१४ ॥
जीर्णज्वरोपसृष्टानां शुष्यतां श्वासकासिनाम् ।
प्रयोज्यं कौक्कुटं सर्पिर्यच्चिमणां विषमज्वरे ॥ ६१५ ॥
लेखनं बृंहणीयञ्च बलवर्णाग्निवर्धनम् ।

इति कौक्कुटं घृतम् ।

वासां गुडूचीं त्रिफलां त्रायमाणां दुरालभाम् ।
पक्त्वाऽनेन कषायेण पयसा द्विगुणेन च ॥ ६१६ ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम् ॥ ६१७ ॥

इति वासादिघृतम् ।

अत्र चाष्टगुणे तोये क्वथिते क्वाथदुग्धयोः ।
प्रत्येकं द्विगुणं भागं पृथक् सर्पिषु निक्षिपेत् ॥ ६१८ ॥
कल्काच्चतुर्गुणं स्नेहं स्नेहात् क्वाथश्चतुर्गुणः ।
क्वाथाच्चतुर्गुणं वारि क्वाथ्यः क्वाथसमो मतः ॥ ६१९ ॥
मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा ।
कठिनात्कठिने द्रव्ये देयं षोड़शिकं जलम् ॥ ६२० ॥
मृद्वादि क्वाथ्यसङ्घाते मान उक्ते चिकित्सकाः ।
मध्यस्थोभयभागित्वादिच्छन्त्यष्टगुणं जलम् ॥ ६२१ ॥
पलैः षोड़शभिः प्रस्थं शुष्काणां तद्विदो विदुः ।
द्विगुणं स्वरसार्द्राणां तैलक्षारघृताम्भसाम् ॥ ६२२ ॥
न लभ्यते रसो येषां क्वाथं तेषान्तु निक्षिपेत् ।
त्रिफलाव्यतिरेकेण मतमेतत्पतञ्जलेः ॥ ६२३ ॥
पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गका त्वामलकी शारिवातिविषे स्थिरा ॥ ६२४ ॥
द्राक्षामलकवीजानि त्रायमाणा निदिग्धिका ।

सिद्धमेतद् घृतं सद्यो जीर्णज्वरमपोहति ॥ ६२५ ॥
क्षयं कासं शिरःशूलं पार्श्वशूलमरोचकम्।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति ॥ ६२६ ॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ ६२७ ॥

इति पिप्पल्याद्यं घृतम्।

पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते।
यत्राधिकरणेनोक्तिर्गणे स्नेहस्य सन्निधौ।
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना ॥ ६२८ ॥
एतद्वाक्यवलेनैव कल्कसाध्यपरं घृतम् ॥ ६२९ ॥
क्षीरवृक्षासनारिष्टजम्बूसप्तच्छदार्जुनैः।
शिरीषखदिरास्फोतामृतवल्याटरूषकैः ॥ ६३० ॥
कटुकापर्पटोशीरवचातेजोवतीघनैः।
साधितं तैलमभ्यङ्गादाशु जीर्णज्वरं जयेत् ॥ ६३१ ॥

इति क्षीरवृक्षाद्यं तैलम्।

चन्दनाद्यं हितं तैलं शोषाधिकारकीर्त्तितम्।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ ६३२ ॥
जीर्णज्वरेषु सर्वेषु दोषे पक्वाशयाश्रिते।
स्नेहवस्तिः प्रयोक्तव्यः सनिरूहो यथा विधिः ॥ ६३३ ॥

इति जीर्णज्वरः।

गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य वा।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ ६३४ ॥

इति गुडूच्यादिघृतम्।

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम्।
सर्पिः प्रस्थं शृतं प्लीहविषमज्वरनाशनम् ॥ ६३५ ॥

इति क्षीरषट्पलं घृतम्।

अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥ ६३६॥
दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः॥ ६३७॥
वातपित्तकफव्याधीन् प्लीहानं चापकर्षति।

इति दशमूलीक्षीरषट्पलं घृतम्।

बलां श्वदंष्ट्रां बृहतीं कलशीं धावनीं स्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम्॥ ६३८॥
कृत्वा कषायं कल्कार्थं दद्यादामलकीं शठीम्।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च॥ ६३९॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम्।
क्षयकासप्रशमनं शिरः पार्श्वरुजापहम्॥ ६४०॥

इति बलाद्यं घृतम्।

अत्राप्यष्टगुणैस्तोयैः क्वथितः क्वाथदुग्धयोः।
प्रत्येकं द्विगुणो भागः कर्त्तव्यो भिषजा घृते॥ ६४१॥
वासामृतारिष्टभार्गी पञ्चमूलफलत्रिकैः।
सपायसमधुद्राक्षा काश्मीर्य्यै रक्तसम्मितैः॥ ६४२॥
घृतप्रस्थं विपक्वव्यमेभिर्मात्रामतः पिबेत्।
बृहद्वासाघृतं प्रोक्तमेतत्सर्वज्वरापहम्॥ ६४३॥

इति बृहद्वासाद्यं घृतम्।

मञ्जिष्ठातिविषा पथ्या वचा नागररोहिणी।
देवदारुहरिद्रा च द्रोणेऽपाम्पालिकान् पचेत्॥ ६४४॥
क्वाथेऽस्मिन् साधयेत्पिष्टैर्घृतप्रस्थं पिचून्मितैः।
शृङ्गवेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः॥ ६४५॥
तत्कफावृतसर्वैकज्वरिणाममृतोपमम्।
वर्ध्महिध्मारुचिश्वास पाण्डुरोगविकारिणाम्॥ ६४६॥

मलग्रहप्रमेहार्शःप्लीहापस्मारशोषिणाम्।
उदावर्त्तपरीतानां मन्दाग्निक्रमिकुष्ठिनाम्॥ ६४७॥

इति मञ्जिष्ठाद्यं घृतम्।

कुलत्थकोलत्रिफलादशमूलयवान् पचेत्।
द्विपलान् सलिलद्रोणे घृते पिष्ट्वाऽक्षकान् क्षिपेत्॥६४८॥
पञ्चकोलकसप्ताह्वा वयस्था हिङ्गुतुम्बुरु।
शठीपुष्करमूलार्कमूलं प्रतिविषा वचा॥ ६४९॥
किराततिक्तकं मुस्तं कर्कटाख्या दुरालभा।
नक्तमालमुभे पाठे कटुका शिग्रुतेजनी॥ ६५०॥
सोमवल्कं द्विरजनी कटुकी कण्टकारिका।
पटोलनिम्बगोजिह्वा कम्बुका मदनी जटाः॥ ६५१॥
लवणानि पलांशानि क्षारानर्द्धपलोन्मितान्।
प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित्॥ ६५२॥
हृत्प्लीहग्रहणीगुल्मश्वासकासार्शसां हितम्।
दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमम्॥ ६५३॥

इति कुलत्थाद्यं घृतम्।

लाक्षामधुकमञ्जिष्ठा मूर्वाचन्दनसारिवा।
तैलं षट्चरणं नाम ह्यभ्यङ्गाज्ज्वरनाशनम्॥ ६५४॥

इति षट्चरणं तैलम्।

लाक्षानिशाकुष्ठशुण्ठी मञ्जिष्ठा च सुवर्चिका।
मूर्वाचन्दनसंसिद्धं तैलं तक्रेऽथ षड्गुणे॥ ६५५॥
अभ्यङ्गेन प्रशाम्येत दाहं शीतज्वरापहम्।

इति षट्तक्रं तैलम्।

मूर्वालाक्षाहरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहतीसैन्धवं कुष्ठं रास्ना मांसी शतावरी॥ ६५६॥
आरनालाढ़केनात्र तैलप्रस्थं विपाचयेत्।

तैलमङ्गारकं नाम सर्वज्वरविनाशनम् ॥ ६५७ ॥

इत्यङ्गारकं तैलम् ।

लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।
अश्वगन्धा निशा दारु कौन्तीकुष्ठाब्दचन्दनैः ॥ ६५८ ॥
समूर्वा रोहिणी रास्ना शताह्वा मधुकैः समैः ।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिना ॥ ६५९ ॥
सर्वज्वरक्षयोन्माद सर्वापस्मारवातनुत् ।
यक्षराक्षसभूतघ्नं गर्भिणीनां प्रशस्यते ॥ ६६० ॥

इति लाक्षादितैलम् ।

लाक्षा हरिद्रा मञ्जिष्ठा फेनिलं मधुकं बला ।
लामज्जकं चन्दनञ्च गैरिकं नीलमुत्पलम् ॥ ६६१ ॥
एषां भागान् समान् कृत्वा पक्त्वा तोये चतुर्गुणे ।
चतुर्भागावशेषे च गर्भे चैनं समावपेत् ॥ ६६२ ॥
रेणुका पद्मकञ्चैव वाजिगन्धा तथैव च ।
वेतसं चोरकं कुष्ठं देवदारुनखत्वचम् ॥ ६६३ ॥
शतपुष्पा पुण्डरीकं मांसी मधुकमेव च ।
एभिरक्षसमैः कल्कैः पाषाणेनैव पेषितैः ॥ ६६४ ॥
मस्तुशुक्तारनालानामाढकाढकमावपेत् ।
क्षीराढ़कसमायुक्तं तैलप्रस्थं विपाचयेत् ।
तदभ्यङ्गात् क्षपयति तैलं दाहं न संशयः ॥ ६६५ ॥
वातपित्तभवं क्षिप्रं ज्वरमेतन्नियच्छति ।
सप्रलापञ्च तृष्णाञ्च तालुशोषणमुल्वणम् ॥ ॥ ६६६ ॥
ग्रहोपसृष्टा ये बाला रक्षःसन्दूषिताश्च ये ।
तेषां कष्टं प्रशमयेत्तैलं लाक्षादिकं महत् ॥ ६६७ ॥

इति महालाक्षादितैलम् ।

स्वर्जिकाकुष्ठमञ्जिष्ठा लाक्षा मूर्वा महौषधैः ।

सक्षीरैः साधितं तैलमभ्यङ्गाद्दाहशीतनुत्॥ ६६८॥

इति खर्जिकाद्यं तैलम्।

बलामधुकमञ्जिष्ठा पद्मपद्मकचन्दनैः।
समुद्रफेन ह्रीवेर रजनीगैरिकोत्पलैः॥ ६६९॥
पिष्टैरेतैः पचेत्तैलं मस्तुक्षीरं चतुर्गुणम्।
वातपित्तज्वराज्जीर्णस्तेनाभ्यक्तः प्रमुच्यते॥ ६७०॥

इति बलाद्यं तैलम्।

पटोलपिचुमन्दाभ्यां गुडूच्यामलकेन च।
मदनैश्च शृतः स्नेहो ज्वरघ्नमनुवासनम्॥ ६७१॥

इति पटोलादिस्नेहः।

पटोलमदनारिष्ट गुडूचीमधुकैः शृतम्।
श्वदंष्ट्रा मदनं शृङ्गी मधुकारिष्टवासकैः॥ ६७२॥
अश्वगन्धेति तैलस्य कार्षिकैराढ़कं पचेत्।
अनुवासनकं तैलं सर्वज्वरविनाशनम्।
कृत्स्नान् वातविकारांश्च नाशयेदपि चोत्थितान्॥ ६७३॥

इति पटोलाद्यनुवासनम्।

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥ ६७४॥
षड्भिः केचिदहोरात्रैः केचिदष्टाभिरेव च।
वक्ष्यन्ति मुनयः प्रायो रसस्य परिवर्त्तनम्॥ ६७५॥
परिवृत्त्या रसस्यैव शान्तवेगा क्रिया भवेत्।
गुणालाभे तु कर्त्तव्या विश्रामान्तरितत्त्वया।
सैव न स्याद्यथा तस्यां पूर्ववत्सङ्कराद्भयम्॥ ६७६॥
ज्वरे पुराणे सङ्कीर्णे कफपित्ते दृढ़ाग्नये।
रूक्षबद्धपुरीषाय प्रदद्यादनुवासनम्॥ ६७७॥
चन्दनोत्पलकाश्मर्य्यमधुकागुरुकल्ककैः।

सिद्धं तैलं विधातव्यं वस्तौ सर्वज्वरापहम् ॥ ६७८ ॥

इति चन्दनाद्यनुवासनम् ।

घृततैलगुड़ादींस्तु चैकाहेनैव साधयेत् ।
उषितास्तु प्रकुर्वन्ति विशेषेण गुणान् बहून् ॥ ६७९ ॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत् ।
वह्नौ चिप्ते तु नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥ ६८० ॥
नस्ये मृदुः खरोऽभ्यङ्गे स्नेहे किट्टन्तु मध्यमम् ।
नातिस्थिरं पचेद्बस्तौ खरमभ्यञ्जने पचेत् ॥ ६८१ ॥
तत्र स्नेहौषधि विवेकमात्रं यत्र भेषजं स मृदुः ।
मधूच्छिष्टमिव विशदमविलेपि यत्र भेषजं स मध्यमः ॥
कृष्णमवसन्नमीषद्विशदं चिक्कणञ्च यत्र भेषजं सखरम् ॥

इति त्रिधा स्नेहपाकलचणम् ।

उक्तञ्च—स्नेहपाकोऽथ कल्के स्यान्मृदुरङ्गुलिलेपिनि ।
न गृह्णात्यङ्गुलिं मध्यः शीर्य्यमाणो खरः स्मृतः ॥ ६८२ ॥
परं पाको मृदुः कार्य्यो द्रव्यस्य न खरो मतः ।
किञ्चित् वीर्य्यमादत्ते तज्जहाति खरः पुनः ॥ ६८३ ॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥ ६८४ ॥
घृतस्यैवं विपक्कस्य जानीयात् कुशलो भिषक् ।
फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत् ॥ ६८५ ॥
पक्कतैलाद्भवेद्वीर्य्यं हीनमब्दार्द्धतः परम् ।
घृताच्चाब्दात्परं पक्कं गुड़ादेस्त्वब्दतः परम् ॥ ६८६ ॥

इति तैलपाकविधिः ।

आरग्बधमुशीरञ्च मदनस्य फलानि च ।
पर्य्यस्वतस्रो मधुकं निरूहमुपकल्पयेत् ॥ ६८७ ॥
प्रियङ्गुमदनं मुस्तं मधुकञ्च शताह्वया ।

कल्कः सर्पिर्गुड़क्षौद्रैर्ज्वरघ्नो वस्तिरुत्तमः ॥ ६८८ ॥

इति आरग्वधनिरूह वस्तिः।

एकादशाष्टौ षट्कञ्च कषायस्य पलं मतम्।
कफपित्तानिलोत्थेषु विकारेषु यथाक्रमम् ॥ ६८९ ॥
स्नेहस्य त्रिचतुःषष्ठांश्चत्वारो मधुनस्तथा।
पलद्वयन्तु कल्कस्य कर्षः स्यात् सैन्धवस्य च ॥ ६९० ॥
रसक्षीराम्लमूत्राणामेकैकं प्रक्षिपेत् पलम्।
निरूहकल्पना मात्रा कथितैषा महर्षिणा ॥ ६९१ ॥

इति निरूहमात्राकल्पनाविधिः।

विष्णुं सहस्रमूर्द्धानं चराचरगुरुं विभुम्।
स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ ६९२ ॥
ज्योतिश्चक्रं धनिष्ठादि वक्ष्यते दिननिश्चयात्।
दशरात्रं धनिष्ठासु ज्वरो भवति देहिनाम् ॥ ६९३ ॥
वारुणेऽपि दशाहेन मृत्युमाप्नोति मानवः।
षड़हे द्वादशाहे वा मृत्युर्भाद्रपदासु च ॥ ६९४ ॥
उत्तरासु भवेन्मोक्षो दिवसोर्द्धं चतुर्दशे।
चतूरात्राष्टरात्रं वा रेवत्यां वर्त्तते ज्वरम् ॥ ६९५ ॥
अश्विनीष्वपि षड्रात्रं सुखं भवति देहिनाम्।
यमदेवे समुत्पन्ने मरणं पञ्चमेऽहनि ॥ ६९६ ॥
कृतिकासु गृहीतस्य सप्तरात्रं भवेज्ज्वरः।
न मुञ्चेद्यदि सप्ताहादेकविंशति मे सुखम्।
अत ऊर्द्धं विपद्येत त्रिपक्षात् संशयो भवेत् ॥ ६९७ ॥
रोहिण्यामष्टरात्रेण मुच्येदेकादशेऽहनि।
मृगे च षड़हं ज्ञेयं नवरात्रमथापि वा ॥ ६९८ ॥
आर्द्रायामुपसृष्टस्य पञ्चाहात् मृत्युमादिशेत्।
ऊर्द्धं यद्यपि वर्त्तेत त्रिपक्षात् संशयो भवेत् ॥ ६९९ ॥

पुनर्वसूपसृष्टेन ज्वरेण परिपीड़नात् ।
त्रयोदशाहान् मुच्येत सप्तविंशेऽथ वाह्नि ॥ ७०० ॥
पुष्ये चिरात्तं ज्वरितः सप्तरात्रान्निवर्त्तते ।
अश्लेषासु भवेन्मृत्युर्दीर्घकालक्रमात्तथा ॥ ७०१ ॥
मघासु द्वादशाहेन मृत्युर्भवति देहिनः ।
ऊर्द्ध्वं याति मघायान्तु पुनरेव सुखी भवेत् ॥ ७०२ ॥
पूर्वासु चोपसृष्टस्य फाल्गुनीषु भवेद्दश ।
उत्तरासु तथा चाष्टौ नवरात्रादथापि च ।
एकविंशतिरात्राद्वा ज्वरः सौख्यत्वमृच्छति ॥ ७०३ ॥
हस्ते च सप्तमे मोक्षश्चित्रायामष्टमेऽहनि ।
ऊर्द्ध्वं प्रपद्यमानो वा मुच्येच्चित्रागमे पुनः ॥ ७०४ ॥
स्वातियोगे दशाहेन मुच्यतेऽथ त्रयेण वा ।
विशाखासु भवेन्मृत्युरेकविंशतिमेऽहनि ॥ ७०५ ॥
ज्वरस्तु दिवसानष्टावनुराधासु वर्त्तते ।
अत ऊर्द्ध्वं न मुक्तं स्यान्नास्ति तस्य चिकित्सितम् ॥ ७०६ ॥
ज्येष्ठायां पञ्चमे मृत्युरूर्द्ध्वं वा द्वादशात् सुखम् ।
स्वास्थ्यं दशाहान्मूलेन त्रिसप्ताहे तथा गते ॥ ७०७ ॥
आषाढ़ायान्तु पूर्वायां नवमेऽहनि मुच्यते ।
उत्तरासु त्वाषाढ़ासु मासात् क्लिश्यत्यसंशयः ।
अष्टमान्नवमान्मासात्ततोऽस्य सुखमादिशेत् ॥ ७०८ ॥
श्रवणेनाष्टरात्रन्तु क्लिश्यन्ति ज्वरपीड़िताः ॥ ७०९ ॥
एतद्भगवता प्रोक्तं नक्षत्राणां विचेष्टितम् ।
य एवं वेत्ति तत्वेन स राज्ञः कर्त्तुमर्हति ॥ ७१० ॥

वसुरग्निरिति धनिष्ठायां वटशुङ्गमौदुम्बरं वा जुहुयात् ॥ १ ॥
तत्वायामीति शतभिषजि जलपुष्पं जुहुयात् ॥ २ ॥
उत्तरत्वह्निगीर्हि द्वे इति पूर्वभाद्रपदासु शाल्योदनं जुहुयात् ॥ ३ ॥

अहिरिव भोगैरिति उत्तरभाद्रपदासु घृतौदनं जहुयात् ॥४॥
पूष्णो प्राश्येति रेवत्यां फलान्यक्षतानि जुहुयात् ॥ ५ ॥
अश्विना तेजसेत्यश्विन्यां गुड़ौदनं जुहुयात् ॥ ६ ॥
असियम इति भरण्यां तण्डुलान् जुहुयात् ॥ ७ ॥
अग्निर्मूर्द्धा इति कृत्तिकासु घृतं जुहुयात् ॥ ८ ॥
हिरण्यगर्भ इति रोहिण्यां सर्षपबीजानि जुहुयात् ॥ ९ ॥
त्वम्भसामेति मृगशिरसि पायसं जुहुयात् ॥ १० ॥
अहः केतुना इति आर्द्रायां कृशरां जुहुयात् ॥ ११ ॥
महीमूषमातरमिति पुनर्वसौ तण्डुलं जुहुयात् ॥ १२ ॥
बृहस्पते अति यदर्थ्य इति पुष्ये घृतपायसं जुहुयात् ॥ १३ ॥
नमोऽस्तु सर्पेभ्यो इति अश्लेषासु सर्वौषधीर्जुहुयात् ॥ १४ ॥

कुष्ठं मांसी हरिद्रे द्वे सुरशैलेय पञ्चकैः ।
वचाकर्चूरमुस्तैश्च सर्वौषधिकमुच्यते ॥

इति सर्वौषधीवर्गः ।

इदं पितृभ्य इति मघासु शालितण्डुलं जहुयात् ॥ १५ ॥
प्रातर्जितं भागमुग्रेति पूर्वफाल्गुनीष्वक्षतानि जुहुयात् ॥१६॥
तत्सवितुर्वरेण्यमिति उत्तरफाल्गुनीषु घृतं जुहुयात् ॥ १७ ॥
आकृष्णेनेति हस्ते रक्तपुष्पं जुहुयात् ॥ १८ ॥
देवस्य त्वासवितुरिति चित्रायां मधुपायसं जहुयात् ॥ १९ ॥
वायुरग्नेजा इति स्वातिषु तण्डुलान् जुहुयात् ॥ २० ॥
इन्द्राग्नि आगतमिति विशाखायां यवघृतं जुहुयात् ॥ २१ ॥
अनो मित्रो वरुणेति अनुराधासु मसूरं जुहुयात् ॥ २२ ॥
इन्द्रा सुत्रामेति ज्येष्ठासु कनकं तदभावे पीतपुष्पं जुहुयात्॥२३
मूलाय स्वाहेति मूले तिलव्रीह्याज्यान् जुहुयात् ॥ २४ ॥
अपाघम्मुपकिल्विषमिति पूर्वाषाढे घृतौदनं जुहुयात् ॥ २५ ॥
विश्वेऽद्य इति उत्तराषाढ़े मधुरान्नं जुहुयात् ॥ २६ ॥

इदं विष्णुरिति श्रवणे मूर्वास्तदभावे तण्डुलं जुहुयात् ॥ २७ ॥

इति धनिष्ठादिनक्षत्रोत्पन्नज्वरस्वस्त्ययनम् ।

उरग वरुण आर्द्रा वासवेन्द्र त्रिपूर्वा
यमभहुत विशाखाः पापवारेण युक्ताः ।
तिथि नवमषष्ठी द्वादशीभिश्चतुर्थी
मरणसहितयोगो रोगिणां मृत्युरेव ॥ ७११ ॥

स ज्वरो ज्वरमुक्तो वा विदग्धानि गुरूणि वा ।
असात्म्यान्यन्नपानानि विरुद्धाध्यशनानि च ॥ ७१२ ॥
व्यायाममतिचेष्टां चाऽभ्यङ्गं स्नानं विवर्जयेत् ।
तेन ज्वरः शमं याति शान्तश्च न पुनर्भवेत् ॥ ७१३ ॥
व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥ ७१४ ॥
वार्य्यमाणो दिवा स्वप्नं भुङ्क्त्वा यः सेवते नरः ।
तस्मात्तन्द्रा जड़त्वञ्च मोहश्चाप्युपजायते ॥ ७१५ ॥
न जातु तर्पयेत् प्राज्ञः सहसा ज्वरकर्शितम् ।
तेन संशमितोऽप्यस्य पुनरेव भवेज्ज्वरः ॥ ७१६ ॥
श्वासो मूर्च्छारुचिः छर्दिस्तृष्णातिसारविड्ग्रहाः ।
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ॥ ७१७ ॥
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणैः ।
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥ ७१८ ॥
ज्वरक्षीणस्य शूनस्य गम्भीरो दैर्घ्यरात्रिकः ।
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः ॥ ७१९ ॥
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ ७२० ॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान् ।
वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ॥ ७२१ ॥

हिक्काश्वासतृषायुक्तं मूढं बिभ्रान्तलोचनम्।
सन्ततोच्छ्वसितं क्षीणं नरं क्षपयति ज्वरः॥ ७२२॥
हतप्रभेन्द्रियं क्षाममरोचकनिपीड़ितम्।
गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत्॥ ७२३॥
अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु।
शान्तज्वरोऽपि साध्यः स्यादनुबन्धभयान्नवः॥ ७२४॥
बलवान् सर्वदोषेषु ज्वरः साध्योऽनुपद्रवः॥ ७२५॥
ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदुष्यता।
रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्॥ ७२६॥
दाहः स्वेदो भ्रमस्तृष्णा कम्पो विड्भेदसंज्ञिता।
कूजनं चातिवैगन्ध्यमाकृतिर्ज्वरमोक्षणे॥ ७२७॥
स्वेदो लघुत्वं शिरसः कण्डूपाको मुखस्य च।
क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम्॥ ७२८॥

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदक्षयः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणं स्यात्॥ ७२९॥

इति वङ्गसेनसङ्कलिते ज्वरनिदानचिकित्साधिकारः समाप्तः।

---

## अथ अतिसारनिदानमाह।

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः।
विरुद्धाध्यशनाजीर्णै रसात्म्यैश्चापि भोजनैः॥ १॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः।
शोकदुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्ययैः॥ २॥
जलाभिरमणैर्वेगविघातैः कृमिदोषतः।

नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥
संशम्यापां धातुरग्निं प्रवृद्धो वर्चोमिश्रो वायुनाधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधन्तं वदन्ति ॥४॥
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः ॥५॥
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः ।
विट्सङ्ग आध्मानमथाऽविपाको भविष्यतस्तस्य पुरःसराणि॥६॥
हितं लङ्घनमेवादौ पूर्वरूपेषु देहिनः ।
कार्य्यञ्चानशनस्यान्ते सद्रवं लघुभोजनम् ॥ ७ ॥
विश्वोदीच्योदकं पानं लङ्घनं चास्य शस्यते ।
हरिद्रादिं वचादिं वा पिबेच्चामेषु मानवः ॥ ८ ॥
खड्यूषयवागूभिः पिप्पल्यादि प्रयोजयेत् ।
मुद्गयूषरसं तक्रं धान्यजीरकसंयुतम् ।
खड्यूषमिति प्रोक्तं सैन्धवेन समन्वितम् ॥ ९ ॥
अग्निसन्दीपनं प्रोक्तं ग्रहणीदोषनाशनम् ।
अरोचके ज्वरे चैव श्रेष्ठमेतत्प्रवाहिके ॥ १० ॥

इति खडयूषः ।

विल्वं सधान्यञ्च सजीरकञ्च पाठा च शुण्ठी तिलसंयुता च ।
पिष्ट्वा षडङ्गः सुकृतो नराणां यूषो ह्यतीसारहरः प्रदिष्टः ॥११॥
तृष्णापनयनी लघ्वी दीपनी वस्तिशोधनी ।
ज्वरे चैवातिसारे च यवागूः सर्वदा हिताः ॥ १२ ॥
आमपक्वक्रमं हित्वा नातिसारे क्रिया हिता ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १३ ॥

इति यवागूः ।

संसृष्टमामैर्दोषैस्तु न्यस्तमप्सु निमज्जति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १४ ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।

लाघवञ्च विशेषेण तस्य पक्कं विनिर्दिशेत् ॥ १५ ॥
न तु संग्राहकं दद्यात् पूर्वमामातिसारिणे।
दोषा ह्यादौ बध्यमाना जनयन्त्यामयान् बहून् ॥ १६ ॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मानग्रहण्यर्शो गदांस्तथा ॥ १७ ॥
डिम्भो यः स्थविरो वापि वातपित्तात्मकश्च यः।
क्षीणधातुबलश्चापि बहुदोषोऽतिविस्रुतः ॥ १८ ॥
आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं व्रजेत् ॥ १९ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ २० ॥
दीप्ताग्निर्बहुदोषो विबन्धमतिसार्य्यते।
विड़ङ्गत्रिफला कृष्णा कषायैस्तं विरेचयेत् ॥ २१ ॥
क्षुत्क्षामस्य विरिक्ते तु पेयां युञ्ज्याद्विचक्षणः।
भेषजैर्मारुतघ्नैश्च दीपनीयैश्च कल्पिताम् ॥ २२ ॥
योऽतिद्रवं प्रभूतञ्च पुरीषमतिसार्य्यते।
तस्यादौ वमनं योज्यं पश्चाल्लङ्घनमेव च ॥ २३ ॥
शूलानाहप्रसेकार्त्तं वामयेदतिसारिणम्।
पिप्पलीलवणाभ्याञ्च साधितेन जलेन वा २४ ॥
पथ्यादारुवचामुस्तैर्नागरातिविषान्वितैः।
आमातिसारनाशाय क्वाथमेभिः पिबेन्नरः ॥ २५ ॥
पाठाहिङ्गुजमोदोग्रा पञ्चकोलाब्दजं रजः।
उष्णाम्बुपीतं सरुजं जयत्यामं ससैन्धवम् ॥ २६ ॥

इति आमपाचनविधिः।

त्र्यूषणातिविषाहिङ्गु वचा सौवर्चलाभया।
सुखोष्णेनाम्भसा हन्यादामातिसारमुद्धतम् ॥ २७ ॥
वचा विल्वकणा विश्वा कुलकं कुष्ठदीप्यकम्।

सविड़ङ्गं जयेत्पीतमाममुष्णाम्बुना शृतम् ॥ २८ ॥
हरीतकी सातिविषा हिङ्गु सौवर्च्चलं वचा।
सैन्धवं चेति पिष्टानि पाययेदुष्णवारिणा।
आमातिसारे योगोऽयं पाचयित्वा चिकित्सिति ॥ २९ ॥
आमातिसारो योगेन यद्येतेन न शाम्यति।
न तं योगशतेनापि चिकित्सति चिकित्सकः ॥ ३० ॥
एरण्डरससम्पिष्टं पक्कमामञ्च नागरम्।
आमातिसारशूलघ्नं दीपनं पाचनं तथा ॥ ३१ ॥
चित्रकं पिप्पलीमूलं वचा कटुकरोहिणी।
पाठा वत्सकवीजानि हरितक्यो महौषधम् ॥ ३२ ॥
एतदामसमुत्थानमतीसारं सवेदनम्।
कफात्मकं सपित्तञ्च सवातं हन्ति वै ध्रुवम् ॥ ३३ ॥
श्वदंष्ट्रैरण्डधान्याम्ल यवपुष्करसाधिता।
पथ्या मधुयुता लीढ़ा शूलग्रन्थिविनाशिनी ॥ ३४ ॥
नागरातिविषा मुस्तैः क्वाथः स्यादामपाचनः ॥ ३५ ॥
विल्वं मोचरसं पाठा गूडूची विश्वमुस्तकम्।
गुड़तक्रेण दुर्वारं पीतं हन्त्युदरामयम् ॥ ३६ ॥
धान्यनागरमुस्तञ्च वालकं विल्वमेव च।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ ३७ ॥
पित्ते धान्यचतुष्कञ्च शुण्ठीत्यागाद्वदन्ति हि।

इति धान्यपञ्चकम्।

देवदारुवचामुस्त नागरातिविषा भया।
सर्वाजीर्णप्रशमनं पेयमेतैः शृतं जलम् ॥ ३८ ॥
नागरातिविषामुस्तैरथवा धान्यनागरैः।
तृष्णाशूलातिसारघ्नं रोचनं दीपनं लघु ॥ ३९ ॥
धान्यकातिविषोदीच्य यवानी मुस्तनागरे।

बलाद्विपर्णी विल्वञ्च दद्याद्दीपनपाचने ॥ ४० ॥
अभया नागरं मुस्तं गुड़ेन सह योजितम्।
चतुःसमेयं गुटिका त्रिदोषघ्नी प्रकीर्त्तिता ॥ ४१ ॥
आमातिसारमानाहं सविबन्धं विसूचिकाम्।
क्रमीनरोचकं हन्याद्दीपयत्याशु चानलम् ॥ ४२ ॥

इति चतुःसमा गुटी।

दलोत्थः स्वरसः पेयो हिज्जलस्य समाक्षिकः।
जयत्याममतीसारं क्वाथो वा कुटजत्वचः ॥ ४३ ॥
पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणेऽम्भसि।
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च ॥ ४४ ॥

इति पित्तानुबद्धपाचनम्।

एरण्डमूलैः सकणैरारनाले विमिश्रिते सयवैः।
स्विन्नां खादेदभयामामातीसारशूलार्त्तः ॥ ४५ ॥

इति काञ्जिकहरीतकी।

केशराजसुनिषन्नकञ्चटं दाड़िमस्य फलमर्जुनोद्भवम्।
क्वाथ एष परिशीलितो नृणां हन्ति साममथशूलमुद्धतम् ॥४६॥
कलिङ्गातिविषा हिङ्गु पथ्यासौवर्चलं वचा।
शूलस्तम्भविबन्धघ्नं पेयं दीपनपाचनम् ॥ ४७ ॥

इति कलिङ्गाद्यं चूर्णम्।

स्विन्नामविल्वयवगोक्षुरकोरुबूक-
छिन्नोद्भवा तुषजलैर्मधुनावलीढ़ा।
बद्धाल्पविट्कमतिसारमसृग्विमिश्रम्
आमातिसारमपि हन्ति हरीतकीयम् ॥ ४८ ॥
निरामरूपं शूलार्त्तं लङ्घनाद्यैश्च कर्षितम्।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेत् घृतम् ॥ ४९ ॥
क्षारनागरचाङ्गेरीकोलदध्यम्लसाधितम्।

सर्पिः पक्वं पिबेद्वापि शूलातिसारशान्तये ॥ ५० ॥
शुण्ठीचाङ्गेर सकल्काभ्यां विशिष्टं द्रव्यमिष्यते ।

इति चाङ्गेरीघृतम् । इति आमातिसारः ।

अरलुत्वक् प्रियङ्गुश्च मधुकं दाड़िमाङ्कुरान् ।
अवाप्य पिष्ट्वा विपचेद्यवागूं दध्नि तां पिबेत् ।
एषा सर्वानतीसारान् हन्ति पक्वानसंशयः ॥ ५१ ॥
सलोध्रं धातकी विल्वं मुस्ताम्राष्थिकलिङ्गकम् ।
पिबेन्माहिषतक्रेण पक्वातिसारनाशनम् ॥ ५२ ॥
अम्बष्टा धातकी लोध्र समङ्गा पद्मकेसरम् ।
मधुकारलुविल्वञ्च पक्वातिसारहा गणः ॥ ५३ ॥
पद्मं समङ्गा मधुकं विल्वं जम्बू सलाटुकम् ।
पिबेत्तण्डुलतोयेन सक्षौद्रमगदङ्करम् ॥ ५४ ॥
पक्वातिसारिणे देयो मुस्ताक्काथः समाक्षिकः ॥ ५५ ॥
समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमेव च ।
शाल्मलीवेष्टकं लोध्रमच्चदाड़िमयोस्त्वचौ ॥ ५६ ॥
आम्राष्थिमध्यं लोध्रञ्च विल्वमध्यं प्रियङ्गु च ।
मधुकं शृङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥ ५७ ॥
चत्वार एते योगाः स्युः पित्तातिसारनाशनाः ।
उक्ता य उपयोज्यास्तु सक्षौद्रास्तण्डुलाम्बुना ॥ ५८ ॥

इति समङ्गादिचूर्णम् ।

दीर्घवृन्तत्वचं पिष्ट्वा महौषधसमन्वितम् ।
पीतं तण्डुलतोयेन पक्वातिसारनाशनम् ॥ ५९ ॥
पथ्याजाजी दुरालभ्भा घोटाफलसमन्वितः ।
स्वरसोऽप्यथवा कल्कः पक्वातिसारनाशनः ॥ ६० ॥
नवचूतस्य पर्णानि कपित्थफलमेव च ।
पिष्ट्वा तण्डुलतोयेन पक्वातिसारशान्तये ॥ ६१ ॥

कुटजं वह्निचूर्णञ्च मधुना सह लेहयेत्।
चिरोत्थितमतीसारं पक्कं पित्तास्रजं जयेत्॥ ६२॥
पक्कः शकृदतीसारो ग्रहणी मार्दवाच्यता।
प्रवर्त्तते यदा कार्य्यः क्षिप्रं सांग्राहिको विधिः॥ ६३॥
कञ्चटजम्बूदाड़िमशृङ्गाटकपत्रविल्वह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वाहिनीं रुन्ध्यात्॥ ६४॥
मोचरसमुस्तानागरपाठाशालूकधातकीकुसुमैः।
चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि॥ ६५॥
मुस्ता वत्सकवीजं मोचरसं विल्वधातकीलोध्रम्।
गुड़मथितसम्प्रयुक्तं गङ्गामपि वेगवाहिनीं रुन्ध्यात्॥६६॥
अङ्कोटमूलकल्कः सक्षौद्रस्तण्डुलाम्बुना पीतः।
सेतुरिव सरिद्वेगं झटिति निरुध्यादतीसारम्॥ ६७॥
कृत्वालबालं सुदृढ़ं पिष्टैरामलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्॥ ६८॥
नदीवेगोपमं घोरं प्रवृद्धं दुर्द्धरं नृणाम्।
सद्योऽतीसारमजयं नाशयत्येष योगराट्॥ ६९॥
सौवीरपिष्टः सहकारकल्को नाभिप्रलेपादतीसारहन्ता॥७०॥
अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः।
सकृदामं सरुक् शब्दं मारुतेनातिसार्य्यते॥ ७१॥
लङ्घनमेकं मुक्त्वा नान्यदस्तीह भेषजं बलिनः।
समुदीर्णदोषनिचयं शमयति तत्पाचयत्येव॥ ७२॥
यथादोषौषधैः सिद्धः यूषो मण्डादिकः क्रमात्।
लाजमण्डः कृतो योगैस्तैः कृता हस्तमन्थिता॥ ७३॥
वस्त्रस्रुता यवागूर्वा प्रस्रुतक्षुद्रभक्तकम्।
सर्वेषु मलभेदेषु लवणं न प्रयोजयेत्।
तद्धि तैक्ष्ण्यात्सरत्वाच्च दोषः क्षोभाय कल्पते॥ ७४॥

सुनिषन्नकवार्त्ताकं कच्चटं हितमुच्यते ॥ ७५ ॥
कपित्थविल्वचाङ्गेरी तक्रदाड़िमसाधिता ।
ग्राहिणी पाचिनी पेया वाते वा पञ्चमूलिका ॥ ७६ ॥
पञ्चमूली बला विल्वधान्यकोत्पलविल्वजा ।
वातातीसारिणे देया शुक्तेणान्यतमेन च ॥ ७७ ॥
वचा चातिविषा मुस्तं वीजानि कुटजस्य च ।
श्रेष्ठो वातातीसारे च योगो वैद्येन योजितः ॥ ७८ ॥
पूतिकं मागधी शुण्ठी बलाधान्यं हरीतकी ।
पक्काम्बुना पिबेत्सायं वातातीसारशान्तये ॥ ७९ ॥

इति वातातीसारः ।

पीतं रक्तं सितं नीलं दुर्गन्धिहरितं द्रवम् ।
दाहपाकपिपासा च शकृत्पित्तात्प्रवर्त्तते ॥ ८० ॥
आमान्वयमतिसारं पैत्तिकं लङ्घनैर्जयेत् ।
लङ्घितस्य यथासात्म्यं यवागूमण्डतर्पणैः ॥ ८१ ॥
शृतां चन्दनमुस्ताभ्यां पटोलोदीच्यनागरैः ।
पेयामम्लामनम्लां वा पाचनीं ग्राहणीं पिबेत् ॥ ८२ ॥
धान्योदीच्यशृतं तोयं तृष्णादाहातिसारवान् ।
ताभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ ८३ ॥
विल्वशक्रयवाम्भोद बालकातिविषायुतः ।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ८४ ॥
विल्वविश्वघनोदीच्यधान्यकैः क्वथितं जलम् ।
सामपित्तातिसारघ्नं दीपनं धान्यपञ्चकम् ॥ ८५ ॥
रसाञ्जनं सातिविषं कुटजस्य फलत्वचम् ।
धातकी शृङ्गवेरञ्च पाययेत्तण्डुलाम्बुना ॥ ८६ ॥
माक्षिकेन युतो हन्यात्पित्तातीसारमुल्वणम् ।
मन्दं सन्दीपयेदग्निं शूलं चाशु निवर्त्तयेत् ॥ ८७ ॥

मधुकं कट्फलं लोध्रं दाड़िमस्य फलं त्वचम्।
पित्तातीसारे मध्वाक्तं दापयेत्तण्डुलाम्बुना॥ ८८॥
समङ्गा धातकीपुष्पं विल्वं सौवर्चलं विडम्।
सक्षौद्रं दाड़िमश्चैककल्कं तण्डुलवारिणा॥ ८९॥
पीतं पित्तातीसारघ्नं सपित्तं जठरामयम्॥ ९०॥
धान्यकल्केन संसिद्धं चतुर्गुणजले घृतम्।
पित्तातीसारे सरुजे देयं दीपनपाचनम्॥ ९१॥

इति धान्यकं घृतम्।

मुस्तं वत्सकवीजानि भूनिम्बं सरसाञ्जनम्।
दार्वीं दुरालभा विल्वं बालकं रक्तचन्दनम्॥ ९२॥
बालकं चन्दनं मुस्तं भूनिम्बं सदुरालभम्।
उशीरं चन्दनं लोध्रं नागरं नीलमुत्पलम्॥ ९३॥
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलम्।
फलत्वचं वत्सकस्य शृङ्गवेरं घनं वचा॥ ९४॥
षडेते पाचिका योगाः पित्तातीसारनाशनाः।

इति पित्तातीसारः।

पित्तवन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके।
तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्वणः॥ ९५॥
तत्र तूर्णं क्रिया कार्य्या रक्तपित्तनिवर्हिणी॥ ९६॥
छागे चार्द्रोदके क्षीरे नागरोत्पलबालकैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता॥ ९७॥
कषायो मधुना पीतस्त्वचो दाड़िमवत्सकात्।
सद्यो जयेदतिसारं रक्तजं दुर्निवारकम्॥ ९८॥
ह्रीवेरातिविषा मुस्ता विल्वधान्यकवत्सकम्।
समङ्गा धातकी लोध्रं विश्वं दीपनपाचनम्॥ ९९॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम्।

सशोणितमतिसारं सज्वरं वाथ विज्वरम् ॥ १०० ॥

इति ह्रीवेरादिः ।

विल्वं छागी पयः सिद्धं सिता मोचरसान्वितम् ।
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ १०१ ॥
गुडेन भक्षयेद्विल्वं रक्तातिसारनाशनम् ।
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ १०२ ॥
धातकी वदरीपत्र कपित्थरसमाक्षिकम् ।
सलोध्रमेकतो दध्ना पिबेन्निर्वाहिकार्दितः ॥ १०३ ॥
पयसा पिप्पली कल्कः पीतो वा मरिचोद्भवः ।
त्र्यहान्निर्वाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ १०४ ॥
रसाञ्जनं चातिविषा कुटजस्य फलत्वचम् ।
धातुकी शृङ्गवेरञ्च पिबेत्तण्डुलवारिणा ॥ १०५ ॥
क्षौद्रेण युक्तं नुदति रक्तातिसारमुल्वणम् ॥ १०६ ॥

निःक्वाथ्य मूलममलं गिरिमल्लिकायाः
सम्यक्पलं द्वितयमम्बु ततःशरावे ।
तत्पादशेषसलिलं खलु शोषणीयं
क्षीरे पलद्वयमिते कुशलैरजायाः ॥ १०७ ॥

प्रक्षिप्य मासकानष्टौ मधुनस्तत्र शीतले ।
रक्तातिसारी तत्पीत्वा नैरुज्यमिह विन्दति ॥ १०८ ॥

इति गिरिमल्लिकाद्यं घृतम् ।

वदरीमूलकल्कन्तु तिलकल्कं तथैव च ।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ।
तत्पिबेन्मधुना युक्तं रक्तातिसारनाशनम् ॥ १०९ ॥
यष्टीमधुतिलाः कृष्णा पद्मकेसरमुत्पलम् ।
क्षौद्रमत्स्यण्डिका युक्तमाजेन पयसा पिबेत् ॥ ११० ॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुक् जयेत् ।

रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ १११ ॥
क्षीरपिष्टं पिबेल्लोध्रं यष्ट्याह्वोत्पलमिश्रितम्।
रक्तातिसारशमनं शर्करामधुयोजितम् ॥ ११२ ॥
पीतः प्रियङ्गुनः कल्कः सक्षौद्रस्तण्डुलाम्बुना।
रक्तस्रावं जयेच्छीघ्रं धन्वयासरसान्वितः ॥ ११३ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ११४ ॥
शल्लकी वदरी जम्बू प्रियालाम्रार्जुनत्वचः।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितवारणाः ॥ ११५ ॥
सुस्विन्नं कच्चटं बालविल्वं सनवनीतकम्।
लिह्याद्रक्तातिसारे च सशूले ग्रहणीगदे ॥ ११६ ॥
वयस्था शारिवा लोध्रं शर्करा मधुयष्टिका।
पीतः शीतेन पयसा सक्षौद्रो रक्तनाशनः ॥ ११७ ॥
मुस्तकेन्द्रयवैः क्वाथं सुशीतं मधुना युतम्।
रक्तपित्तातिसारघ्नं ग्रहणीदोषनाशनम् ॥ ११८ ॥
नवनीतं मधुयुतं लिह्याद्वा सितया सह।
नागकेशरचूर्णं वा रक्तसंग्रहणं परम् ॥ ११९ ॥
केशराजसमुद्भूता जलेन गुटिका कृता।
जयेत्साममतीसारं सशूलं सास्रमाशु च ॥ १२० ॥
कृष्णामृन्मधुकं लोध्रं कौटजं तण्डुलाम्बुना।
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ॥ १२१ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ १२२ ॥
कुटजस्य पलं ग्राह्यमष्टभागे जले शृतम्।
तथैव विपचेद्भूयो दाड़िमोदकसंयुतम् ॥ १२३ ॥
यावच्च लसिकाभासं शृतं तमुपकल्पयेत्।

तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ।
अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम् ॥ १२४ ॥
कुटजक्वाथतुल्योऽत्र दाड़िमस्य रसो मतः ॥ १२५ ॥
यो रक्तं शकृतः पूर्वं पश्चाद्वा प्रतिसार्य्यते ।
सपल्लवैर्वटादीनां ससर्पिः साधितं पयः ॥ १२६ ॥
पिबेत्सशर्कराक्षौद्र मथ चैवातिमन्थितम् ।
नवनीतं पिबेद्युक्त्या तक्रं चानुपिबेन्नरः ॥ १२७ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपदेक्ष्यते ।
यदा वायुर्विबद्धश्च पिच्छवस्तिस्तदा हितः ॥ १२८ ॥
शाल्मलेरार्द्रपुष्पाणि पुटपाककृतानि च ।
सङ्कुट्योलूखले सम्यग्गृह्णीयात् पयसि शृते ॥ १२९ ॥
गृहीत्वा च पलं तस्य त्रिपलं घृततैलयोः ।
युक्तं मधुककल्केन माक्षिकत्रिपलेन च ॥ १३० ॥
तैलाक्तवपुषं दद्याद्वस्तेः प्रत्यागते रसे ।
भोजयेत् पयसा वापि पित्तातिसारपीड़ितम् ॥ १३१ ॥

इति पिच्छवस्तिः ।

क्षीरद्रुमाणाञ्च रसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः ।
सितांपलार्द्धं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम् ॥१३२॥
दाहे पाके हितं चाजं पयः क्षौद्रं सशर्करम् ।
गुदप्रक्षालने सेके प्रशस्तं पानभोजने ॥ १३३ ॥
स्वेदोऽथ मूषिकामांसैस्तद्रसास्त्रं क्षणं तथा ।
गुदनिस्सरणे शस्तं चाङ्गेरीघृतमुत्तमम् ॥ १३४ ॥

इति चाङ्गेरीघृतम् ।

शम्बूकमांसं सुस्विन्नं सतैललवणान्वितम् ।
ईषद् घृतेन चाभ्यज्य स्वेदयेत्तेन यत्नतः ॥ १३५ ॥
गुदभ्रंशमशेषेण नाशयेत् क्षिप्रमेव वा ॥ १३६ ॥

मेघनादस्य मूलानि मधुना सितया सह।
निहन्ति शोणितस्रावं तण्डुलोदकपानतः॥ १३७॥

इति रक्तातिसारः।

श्वेतं विसङ्गनं स्निग्धं शीतलं मन्दवेदनम्।
गौरवाऽरुचि हृल्लासैः पुरीषं सार्य्यते कफात्॥ १३८॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम्।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः॥ १३९॥
पूतिकव्योष विल्वाग्नि पाठादाड़िमहिङ्गुभिः।
योजयेत् संस्कृतैर्यूषः श्लेष्मातिसारनाशनः॥ १४०॥
गोकण्टकं गुहा व्याघ्री कषायं सुशृतं पिबेत्।
आमश्लेष्मातिसारघ्नं दीपनं पाचनं परम्॥ १४१॥
पथ्यासौवर्चलं हिङ्गु सैन्धवातिविषा वचा।
आमातिसारकफजं पीतमुष्णाम्बुना जयेत्॥ १४२॥
चव्यं सातिविषं कुष्ठं बालविल्वं सनागरम्।
वत्सकत्वक्फलं पथ्या छर्दिश्लेष्मातिसारनुत्॥ १४३॥
पथ्याग्नि कटुका पाठा वचा ग्रन्थिकवत्सकैः।
सनागरैर्ज्जयेत् क्वाथः कल्को वा श्लैष्मिकीं स्रुतिम्॥१४४॥
पाठावचात्रिकटुकं कुष्ठं कटुकरोहिणी।
उष्णाम्बुपीतान्येतानि श्लेष्मातिसार नाशनम्॥ १४५॥
हिङ्गुसौवर्चलं व्योषमभयातिविषावचा।
पीतमुष्णाम्बुना चूर्णं श्लेष्मातिसारनाशनम्॥ १४६॥
कुष्ठं पाठा वचा मुस्तं चित्रकं कटुरोहिणी।
पीतमुष्णाम्बुना चूर्णं श्लेष्मातिसारनाशनम्॥ १४७॥
चव्यं सातिविषं कुष्ठं पाठा कटुकरोहिणी।
अभयाम्बुधरा शुण्ठी विल्वकर्कटिकायुता॥ १४८॥
चित्रकं पिप्पलीमूलं पिप्पली गजपिप्पली।

कृमिघ्नतुवचाविल्व पेशीधान्यककट्फलम् ॥ १४९ ॥
श्लोकार्धविहिता योगाश्चत्वारः कण्टकाः स्मृताः।
श्लेष्मातिसारिणे देया ह्येते वर्णबलप्रदाः ॥ १५० ॥
नागरातिविषामुस्तं यवानीचित्रकं वचा।
शुण्ठीपुष्करमूलञ्च पाठा कटुकरोहिणी ॥ १५१ ॥
भल्लातकास्थीन्यभया धातकी कौटजं फलम्।
हिङ्गु सौवर्चलं चारं बिड़ङ्गं विड़सैन्धवम् ॥ १५२ ॥
मूत्रपिष्टान् समानेतान्वटकानक्षसम्मितान्।
छायाशुष्कांस्तु तान् ज्ञात्वा दद्याच्छ्लेष्मातिसारिणे ॥१५३॥
कृमिश्वयथुपाण्डुर्त्ति प्लीहगुल्मोदरापहान्।
ग्रहण्यर्शो विकारघ्नानग्निसन्दीपनान् पिबेत् ॥ १५४ ॥

इति नागराद्यो वटकः। इति श्लेष्मातिसारः।

तन्द्रायुक्तो मोहसादास्यशोषी
वर्चः कुर्य्यान्नैकरूपं तृषार्त्तः।
सर्वोद्भूतः सर्वलिङ्गोपपत्तिः कृच्छ्रैः
साध्यो बालवृद्धावलानाम् ॥ १५५ ॥

शालिपर्णी पृश्निपर्णी वृहती कण्टकारिका।
बलाश्वदंष्ट्राविल्वानि पाठा नागरधान्यकम्।
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ १५६ ॥

इति वृहच्छालिपर्ण्यादिः।

यवकल्केन संसिद्धा प्रसारिण्यग्निमन्थयोः।
यवागूं प्राश्यमानोऽपि वातीसारी सुखी भवेत् ॥ १५७ ॥
अजमोदा समङ्गा च बालकं पद्मकेसरम्।
यवागूं साधयेदेतैः सर्वातीसारनाशिनीम् ॥ १५८ ॥
शावरकभद्रमुस्ता विश्वौषधविल्वधातकीपुष्पैः।
सिद्धा तत्र यवागूर्देया सर्वातिसारिषु च ॥ १५९ ॥

खिन्नं कुतूहलदहने चाङ्गेरीपत्रसञ्चयं युक्त्या।
सिन्धूद्भवेन मिश्रं हन्त्यरुचिं जठररोगञ्च ॥ १६० ॥
कट्वङ्गमोचाह्वघनाम्बुविल्वैः ससारिवावत्सकनागरैश्च।
जलं शृतं सर्वभवं नराणां निहन्त्यतीसारमसक्तवेगम् ॥१६१॥
पञ्चमूलीबलाविल्व गुडूचीमुस्तनागरैः।
पाठाभूनिम्बह्रीवेर कुटजत्वक् फलैः शृतम् ॥ १६२ ॥
हन्ति सर्वानतिसारान् ज्वरदोषं वमिं तथा।
सशूलोपद्रवं श्वासं कासं हन्यात्सुदुस्तरम् ॥ १६३ ॥
पञ्चमूलीति सामान्यात्पित्ते योज्या कनीयसी।
महती पञ्चमूली च वातश्लेष्माधिके यथा ॥ १६४ ॥

इति पञ्चमूल्यादिः।

समङ्गातिविषामुस्तं ह्रीवेरं विश्वधातकी।
कुटजत्वक्फलं विल्वं क्वाथः सर्वातिसारनुत् ॥ १६५ ॥
अभयानागरं मुस्तं गुड़ेन सह योजितम्।
चतुःसमेयं गुटिका त्रिदोषघ्नी प्रकीर्त्तिता ॥ १६६ ॥
आमातिसारमानाहं विषमाञ्च विसूचिकाम्।
क्रमीनरोचकं हन्याद्दीपयत्याशु चानलम् ॥ १६७ ॥
विल्वाब्दधातकीपाठा शुण्ठीमोचरसः समः।
पीतो रुन्ध्यादतीसारं गुड़तक्रेण दुर्जयम् ॥ १६८ ॥
दन्तीन्दीवरकेसराजशिखरी चौराविकादीप्यकम्।
सूर्य्यावर्त्तकजीरकद्वययुतं भ्रष्टं मनाक् खर्परे।
पिष्ट्वा पर्य्युषिताम्बुना दिनमुखे पीतं निहन्यान्नृणाम्।
नानावर्णरुजातिसारकगदं प्रोवाच धन्वन्तरिः ॥ १६९ ॥
पलमङ्कोटमूलस्य पाठादार्व्वोश्च पेषयेत्।
यथ्याम्बुनाक्षमात्रस्य वटी सर्वातिसारहा ॥ १७० ॥
अङ्कोटमूलं तक्रेण ह्यतिसारहरं परम्।

माहिषेण तु तक्रेण पाठापत्रं तथैव च ॥ १७१ ॥
कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत् ।
अतिसारं जयत्याशु शर्करामधुसंयुतम् ॥ १७२ ॥
विभीतकफलं दग्धं हन्याल्लवणसंयुतम् ।
महान्तमप्यतीसारं चक्रपाणिरिवाऽसुरान् ॥ १७३ ॥
वटप्ररोहं संपेष्य श्लक्ष्णं तण्डुलवारिणा ।
तं पिबेत्तक्रसंयुक्तमतिसारहरं परम् ॥ १७४ ॥
धातकीनागरं विल्वं सलोध्रं पद्मकेसरम् ।
जम्बूत्वङ्नागरं धान्यं पाठामोचरसं तथा ॥ १७५ ॥
समङ्गा धातकी विल्वं मध्यजंब्वाम्रयोस्त्वचः ।
कपित्थानि विड़ङ्गानि नागरं मरिचानि च ॥ १७६ ॥
चाङ्गेरी तत्र कोलाम्ल चत्वारस्ते कफोत्तरे ।
श्लोकार्द्धविहितान् दद्यात् सस्नेहलवणान् गुड़ान् ॥१७७॥

इति अतीसारे च चत्वारी यूषाः ।

अवेदनं सुसम्पक्कं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ १७८ ॥

स्निग्धं घनं कुटजवल्कमजन्तुजग्ध-
मादाय तत्क्षणमतीव च पेषयित्वा ।
जम्बूपलाशपुटतण्डुलतोयसिक्तं
वद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥ १७९ ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ।
कृष्णात्रिपुत्रमतिपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥ १८० ॥

इति कुटजपुटपाकः ।

काश्मरी पद्मपत्रैश्च पत्रा कट्वङ्ग वल्कलम् ।

सपद्मकेसरो ग्राह्यो स्याद्रसो मधुसंयुतः ॥ १८१ ॥

इति श्योनाकपुटपाकः।

न्यग्रोधादिगणा पूर्वं पुटपाकस्य तित्तिरे।
द्रवो मधुसितो पेयः पीतो हन्त्युदरामयम् ॥ १८२ ॥

इति न्यग्रोधादि पुटपाकः।

शुण्ठीमल्पघृतान्वितां परिवृतां गोधूमपिष्टैस्ततः।
सद्यो गोमयवेष्टितान्तु विपचेन्मन्दाग्निना चातुरः॥
शीतीकृत्य सितासमां प्रतिदिनं भक्षेन्नरः पथ्यभुक्।
सर्वोपद्रवसंयुतानपि जयेद्दीर्घातिसारामयान् ॥ १८३ ॥

इति शुण्ठीपुटपाकः।

पुटपाकस्य पाकोऽयं वह्निरारक्तवर्णता।
भेषजत्वात्पलस्यास्य पानमिष्टं चिकित्सकैः ॥ १८४ ॥
कुटजत्वक्कृतः क्वाथो घनीभूतः सुशोभनः।
लोहितोऽतिविषायुक्तः सर्वातिसारनुद्भवेत् ॥ १८५ ॥
इच्छन्त्यत्राष्टमांसेन क्वाथादतिविषारजः ॥ १८६ ॥

इति कुटजावलेहः।

मूलं त्वचः पलशतं रक्तस्य कुटजस्य च।
जलद्रोणे विपाच्यैतत्पादशेषमथोद्धरेत् ॥ १८७ ॥
भूयस्तद्विपचेत्तावद्यावत्सान्द्रत्वमेति च।
सैन्धवाद्य विड्क्षार कृष्णेन्द्रयवधातकी ॥ १८८ ॥
जीरं चूर्णं समं कृत्वा मध्वक्तं विलिहेत्ततः।
ततो महिषदघ्ना च भोजयेच्च तमातुरम् ॥ १८९ ॥
दुर्निवारमतिसारं जयेदेतदसंशयः ॥ १९० ॥
शतं कूटजमूलस्य क्षुण्णं तोयार्मणे पचेत्।
क्वाथे पादावशेषेऽस्मिंल्लेहीभूते पुनः पचेत् ॥ १९१ ॥
सौवर्चल यवक्षार विड्सैन्धवपिप्पली।

धातकीन्द्रयवा जाजी चूर्णं दत्वा पलद्वयम् ॥ १९२ ॥
लिह्यादद्‌रमात्रन्तु तच्छीतं मधुसंयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥
दुर्वारं ग्रहणी दोषं जयेच्चैव प्रवाहिकाम् ॥ १९३ ॥

इति कुटजावलेहः ।

लेहे यत्रास्ति नो भागो निर्दिष्टो द्रव्यकल्कयोः ।
तत्रापि पादिकः कार्य्यो द्रवात्कल्को विजानता ॥ १९४ ॥
कूटजत्वक्‌फलशतं कषायमुपकल्पयेत् ।
वस्त्रपूतं पुनः क्वाथ्यं यदा लेहत्वमागतम् ॥ १९५ ॥
भल्लातकं विड़ङ्गानि त्रिफला त्रिकटु तथा ।
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ॥ १९६ ॥
वचा सातिविषा विल्वं पाठा मोचरसस्तथा ।
वालकञ्च समङ्गा च प्रत्येकन्तु पलं पलम् ॥ १९७ ॥
त्रिंशत्पलं गुड़स्याथ चूर्णीकृत्य प्रदापयेत् ।
मधुनः कुड़वं दत्वा घृतस्य कुडवं तथा ॥ १९८ ॥
एष लेहस्तु शमयेदर्शोरक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १९८ ॥
ये च दुर्नामजा रोगा स्तांस्तु सर्वान् व्यपोहति ।
रक्तपित्तमतीसारं पाण्डुरोगमरोचकम् ॥ १९९ ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपाने च तं दद्याद् दधि तक्रं घृतं पयः ॥ २०० ॥

इति कुटजावलेहः ।

तुलामथार्द्रां गिरिमल्लिकायाः सङ्कुद्य पक्वा रसमाददीत ।
तस्मिन् सुतप्ते पलसम्मितानि सञ्चूर्ण्य दद्यात् सह शाल्मलेन॥२०
पाठां समङ्गाऽतिविषां समुस्तां
विल्वञ्च पुष्पाणि च धातकीनाम् ।

प्रक्षिप्य भूयो विपचेच्च तावद्
दर्वीप्रलेपः स्वरसस्तु यावत् ॥ २०२ ॥
पीतस्त्वसौ कालविदा जनेन
मण्डेन वाऽजापयसाथ वापि।
निहन्ति सर्वं त्वतिसारमुग्रं
कृष्णं सितं लोहितपीतकञ्च ॥ २०३ ॥
दोषञ्च हन्याद्विविधं सरक्तं
पित्तं तथार्शांसि सशोणितानि।
असृग्दरञ्चैवमसाध्यरूपं
निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥ २०४ ॥

इति कुटजाष्टकावलेहः।

तुला द्रव्ये जलद्रोणो द्रोणे द्रव्य तुला मताः।
जीर्णे त्वपथ्यभोजी स्यादर्शोभ्यः प्रतिमुच्यते।
रोगानीकविनाशाय कौटजो लेह ईरितः ॥ २०५ ॥

इति कुटजावलेहः।

सदार्व्यङ्कोटपाठानां मूलं त्वक्कुटजस्य च।
शाल्मलीशालनिर्यासधातकीलोध्रदाड़िमम् ॥ २०६ ॥
पिष्टाक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना।
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः ॥ २०७ ॥
पिवेदत्ययमापन्नो विड्विसर्गेण मानवः।
अङ्कोटवटको नाम्ना सर्वातिसारनाशनः ॥ २०८ ॥

इति अङ्कोटवटकः।

वत्सकस्याऽमृतायाश्च द्वे पले प्रस्थमोदकम्।
श्रपयित्वा रसे तस्मिन् पादशेषेऽवतारिते ॥ २०९ ॥
अष्टौ पलानि शक्रस्य यवाश्चूर्णीकृतानि तु।
गुड़पाकं विदित्वा तु यथा वक्त्रावतारितम् ॥ २१० ॥

सद्यः सर्वातिसारांश्च सर्वांश्च ग्रहणी गदान् ।
नाशयेद्दीपयेच्चाग्निं कृष्णात्रेयस्य शासनात् ॥ २११ ॥

इति वत्सकाद्या गुटिका ।

पलमङ्कोटमूलस्य पाठां दार्वीञ्च तत्समाम् ।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ॥ २१२ ॥
छाया शुष्कां पिवेत् क्षिप्रं पिष्ट्वा तण्डुलवारिणा ।
वातपित्तकफप्रायान् द्वन्द्वजान् सान्निपातिकान् ॥
हन्यात् सर्वानतिसारान् गुटिकेयं प्रयोजिता ॥ २१३ ॥

इति अङ्कोटगुटिका ।

पलार्द्धमरुणायास्तु द्विपलं कुटजस्य च ।
केशराजस्य मूलं तु कर्षं तत्सर्वमेकतः ॥ २१४ ॥
सङ्कुट्य सलिलप्रस्थे पक्त्वा पादस्थिते रसे ।
पूतेऽस्मिन्नर्धतः खण्डं छागक्षीरं चतुष्पलम् ॥ २१५ ॥
विल्वातिविषयोश्चूर्णं मुस्तस्येन्द्रयवस्य च ।
प्रत्येकमक्षमात्रन्तु क्षिप्त्वा पक्त्वा च भक्षयेत् ॥ २१६ ॥
शुद्धं तदनुभुञ्जीत काञ्जिकाम्बुप्रसाधितम् ।
माषगोक्षुरसिद्धं वा छागक्षीरं पिबेन्नरः ॥
ग्रहण्यतिसारहरो लेहोऽयमपराजितः ॥ २१७ ॥

इति अपराजितावलेहः ।

वत्सकस्य च वीजानि दार्व्याश्चैव त्वगुत्तमा ।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥ २१८ ॥
षड्भिरेतैर्घृतं सिद्धं पेयं मण्डविमिश्रितम् ।
अतिसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ २१९ ॥

इति षड़ङ्गघृतम् ।

कुटजत्वक्फलं लोध्रं कृष्णा दार्वीमहौषधम् ।

कटुका चेति तैः सिद्धं घृतं सर्वातिसारनुत् ॥ २२० ॥

इति कुटजाद्यं घृतम्।

दार्वी सलाचा कटुका सविश्वा त्वक्कौटजाःशक्रयवः सकृष्णः।
एभिर्विपक्वं घृतमाशुहन्ति मण्डेन पीतं सकलातिसारम् ॥२२१

इति सप्ताङ्गघृतम्।

तुलां सङ्कुट्य विल्वस्य पचेत्पादावशेषिताम्।
सक्षीरं साधयेत् तैलं श्लक्ष्णपिष्टैरिमैः समैः ॥ २२२ ॥
धातकी विल्वकुष्ठञ्च रास्ना शुण्ठी पुनर्नवा।
देवदारुवचामुस्तं लोध्रं मोचरसान्वितम् ॥ २२३ ॥
मृदग्निना साधितञ्च ग्रहण्यर्शोऽतिसारनुत्।
विल्वतैलमितिख्यातं महदात्रेय पूजितम् ॥ २२४ ॥

इति महाविल्वतैलम्।

ग्रहण्यर्शो विकारे ये स्नेहाद्या उपकल्पिताः।
तेऽपि चात्र प्रयोक्तव्या यथा दोषं विजानता ॥ २२५ ॥

इति सर्वातिसारम्।

कट्वादिभीरसैः क्रुद्धैः प्रवृद्धौ पित्तमारुतौ।
व्यासाद्य ग्रहणीं नृणामतीसारकरौ स्मृतौ ॥ २२६ ॥
सशब्दं फेनिलं रूक्षं कषायोदकसन्निभम्।
पक्वाम्लरसवर्णाभं हरिद्राप्रतिमं घनम् ॥ २२७ ॥
विण्मूत्र क्षणं सृजति सशूलं दाहपाकवान्।
विद्यात्तद्दाहशोषान्तं वातपित्तातिसारिणाम् ॥ २२८ ॥
लघुना पञ्चमूलेन पिप्पल्या सह धान्यया।
आहारो भिषजा योज्यः सर्वदा हितमिच्छता ॥ २२९ ॥
कट्फलं मधुकं लोध्रं त्वग्दाड़िमफलस्य च।
वातपित्तातिसारघ्नं पिबेत्तण्डुलवारिणा ॥ २३० ॥
कलिङ्गकं वचा मुस्तं दारु सातिविषा समम्।

कल्कं तण्डुलतोयेन पिबेत्पित्तानिलामयी ॥ २३१ ॥
फेनिलं बहुशो रक्तं सकलं वेदनान्वितम् ।
विविधं साध्यमाणञ्च वातपित्तातिसारिणाम् ॥ २३२ ॥

इति वातपित्तातिसारः ।

कट्वम्ललवणस्निग्धगुरुमिष्टोपसेवनात् ।
श्लेष्मपित्ते प्रकुपिते वह्निं सञ्छाद्य देहिनाम् ॥ २३३ ॥
कषायन्तं द्रवं स्निग्धं मन्दवेगं सवेदनम् ।
घनं शाल्मली पिच्छाभं पद्मपत्रनिभं क्वचित् ॥ २३४ ॥
पिच्छिलं शङ्खवर्णाभं रक्तविन्दुभिराचितम् ।
क्षुत्तृष्णे चातिबहुले श्लेष्मपित्तातिसारिणाम् ॥ २३५ ॥
यथा दोषप्रशमनी दद्याद्दीपनपाचनी ।
यवागूर्बद्धदोषाणां श्लेष्मपित्तातिसारिणाम् ॥ २३६ ॥
शालिपर्णी बला विल्वैः पृथक् पर्णी च साधिता ।
दाड़िमाम्लयुता पेया श्लेष्मपित्तातिसारिणाम् ॥ २३७ ॥
कुटजातिविषा मुस्तं हरिद्रा पर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं श्लेष्मपित्तातिसारिणाम् ॥ २३८ ॥
मुस्ता सातिविषा मूर्वा वचा च कुटजैः समाः ।
एषां कषायः सक्षौद्रः श्लेष्मपित्तातिसारहृत् ॥ २३९ ॥
मुस्तं हरिद्रे मधुकं पृश्निपर्णी सवृत्सकम् ।
मधुयुक्तं निहन्त्याशु श्लेष्मपित्तसमुद्भवम् ॥ २४० ॥
सवेदनं सरक्तञ्च पुरीषं तन्दधाति च ।
श्लेष्मपित्तातिसारघ्नं रक्तं चाशु नियच्छति ॥ २४१ ॥
पाठा वत्सकवीजानि चित्रकं विश्वभेषजम् ।
पिवेन्निःक्वाथ्य चूर्णानि कृत्वा चोष्णेन वारिणा ॥ २४२ ॥
पित्तश्लेष्मातिसारघ्नं ग्रहण्यां शूलनुद्धितम् ॥ २४३ ॥
लोध्रं चन्दनयष्ट्याह्व दार्वी पाठाऽनिलोत्पलम् ।

तण्डुलोदकसम्पिष्टं दीर्घवृन्तत्वगन्वितम् ॥ २४४ ॥
पूर्ववत् क्वथितादस्माद्रसमादाय शीतलम् ।
मध्वक्तं पाययेच्चेतत् कफपित्तोत्तरामये ॥ २४५ ॥

इति लोध्रादिपुटपाकः । इति श्लेष्मपित्तातिसारः ।

रसैः स्वादुकटुप्रायैरुभौ वातकफौ नृणाम् ।
कुरुतस्तावतीसारं क्रुद्धौ वह्निं निरस्य च ॥ २४६ ॥
द्रवं सफेनं पुरीषं तत्तुल्यमामगन्धिकम् ।
सशब्दं वेदनावन्तं न चामं परिपच्यते ॥ २४७ ॥
नित्यं गुड़गुड़ायन्तं तन्द्रामूर्च्छाभ्रमक्लमैः ।
प्रसक्तं सन्धिकट्यूरुजानुपृष्ठास्थिशूलिनः ॥ २४८ ॥
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा ।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ २४९ ॥
चिरविल्वं वचा दारुपञ्चकोलं पुनर्नवा ।
विदारिगन्धा वृहती विल्वाद्यं खण्डितान् यवान् ।
क्वाथो यवागूर्यूषं वा वातश्लेष्मातिसारिणाम् ॥ २५० ॥
विल्वं वत्सकवीजानि पाठाहिङ्गुशिवान्विता ।
वातश्लेष्मातिसारेषु कषायं पाचनं पिबेत् ॥ २५१ ॥
चित्रकातिविषा मुस्तं बालविल्वं सनागरम् ।
वत्सकत्वक् फलं पथ्या वातश्लेष्मातिसारनुत् ॥ २५२ ॥
पूति दारुत्वचं रोध्रं कट्वङ्गमथ नागरम् ।
दाड़िमाम्लयुतं दद्याद्वातश्लेष्मातिसारिणाम् ॥ २५३ ॥
वातातिसारे यच्चोक्तं पाचनं ग्राहि भेषजम् ।
तदत्रापि प्रयुञ्जीत सपित्तकफमारुते ॥ २५४ ॥

इति वातश्लेष्मातिसारः ।

विल्वचूतास्थिनिर्यूहः पीतः सक्षौद्रशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ २५५ ॥

पटोलयवधान्याकक्काथः पेयः सुशीतलः ।
शर्करा मधुसंयुक्तः छर्द्यतीसारनाशनः ॥ २५६ ॥
प्रियङ्ग्वञ्जनमुस्ताह्वं पाययेत्तु यथा बलम् ।
तृष्णातीसारछर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ २५७ ॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः ।
छर्द्यतीसारतृट्दाहज्वरघ्नः संप्रकाशितः ॥ २५८ ॥
जंब्वाम्रपल्लवोशीरवटशुङ्गावरोहकम् ।
रसः क्काथोऽथवा चूर्णं क्षौद्रेण सह योजितम् ॥ २५९ ॥
छर्दिज्वरमतीसारं मूर्च्छां तृष्णाञ्च दुर्जयाम् ।
नियच्छत्यचिराद्रक्तच्युतिं वाऽनेकहेतुकाम् ॥ २६० ॥

इति छर्द्यतीसारः ।

विड़ङ्गातिविषा मुस्तं दारुपाठा कलिङ्गकम् ।
मरिचेन समायुक्तं शोथातीसारनाशनम् ॥ २६१ ॥
किराताब्दामृतोदीच्य मुस्तचन्दनधान्यकैः ।
शोथातिसारहृल्लासतृट्दाहज्वरनाशनः ॥ २६२ ॥
विश्वौषधस्य गर्भेण दशमूलजले सृतम् ।
घृतं निहन्त्यतीसारं ग्रहणीं पाण्डुकामलाम् ॥ २६३ ॥

इति शोथातीसारः ।

तैस्तैर्भावैः शोचतोऽल्पाशनस्य
वाष्पोष्मा वै वह्निमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात् काकणन्ती प्रकाशम् ॥ २६४ ॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड् वा
निर्गन्धं वा गन्धवच्चातिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥ २६५ ॥

भयशोकसमुद्भूतौ ज्ञेयौ वातातिसारवत्।
तयोर्वातहरी कार्य्या हर्षणाश्वासनैः क्रिया ॥ २६६ ॥

इति भयशोकजौ अतीसारौ।

विषाशः कृमिसम्भूते हिता चोभयशर्मदा ॥ २६७ ॥
शर्करा धातकी लोध्रैः पाठारलुकपिप्पली।
समङ्गाभिर्मोचरसपद्मकेसरसंयुतैः ॥ २६८ ॥
अर्शः प्रभावकृमिजं विरुद्धपानान्न दोषसम्भूतम्।
अतिसारभयं शमयति लेहः कल्याणको नाम्ना ॥ २६९ ॥

इति कल्याणावलेहः।

दीप्ताग्निर्बहुदोषो यो विबन्धं वातिसार्य्यते।
विड़ङ्गत्रिफला कृष्णा कषायैस्तं विरेचयेत् ॥ २७० ॥
क्षुत्क्षामस्य विरिक्तस्य युञ्ज्यात्पेयां विचक्षणः।
भेषजैर्मारुतघ्नैश्च दीपनैः सम्यकल्पिताम् ॥ २७१ ॥

अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः
कोष्ठं दोषा धातुसङ्घान्मलांश्च।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥ २७२ ॥

तत्रापि वमनं कार्य्यं लङ्घनञ्च यथाक्रमम्।
शूलानाहप्रसेकान्तं वामयेदतिसारिणाम् ॥ २७३ ॥
पिप्पलीलवणाभ्याञ्च साधितेन जलेन वा।
विश्वोदीच्योदकं पानं लङ्घनं वापि शस्यते ॥ २७४ ॥
पिप्पल्यादिः प्रयोक्तव्यो यूषः सह षड़ादिभिः ॥ २७५ ॥
नागरातिविषा मुस्तं हिङ्गुवल्कचित्रकाः।
घनतेजोवती पाठा पिप्पलीन्द्रयवाः समम् ॥ २७६ ॥
सैन्धवं कौटजं वीजं वचा कटुकरोहिणी।
विड़ं पाठामतिविषां कुटजं विश्वभेषजम् ॥ २७७ ॥

एलाकुटजबीजानि लोध्रं सावरकं न्यसेत्।
वत्सकातिविषा शुण्ठी विल्वहिङ्गुयवाम्बुदाः ॥ २७८ ॥
श्लोकार्द्धे विहिता योगाः षड़ेते पाचना मताः।
उष्णाम्बुमद्यधान्याम्लैः पीताः वा श्लक्ष्णचूर्णिताः ॥ २७९ ॥

इति आमपाचनविधिः।

वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य।
प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः२८०

प्रवाहिका वातकृता सशूला
पित्तात्सदाहा सकफा कफाच्च।
सशोणिता शोणितसम्भवाच्च
ताः स्नेहरूक्षप्रभवा मतास्तु ॥ २८१ ॥

तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वताञ्च ॥२८२॥

तैलं सर्पिर्दधिक्षौद्रं सिता विश्वं सफाणितम्।
सर्वमालोड्य पातव्यं सद्यो निर्वाहिकां जयेत् ॥ २८३ ॥
कल्कः स्याद्वालविल्वानां तिलकल्कश्च तत्समः।
दध्नः सारोऽम्लस्नेहाढ्यः सद्यो हन्यात् प्रवाहिकाम् ॥२८४॥
बलाविल्वं गुड़ं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वातप्रतिहते सशूले सप्रवाहिके ॥ २८५ ॥
विल्वपेशी गुड़ं लोध्रं तैलं मरिचयोजितम्।
लीढ्वा प्रवाहिकाक्रान्तः क्षिप्रं सुखमवाप्नुयात् ॥ २८६ ॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहान्निर्वाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ २८७ ॥
धातकी वदरीपत्रं कपित्थरसमाक्षिकम्।
सलोध्रमिक्षतो दध्ना पिबेन्निर्वाहिकार्दितः ॥ २८८ ॥
त्र्यूषणं त्रिफला मुस्तं चित्रको हस्तिपिप्पली।
विल्वं कर्कटिका हिङ्गु विड़ङ्गं सनिदिग्धिकम् ॥ २८९ ॥

घृतप्रस्थं पचेदेभिर्गवां मूत्रे चतुर्गुणे।
तत्प्रयोगं पिबेत्कोलं हन्यात्तेन प्रवाहिकाम्॥ २९०॥

इति त्र्यूषणाद्यं घृतम्। इति प्रवाहिका।

यवाः सक्तुश्च लाजानां मूलं पुष्पञ्च शाल्मलेः।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः॥ २९१॥
त्रिप्रस्थे सलिलस्यैतत् क्षीरप्रस्थं विपाचयेत्।
क्षीरशेषं कषायञ्च पूतं कृत्वा क्षिपेदथ॥ २९२॥
कल्कः शाल्मलिनिर्य्यास समङ्गाचन्दनोत्पलम्।
वत्सकस्य च वीजानि प्रियङ्गु पद्मकेशरम्॥ २९३॥
पिच्छावस्तिरियं सिद्धा सघृतक्षौद्रशर्करा।
प्रवाहिका गुदभ्रंश रक्तस्रव ज्वरापहा॥ २९४॥

इति पिच्छावस्तिः।

दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत्।
स पिबेत् फाणितं शुण्ठी दधितैलसमन्वितम्॥ २९५॥

दध्ना ससारेण समाक्षिकेन
भुञ्जीत निःसारिकपीड़ितस्तु।
सुतप्तकुप्यक्कथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन॥ २९६॥

बला विश्वशृतं क्षीरं गुड़तैलानुयोजितम्।
दीप्ताग्निं पाययेत्प्रातः सुखदं वर्चसः क्षये॥ २९७॥
शशमांसं सरुधिरं समङ्गा सघृतं दधिः।
विपाच्य खादेत् सेवेच्च स्वदन्नं शकृतः क्षये॥ २९८॥

इति पुरीषक्षये व्यवस्था।

विबन्धवातविट्शूलपरीतः सप्रवाहिकः।
सरक्तपित्तश्च पयः पिबेत्तृष्णासमन्वितः॥ २९९॥

जीर्णेऽमृतोपमं क्षीरमतीसारे सुयोजितम् ।
अचिरोत्थे च तत्पेयमपाम्भागैस्त्रिभिः शृतम् ॥ ३०० ॥

अथ असाध्यलक्षणमाह ।

पक्वजाम्बवसङ्काशं यकृत् पिण्डनिभन्तनु ।
घृततैलवसा मज्जा वेशवारं पयोदधि ॥ ३०१ ॥
मांसधावन तोयाभं कृष्णं नीलारुणप्रभम् ।
कर्वुरं मेचकं स्निग्धं चन्द्रकोपगतं घनम् ॥ ३०२ ॥
कुणपं मस्तुलुङ्गाभं सगन्धं क्वथितं बहु ।
तृष्णादाहभ्रमश्वासहिक्कापार्श्वास्थि शूलिनम् ॥ ३०३ ॥
सम्मूर्च्छाऽरतिमोहैश्च युक्तं पक्ववलीगुदम् ।
प्रलापयुक्तञ्च भिषग्वर्जयेदतिसारिणम् ॥ ३०४ ॥
असंवृतगुदं क्षीणं शूलाध्मानैरुपद्रुतम् ।
गुदे पक्वे गतोष्माणमतिसारिणमुत्सृजेत् ॥ ३०५ ॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम् ।
विशेषेण नरं वृद्धमतिसारो विनाशयेत् ॥ ३०६ ॥

लिङ्गैरसाध्यो ग्रहणीविकारो
यैस्तैरतिसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो
ऽहत्वा तनुं नैव निवर्त्तते तु ॥ ३०७ ॥

शोथं शूलं ज्वरं मूर्च्छां श्वासं कासमरोचकम् ।
छर्दिं तृष्णाञ्च हिक्काञ्च दृष्ट्वातिसारिणं त्यजेत् ॥ ३०८ ॥
हस्तपादाङ्गुली सन्धि प्रपाको मूत्रविट्ग्रहः ।
पुरीषस्योष्णतातीव कोष्ठभेदी न जीवति ॥ ३०९ ॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ ३१० ॥
स्नानावगाहमभ्यङ्गं गुरुस्निग्धञ्च भोजनम् ।

व्यायाममग्निसन्तापमतीसारे विवर्जयेत् ॥ ३११ ॥

इति अतिसारनिदानचिकित्साधिकारः ।

अथ ज्वरातिसारमाह ।

ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक् ।
तस्माज्ज्वरातिसारस्य तेन नात्रोदितः पुनः ॥ ३१२ ॥
च्यवमानं ज्वरोत्सृष्ट उपेक्षेत मलं सदा ।
अतिप्रवर्त्तमानन्तु साधयेत् तं चिकित्सकैः ॥ ३१३ ॥
ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक् ।
न तन्मिलितयोः कार्य्य मन्योन्यं वर्द्धते यतः ॥ ३१४ ॥
अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सकैः ॥ ३१५ ॥
लङ्घनमुभयोर्युक्तं मिलिते कार्य्यं विशेषतस्तदनु ।
उत्पलषष्टिकसिद्धं लाजामण्डादिकं पेयम् ॥ ३१६ ॥
पृश्निपर्णी बलाविल्वनागरोत्पलधान्यकैः ।
ज्वरातिसारे पेयां वा पिबेत् साम्लां शृतां नरः ॥ ३१७ ॥
धातकी क्वाथसंसिद्धा विश्वभेषजसंस्कृता ।
दाड़िमाम्लयुता पेया ज्वरातिसारशूलिनाम् ॥ ३१८ ॥

एरण्डमूलयवगोक्षुरकारनालैः
खिन्नां लिहन्ति विजयां मधुना युतां ये ।
तेषां प्रणाशमुपयान्त्युदरामयास्तु
सर्वे सशूलविषमज्वरकासयुक्ताः ॥ ३१९ ॥

कणा करिकणा लाजा गणो मधुसितायुतः ।
पीतो ज्वरातिसारस्य तृष्णावम्योश्च नाशनः ॥ ३२० ॥
पाठेन्द्रयवभूनिम्ब मुस्त पर्पटकामृता ।
जयत्याममतीसारं ज्वरञ्च समहौषधम् ॥ ३२१ ॥
नागरातिविषा मुस्तं भूनिम्बामृतवत्सकैः ।

सर्वज्वरहरः क्वाथः सर्वातिसारनाशनः ॥ ३२२ ॥

इति नागरादिः ।

ह्रीवेरातिविषा मुस्त विल्वनागरधान्यकम् ।
पिबेत्पिच्छा विबन्धघ्नं शूलदोषामपाचनम् ।
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ३२३ ॥

इति ह्रीवेरादिः ।

गुडूच्यतिविषा धान्य शुण्ठी विल्वाब्द बालकैः ।
पाठा भूनिम्बकुटजचन्दनोशीरपर्पटैः ॥ ३२४ ॥
पिबेत्कषायं सक्षौद्रं पिपासादाहनाशनम् ।
ज्वरातिसारसन्तापं नाशयेदविकल्पतः ॥ ३२५ ॥

इति गुडूच्यादिः ।

वत्सकस्य फलं दारु रोहिणी गजपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका ॥ ३२६ ॥
द्वावेतौ सिद्धयोगौ तौ श्लोकार्द्धेनाभिभाषितौ ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ ॥ ३२७ ॥
उत्पलं दाड़िमत्वचं पद्मकेसरमेव च ।
पिबेत्तण्डुलतोयेन ज्वरातिसारनाशनम् ॥ ३२८ ॥
उशीरं बालकं मुस्तं धान्यकं विश्वमेव च ।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥ ३२९ ॥
हन्त्यरोचकपिच्छामं विविधं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ३३० ॥
विल्वबालकभूनिम्ब गुडूची धान्यनागरैः ।
कुटजाब्दयुतः क्वाथो ज्वरातिसारशूलनुत् ॥ ३३१ ॥
समङ्गा धातकीपुष्पं केशरं नीलमुत्पलम् ।
तण्डुलोदकसंयुक्तं ज्वरातिसारनाशनम् ॥ ३३२ ॥
नागरातिविषा मुस्ता गुडूची विश्ववत्सकैः ।

कषायः पाचनः शोथज्वरातिसारवारणः ॥ ३३३ ॥
मुस्तकातिविषा शुण्ठी वत्सकाभयतिक्तकैः।
सर्वातिसारहृल्लास सर्वशोफज्वरापहः ॥ ३३४ ॥
क्वाथेन दशमूलस्य विश्वमत्तयुगं पिबेत्।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे ॥ ३३५ ॥
मुस्तकविश्वातिविषा गोपी भूनिम्बवत्सकक्काथः।
मकरन्दगर्भयुक्तो ज्वरातिसारं जयेद्घोरम् ॥ ३३६ ॥
नागरामृतभूनिम्ब विल्वामलकवत्सकैः।
समुस्तातिविषोशीरैर्ज्वरातिसारहृज्जलम् ॥ ३३७ ॥
व्योषं वत्सकवीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां वचाम् ॥ ३३८ ॥
श्लक्ष्णं चूर्णीकृतं सर्वं तत्तुल्यां वत्सकत्वचम्।
सर्वमेकत्र संयोज्य प्रपिबेत्तण्डुलाम्बुना ॥ ३३९ ॥
सक्षौद्रं वा पिबेदेतत्पाचनं ग्राहि दीपनम्।
तृष्णारुचिप्रशमनं ज्वरातिसारनाशनम् ॥ ३४० ॥
कामला ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ॥ ३४१ ॥

इति व्योषाद्यं चूर्णम्।

कट्वङ्गविल्वजम्बास्थिकपित्थं सरसाञ्जनम्।
लाक्षा हरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम् ॥ ३४२ ॥
लोध्रं मोचरसः शङ्खं धातकी वटशुङ्गकम्।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ॥ ३४३ ॥
छायाशुष्कान् पिबेत्प्रातर्ज्वरातीसारशान्तये।
रक्तपित्तज्वरहराञ्छूलातिसारनाशनान् ॥ ३४४ ॥

इति कट्वङ्गाद्यो वटकः।

पाठामतिविषा निम्ब समङ्गा चन्दनं जलम्।

धातकी मुस्त भूनिम्बं जटामांसी सनागरम् ॥ ३४५ ॥
दार्वीं च समभागानि घृतप्रस्थं विपाचयेत्।
सज्वरेऽस्मिन्नतिसारे ग्रहण्यां पाण्डुरोगिणि।
मूत्रकृच्छ्रे गुदस्रावे विषूच्यामलसे हितः ॥ ३४६ ॥

इति पाठाद्यं घृतम्। इति ज्वरातिसारनिदानम्।

इति वङ्गसेनसङ्कलिते अतिसाराधिकारः समाप्तः।

---

## अथ ग्रहणीनिदानमाह।

अतिसारे निवृत्तेऽपि मन्दाग्ने रहिताशिनः।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥
तस्मात्कार्य्यः परिहारस्त्वतिसारे विरिक्तवत्।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ २ ॥
मांसासृङ्मेदसां तिस्रश्चतुर्थी श्लेष्मधारिणी।
पञ्चमी च मलं धत्ते षष्ठी चाग्निधरा मता।
रेतोधरा सप्तमी स्यादिति सप्तकला स्मृताः ॥ ३ ॥
षष्ठी पित्तधरा नाम या पूर्वं समुदाहृता।
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता ॥ ४ ॥
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता।
नाभेरुपरि सा ह्यग्निर्बलोपस्तम्भबृंहिता ॥ ५ ॥
अपक्वं धारयत्यन्नं पक्वं सृजति चाप्यधः ॥ ६ ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीं श्रितः।
तस्मात् सन्दूषिते वह्नौ ग्रहणी दूष्यते नृणाम् ॥ ७ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थं मूर्च्छितैः।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ ८ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्।

ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ९ ॥
पूर्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ॥ १० ॥
कटुतिक्तकषायातिरूक्ष शीताम्लभोजनैः।
प्रमितानशनाद्यध्व वेगनिग्रह मैथुनैः ॥ ११ ॥
मारुतः कुपितो वह्निं सञ्छाद्य कुरुते गदान् ॥ १२ ॥
तस्यान्नं पच्यते दुःखं शुक्तपाकं खरां गता।
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ॥ १३ ॥
पार्श्वोरुवंक्षणग्रीवा रुगभीक्ष्ण' विषूचिका।
हृत्पीड़ाकार्श्यदौर्वल्यं वैरस्यं परिकर्त्तिका ॥ १४ ॥
गृद्धिः सर्वरसानाञ्च मनसः सदनं तथा।
जीर्णे जीर्यति चाध्मानं भुङ्क्ते स्वास्थ्यमुपैति च ॥ १५ ॥
सवातगुल्म हृद्रोग प्लीहाशङ्की च मानवः ॥
चिराद्दुःखं द्रवं शुष्क' तन्वामं शब्दफेनवत्।
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥ १६ ॥
ग्रहणीमाश्रितं दोष मजीर्णवदुपाचरेत्।
लङ्घनैर्दीपनीयैश्च सामातीसारभेषजैः ॥ १७ ॥
दोषं सामं निरामञ्च विद्यादत्रातिसारवत्।
अतिसारोक्त विधिना तस्यामञ्च विपाचयेत् ॥ १८ ॥
विशुद्धामाशयायास्मै पञ्चकोलक संस्कृतम्।
दद्यात्पेयादि लघ्वन्नं योजयेत् पुनःदीपनम् ॥ १९ ॥
पञ्चकोलकयूषस्तु मूलकानां रसोऽथवा।
सुस्निग्धो दाड़िमाम्लश्च वातनुन्नोजने हितः ॥ २० ॥
पेयादि पटु लघ्वन्नं पञ्चकोलादिभिर्युतम्।
दीपनानि च तक्रं च ग्रहण्यां योजयेत् भिषक् ॥ २१ ॥
कपित्थ विल्वचाङ्गेरी तक्रदाड़िमसाधिता।

यवागूः पाचयत्यामं शकृत् संवर्त्तयत्यपि ॥ २२ ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवम् ।
पथ्यं मधुरपाकत्वान्न च पित्तं प्रकोपयेत् ॥ २३ ॥
कषायोष्णविकाशित्वा द्रौक्ष्याच्चैव कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहितम् ॥ २४ ॥
शुण्ठी समुस्तातिविषां गुडूचीं पिबेत् समांशां क्वथितां जलेन ।
मन्दानलत्वे सततामताया मामानुबन्धे ग्रहणीगदे च ॥ २५ ॥
पिप्पली बृहतीव्याघ्री यवक्षार कलिङ्गकाः ।
चित्रकं शारिवापाठाशठी लवणपञ्चकम् ॥ २६ ॥
तच्चूर्णं पाययेद्दध्ना सुरयोष्णाम्भसापिवा ।
मारुतग्रहणीदोषे शमनं परमं मतम् ॥ २७ ॥

इति पिप्पल्यादि चूर्णम् ।

धान्यकातिविषोदीच्य यवानी मुस्तनागरम् ।
बलाद्विपर्णीविल्वं च दद्याद्दीपनपाचनम् ॥ २८ ॥
कलिङ्गं हिङ्गुतिविषा वचा सौवर्चलाभया ।
दार्वी ग्रन्थिकमूलेन पातव्योष्णेन वारिणा ॥ २९ ॥
नागरं कौटजं वीजं पिप्पली बृहतीद्वयम् ।
चित्रकं शारिवा पाठा क्षारं लवणपञ्चकम् ॥ ३० ॥
'चूर्णयित्वा सुरामण्ड' दधिकोष्णाम्बुकाञ्जिकैः ।
पिबेदग्नि विवृद्धयर्थं कोष्ठवातहरं परम् ॥ ३१ ॥
यवानी व्योषसिन्धूत्थ जीरकद्वयहिङ्गुजम् ।
आद्यग्रासाशितं साज्यं चूर्णं वातनुदग्निकृत् ॥ ३२ ॥

इति हिङ्ग्वष्टकम् ।

कृष्णाविड़ विजयानां गुटिका सर्पिष्मतीपाने ।
ग्रहणीदोषे स्वरुचिमन्दाग्नि शकृद्विबन्धे च ॥ ३३ ॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।

व्योषं हिङ्गजमोदाञ्च चव्यं चैकत्र चूर्णयेत्॥ ३४॥
गुटिका मातुलुङ्गस्य दाड़िमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चानलम्॥ ३५॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिद मेव च।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत्॥ ३६॥

इति चित्रकादिगुटिका।

ज्ञात्वातु परिपक्कं च वातजं ग्रहणीगदम्।
दीपनैर्भेषजैः पक्कैः सर्पिर्भिः समुपाचरेत्॥ ३७॥
धान्यविल्वबलाशुण्ठीतालपर्णीशृतं जलम्।
स्याद्वातग्रहणीदोषे सानाहे सपरिग्रहे॥ ३८॥
द्विपञ्चमूले सरलं देवदारु सनागरम्।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥ ३९॥
शरवीजं यवान् कोलान् कुलत्थानाकुलीकृतान्।
पाचयेदारणालेन दध्ना सौवीरकेण च॥ ४०॥
चतुर्भागावशेषेण पचेत्तेन घृताढ़कम्।
स्वर्जिका यावशूकानां क्षारौ दत्त्वा च युक्तितः॥ ४१॥
सैन्धवोद्भिदसामुद्रविड़ानां रोमकस्य च।
ससौवर्चलपाकानां भागान् द्विपलिकान् पृथक्॥ ४२॥
विनीय चूर्णितांस्तस्मात् पाययेत् प्रसृतं बुधः।
करोत्यग्निबलं वर्णं वातघ्नं भुक्तपाचनम्॥ ४३॥

अत्र शुष्कमानेन द्विपञ्चमूलादीनां षट्पञ्चाशत्पलाधिक-
[illegible]लशतद्वयमारणालादीनामन्यतमस्य च चतुर्भिर्द्रोणैर्निःक्वाथ्य
[illegible]णावशेष इष्यते स्वर्जिकाक्षार यवक्षारयोरपि द्विपलि-
[illegible]त्वम्।

इति द्विपञ्चमूलाद्यं घृतम्।

पञ्चमूल्यभयाव्योष पिप्पलीमूलसैन्धवैः।

रास्नाक्षारद्वयाजाजी विड़ङ्गशठीभिर्घृतम् ॥ ४४ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च।
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः।
काञ्जिकेन च तत्पक्वं पीतमग्निकरं परम् ॥ ४५ ॥
शूलगुल्मोदरानाहकासानिलगदापहम् ॥ ४६ ॥

पञ्चमूलं कनीयांसमत्र। इति पञ्चमूलाद्यं घृतम्।

चव्यचित्रकपाठानां तेजोवत्यास्तथैव च।
कणापिप्पलीमूलानां भागान् दद्याच्चतुष्पलान् ॥ ४७ ॥
पलानि चाष्टौ मुस्तायाः सुनिशासुष्टयस्त्विह।
आस्फोतायाः प्रबालानां मालतीकरवीरयोः।
सप्तपर्णकरञ्जार्कतापसाऽक्षोटकस्य च ॥ ४८ ॥
एतान् सङ्कुट्य विपचेत् जलद्रोणचतुष्टये।
चतुर्भागावशेषन्तु कुर्य्यान्मन्देन वह्निना ॥ ४९ ॥
कटुकातिविषे स्यातां प्रत्येकं त्रिपलोन्मिते।
पिप्पलीनाञ्च कुड़वं बिड़ङ्गानां घनस्य च ॥ ५० ॥
तथा वत्सकबीजानां कल्कार्थं सम्प्रदापयेत् ॥ ५१ ॥
क्षारस्य यावशूकस्य स्वर्जिकायास्तथैव च।
बिड़सैन्धवयोश्चैव दद्याद् द्वे द्वे पले शृते ॥ ५२ ॥
ततस्तेन कषायेण कल्कैरेभिश्च पेषितैः।
दधिमस्त्वम्लयुक्तैश्च पचेद्वैद्यो घृताढ़कम् ॥ ५३ ॥
साम्बुकल्कं पिबेत् कर्षं विष्टम्भे द्विगुणं पिबेत्।
उष्णोदकानुपानञ्च कुर्य्याज्जीर्णेऽथ भोजनम् ॥ ५४ ॥
अनेन ग्रहणीदोषाः सर्वे नश्यन्ति देहिनाम्।
कफवातक्षयश्चैव गुल्मश्चैव चतुर्विधः ॥ ५५ ॥
अर्शांसि नाशयत्येव प्लीहानं शमयत्यपि।
महदग्निघृतन्त्वेतद्भिषजा परिचक्ष्यते ॥ ५६ ॥

स्निग्धं भुञ्जीत चाप्यन्नं मांसं खादेच्च मेदुरम्।
अत्यग्निनाशनार्थाय भक्षयेन्मधुना सह॥ ५७॥

इति महदग्निघृतम्।

घृतं नागरकल्केन सिद्धं वातानुलोलनम्।
ग्रहणी पाण्डुरोगघ्नं प्लीहकासज्वरापहम्॥ ५८॥
विश्वौषधस्य गर्भेण दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीं सामवातजाम्॥ ५९॥

इति शुण्ठीघृतम्।

नागरं पिप्पलीमूलं चित्रकं हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका॥ ६०॥
चाङ्गेरी स्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत्॥ ६१॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहमेतत्सर्पिर्व्यपोहति॥ ६२॥

इति वृहच्चाङ्गेरीघृतम्।

वस्तिकर्म भिषक् कुर्य्यान्मन्दाग्नेः सक्तवर्चसः॥

इति वातग्रहणी।

कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्वणम्।
संप्लावयेच्चानिलं वै जलं तप्तमिवानलम्॥ ६३॥
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम्।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृड्दर्दितः॥ ६४॥
वह्नेः प्रदूषणं पित्तं विरेकैर्वमनेन वा।
हृत्वा भोज्यैर्लघुग्राही दीपनैरविदाहिभिः॥ ६५॥
त्रिभिः संबृंहयेदग्निं चूर्णैस्निग्धैश्च तिक्तकैः॥ ६६॥
रसाञ्जनमतिविषा वत्सकस्य फलत्वचम्।
नागरं धातकी चैव सक्षौद्र तण्डुलाम्बुना॥

पित्तग्रहणीदोषार्शो रक्तपित्तातिसारनुत् ॥ ६७ ॥

इति रसाञ्जनादि चूर्णम् ।

पाठावत्सकबीजानि चित्रकं विश्वभेषजम् ।
पिबेन्निष्काथ्य चूर्णानि कृत्वा चोष्णेन वारिणा ॥ ६८ ॥
पित्तश्लेष्माभिभूतानां ग्रहण्यां शूलनुद्धितम् ॥ ६९ ॥

इति पाठादिक्वाथश्चूर्णम् ।

नागरातिविषा मुस्तं धातकी सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठा तिक्तकरोहिणी ॥ ७० ॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ ७१ ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ ७२ ॥

इति नागराद्यं चूर्णम् ।

जलमष्टगुणं दद्यात् पलं कण्डिततण्डुलान् ।
भावयित्वा ततो देयं तण्डुलोदककर्मणि ॥ ७३ ॥

इति तण्डुलोदकविधिः ।

भूनिम्बकटुका व्योष मुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकाद्वत्सकत्वग्भागान् षोड़श चूर्णयेत् ॥ ७४ ॥
गुड़शीताम्बुना पीतं ग्रहणीदोष गुल्मनुत् ।
कामला ज्वरपाण्डुत्व मेहारुच्यतिसारनुत् ॥ ७५ ॥
गुड़योगाद् गुड़ाम्बु स्याद् गुड़वर्ण रसान्वितम् ।

इति भूनिम्बाद्यं चूर्णम् ।

पाठा विल्वानल व्योष जम्बूदाड़िमधातकी ।
कटुकातिविषा मुस्ता दार्वी भूनिम्बवत्सकैः ॥ ७६ ॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना ।
सक्षौद्रञ्च पिबेच्छर्दि ज्वरातिसारशूलवान् ॥ ७७ ॥

तृड्दाहग्रहणीदोषाऽरोचकानलसादजित्।

इति पाठाद्यं चूर्णम्।

चन्दनं पद्मकोशीरं पाठा मूर्वा कुटन्नटम्।
षड्ग्रन्था शारिवाऽऽस्फोता सप्तपर्णाटरूषकान्॥ ७८॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपित्थकान्।
कटुका रोहिणी मुस्तं निम्बञ्च द्विपलांशकम्॥ ७९॥
द्रोणेऽपां साधयेत्पादशेषे प्रस्थं घृतं पचेत्।
किराततिक्तेन्द्रयववीरामागधिकोत्पलैः॥ ८०॥
कल्कैरक्षसमैः पेयं तत्पित्तग्रहणीगदे।

इति चन्दनाद्यं घृतम्।

किराततिक्तं षड्ग्रन्था त्रायमाणा कटुत्रिकम्।
चन्दनं पद्मकोशीरं दार्वीत्वक्कटुरोहिणी॥ ८१॥
कुटजत्वक्फलं मुस्तं यवानी देवदारु च।
पटोलनिम्बपत्रैला सौराष्ट्र्यतिविषा वचा॥ ८२॥
मधुशिग्रोश्च बीजानि मूर्वा पर्पटकं तथा।
तच्चूर्णं मधुना लेह्यं पेयं सर्वं घृतेन वा॥ ८३॥
हृत्पाण्डुग्रहणीदोषशूलगुल्मारुचिज्वरान्।
कामलां सन्निपातञ्च मुखरोगञ्च नाशयेत्॥ ८४॥

इति किराताद्यं चूर्णम्।

मसूरस्य कषायेण बिल्वगर्भं पचेद् घृतम्।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलान्॥ ८५॥

इति मसूराद्यं घृतम्।

मसूराणां पलशतं जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् दद्याद्बिल्वं पलाष्टकम्॥ ८६॥
घृतप्रस्थं पचेद्धीमान् शास्त्रविन्मृदुनाग्निना।
प्रवाहिकामतिसारं ग्रहणीदोषमेव च॥ ८७॥

हन्यात् क्षिप्रमसन्देहं कृष्णात्रेयस्य शासनात्।
भिन्नविट्के प्रशंसन्ति मसूरघृतमुत्तमम् ॥ ८८ ॥

इति तन्त्रान्तरीक्तं मसूर घृतम्।

व्रीहिप्राण्यङ्गयोः क्वाथ सुषितं परिवर्जयेत्।
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्।
विदाहि गुरु विष्टम्भि विरूढ़ं वातकोपनम् ॥ ८९ ॥
कलिङ्गफलकल्केन घृतप्रस्थं प्रसाधितम्।
कफपित्तसमुद्भूतां ग्रहणीं हन्ति वै ध्रुवम् ॥ ९० ॥

इति कलिङ्ग घृतम्। इति पित्तग्रहणीनिदानम्।

गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात्।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ ९१ ॥
तस्यान्नं पच्यते दुःखात् हृल्लासच्छर्द्यरोचकाः।
आस्योपदेहमाधुर्य्यकासष्ठीवनपीनसाः ॥ ९२ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरुम्।
दुष्टो मधुर उद्गार सदनं स्त्रीष्वहर्षणम् ॥ ९३ ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चः प्रवर्त्तनम्।
अकृशस्यापि दौर्बल्यमालस्यञ्च कफात्मके ॥ ९४ ॥

तस्याश्चिकित्सामाह।

ग्रहण्यां कफदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते।
लवणाम्लकटुक्षारैः क्रमादग्निं विवर्द्धयेत् ॥ ९५ ॥
शुण्ठी मुस्तं विड़ङ्गञ्च सुरातक्रोष्णवारिणा।
श्लैष्मिकं ग्रहणीदोषं पीतं हन्त्यग्निवर्द्धनम् ॥ ९६ ॥
पालाशं चित्रकं चव्यं मातुलुङ्गहरीतकी।
पिप्पली पिप्पलीमूलं पाठा धान्यकनागरम् ॥ ९७ ॥
कर्षिकामुदकप्रस्थे पक्का पादावशेषिते।

पानीयार्थं प्रयुञ्जीत यवागूं तैश्च साधिताम् ॥ ९८ ॥

इति यवागूविधिः।

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभया रास्ना शठी मरिच नागरम् ॥ ९९ ॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
श्लैष्मिके ग्रहणीदोषे बलमांसाग्निबर्द्धनम् ॥ १०० ॥

इति पिप्पलाद्यं चूर्णम्।

व्योषं साम्रत्वचं वत्सं चूर्णयेत् तण्डुलाम्बुना।
निपीतं ग्रहणीदोष कामला पाण्डुरोगजित् ॥ १०१ ॥
प्रमेहारुच्यतीसार गुल्म शोथज्वरापहः ॥ १०२ ॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ १०३ ॥
सक्षारः सर्पिषा पीतो भोज्योवाप्यव चूर्णितः।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ १०४ ॥

इति भल्लातकक्षारः।

दुरालभाकरञ्जौ द्वौ सप्तपर्णं सवत्सकम्।
षड्ग्रन्थां मदनं मूर्वां पाठा मारग्वधं तथा ॥ १०५ ॥
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत्।
दग्धा तच्च पिबेत् क्षारं बलवर्णाग्निबर्द्धनम् ॥ १०६ ॥

इति दुरालभादि क्षारः।

भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम्।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निबर्द्धनः ॥ १०७ ॥

इति भूनिम्बाद्यः क्षारः।

द्वे हरिद्रे वचा कुष्ठं चित्रकं कटुरोहिणी।
मुस्तकं वस्तमूत्रेण सिद्धः क्षारोऽग्निबर्द्धनः ॥ १०८ ॥

इति हरिद्राद्यः क्षारः।

यवक्षारं दशपलं सैन्धवं द्विगुणं भवेत् ।
भल्लातकानि त्रिवृता चित्रकं त्रिफलात्वचः ॥ १०९ ॥
स्नुह्यर्कयोश्च दुग्धञ्च तैलस्य च घृतस्य च ।
प्रस्थं प्रस्थं समावाप्य चूर्णैरेतैर्विमिश्रयेत् ॥ ११० ॥
तद्दाहयेन्महाक्षारं पाययेच्च सुखाम्बुना ।
ग्रहणीदीपने श्रेष्ठो गुल्मार्शोक्रिमिनाशनः ॥ १११ ॥

इति महाक्षारः ।

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ।
वार्त्ताकुकुड़वं चार्काद्विल्वे द्वे चित्रकात्पले ॥ ११२ ॥
दग्धानि वार्त्ताकुरसे गुलिका भोजनोत्तराः ।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिका प्रतिश्याय हृद्रोगशमनाश्च ताः ॥ ११३ ॥

इति वार्त्ताकुगुटिका ।

नवपिप्पलीमध्वाक्ते कलशेऽगुरुधूपिते ।
मध्वाढ़कं जलसमं चूर्णानीमानि दापयेत् ॥ ११४ ॥
कुड़वार्धं विड़ङ्गस्य पिप्पल्याः कुड़वं तथा ।
चतुर्थकांशं त्वक्क्षीरं केसरं मरिचानि च ॥ ११५ ॥
त्वगेलापत्रकर्चूरं क्रमुकाऽतिविषा घनान् ।
हरेणं ले तु तेजोह्वा पिप्पलीमूल चित्रकान् ॥ ११६ ॥
कर्षिकं संस्थितं मासमेतद्दूर्द्ध नियोजयेत् ।
मन्दं सन्दीपयत्यग्निं करोति विषमं समम् ॥ ११७ ॥
हृत्पाण्डु ग्रहणीरोग कुष्ठार्शः श्वयथुज्वरान् ।
वातश्लेष्मामयांश्चान्यानरिष्टोऽयं व्यपोहति ॥ ११८ ॥

इति मध्वारिष्टः ।

द्रोणं मधुकपुष्पाणां विड़ङ्गस्य ततोऽर्द्धतः ।
चित्रकस्य ततोऽद्धञ्च तथा भल्लातकाढ़कम् ॥ ११९ ॥

मञ्जिष्ठाष्टपलं चैव द्रोणेऽपाञ्च विपाचयेत् ।
द्रोणावशेषं तच्छीतं मध्वाढ़कसमन्वितम् ॥ १२० ॥
एला मृणालागरुभिः चन्दनागुरुधूपिते ।
कुम्भे मासि स्थिते तापे मासान्ते तं वियोजयेत् ॥१२१॥
ग्रहणीं दीपयत्येष वृंहणो रक्तपित्तनुत् ।
शोथकुष्ठकिलासानां प्रमेहाणाञ्च नाशनः ॥ १२२ ॥

इति मधुपुष्पासवः ।

द्विपञ्चमूलरजनी जीवकर्षभचित्रकान् ।
पृथक् पञ्चपलैर्भागै श्चतुर्द्रोणेऽम्भसः पचेत् ॥ १२३ ॥
द्रोणशेषे रसे पूते गुड़स्य कुड़वं क्षिपेत् ।
चर्णितान् पलिकान् सर्वान् दद्याच्चात्र समाक्षिकान् ॥१२४
प्रियङ्गुपुष्प मञ्जिष्ठा विड़ङ्गं मधुकं कणा ।
लोध्रं सावरकं चैव मासार्द्धं स्थापयेत् क्षितौ ॥ १२५ ॥
दशमूलासवः सिद्धो दीपनो रक्तपित्तनुत् ।
आनाह कफ हृद्रोग पाण्डु रोगाङ्गसादनुत् ॥ २२६ ॥

इति दशमूलासवः ।

प्रास्थिकी पिप्पलीप्रस्थं गुड़ं प्रस्थं बिभीतकम् ।
उदकप्रस्थसंयुक्तं यवप्रस्थं निधापयेत् ॥ १२७ ॥
तस्मात् सुजातात्तु पलं सलिलाऽञ्जलिसंयुतम् ।
पिबेत् पिण्डासवो ह्येष रोगानीकविनाशनः ॥ १२८ ॥
स्वस्थोऽपि यः पिबेन्मासं नरः स्निग्धरसाशनः ।
तस्याग्निं दीपयत्येष आरोग्याय प्रकीर्त्तितः ॥ १२९ ॥

इति पिण्डासवः ।

वृहतीचित्रकक्षारः सप्तवारपरिस्रुतः ।
द्विगुणेन घृतं पक्वं बर्द्धयत्याशु पावकम् ॥ १३० ॥

इति वृहतीचित्रकक्षारघृतम् ।

स्यान्मान्द्यं जठरस्याग्ने र्यस्य स्याच्च मलच्युतिः ।
तस्य वह्निकरं पक्वं युक्तियुक्तं हितं घृतम् ॥ १३१ ॥

इति संग्रहग्रहणी निदानम् ।

पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि लक्षणम् ॥ १३२ ॥
त्रिदोषविधिवद्वैद्यः पञ्चकर्माणि कारयेत् ।
सर्वजायां ग्रहण्यान्तु सामान्यो विधिरोच्यते ॥ १३३ ॥
दीपनान्यन्नपानानि चूर्णारिष्टं घृतानि च ।
प्रविभज्य यथाऽवस्थं सर्वजे वस्तिकर्म च ॥ १३४ ॥
घृतक्षाराऽऽसवाऽरिष्टान् दद्यादग्निविवर्द्धनान् ॥ १३५ ॥

शतावरी चन्दनपद्मकोत्पलं
प्रियङ्गुपाठामगधास्थिराभिः ।
विल्वाजमोदातिविषा समङ्गा
जीवन्ति वत्सीन्द्रयवैः सुपिष्टैः ॥ १३६ ॥
घृतं कषाये तु कलिङ्गकानां
पक्वं निहन्याद् ग्रहणीं त्रिदोषाम् ।
पित्तातिसारं रुधिरप्रवाहं
तथार्शसो दोषसमूहबन्धम् ॥ १३७ ॥

इति शतावरीघृतम् ।

आरुष्करं हिङ्गुकणा सयष्टी
पूतिक शुण्ठी मरिचं गजाह्वा ।
अजाजी चव्यारुचकं सवह्नि-
मूलं विड़ङ्गं सह दीप्यकञ्च ॥ १३८ ॥
सक्षारहिङ्गुत्रिकटूग्रगन्धा
पलार्धभागैर्विपचेद्विधिज्ञः ॥ १३९ ॥
अत्र धान्यकचाङ्गेरी दशमूली समं पृथक् ।

हविः प्रस्थं निहन्त्याशु ग्रहणीं सर्वजां नृणाम् ॥ १४० ॥
विष्टम्भमामजान् रोगान् क्रमिजान् कुक्षिजांस्तथा।
मन्दानलभवान् सर्वान्नभस्वानिव वारिदम् ॥ १४१ ॥

इत्यारुष्करं घृतम्। इति सर्वजाग्रहणीनिदानम्।

अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा।
द्रवं घनं सितं स्निग्धं सकटीवेदनं सकृत् ॥ १४२ ॥
आमं बहुसपैच्छिल्यं सशब्दं मन्दवेदनम्।
पक्षान्मासाद्दशाहाद्वा नित्यं चापि विमुञ्चति ॥ १४३ ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा।
दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी।
सा भवेदामवातेन संग्रहग्रहणी मता ॥ १४४ ॥

चिकित्सामाह।

मसूरयूषः संपीतः क्वाथो नागरबिल्वजः।
संग्रहग्रहणीं हन्ति तक्रेण बृहती तथा ॥ १४५ ॥
विश्वाजाजी बिल्वपेशी कल्कसिद्धं घृतं हरेत्।
मसूरस्य कषायेण संग्रहग्रहणीगदम् ॥ १४६ ॥

इति मसूरघृतम्। इति संग्रहग्रहणी।

अथ गोतक्रस्य गुणाः।

ग्रहणीरोगिणां तक्रं संग्राहि लघु दीपनम्।
सेवनीयं सदा गव्यं त्रिदोषशमनं हितम् ॥ १४७ ॥
दुःसाध्यो ग्रहणीदोषो भेषजैर्नैव शाम्यति।
सहस्रशोऽपि विहितैर्विना तक्रस्य सेवनात् ॥ १४८ ॥
यथा तृणचयं वह्निस्तमांसि सविता यथा।
निहन्ति ग्रहणीरोगं तथा तक्रस्य सेवनम् ॥ १४९ ॥
संग्राह्या धेनवः श्रेष्ठास्तक्रपानाय रोगिणाम्।
तासां पयस्यथ गुणा जायन्ते वर्णभेदतः ॥ १५० ॥

पीताया मारुतं हन्ति श्वेतायाः पित्तजान् गदान् ।
रक्तायाः गोः कफं हन्ति कृष्णायाः गोस्त्रिदोषजित् ॥१५१॥
अरण्ये चारयेद्धेनू र्नातितृणलतान्विते ॥ १५२ ॥
पीतोदकाया विस्रम्भात् मन्दं मन्दं प्रचारयेत् ।
तासां दुग्धं परिग्राह्यं तक्रार्थं भिषजां वरैः ॥ १५३ ॥
दुग्धमक्वथितं वाते पित्ते त्वीषत्कृतं हितम् ।
कफे त्रिदोषजे रोगे पादोनक्वथितं स्मृतम् ॥ १५४ ॥
तदीषदम्लसंयोगात् कठिनं दधि शंस्यते ।
तदल्पजलसंयुक्तं मन्थने मथितं भवेत् ॥ १५५ ॥
तक्रमुद्धृतसारन्तु शुण्ठीचूर्णयुतं पिबेत् ।
तक्रेण निर्बले जाते त्यक्ते चान्नादिभोजने ॥ १५६ ॥
शरीरे जात रूक्षत्वं शुक्लत्वं मूत्र नेत्रयोः ।
किञ्चित् स्निग्धं पिबेत् तक्रं ततश्चाधिकसारवत् ॥ १५७ ॥
तक्रं सनवनीतञ्च पिबेन्नागरसंयुतम् ।
शनैः शनैः हरेदन्नं तक्रन्तु परिवर्द्धयेत् ॥ १५८ ॥
तक्रमेव यथाहारो भवेदन्नविवर्जितः ।
तक्रसात्म्यं यथा कुर्या न्नैवान्नं तत्र भक्षयेत् ॥ १५९ ॥
बुभुक्षायां पिपासायां पिबेत् तक्रं सनागरम् ।
स्नमं न कुर्य्याद्बहुशो न कुर्य्याद्बहुभाषणम् ॥ १६० ॥
न कुर्य्यान्मैथुनं तक्रपाने क्रोधं विवर्जयेत् ।
एवं यः सेवते तक्रं ग्रहणी तस्य नश्यति ।
शीघ्रमेव न सन्देहः श्रीर्यथा द्यूतकारिणः ॥ १६१ ॥
प्रशान्ते ग्रहणीरोगे अन्नं गृह्णाति योगतः ।
अन्नत्यागविधानेन गृह्णीयाच्च शनैः शनैः ॥ १६२ ॥
ग्रहणीरोगिणां तक्रं हितं दोषत्रयापहम् ।
कालकूटविषं साक्षादन्यथा परिसेवितम् ॥ १६३ ॥

तस्मात् यत्नेन संसेव्यं तक्रं संग्रहणीगदे।
अस्तं नातःपरं किञ्चिद् ग्रहणीरोगशान्तये ॥ १६४ ॥

इति सर्वग्रहण्यां तक्रसेवनविधिः।

आम्रातकाम्रजम्बूत्थे कषाये पादशेषिते।
शालिसिद्धां यवागून्तु भुक्त्वा कुक्ष्यामयं जयेत् ॥ १६५ ॥
अङ्कोटमूलं धातक्यो विल्वपेशी महौषधम्।
कथितं शीतलं पेयं कुक्षिरोगहरं परम् ॥ १६६ ॥
अङ्कोटस्य त्रयोभागाः भागश्चैकोऽरुणाभवः।
तण्डुलोदकसंपीतः सर्वकुक्ष्यामयापहः ॥ १६७ ॥
तक्रेण वल्कलं पीतं स्निग्धं पथ्यातरूद्भवम्।
ग्रहणीं नाशयेत् क्षिप्रमामरक्ताश्रितां ध्रुवम् ॥ १६८ ॥
स्विन्नानि बालविल्वानि खादेत् क्षौद्रेण मानवः।
तक्रेणाऽनलगर्भेण सार्द्धं तद् ग्रहणीं जयेत् ॥ १६९ ॥
बालविल्व बला शुण्ठी धातकी मुस्तधान्यकैः।
कषायैः साधिता हन्ति यवागूर्ग्रहणीगदम् ॥ १७० ॥
जम्बूदाड़िम शृङ्गाट पाठाकच्चटपल्लवैः ॥ १७१ ॥
पक्वं पर्य्युषितं बालविल्वं सगुड़नागरम्।
हन्ति सर्वानतिसारान् ग्रहणीमतिदुस्तराम् ॥ १७२ ॥
चाङ्गेरी स्वरसे दद्याद् घृतप्रस्थं चतुर्गुणम्।
अजाक्षीरस्य च प्रस्थं पिबेत्सर्पिरिहौषधैः ॥ १७३ ॥
व्योषविल्वकपित्थानि समङ्गा धातकी घनम्।
अजाज्यतिविषा मोचा धान्यकोत्पलबालकम् ॥ १७४ ॥
बला यवानिकाग्निश्च पाठा ग्रन्थिकदाड़िमम्।
अक्षप्रमाणैरेतैस्तु सर्पिः सिद्धं महागुणम् ॥ १७५ ॥
ग्रहण्यर्शोविकारघ्नं शूलगुल्मज्वरापहम्।
कफवातारुचिहरं बलवर्णाग्निवर्द्धनम् ॥ १७६ ॥

क्रिमिदोषगुदभ्रंशयकृत्प्लीहामयापहम्।
सर्वातिसारशमनं ग्रहणीदीपनं परम् ॥ १७७ ॥

इति चाङ्गेरी घृतम्।

पिप्पली नागरं पाठा श्वदंष्ट्रा च पृथक् पृथक्।
भागांस्त्रिपलिकान् दत्त्वा कषायमुपकल्पयेत् ॥ १७८ ॥
गण्डारी पिप्पलीमूलं व्योषं चव्यकचित्रकम्।
पिष्ट्वा कल्कं क्षिपेत् क्वाथे द्रवैरर्द्धपलैः पृथक् ॥ १७९ ॥
पलानि सर्पिषश्चात्र चत्वारिंशत्प्रदापयेत्।
चाङ्गेरी स्वरसं तुल्यं सर्पिषा दधि षड्गुणम् ॥ १८० ॥
मृदग्निना साधयेत्तत् सर्पिः सिद्धं निधापयेत्।
तदाहारे विधातव्यं पाने च योगिकैर्बुधैः ॥ १८१ ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम्।
शोथप्लीहोदरानर्शो मूत्रकृच्छ्रज्वरापहम् ॥ १८२ ॥
कासहिक्कारुचिश्वास सदनं पार्श्वशूलनुत्।
बलपुष्टिवर्णकरमग्निसन्दीपनं परम् ॥ १८३ ॥
अत्र गण्डार्य्यादिचित्रकान्तैस्त्रिपलिकैरेभिः षोड़शगुणैः जलैस्तथा क्वाथयेद्यथा कषायः स्नेहसमत्वं भवतीति।

इति वृहच्चाङ्गेरी घृतम्।

मुस्तकातिविषा विल्व चूर्णितं कौटजं तथा।
मधुना वापि संलीढ़ं ग्रहणीं हन्ति सर्वजाम् ॥ १८४ ॥
पञ्चकोलक सुस्विन्नं बालविल्वं गुड़ान्वितम्।
शेषे द्रवानुपानं स्यात् संग्रहण्यतिसारनुत् ॥ १८५ ॥
श्वेतो वा यदि वा रक्तः प्रपक्को ग्रहणीगदः।
गुड़ेनाधिकसंज्ञेन भक्षितेनाशु नश्यति ॥ १८६ ॥

विल्वाब्द शक्रयवबालकमोचसिद्ध
माजं पयः पिबति यो दिवसत्रयञ्च।

सोऽतिप्रवृद्धचिरजं ग्रहणीविकारं
शोषं सशोणितमसाध्यमपि क्षिणोति ॥ १८७ ॥

भोजनार्थं समुद्भानां वर्चोवेगविनाशनम् ।
आरनालोदकैः पिष्टं प्रातः पिष्टकभक्षणम् ॥ १८८ ॥
केशराजोऽर्जुनक्षारं प्रातः पीतञ्च मस्तुना ।
निहन्ति साममत्यर्थमचिराद् ग्रहणीरुजम् ॥ १८९ ॥

इति सिद्धोऽयं योगः ।

कपित्थमधिलीढ्वैव सव्योषं क्षौद्रशर्करम् ।
कट्फलं मधुसंयुक्तं मुच्यते जठरामयात् ॥ १९० ॥
त्र्यूषणत्रिफला कल्के विल्वमात्रे गुडात्पले ।
सर्पिषोऽष्टपलं पक्वा मात्रां मन्दानलः पिबेत् ॥ १९१ ॥

इति अष्टपलकं घृतम् ।

विल्वाग्नि चव्यार्द्रकशृङ्गवेरैः
क्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थे
शोथाग्निसादाऽरुचिनुद्वरिष्ठम् ॥ १९२ ॥

इति विल्वाद्यं घृतम् ।

मसूरस्य तुला क्वाथे घृतप्रस्थं विपाचयेत् ।
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ॥ १९३ ॥
तत्सिद्धं द्विगुणे क्षीरे ग्रहणीघ्नं त्रिदोषनुत् ।
दुर्नामानिलविष्टम्भं जयेच्चैव प्रवाहिकाम् ॥ १९४ ॥
बलवर्णकरं हृद्यमग्निसन्दीपनं परम् ।

इति बृहन्मसूराद्यं घृतम् ।

यवानी पिप्पलीमूलं चतुर्जातकनागरैः ।
मरिचाग्निजलाजाजी धान्यसौवर्चलैः समैः ॥ १९५ ॥

वृचाम्लधातकी कृष्णाविल्व दाड़िम तिन्दुकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः॥ १९६॥
चूर्णोऽतिसारग्रहणी चयगुल्मगलामयान्।
श्वासं कासाऽरुचिं हिक्कां कपित्थाष्टमिदं जयेत्॥ १९७॥

इति कपित्थाष्टकम्।

मधूकपुष्पस्वरसं शृतमर्द्धचयीकृतम्।
चौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत्॥ १९८॥
तं पिवन् ग्रहणीदोषान् जयेत् सर्वान् हिताशनः॥१९९॥

इति मधूकपुष्पासवः।

प्रस्थत्रयेणामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य
व्योषेभ कृष्णाहवुषाजमोदैः॥ २००॥
विड़ङ्गसिन्धुत्रिफला यवानी
पाठाग्नि धान्यैश्च पलप्रमाणैः।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत्॥ २०१॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टं त्रिसुगन्धियुक्तम्।
अनेन सर्वे ग्रहणीविकाराः
सश्वासकास स्वरभेदशोथाः॥ २०२॥
शाम्यन्ति चाऽयं चिरमन्तरग्नेः
हतस्य पुंस्त्वस्य च वृद्धिहेतुः।
स्त्रीणाञ्च बन्ध्यामयनाशनोऽयं
कल्याणको नाम गुड़ः प्रसिद्धः॥ २०३॥
तैले त्रिवृन्मनाक् भ्रष्टः त्रिसुगन्धि पलं पलम्।

सुसिद्धे निक्षिपेदत्र गुड़े कल्याणपूर्वके ॥

इति कल्याणगुड़ः।

पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली।
धान्यकञ्च विड़ङ्गानि यवानी मरिचानि च ॥ २०४ ॥
त्रिफला चाजमोदा च नीलिनी जीरकं तथा।
सौवर्च्चलं सैन्धवञ्च सामुद्रं रुचकं विड़म् ॥ २०५ ॥
आरग्वधश्च त्वक्पत्रं सूक्ष्मैला चोपकुञ्चिका।
नागरेन्द्रयवाश्चैव षड्विंशत्येककार्षिकम् ॥ २०६ ॥
मृद्वीकायाः प्रधानाया दद्यात्पलचतुष्टयम्।
त्रिवृतायाः पलान्यष्टौ गुड़स्यार्द्धं तुलां तथा ॥ २०७ ॥
तिलतैलपलान्यष्टा वामलक्या रसस्य तु।
प्रस्थत्रयमिदं सर्वं शनैर्मृदग्निना पचेत् ॥ २०८ ॥
औदुम्बरं चामलकं वादरं वा यथा फलम्।
तावन्मात्रं प्रयुञ्जीत भिषक् दृष्ट्वा यथा बलम् ॥ २०९ ॥
सर्वांश्च ग्रहणीरोगान् प्रमेहांश्चैकविंशतिम्।
उरोघातं प्रतिश्यायं दौर्बल्यं वह्निसङ्क्षयम् ॥ २१० ॥
ज्वरानपि हरेत् सर्वान् कुर्य्यात्कान्तिं मतिं स्वरम्।
पाण्डुरोगान् जवाद्धन्ति रक्तपित्तञ्च विड्ग्रहम् ॥ २११ ॥
धातुक्षीणो वयःक्षीणः क्षीणः स्त्रीभिः क्षयी तथा।
तेभ्यो हितञ्च सर्वेभ्यो वन्ध्यानाञ्चैव पुत्रदम् ॥ २१२ ॥
रूपौदार्य्यं स्वरौदार्य्यं मेधामावहति स्थिराम्।
महाकल्याणकं नाम रसायणमनुत्तमम् ॥ २१३ ॥

इति महाकल्याणगुड़ः।

विड़ङ्ग पिप्पलीमूल त्रिफला धान्यचित्रकान्।
मरिचेन्द्रयवा जाजी पिप्पली हस्तिपिप्पलीः ॥ २१४ ॥
लवणान्यजमोदाञ्च चूर्णितं कार्षिकं पृथक्।

तिलतैलत्रिवृच्चूर्णं भागौ चाष्टपलोन्मितौ ॥ २१५ ॥
धात्रीफलरसप्रस्थान् गुड़ानर्द्धतुलांस्तथा ।
पक्वा मृदग्निना खादेद्वदरोदुम्बरोन्मितम् ॥ २१६ ॥
गुरु भुक्तं न चात्र स्यात् विहाराहारमन्त्वणे ।
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम् ॥ २१७ ॥
श्वयथुं गात्रशूलञ्च कासं श्वासं भ्रमत्तयम् ।
कुष्ठार्शःकामलामेहान् गुल्मोदरभगन्दरान् ॥ २१८ ॥
ग्रहणीपाण्डु रोगांश्च हन्ति सर्व्वामयांस्त्वयम् ।
कल्याणको गुड़ः ख्यातः सर्व्वास्वृतुषु योजितः ॥ २१९ ॥

इति कल्याणको गुड़ः ।

चित्रकामृतचाङ्गेरीचव्यग्रन्थिकनागरम् ।
विल्वञ्च धातकी पाठा ह्रीवेरं सपुनर्नवम् ॥ २२० ॥
कुटजत्वक्फलं लोध्रं पृथक् पञ्चपलांशकम् ।
जले चतुर्गुणे सिद्धं यावत्पादावशेषितम् ॥ २२१ ॥
आर्द्रकस्वरसं मुस्तं प्रसन्नं चाम्लकाञ्जिकम् ।
तुलार्द्धञ्च पृथग् दद्याद् गुड़स्यार्द्धतुलां पचेत् ॥ २२२ ॥
तन्तुमत्स्पृष्टं तोये प्रक्षिप्तं न विसर्पति ।
त्र्यूषणं त्रिफला मुस्तं यवानी जीरकद्वयम् ॥ २२३ ॥
चूर्णमष्टपलैरेतैः सिद्धशीते प्रदापयेत् ।
मात्रामग्निबलं ज्ञात्वा उपयुञ्जीत बुद्धिमान् ॥ २२४ ॥
मन्दाग्न्युपहताः केचिद्ये च वातकफामयैः ।
हतास्तेभ्यो हितं चेदं वह्निवृद्धिकरं परम् ॥ २२५ ॥
ग्रहणीदोषशूलघ्नं शोथपाण्ड्वामयापहम् ।
श्वासकासज्वरार्शोघ्नं प्लीहगुल्मोदरापहम् ॥ २२६ ॥
दीर्घकालोत्थितञ्चैव हन्ति रोगगणन्त्विदम् ।
दृष्टं वारसहस्रेण किं पुनश्चाचिरोत्थितम् ॥ २२७ ॥

गुड़ं कल्याणकं नाम वृष्यं पौष्ट्यं बलप्रदम्।

इति कल्याणकं गुड़म्।

मस्त्वारणाल चाङ्गेरी शृङ्गवेररसं तथा।
तुलार्द्धन्तु पृथक् दद्यादामलक्याः शतार्द्धकम्॥ २२८॥
तिलतैलपलान्यष्टौ गुड़स्यार्द्धतुलां पचेत्॥ २२९॥
वत्सकातिविषा कुष्ठं धातकी च रसाञ्जनम्।
सव्योषं पिप्पलीमूलं दारुचव्यं सचित्रकम्॥ २३०॥
सक्षारलवणं चूर्णं दद्यादर्द्धपलांशकम्।
मात्रामग्निबलापेक्षी चोपयुञ्जीत बुद्धिमान्॥ २३१॥
दुर्नामश्वासकासघ्नो ग्रहणीदोषमेहनुत्।
गुल्मोदावर्त्तहृद्रोग शोफपाण्ड्वामयापहः॥ २३२॥
कफवातामदोषघ्नः पाचनो वह्निदीपनः।
गुड़कल्याणको नाम्ना वृष्यः पुष्टिबलप्रदः॥ २३३॥

इति गुड़कल्याणकः।

कुष्माण्डकानां पक्वानां स्विन्नानां निष्कुलत्वचाम्।
सर्पिष्प्रस्थे पलशतं ताम्रपात्रे शनैः पचेत्॥ २३४॥
पिप्पलीपिप्पलीमूलं चित्रकं हस्तिपिप्पली।
धान्यकानि विड़ङ्गानि नागरं मरिचानि च॥ २३५॥
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम्।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं तथा॥ २३६॥
तैलस्य च पलान्यष्टौ गुड़ात् पञ्चाशदेवतु।
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु॥ २३७॥
तावत्पाकं प्रकुर्वीत मृदुना वह्निना भिषक्।
यावद्दर्वीप्रलेपः स्यात् तदैनमवतारयेत्॥ २३८॥
औदुम्बरं चामलकं वादरं वा प्रमाणतः।
यथा बलं तु कायस्य भक्षयेत्तु गुड़ं नरः॥ २३९॥

अनेनैव विधानेन प्रयुक्तश्च दिने दिने।
प्रसह्य ग्रहणीदोषान् कुष्ठानर्शोभगन्दरान् ॥ २४० ॥
ज्वरमानाहहृद्रोग गुल्मोदरविसूचिकाः।
कामलापाण्डुरोगांश्च प्रमेहांश्चैकविंशतीन् ॥ २४१ ॥
वातशोणितवीसर्पं राजयक्ष्माहलीमकान्।
कफपित्तानिलान् सर्वान् प्ररूढ़ांश्चापि नाशयेत ॥ २४२ ॥
व्याधिक्षीणा वयः क्षीणाः स्त्रीषु क्षीणाश्च ये नराः।
तेषां हितश्च बल्यश्च वयःस्थापन एव च।
गुडकल्याणको नाम्ना बन्ध्यायाः पुत्रदः परः ॥ २४३ ॥

इति कुष्माण्डकल्याण गुड़ः।

त्रिवृत्तिक्ता निकुम्भा च श्वदंष्ट्रा चित्रकं शठी।
विशाला मुस्तकं शुण्ठी कृमिशत्रुर्हरीतकी ॥ २४४ ॥
द्विपलांशाः पलान्यष्टौ भल्लातकफलानि च।
सूरणं द्वादश प्रोक्तं षट् पलं वृद्धदारकम् ॥ २४५ ॥
एतानि खण्डशः कृत्वा द्विद्रोणेऽपां विपाचयेत्।
पादशेषन्तु कुर्वीत पचेद्गुडतुलां भिषक् ॥ २४६ ॥
कन्दस्त्रिकत्रिवृद्वह्निमुस्तैलामरिचत्वचम्।
नागकेशरचूर्णञ्च ह्येकैकं द्विपलोन्मितम् ॥ २४७ ॥
एतानि सूक्ष्मचूर्णानि गुडमध्ये विनिक्षिपेत्।
भक्षयेद् गुटिकां प्राज्ञः कर्षांशां पथ्यभुङ्नरः ॥ २४८ ॥
वातपित्तकफप्रायां द्विदोषां सान्निपातिकाम्।
ग्रहणीं नाशयत्याशु चक्रपाणिर्यथाऽसुरान् ॥ २४९ ॥
कामलाकुष्ठमेहार्शः पाण्डुरोगभगन्दरान्।
क्षयशूदरगुल्मांश्च जयेत्सम्यक् प्रयोजितः ॥ २५० ॥
सर्वास्वृतुषु कर्त्तव्यो गुड़ोऽयं बहुशालिकः।

इति बहुशालि गुड़ः।

आलिप्य तापीकरवीरकाभ्यां
वैश्वानरे प्रज्वलिते निधाय।
तप्तं सुतप्तं विनियोज्य तक्रे
निर्वाप्य वारान् बहुशः सुलोहम्॥ २५१॥
एभिः प्रकारैः सुमृताश्च लोहाः
चूर्णीकृताश्चापि पलानि चाष्टौ।
सर्पिष्पलं तैलपले पलानि
चत्वारि चादाय वरारसस्य॥ २५२॥
तक्रस्य चाम्लस्य चतुष्पलानि
कर्षञ्च कर्षं पृथगौषधानाम्।
व्योषाजमोदा चविकानलानां
मूलं प्रदद्याद्गजपिप्पलीनाम्॥ २५३॥
सिन्धुप्रभूतं सविडङ्गचूर्णं
तक्रेण हन्याद्ग्रहणीं समस्ताम्।
अर्शांसि शोथं परिणामसंज्ञं
शूलञ्च दीप्तिं प्रकरोति वह्नेः॥ २५४॥

इति सारकल्पोऽयम्।

पलार्द्धमरुणायास्तु द्विपले कुटजत्वचः।
केशराजस्य मूलानि कर्षं तत्सर्वमेकतः॥ २५५॥
सङ्कुट्य सलिलप्रस्थे पक्वा पादस्थिते रसे।
दत्त्वा सप्तपलं तस्मिंश्छागक्षीरं चतुष्पलम्॥ २५६॥
शोध्यं पक्वरसं भूयः पचेद्दार्वीप्रलेपनम्।
विश्वातिविषयोश्चूर्णं मुस्तस्येन्द्रयवस्य च॥ २५७॥
प्रत्येकमक्षमात्रन्तु क्षिप्त्वा तदक्षमात्रकम्।
तदशित्वानुभुञ्जीत काञ्जिकाम्लप्रसाधितान्॥ २५८॥
मत्स्यान् गोपुच्छसंज्ञांस्तु छागक्षीरं ततः पिबेत्।

ग्रहण्यतिसारहरो लेहोऽयमपराजितः ॥ २५९ ॥

इति अपराजितो लेहः ।

इति वङ्गसेनसङ्कलिते ग्रहणीनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ अर्शोनिदानमाह ।

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ २ ॥
कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥ ३ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ ४ ॥
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णञ्च सर्वं पानान्नभोजनम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामदिवास्वप्न शय्यासनसुखे रतिः ॥ ७ ॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥
हेतुलक्षणसंसर्गाद्विद्यात् द्वन्द्वोल्वणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ ९ ॥
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ १० ॥

ग्रहणी दोषपाण्डुर्त्तेराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ११ ॥
गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥१२॥
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
विम्बीकर्कन्धुखर्जूर कर्कोटिफलसन्निभाः ॥ १३ ॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपकाः ।
शिरः पार्श्वांशकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥ १४ ॥
क्षवथूद्गारविष्टम्भहृद्ग्रहाऽरोचकप्रदाः ।
श्वासकासाग्निवैषम्य कर्णनादभ्रमावहाः ॥ १५ ॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १६ ॥
कृष्णत्वङ्नखविण्मूत्र नेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीला सम्भवस्तत एव च ॥ १७ ॥

इति वातार्शोनिदानम् ।

अथ तस्य चिकित्सामाह ।

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमतिसिद्धमिति । वातजे स्नेहस्वेदादीति ।

लवणान्यर्कपत्राणि विनीय तरुणानि च ।
तैलेनाम्लेन युक्तानि युक्त्या क्षारं दहेद्भिषक् ॥ १८ ॥
उष्णोदकेन मद्यैर्वा रसैरम्लैस्त्व लाभतः ।
पीतः प्रशमयत्येष क्षारोऽर्शो वातसम्भवम् ॥ १९ ॥

इति लवणादिक्षारः ।

अथ पित्ताऽर्शो निदानम् ।

पित्तोत्तरा नीलमुखा रक्तपीता सितप्रभाः ।
तन्वस्रक्स्राविणो विस्रा स्तनवो मृदवस्तथा ॥ २० ॥

शुकजिह्वायकृत्खण्ड जलौकोवक्रसन्निभाः ।
दाहपाकज्वरस्वेद तृण्मूर्च्छाऽरतिमोहदाः ॥ २१ ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥ २२ ॥

अथ चिकित्सामाह ।

पित्तजेषु विरेचनमिति ।

बालकं शृङ्गवेरञ्च यापयेत् तण्डुलाम्बुना ।
मधुयुक्तं प्रशमये दर्शःपित्तसमुद्भवम् ॥ २३ ॥

अथ कफाऽर्शो निदानम् ।

श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥ २४ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २५ ॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः ।
सकासश्वासहृल्लास प्रसेकारुचिपीनसाः ॥ २६ ॥
मेहकृच्छ्रशिरोजाड्य शिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दि समप्रायविकारदाः ॥ २७ ॥
वसाभासकफप्राय पुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ २८ ॥

अथ चिकित्सा ।

कफजे शृङ्गवेरस्य क्वाथो नित्योपयोगिकः ।

अथ सर्वात्मकार्शोनिदानम् ।

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ॥ २९ ॥

अथ चिकित्सामाह ।

यथास्वौषधसंयुक्तं पाययेत्सहजेषु च ।
सर्वाण्यर्शांसि मतिमान् पूर्वमालेपनादिभिः ।

स्वेदरक्तावसेकैश्च जयेच्च हितभोजनैः॥ ३०॥
त्रयो विकाराः प्रायेण ये परस्परहेतवः।
अर्शांसि चातिसारश्च ग्रहणीगुद एव च॥ ३१॥
एषामग्निबले हीने वृद्धि र्वृद्धे परिच्चयः।
तस्मादग्निं सदा रचेदेषु त्रिषु विशेषतः॥ ३२॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमार्शसैः॥ ३३॥
यदतो विपरीतं स्यान्निदाने यत्प्रदर्शितम्।
गुदजाऽविपरीतेन न तत्कार्य्यं कदाचन॥ ३४॥
शालिषष्टिकगोधूमयवान्न संस्कृतं घृतैः।
अजाचीरेण वा निम्बपटोलानां रसेन वा॥ ३५॥
मांसैर्मांसरसैर्वापि कन्दवार्त्ताकुमूलजैः।
जीवन्त्युपोदकाशाकै स्तण्डुलीयकवास्तुकैः॥ ३६॥
अन्यैश्च सृष्टविण्मूत्रमरुद्भिर्वह्निदीपनैः॥ ३७॥
वातातिसारवद्भिन्नवर्चांस्यऽर्शांस्युपाचरेत्।
उदावर्त्तविधानेन गाढ़विट्कानि वाऽसकृत्॥ ३८॥
प्रवृत्तबहुलाऽस्राणि पित्तशोणितनाशनैः।
योगैरुपाचरेत्तत्तु विड्बन्धे बन्धनाशनैः॥ ३९॥
कृष्णसर्पवराहोष्ट्रजम्बूक वृषदंशनाम्।
वसामभ्यञ्जनं दद्याद्धूपनं वार्शसां हितम्॥ ४०॥

इति कृष्णसर्पादि वसाया अभ्यञ्जनं धूपनञ्च।

दुर्नाम्नां साधनोपायश्चतुर्द्धा परिकीर्त्तितः।
भेषजक्षारशस्त्राग्निसाध्यत्वं याप्यमुच्यते॥ ४१॥
नृकेशं सर्पनिर्मोकं वृषदंशस्य चर्म च।
अर्कमूलं शमीपत्र मर्शसां धूपनं परम्॥ ४२॥

इति नृकेशादि धूपनम्।

निशा कोशातकीचूर्णं विशुष्कं सैन्धवान्वितम्।
गोमूत्रेण समायुक्तं लेपो दुर्नामनाशनः॥ ४३॥

इति निशादि लेपः।

कृष्णानिशा शङ्खसुवर्चिका च
करञ्जवीजं सदलञ्च सिन्धुः।
गुञ्जाफलं केशरमध्यवीजं
समूलकन्तुल्यकहेमपाच्यम्॥ ४४॥
दक्षस्य वर्चः कनकं यवानी
कोशातकीवीजरसश्च तुल्यः।
स्नुह्यर्कदुग्धेन च भावयित्वा
पश्चात् प्रभाव्यं सुरभीरसेन॥ ४५॥
छित्वा विघृष्याथ विघृष्य योज्यं
लेपं विदध्याद् गुदजक्षयाय।
ग्रन्थ्यर्बुदं पूयवहाञ्च नाड़ीं
सगण्डमालामपचीं प्रहन्ति॥ ४६॥
शस्त्रादिभिर्ये च जिताः प्रलेपा-
त्तेऽपि प्रणश्यन्त्यधिमांसदोषाः।

इति सिद्धयोगोऽयम्।

गुदश्वयथुशूलार्त्तं मन्दाग्निं पाययेत्तु तम्।
त्र्यूषणं पिप्पलीमूलं पाठा हिङ्गु सचित्रकम्॥ ४७॥
सौवर्चलं पुष्कराख्य मजाजी विल्वपेशिकम्।
विडं यवानी हबुषा विड़ङ्गं सैन्धवं वचाम्॥ ४८॥
तिन्तिड़ीकञ्च मण्डेन मद्येनोष्णोदकेन च।
तथार्शो ग्रहणीदोषाच्छूलानाहाच्च मुच्यते॥ ४९॥

इति त्र्यूषणाद्यं चूर्णम्।

पूतीकमभया मुस्तं भूनिम्बाऽसितवत्सकाः।

शूरणाग्निकसिन्धूत्थं देवदाली च चूर्णिता ॥ ५० ॥
तक्रेण पिबतश्चान्नं तक्रेणैव समश्नतः।
मासात्पक्वफलानीव पतन्त्यर्शांस्यऽसंशयम् ॥ ५१ ॥

इति अर्शः पातनम्।

विड़ङ्गसारामलकञ्च पिष्टं
भल्लातकक्वाथमधुप्रगाढ़म्।
अर्शांसि जन्तूंश्च जयत्यजीर्णान्
क्षयञ्च सन्धुक्षयति क्षणेन ॥ ५२ ॥

कठिनं यः पुरीषन्तु कृच्छ्रान्मुञ्चति मानवः।
सघृतं लवणैर्युक्तं नरोऽपानजहं पिबेत् ॥ ५३ ॥
सक्तुर्दधिरसोपेतो दधिसर्पिः समायुतः।
त्वक्पत्रैला विड़व्योषजीरकद्वयमिश्रितः।
विड्विबन्धामशूलघ्नो रोचनो गुदजे हितः ॥ ५४ ॥
विड्विबन्धे हितं तक्रं यवानीविड़संयुतम् ॥ ५५ ॥
सैन्धवं नागरं पाठा दाड़िमस्य रसं गुड़म्।
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनम् ॥ ५६ ॥
गुड़भल्लातकं शुण्ठी विड़ङ्गं वृद्धदारकम्।
त्रिगुणं दीपनं वृष्यमर्शसो विड्विबन्धनुत् ॥ ५७ ॥

इति गुड़ाद्यं चूर्णम्।

न प्ररोहन्ति गुदजाः पुनस्तक्रसमाहताः।
तक्राभ्यासोऽर्शसां कार्य्यो बलवर्णाग्निवृद्धये।
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ॥ ५८ ॥
तेन पुष्टिर्बलं वर्णं प्रहर्षश्चोपजायते।
वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तयेत् ॥ ५९ ॥
चिरविल्वाग्निसिन्धूत्थनागरेन्द्रयवारलून्।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह ॥ ६० ॥

हरिद्राजालिनीचूर्णं कटुतैलसमायुतम् ।
एष प्रलेपकः प्रोक्तो ह्यर्शसामन्तकारकः ॥ ६१ ॥

इति हरिद्रादि प्रलेपः ।

स्वेदो गोमयपिण्डेन सक्तुनामलकेन च ।
शतपुष्पेण वा कार्य्यो गुदजानां निवृत्तये ॥ ६२ ॥

इति गुदस्वेदः ।

सगुड़ां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदनुलोमिकीम् ॥ ६३ ॥
अम्बुना वाप्यपामार्गमूलं वा तण्डुलाम्बुना ।
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम् ॥ ६४ ॥
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥ ६५ ॥
तिलभल्लातकं पथ्या गुड़श्चेति समांशकम् ।
दुर्नाम श्वासकासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ६६ ॥
मृल्लिप्तं शूरणं कन्दं पक्वाग्नौ पुटपाकवत् ।
दद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ ६७ ॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवारिणा ।
खादतोऽर्शांसि शाम्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ ६८ ॥
स्विन्नं वार्त्ताकुफलं व्योषायाः क्षारजेन सलिलेन ।
तद्घृतभृष्टं युक्तं गुड़ेन तृप्तितां याति ॥ ६९ ॥
पिबति च तक्रं नूनं तस्यान्वेव सुवृद्धगुदजानि ।
नाशं प्रयान्ति पुंसां सहजान्यपि सप्तरात्रेण ॥ ७० ॥

इति वार्त्ताकुपुटपाकः ।

पित्तश्लेष्मप्रशमनी कच्छुकण्डुरुजापहा ।
गुदजान्नाशयत्याशु योजिता सगुड़ाभया ॥ ७१ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ७२ ॥

दुःस्पर्शकेन विल्वेन यवान्या नागरेण वा।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम्॥ ७३॥
प्रातः प्रातरद्दष्ट्वार्शो ब्रह्मचारी गुड़ाभयाम्।
गोमूत्रद्रोणसंसिद्धां भक्षयेदनुलोमिकीम्॥ ७४॥
कुशमूलं बलायुक्तं पानं तण्डुलधावनम्।
रुणद्धि गुदजास्रावं प्रदरं वापि सर्वजम्॥ ७५॥
शस्त्रैर्वापि जलौकाभिः प्रोच्छूनकठिनार्शसः।
शोणितं सञ्चितं दृष्ट्वा हरेत्प्राज्ञः पुनः पुनः॥ ७६॥

इति शोणितस्रावविधिः।

रुग्गतं कफवातेन अत्यर्थं गुदकीलकम्।
स्वेदयेद्वा वृषापिण्डैःरास्नया वाथ शिग्रुभिः॥ ७७॥
नागरं ग्रन्थिकं चव्यं पिप्पली क्षारचित्रकम्।
एतैश्च पलिकैः सर्वैः घृतप्रस्थं विपाचयेत्॥ ७८॥
उदकस्य त्रयो भागाः क्षीरस्यैकं तदेकतः।
दुर्नामश्वासकासघ्नं प्लीह पाण्डामयापहम्॥ ७९॥
विषमज्वरशान्त्यर्थं तृष्णारोचकनाशनम्।
एतत् षट्पलकं नाम बलवर्णाग्निवर्द्धनम्॥ ८०॥

इत्युदकषट्पलं घृतम्।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि।
साधितं पिबतः सर्पिः पतत्यर्शांस्यऽसंशयम्॥ ८१॥

इति पलाशक्षारघृतम्।

चव्यं त्रिकटुकं पाठा क्षारं कुस्तुंबुरूणि च।
यवानी पिप्पलीमूलमुभे च विड़सैन्धवे॥ ८२॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे॥ ८३॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।

गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥ ८४ ॥

इति चव्याद्यं घृतम् ।

ह्रीवेरमुत्पलं लोध्रं समङ्गा चित्रचव्यकम् ।
पाठा सातिविषा विल्वं धातकी देवदारु च ॥ ८५ ॥
दार्वीत्वङ् नागरं मांसी मुस्तं चारो यवाग्रजः ।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥ ८६ ॥
एकत्र साधयेत्सर्वं तत्सर्पिः परमौषधम् ।
अर्शोऽतिसारग्रहणी पाण्डुरोगेऽरुचौ तथा ॥ ८७ ॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहप्रवाहके ।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत्त्रिदोषनुत् ॥ ८८ ॥

इति ह्रीवेराद्यं घृतम् ।

पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ॥ ८९ ॥
द्वौ चारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥ ९० ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ९१ ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्वुदापची कास कफमेदोऽनिलानपि ॥ ९२ ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ।
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ॥ ९३ ॥
सर्वांस्तान्नाशयत्याशु सूर्य्यस्तम इवोदितः ।

इति अग्निघृतम् ।

भल्लातक सहस्रार्द्धं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥ ९४ ॥
घृतप्रस्थं समावाप्य कल्केष्विमानि दापयेत् ।

त्र्यूषणं पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥ ९५ ॥
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥ ९६ ॥
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥ ९७ ॥
तत्सर्वमेकतः कृत्वा शनैः मृद्वग्निना पचेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ९८ ॥
अर्शसां नाशनं श्रेष्ठं गूढ़वातानुलोमनम्।
कफवातोद्भवे गुल्मे श्लीहोदरदकोदरे ॥ ९९ ॥
शोफं पाण्डामयं कासं ग्रहणीं श्वासमेव च।
एतान् विनाशयत्याशु सूर्य्यस्तम इवोदितः ॥ १०० ॥

इति वृहदग्निघृतम्।

उदावर्त्तपरीता ये ये चात्यर्थनिरूच्छिताः।
विलोमवातशूलार्त्ता स्तेष्विष्टमनुवासनम् ॥ १०१ ॥
पिप्पली मधुकं विल्वं शताह्वा मदनं वचा।
कुष्ठं शठी पुष्कराह्वं चित्रकं देवदारु च ॥ १०२ ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम् ॥ १०३ ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणामयम् ॥ १०४ ॥
पिच्छास्रावं गुदे शोथं वातवर्चो विनिग्रहम्।
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ॥ १०५ ॥

इति पिप्पल्याद्यं घृतम्।

काशीश दन्तीसिन्धूत्थ करवीरानलैः पचेत्।
तैलमर्कपयो मिश्रमभ्यङ्गात्पायुकीलनुत् ॥ १०६ ॥

इति काशीशाद्यं घृतम्।

काशीशं सैन्धवं कृष्णा शुण्ठी कुष्ठञ्च लाङ्गली ।
शिलाभिदश्वमारञ्च जन्तुघ्नं दन्तीचित्रकम् ॥ १०७ ॥
हरितालं तथा स्वर्णक्षीरी चैतैः पचेत्समैः ।
तैलं स्नुह्यर्कपयसा गवां मूत्रं चतुर्गुणम् ॥ १०८ ॥
एतदभ्यङ्गतोऽर्शांसि क्षारवत् पातयेद् ध्रुवम् ।
क्षारकर्मकरं ह्येतन्न च सन्दूषयेद्वलिम् ॥ १०९ ॥

बृहत्काशीशाद्यं तैलम् ।

दन्त्यश्वमारकाशीश विड़ङ्गैलाग्निसैन्धवैः ।
सार्कक्षीरैः पचेत् तैलमभ्यङ्गात्पायुकीलनुत् ॥ ११० ॥

इति दन्त्याद्यं तैलम् ।

लवणोत्तमवह्नि कलिङ्गयवान्
चिरबिल्वमहापिचुमन्दयुतान् ।
पिब सप्तदिनं मथितांल्लुलितान्
यदि मर्दितुमिच्छसि पायुरुहान् ॥ १११ ॥

इति लवणोत्तमाद्यं चूर्णम् ।

कटुत्रयं वचाहिङ्गु पाठाक्षारौ विषद्वयम् ।
चव्यतिक्तकलिङ्गानि गजाह्वालवणानि च ॥ ११२ ॥
ग्रन्थिबिल्वाजमोदा च गणो द्वाविंशको मतः ॥ ११३ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
एरण्डतैलसंयुक्तं सदा लिह्यात् ततो नरः ॥ ११४ ॥
विड़ालपदकं वापि पिबेदुष्णेन वारिणा ।
श्वासं हन्यात्तथा शोथमर्शांसि च भगन्दरम् ॥ ११५ ॥
हृच्छूलं पार्श्वशूलञ्च सक्थिशूलमरोचकम् ।
प्लीहानं सप्रमेहञ्च कामलां पाण्डुरोगताम् ॥ ११६ ॥
आमवातमुदावर्त्तमन्त्रवृद्धिगुदक्रमीन् ।

हन्याच्च ग्रहणीरोगान् ये मया परिकीर्त्तिताः॥ ११७॥

इति कटुत्रयाद्यं चूर्णम्।

भल्लातकञ्च त्रिफलां दन्तीचित्रकमेव च।
एतानि समभागानि सैन्धवं द्विगुणं भवेत्॥ ११८॥
कपालपुटसम्पक्वं मृदुना गोमयाग्निना।
एतत्कल्याणलवणं श्रेष्ठमर्शोविकारिणाम्॥ ११९॥

इति कल्याणलवणम्।

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्माऽरुचिश्वसन कण्ठहृदामयेषु॥ १२०॥

इति समशर्कराचूर्णम्।

व्योषाऽग्न्यऽरुष्करविड़ङ्गतिलाभयानां
चूर्णं गुड़ेन सहितं सततं प्रयोज्यम्।
दुर्नामशोथगरकुष्ठशकृद्विबन्धान्
अर्शेर्जयत्य बलतां कृमिपाण्डुतां च॥ १२१॥

इति व्योषाद्यं चूर्णम्।

तिक्ततुम्बुरूद्भवं तैलं तैलमलसि सम्भवम्।
आच्चोटकरसञ्चैव रसं निगुण्डिगोमयैः॥ १२२॥
प्रत्येकैकन्तु सर्वेषां ग्राह्यं पलचतुष्टयम्।
कर्षैकं सैन्धवं दद्याद्दन्तीमूलं द्विमाषकम्॥ १२३॥
द्विमाषं सर्जिकाक्षारमेतत्तैलं विपाचयेत्।
तिक्ततुम्बीकृता वर्त्ती यवेन्द्रस्वरसेन च।
तैलेनाभ्यञ्जनेनैव दद्यात् दुर्नामशान्तये॥ १२४॥

इति फलवर्त्तितैलम्।

त्रिकत्रयं वचाहिङ्गु पाठाक्षारौ निशाद्वयम्।
चव्यतिक्ताकलिङ्गानि शताह्वालवणानि च॥ १२५॥
ग्रन्थिविल्वाजमोदा च गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥ १२६॥
ततो विड़ालपदकं पिबेदुष्णेन वारिणा।
एरण्डतैलसंयुक्तं सदा लिह्यात्ततो नरः॥ १२७॥
श्वासं हन्यात्तथा शोथमर्शांसि च भगन्दरान्।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम्॥ १२८॥
हिक्काश्वासं प्रमेहांश्च कामलापाण्डुरोगताम्।
आमवातमुदावर्त्तं मन्त्रवृद्धिगुदक्रमीन्॥ १२९॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिताः।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम्॥ १३०॥
अप्रजानाञ्च नारीणां प्रजावर्द्धनमेव च।
विजयो नाम चूर्णोऽयं महाव्याधिहरः परः॥ १३१॥

इति विजयचूर्णम्।

त्रिफलादशमूलाग्नि निकुम्भानां पलं पलम्।
वारिद्रोणे शृतं पाद शेषे गुड़तुलायुतम्॥ १३२॥
आज्यभाण्डे स्थितं मासं दन्त्यरिष्टो निसेवितः।
गुदजक्रम्युदावर्त्त ग्रहणीपाण्डुरोगनुत्॥ १३३॥
अरिष्टादेस्तु सन्धानं धातकीलिप्तभाजने।
पानमानमरिष्टादेः क्वाथपानसमं जगुः॥ १३४॥
भेषजत्वात् पलञ्चैकं प्रथमं मदलक्षणम्।

इति दन्त्यरिष्टः।

सनागराऽरुष्करवृद्धदारकम्
गुड़ेन यो मोदकमत्युदारकम्।
अशेषदुर्नामकरोगदारकं

करोति वृद्धिं सहसैव दारकम् ॥ १३५ ॥

इति चतुःसमो मोदकः ।

मरिचमहौषधिचित्रक शूरणभागाः यथोत्तरं द्विगुणाः ।
सर्वसमो गुड़भागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥ १३६ ॥
ज्वलयति ज्वलनं जाठर मुन्मूलयति शूलगुदगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि प्रणाशयत्याशु ॥ १३७ ॥

इति स्वल्पशूरणमोदकः ।

चूर्णीकृताः षोड़श शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाऽर्द्धौ मरिचस्य चैको गुड़ेन दुर्नामजयाय पिण्डी॥१३८॥

इति शूरणपिण्डी ।

षोड़श शूरणभागा वह्नेरष्टौ महौषधस्याथ ।
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ॥ १३९ ॥
त्रिफलाकणा समूला तालीशाऽरुष्करक्रमिघ्नानां
भागा महौषधसमा दहनांशा तालमूली च ॥ १४० ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गैले मरिचांशे सर्वाण्येकत्र कारयेत् चूर्णम् ॥ १४१ ॥
द्विगुणेन गुड़ेन युतः सेव्योऽयं मोदकः प्रकामधनैः ।
गुरुवृष्यभोजनरतैरितरैषूपद्रवं कुर्य्यात् ॥ १४२ ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि महाशनौ तेन तौ जातौ ॥ १४३ ॥
अग्निबलबुद्धिहेतुर्न केवलं शूरणो महावीर्य्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ॥ १४४ ॥
श्वयथुश्लीपदगदजित् ग्रहणीञ्च तथा कफानिलजाम् ।
नाशयति बलीपलितं मेधाङ्कुरुते जराञ्च हरेत् ॥ १४५ ॥
हिक्कां श्वासं कासञ्च सराजयक्ष्मप्रमेहांश्च ।

प्लीहानञ्च तथोग्रं हन्याशु रसायनं पुंसाम् ॥ १४६ ॥

इति वृहत् शूरणमोदकः।

हरीतकीनां त्रिपलं त्रिपलं कटुकत्रयम्।
त्वक्पत्रं सार्द्धपलकं गुड़स्यार्द्धपलं मतम् ॥ १४७ ॥
अगस्त्यमोदकानेतान् कल्पितान् परिभक्षयेत्।
शोथार्शोग्रहणीदोषकासोदावर्त्तनाशनान् ॥ १४८ ॥

इत्यगस्त्यमोदकः।

त्रिपलं शृङ्गवेरस्य चतुष्कं मरिचस्य च।
पिप्पल्याः कुड़वार्द्धञ्च चव्यस्य पलमेव च ॥ १४९ ॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ॥ १५० ॥
सूक्ष्मैलाकर्षमेकन्तु कर्षञ्च त्वङ्मृणालयोः ॥ १५१ ॥
गुड़ात्पलानि त्रिंशच्च चूर्णमेकत्र कारयेत्।
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता ॥ १५२ ॥
पूर्वं भक्षेच्च पश्चाच्च भोजनस्य यथा बलम्।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेदनु ॥ १५३ ॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ॥ १५४ ॥
पानात्यये मूत्रकृच्छ्रे वातरोगे गलग्रहे।
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥ १५५ ॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा।
छर्द्यतीसाररोगाणां कामलाहिक्किनां हिता ॥ १५६ ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे वातपित्तजे।
प्राणदेयं सितां दत्वा चूर्णमानाच्चतुर्गुणाम् ॥ १५७ ॥
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे।

अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ १५८ ॥
फलाम्लधान्याम्लरसोदकञ्च मद्यं मरुद्रोगिणि चानुपानम् ।
इक्षो रसःक्षीरहिमाम्बुपित्ते उष्णाम्बुयूषं कफजे विदध्यात् ॥१५९॥
गण्डूषमात्रया देयं मृदौ क्रूरे च पञ्च च ।
अनुपानं प्रयोक्तव्यं देशकालमवेक्ष्य च ॥ १६० ॥
यथा जलगतं तैलं तत्क्षणादेव सर्पति ।
तथा भैषज्यमङ्गेषु प्रसर्पत्यनुपानतः ॥ १६१ ॥

इति प्राणदागुटिका ।

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य चं ।
पिप्पली पिप्पलीमूल चव्यचित्रकनागराः ॥ १६२ ॥
पलाभिवृद्ध्या क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ।
द्विगुणेन गुड़ेनैषां वटकानक्षसम्मितान् ॥ १६३ ॥
कृत्वैनं भक्षयेत्प्रातस्तक्रमम्भोऽनु वा पिबेत् ।
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥ १६४ ॥
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिदं प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ।

इति काङ्कायनी मोदकः ।

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् पचेद् गुड़तुलां भिषग् ॥ १६६ ॥
भल्लातकसहस्रार्द्धं छित्वा तत्रैव दापयेत् ।
सिद्धेऽस्मिंस्त्रिफलां व्योषं यवानीं मुस्तसैन्धवम् ॥ १६७ ॥
कर्षांशसम्मितं दद्यात्त्वगेलापत्रकेसरम् ।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ॥ १६८ ॥
कुष्ठार्शःकामलामेहान् ग्रहणीं पाण्डुतामपि ।

हन्यात् प्लीहोदरं कासं क्रमिदोषं भगन्दरम् ॥ १६९ ॥
भल्लातकगुड़ो ह्येष श्रेष्ठश्चार्शोविकारिणाम् ॥ १७० ॥

इति भल्लातकगुड़: ।

सुपक्वभल्लातफलानि चैव द्विधा विदार्य्याढ़कसम्मितानि ।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥१७१॥
पुन: पचेत् क्षीर चतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात् ।
सितोपला: षोड़शभि: पलैश्च
विमृश्य संस्थाप्य दिनानि सप्त ॥ १७२ ॥
तत: प्रयुञ्ज्याग्निवलेन मात्रां
जयेद्विकारानखिलान् गुदोत्थितान् ।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिञ्च शशाङ्ककान्तिम् ॥ १७३ ॥
जवं हयानां बलमुत्तमञ्च
स्वरं मयूरस्य हुताशदीप्तिम् ।
स्त्रीवल्लभत्वं विविधां प्रभाञ्च
नीरोगतां द्विचिशतायुषञ्च ॥ १७४ ॥
न चान्नपाने परिहारमस्ति
न चातपे वाऽध्वनि मैथुने च ।
प्रयोगकाले सकलामयानां
राजा ह्ययं सर्वरसायनानाम् ॥ १७५ ॥

इति भल्लातकावलेह: ।

पटोलमूलं त्रिफलां विशालां चतुरङ्गुलाम् ।
नीलिनीं त्रिवृतां दन्तीं क्रमिघ्नं सपुनर्नवम् ॥ १७६ ॥
कटुकं सातला लोध्रं भागान् दशपलोन्मितान् ।
दत्त्वा द्रोणचतुष्कन्तु सलिले पादशेषिते ॥ १७७ ॥

तैलस्य कुड़वं दत्त्वा गुड़स्य तु तुलां पचेत् ।
त्रिवृच्चूर्णं पलान्यष्टौ लेहवत्साधु साधयेत् ॥ १७८ ॥
शीतीभूते न्यसेत्तत्र व्योषं पञ्चपलोन्मितम् ।
पलत्रयं त्रिजातस्य दत्त्वा सङ्घट्टयेत् पुनः ॥ १७९ ॥
ततो यथाबलं खादेत्पलार्द्धं पिचुमेव च ।
नाहारे यन्त्रणा काचिन्न विहारे तथैव च ॥ १८० ॥
विबन्धाध्मानगुल्मार्शःपाण्डुरोगकफक्रमीन् ।
कुष्ठमेहारुचिं हन्ति ह्यन्त्रवृद्धिषु शस्यते ॥ १८१ ॥

इति पटोलाद्योऽवलेहः ।

मोदकं वटकं लेहं कर्षमात्रं प्रयोजयेत् ।
कर्षद्वयं पलं वापि देयं रोगाऽग्न्यपेक्षया ॥ १८२ ॥
बीजं भल्लातकस्यैकं पूते निःक्वाथ्य वारिणि ।
क्वाथयेत् षोड़शगुणे शुक्तिशेषं हि तं पिबेत् ॥ १८३ ॥
एकैकं वर्द्धयेद्बीजमापञ्चाशद्विचक्षणः ।
आसप्ततिं पञ्चवृद्ध्या वर्द्धयेन्मतिमांस्ततः ॥ १८४ ॥
शुक्तिवृद्ध्या कषायञ्च वर्द्धयेदातुरः पलान् ।
सकषायाणि बीजानि वर्द्धितानि यथाक्रमम् ॥ १८५ ॥
पुनः क्रमेण तेनैव ह्रासयेदात्मवान्नरः ।
इत्युत्कर्षापकर्षाभ्यां सहस्रं यावदादरात् ॥ १८६ ॥
उपयुक्तं जयत्येतद् गुदजानि क्रमींस्तथा ।
भल्लातकस्य विधानमिदं गोपुरगदितम् ॥ १८७ ॥

इति भल्लातकविधानम् ।

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः ।
पाठाविड़ङ्गेन्द्रयवहिङ्गुभागवचान्वितैः ॥ १८८ ॥
सर्षपाऽतिविषा जाजी चित्रकैरण्डकद्रुमैः ।
तेजःकुष्ठाजमोदाह्वा कटुका तेजनी समैः ॥ १८९ ॥

भागैः संचूर्णितैरेषां त्रिफला त्रिगुणा भवेत्।
सर्वेषामिव द्रव्याणां समो देयोऽथ गुग्गुलुः ॥ १९० ॥
एकीकृत्य शुभे भाण्डे मधुना सुपरिप्लुतः।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥ १९१ ॥
एष निष्परिहारस्तु पानभोजनमैथुनैः।
रेतोदोषाश्च ये पुंसां योनिदोषास्तु योषिताम् ॥ १९२ ॥
निहन्ति सर्वान् दुर्वारान् नात्र कार्य्या विचारणा।
अर्शांसि वातगुल्मञ्च वातरोगमरोचकम् ॥ १९३ ॥
नाभिशूलमुदावर्त्तं हृद्रोगं ग्रहणीं तथा।
क्षयं कुष्ठमपस्मारं प्रमेहं वातशोणितम् ॥ १९४ ॥
महान्तमग्निसादञ्च कासं श्वासं भगन्दरम्।
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतद्वयम् ॥ १९५ ॥
क्षीराज्यरसयूषाक्तं दोषधात्ववलोचितम्।
बुभुक्षितो मात्रयाऽन्न मद्याद् गुग्गुलुसेवकः ॥ १९६ ॥
वातं स्थिरादिक्काथेन पित्तं काकोलिकादिना।
आरग्वधाद्येन कफं पीतो जयति गुग्गुलुः ॥ १९७ ॥
दार्वीक्काथेन मेहं जयति मधुयुतो मेदसश्चापि वृद्धिं
पाण्डुत्वं मूत्रयुक्तः क्षपयति बहुलं छागदुग्धेन सिद्धम्।
निम्बकाथेन कुष्ठं श्वयथुमतिबलं मूलकक्काथपीतः
क्षिप्रं कुम्भीकवृक्षस्वरसपरिगतो मूषकग्रासदोषान् ॥१९८॥

इति योगराजगुग्गुलुः।

त्रिवृत्त जोवती दन्ती श्वदंष्ट्रा चित्रकं शठी।
गवाक्षी मुस्तविश्वाह्वा विड़ङ्गानि हरीतकी ॥ १९९ ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्।
वृद्धदारपलान्यष्टौ शूरणस्य च षोड़श ॥ २०० ॥
जलद्रोणे पचेत् क्काथं चतुर्भागावशेषितम्।

पूतं पूतं रसं भूयः क्वाथेभ्यस्त्रिगुणं गुड़म् ॥ २०१ ॥
मेलयित्वा पचेत् तावद्यावद्दर्वीप्रलेपनम्।
अवतार्य्य ततः पश्चात् चूर्णानीमानि दापयेत् ॥ २०२ ॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान्।
एलात्वङ्मरिचं चापि गजाह्वञ्चापि षट्पलम् ॥ २०३ ॥
द्वात्रिंशच्च पलञ्चैव चूर्णयित्वा निधापयेत्।
ततो मात्रां प्रयुञ्जीत जीर्णे चीररसाशिनः ॥ २०४ ॥
पञ्चगुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम्।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥ २०५ ॥
दीपयेद् ग्रहणीं मन्दां यच्माणं चापकर्षति।
पीनसे च प्रतिश्याय आमवाते तथैव च ॥ २०६ ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः।
दुर्नामान्तकरो ह्येष दृष्टो वारसहस्रशः ॥ २०७ ॥
भवन्त्यनेन पुरुषाः शतं वर्षाण्यनामयाः।
आयुषो दैर्घ्यजननो बलीपलितनाशनः ॥ २०८ ॥
रसायनवरश्चैष मेधाजनन उत्तमः।
गुड़श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥ २०९ ॥

इति श्रीबाहुशालो गुड़ः।

सार्द्धं पलं पलं चार्द्धं विदध्याद्गुड़खण्डयोः।
श्रेष्ठमध्यमहीनेषु मात्रेयं मुनिना स्मृता ॥ २१० ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुड़ः।
क्षिप्तस्तु निश्चलस्तिष्ठेत्पतितस्तु न शीर्य्यते ॥ २११ ॥
यावत् दर्वीप्रलेपः स्यात् यावद्वा तन्तुमान् भवेत्।
एष पाकः समस्तानां गुड़ानां परिकीर्त्तितः ॥ २१२ ॥
सुखमर्द्दः सुखस्पर्शो गन्धवर्णरसान्वितः।
पीड़ितो भजते मुद्रां गुड़ः पाकमुपागतः ॥ २१३ ॥

अथ लौहभेदानाह ।

मुण्डं तीक्ष्णञ्च कान्तञ्च त्रिप्रकारमयः स्मृतम् ।
मृदु कुण्डञ्च कण्डारं त्रिविधं मुण्डमेव च ॥ २१४ ॥
द्रुतद्रावमविस्फोटं मृदु कुम्भहतं च यत् ।
घट्टने प्रसरं दुःखात्तत्कुण्डं मध्यमं स्मृतम् ॥ २१५ ॥
विघृतं भज्यते भङ्गं कृष्णं स्यात्तु कण्डालकम् ॥ २१६ ॥

मुण्डं वरं मृदुलकं कफवातशूल-
मानाहमेहगुदजामय पाण्डुहारि ।
गुल्मामवातजठरार्त्तिहरं प्रदीपि
शोफापहं रुधिरकृत् खलु कोष्ठशोधि ॥ २१७ ॥

खराख्यं योगरं सारं कर्णकं द्रावकं तथा ।
रोमकं षड्विधं तीक्ष्णं मुनिभिः परिकीर्त्तितम् ॥ २१८ ॥
हुन्तालमपरं तारं वट्टं वाजरकालकम् ।
कान्तं सप्तविधं प्रोक्तं भ्रामकं चुम्बकं तथा ॥ २१९ ॥
नीलं कृष्णमतिस्निग्धं सूक्ष्मं सारमयः शुभम् ।
न नमेद्भङ्गुरं यत्तत् खरलोहमुदाहृतम् ॥ २२० ॥
कृष्ण पाण्डुर कच्छुर वीजतुल्यन्तु योगरम् ।
विच्छेदनेऽतिपरुषं हुन्तालमिति कथ्यते ॥ २२१ ॥
योगरैर्वज्रसङ्काशैः सूक्ष्मैर्यूखैश्च सान्द्रकैः ।
निश्रितं श्यामलाङ्गञ्च वाजरं तत्प्रकीर्त्तितम् ॥ २२२ ॥
नीलं कृष्णप्रभं सान्द्र मव्रणं गुरुतारकम् ।
अयः पारशवं तीक्ष्णशस्त्रं कालायसं खरम् ॥ २२३ ॥

रूक्षं स्यात् खरलोहकं समधुरं पाके च वीर्य्यं हिमम्
तिक्तोष्णं कफवातपित्तजनित प्लीहामपाण्डुर्त्तिनुत् ।
सद्यः शूलयकृत् गदक्षयजरामोहामवातापहम्
दीप्तं चातिरसायनं कफकरं दुर्नामभेदापहम् ॥ २२४ ॥

खरलोहात्परं सर्वमेकैकं स्याच्छतोत्तरम् ॥ २२५ ॥
गुडूची हंसपादी च रक्तमालाफलत्रयम्।
गोपालिका गोरसना तुम्बुरुं लोहतप्तकम्
एषां रसैः सिञ्चयेत्तन्नरदोषनिवृत्तये ॥ २२६ ॥

इति तीक्ष्णशोधनम्।

अथ लौहवर्णनम्।

तत्तदाकरसम्भूतं तत्तद्रोगविनाशनम्।
तेन तस्य परीक्षायां यतेमहि सहेतुकम् ॥ २२७ ॥
कान्तकं तण्डुलाङ्गं स्यादार्यवन्मलयोपरि।
कशताडं कशाङ्कञ्च शूलायश्चोग्रदेशजम् ॥ २२८ ॥
पाण्डिजं द्विविधं कृष्णं शुक्लञ्च समदाड़िमम्।
भद्रमैरण्डबीजाङ्गं स्नुहीपत्रनिभं शुभम् ॥ २२९ ॥
वज्रदमर्कपत्राङ्ग मीषत्स्वर्णच्छवि द्विधा।
कान्तं मृदुतरं ताडं रूक्षं कान्ति शितीकरम् ॥ २३० ॥
क्षुद्राङ्गं गुरुतारं स्यात् कलिङ्गजमयः स्मृतम्।
रूक्षं रुक्मप्रतीकाशं तीक्ष्णं मृदुफलं स्मृतम् ॥ २३१ ॥
यकृत्प्लीहशिरःशूलमम्लपित्तानिलोद्भवम्।
पार्श्वरोगहतं वातं हन्याद्वातकफोद्भवम् ॥ २३२ ॥
छर्द्यतीसारशूलानि परिणामोद्भवं तथा।
वातं सर्वाङ्गिकं पित्तं निहन्याच्चोग्रदेशजम् ॥ २३३ ॥
भेदनं दीपनं वह्नेर्दुर्नामाख्यं त्रिदोषजम्।
गात्रभेदं कफं वातं हन्ति वज्रोद्भवं तु यत् ॥ २३४ ॥
गुल्मञ्च पाण्डुरोगञ्च ज्वरांश्च विषमोद्भवान्।
अर्शांसि श्वासशोथांश्च प्रमेहांश्च विशेषतः ॥ २३५ ॥
गलग्रहं रक्तपित्तं मरुद्रोगं भयानकम्।
निद्रालस्यावरोधञ्च निहन्यात् पाण्डिदेशजम् ॥ २३६ ॥

रक्तोत्थं चापि चोष्माणं रक्तपित्तं सुदारुणम्।
मूर्च्छाछर्द्दिहरं दाहं वज्रं शमयति ध्रुवम्॥ २३७॥
सर्वान् रोगान्निहन्त्याशु कुष्ठाष्टादशसम्मिताम्।
पावनं पुत्रजननं बन्ध्याया वीर्य्यबर्द्धनम्।
बल्यं चयापहं धातुवृंहणं स्यात् कलिङ्गजम्॥ २३८॥

एतानि सर्वाणि विचेष्टितानि
हितानि रोगोपशमाय सन्ति।
वयोविशेषेषु विशेषविज्ञै-
र्विज्ञाय दत्तानि च देशकाले॥ २३९॥

सामान्यात् द्विगुणश्चोग्रं तस्मादष्टगुणं कलिः।
कलेर्दशगुणं भद्रं भद्राद्वज्रं सहस्रधा॥ २४०॥
वज्रात् षष्टिगुणं पाण्डिर्निरचिर्दशभिर्गुणैः।
ततः कोटिसहस्रेण त्वयः कान्तं महागुणम्॥ २४१॥

इति लौहवर्णनम्।

त्रिवृच्चित्रकनिर्गुण्डी स्नुहीमुण्डितका जटा।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत्॥ २४२॥
पादशेषे रसे तस्मिन् पुनस्तेन विपाचयेत्।
पलद्वयं विड़ङ्गस्य व्योषात्कर्षद्वयं पृथक्॥ २४३॥
त्रिफलायाः पलं पञ्च शिलाजतु पलं न्यसेत्।
दिव्यौषधहतस्यापि वैकङ्कतहतस्य वा॥ २४४॥
पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम्।
मधुशर्करयोर्युक्तं चतुर्विंशतिभिः पलैः॥ २४५॥
घनीभूते सुशीते च दापयेदवतारिते।
एतदग्निमुखं नाम दुर्नामान्तकरं परम्॥ २४६॥
मन्दमग्निं करोत्याशु कालाग्निसमतेजसम्।
पर्वतोऽप्यवजीर्य्येत प्रसादादस्य देहिनाम्॥ २४७॥

गुरुवृष्यान्नपानानि पयो मांसरसा हिताः।
दुर्नामपाण्डुश्वयथु प्लीहकुष्ठोदरापहम् ॥ २४८ ॥
न स रोगोऽस्ति यश्चापि न निहन्यादिदं क्षणात्।
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।
स्रवत्यतोऽन्यथा लौहो देहात्किट्टञ्च दुर्जयम् ॥ २४९ ॥

इत्यग्निमुखलौहः।

पलद्वादशकं कृत्वा कृष्णलोहस्य खण्डशः।
भार्गीम्बष्ठा सगण्डीरमूलैः पिण्डं प्रलेपयेत् ॥ २५० ॥
दत्त्वा प्रधमयेत्तावद्यावत्सर्वम्मृतं भवेत्।
घृतस्य षट्पलं देयं शर्करायास्तथैव च ॥ २५१ ॥
सूर्य्यावर्त्तरसप्रस्थे त्रिफलासहिते शुभे।
प्रक्षिप्य विपचेद्भूयो यावत्सान्द्रत्वमेति च ॥ २५२ ॥
सिद्धे रात्रुषिते बीजं सूर्य्यावर्त्तस्य दापयेत्।
कर्षं त्रिकटुकस्यापि त्रिकर्षं चूर्णसंयुतम् ॥ २५३ ॥
मधुत्रिपलसंयुक्तं यथाग्निं चोपयोजयेत्।
अर्शांसि कामला कुष्ठपाण्डुरोग कृमींस्तथा ॥ २५४ ॥
वृद्धिं गुल्मोदरं शोथं विशेषात्परिणामजम्।
शूलान्निहन्ति सर्वांस्तु विकारान्नात्र संशयः ॥ २५५ ॥
एतल्लोहाष्टकं नाम सर्वदोषहरं परम्।

इति लौहाष्टकम्।

चव्यं पलाष्टकं देयं खदिरं चार्द्धमेव च।
चित्रकस्य पलं पञ्च तालमूली च तत्समा ॥ २५६ ॥
त्रिफलाप्रस्थसंयुक्तं जलद्रोणे विपाचयेत्।
अष्टभागावशेषेण कषायमवतारयेत् ॥ २५७ ॥
आज्यात्पलाष्टकं देयं रुक्मलोहस्य षोड़श।
पचेत्ताम्रमये पात्रे सुशीते चावतारयेत् ॥ २५८ ॥

त्रिवृद्दन्ती विड़ङ्गानि पथ्या चामलकानि च ।
शुण्ठी विभीतकं कृष्णा एषां चूर्णं पलार्धिकम् ॥ १५९ ॥
शर्करा मधु चत्वारि स्निग्धे भाण्डे निधापयेत् ।
गुरुवृष्यान्नपानानि पयो मांसरसो हितः ॥ २६० ॥
दुर्नाम कुष्ठश्वयथुपाण्डुप्लीहोदराणि च ।
गुदशूले कुक्षिशूले परिणामकृते हितः ॥ २६१ ॥
वलवर्णकरं वृष्यमग्निसन्दीपनं परम् ।
करीरं काञ्जिकञ्चैव काकमाचीञ्च वर्जयेत् ॥ २६२ ॥

इति चव्याद्यं लौहम् ।

अथातः शङ्करलौहमाह ।

प्रणम्य शङ्करं देवं दण्डपाणिं महेश्वरम् ।
जीवितारोग्यमन्विच्छन्नारदोऽपृच्छदीश्वरम् ॥ २६३ ॥
सुखोपायेन हे नाथ ! शस्त्रक्षाराग्निभिर्विना ।
चिकित्सामर्शसां नृणां कारुण्यात् वक्तुमर्हसि ॥ २६४ ॥
नारदस्य वचः श्रुत्वा नराणां हितकाम्यया ।
अर्शसां नाशनं श्रेष्ठं भैषज्यमिदमीरितम् ॥ २६५ ॥
पाण्डिवज्रादिलोहाना मादायान्यतमं शुभम् ।
कृत्वा निर्मलमादौ तु कुनट्या माक्षिकेण च ॥ २६६ ॥
प्रत्तूरमूलकल्केन सरसेन दहेत्ततः ।
वह्नौ निक्षिप्य विधिवत् साराङ्गारेण निर्धमेत् ॥ २६७ ॥
ज्वाला च तस्य रोद्धव्या त्रिफलाया रसेन तु ।
ततो विज्ञाय गलितं शङ्कुनोर्ध्वं विनिःक्षिपेत् ॥ २६८ ॥
त्रिफलाया रसे पूते तदाकृष्य तु निर्धमेत् ।
न सम्यक् गलितं यत्तु तेनैव विधिना पुनः ॥ २६९ ॥
ध्मातं निर्वापयेत्तस्मिंल्लोहं तत्त्रिफलारसे ।
यल्लोहं न मृतं तत्तु पाच्यं भूयोऽपि पूर्ववत् ।

मारणान्न मृतं यच्च तत्पक्तव्यमलोहवत् ॥ २७० ॥

तदनुलोहवत् लोहपात्रे कालायसमुद्गरेण सञ्चूर्ण्य हत्वा मुहुश: सलिले प्रक्षाल्याङ्गारादुद्धृतन्तदयः केवलमग्नौ शुष्कीकृत्य आतपे दद्यात् पश्चात् लोहशिलायां पिष्ट्वा ततः संशोष्य विधिवच्चूर्णयेत्।

लोहेनैव तथा यत्नात् दृषदा सूक्ष्मचूर्णितम् ॥ २७१ ॥
कृत्वा लोहमये पात्रे मृत्तिकालिप्तरन्ध्रके।
रसैः पङ्कोपमं कृत्वा पचेद्गोमयवह्निना ॥ २७२ ॥
पुटानि क्रमशो दद्यात् पृथगेषां विधानतः।
त्रिफलार्द्रकभृङ्गाणां केशराजस्य बुद्धिमान् ॥ २७३ ॥
मानकन्दकभल्लातवह्नीनां शूरणस्य च।
हस्तिकर्णपलाशस्य कुलिशस्य तथैव च ॥ २७४ ॥
पुटे पुटे चूर्णयित्वा लोहात् षोड़शिकं पलम्।
तन्मानं त्रिफलायाश्च पलेनाधिकमाहरेत् ॥ २७५ ॥
अष्टभागावशेषे तु रसे तस्याः पचेत् बुधः।
अष्टौ पलानि दत्त्वा च सर्पिषो लोहभाजने ॥ २७६ ॥
ताम्रे वा लोहदर्व्या तु चालयेद्विधिपूर्वकम्।
ततः पाकविधानज्ञः स्वच्छे चोर्द्ध्वे च सर्पिषि ॥ २७७ ॥
मृदुमध्यादिभेदेन गृह्णीयात्पाकमादृतः।
आरभेत विधानज्ञः कृतकौतुकमङ्गलः ॥ २७८ ॥
भ्रामरं घृतसंयुक्तं लिहेद्वा रक्तिकाक्रमात्।
द्वादशरक्तिकापर्य्यन्तं यथाग्निबलं खादेत्।
वर्द्धमानानुपानञ्च गव्यक्षीरेण संयुतम् ॥ २७९ ॥
गव्याभावे ह्यजायाश्च स्निग्धवृष्यादिभोजनम्।
सद्यो वह्निकरश्चैव भस्मकञ्च नियच्छति ॥ २८० ॥
हन्ति वातं तथा पित्तं कुष्ठानि विषमज्वरम्।

गुल्मशूलाग्निरोगांश्च निद्रालस्यमरोचकम् ॥ २८१ ॥
शूलञ्च परिणामञ्च प्रमेहमपबाहुकम् ।
क्षयथुं रुधिरस्रावं दुर्नामञ्च विशेषतः ॥ २८२ ॥
बलकृद्‌ हृंहणञ्चैव कान्तिदं स्वरबोधनम् ।
शरीरलाघवकरमारोग्यं पुष्टिवर्द्धनम् ॥ २८३ ॥
आयुष्यं श्रीकरञ्चैव यशस्तेजस्करं शुभम् ।
सश्रीकं पुत्रजननं बलीपलितनाशनम् ॥ २८४ ॥
दुर्नामारिरयं नाम्ना दृष्टो वारसहस्रशः ।
निर्मूलं दह्यते शीघ्रं यथा तूलञ्च वह्निना ॥ २८५ ॥
सौकुमार्य्याल्पकायत्वान्मद्यसेवी यदा नरः ।
जीर्णमद्यादियुक्तादि भोजनैः सह दापयेत् ॥ २८६ ॥
लावतित्तिरिवर्त्तीरमयूरशशकादयः ।
चटकः कलविङ्कश्च वर्त्तकोहरिणैणकः ॥ २८७ ॥
श्येनः काकः वृहल्लावो वनविष्किरकादयः ।
पारावतमृगादीनां मांसं जाङ्गलजं शुभम् ॥ २८८ ॥
मद्गुरो रोहितः श्रेष्ठः शकुलश्च विशेषतः ।
मत्स्यराज इमे प्रोक्ता हितमत्स्याय देहिने ॥ २८९ ॥
प्रशस्तं वार्त्ताकुफलं पटोलं वृहतीफलम् ।
प्रलम्बा भीरुवेत्राग्रं ताड़कं तण्डुलीयकम् ॥ २९० ॥
वास्तुकं धान्यशाकञ्च क्रमुकं चक्रवर्त्तनम् ।
नारिकेलञ्च खर्जूरं दाड़िमं लवलीफलम् ॥ २९१ ॥
शृङ्गाटकञ्च पक्वान्नं द्राक्षा तालफलानि च ।
जातिकोशं लवङ्गञ्च पूगताम्बूलपत्रकम् ॥ २९२ ॥
हितान्येतानि वस्तूनि लोहमेतत्समश्नताम् ।
नाश्नीयाल्लकुचं कोलं कर्कन्धुवदराणि च ।
जम्बीरं बीजपूरञ्च करमर्दकतिन्तिड़ीः ॥ २९३ ॥

आनूपानि च मांसानि क्रकरं पुण्ड्रकादयः।
हंससारसदात्यूह शङ्खकङ्कबलाहकाः ॥ २९४ ॥
मानकन्दकसेरूणि कतकञ्च कलिङ्गकम्।
कुष्माण्डञ्च कर्कोटं क्रमुकञ्च विशेषतः ॥ २९५ ॥
कटुकं कालशाकञ्च कुण्टुरुं कर्कटीं तथा।
द्विदलानि च सर्वाणि ककारादींश्च वर्जयेत् ॥ २९६ ॥
लोहराजस्तथा चायं स्वयं रुद्रेण भाषितः।
जगतामुपकाराय दुर्नामारिरयं ध्रुवम् ॥ २९७ ॥
स्थानादपैति मेरुश्च पृथ्वी पर्य्येति वायुना।
पतन्ति चन्द्रताराश्च मिथ्या चेदहमब्रुवम् ॥ २९८ ॥
ब्रह्मघ्नाश्च कृतघ्नाश्च क्रूरा येऽसत्यवादिनः।
वर्जनीया विशेषेण भिषजाः गुरुनिन्दकाः ॥ २९९ ॥
मुनिरसपिष्टं विड़ङ्गं मुनिरसलीढ़ं चिरस्थितं घर्मे।
द्रावयति लोहदोषान् वह्निर्नवनीतपिण्डमिव ॥ ३०० ॥
काले मलप्रवृत्तिर्लाघवमुदरे विशुद्धिरुद्गारे।
अङ्गेषु नावसादो मनःप्रसादोऽस्य परिपाके ॥ ३०१ ॥
क्रमिरिपुचूर्णं लीढ़ं सहितं स्वरसेन वङ्गसेनस्य।
चपयत्यचिरान्नियतं लोहमजीर्णोद्भवं शूलम् ॥ ३०२ ॥
कुर्य्यात्कनकबीजैश्च रेचनं किट्टशान्तये।
भवेत् यद्यतिसारश्च पीत्वा दुग्धन्तु तं जयेत् ॥ ३०३ ॥
गुञ्जाद्वादशकादूर्द्धं वृद्धिरस्य भयप्रदा।

इति अष्टमणीतलोहः।

अथ सामान्यविधिः।

रक्तोल्वणाः गुदे कीलाः पित्ताकृतिसमन्विताः।
वटप्ररोहसदृशा गुञ्जा विद्रुमसन्निभाः ॥ ३०४ ॥
तेऽत्यर्थं दुष्टमुष्णाञ्च गाढ़विट्कप्रपीड़िताः।

स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ३०५ ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साही हतौजा कलुषेन्द्रियः ॥ ३०६ ॥
विट्श्यावं कठिनं रूक्षमधो वायुर्न वर्त्तते ॥ ३०७ ॥

वाताद्यनुबन्धमाह ।

तनु चारुणवर्णञ्च फेनिलं चासृगर्शसाम् ।
कट्यूरुगुदशूलञ्च दौर्बल्यं यदि वाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥ ३०८ ॥
शिथिलं श्वेतपीतञ्च विट्स्निग्धं गुरु शीतलम् ।
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डुपिच्छिलम् ॥ ३०९ ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३१० ॥
रक्तार्शसामुपेक्ष्येत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निगृहीते स्युः शूलानाहाद्यसृग्गदाः ॥ ३११ ॥
चन्दनकिराततिक्तक धन्वयवासाः सनागराः क्वथिताः ।
रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ ३१२ ॥
नवनीततिलाभ्यासात् केसरनवनीतशर्कराभ्यासात् ।
दधिसमथिताभ्यासाद्गुदजाः शाम्यन्ति रक्तवाहाः ॥ ३१३ ॥
सपद्मकेशरं क्षौद्रं नवनीतं नवं लिहन् ।
सिताकेशरसंयुक्तं रक्तार्शसि सुखी भवेत् ॥ ३१४ ॥
लाजैः पेया पीता चुक्रिका केशरोत्पलैः सिद्धा ।
हन्त्याशु रक्तरोगं तथा बलापृश्निपर्णीभ्याम् ॥ ३१५ ॥
पयसा सृतेन यूषैः सतीनमुद्गाढ़कीमसूराणाम् ।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवाणाम् ॥ ३१६ ॥
शशहरिणलावमांसैः कपिञ्जलैरेणमांसैश्च ।
भोजनमद्यादम्लैः मधुरैरीषत्समधुरैर्वा ॥ ३१७ ॥

ज्योत्स्निका बीजकल्केन लेपो रक्तार्शसां हितः ।
तद्वद्गोषरजोयुक्तं नवनीतं प्रलेपयेत् ॥ ३१८ ॥
समङ्गोत्पलमोचाह्व तिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितात्मके ॥ ३१९ ॥
सातिविषा कुटजत्वक् फलञ्च रसाञ्जनञ्च मधुयुतानि ।
रक्तापहानि दद्यात्पिपासवे तण्डुलजलेन ॥ ३२० ॥
यवानीन्द्रयवं पाठा विल्वं शुण्ठी रसाञ्जनम् ।
चूर्णं शूले हितं पेयं प्रवृद्धे वातशोणिते ॥ ३२१ ॥
कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥ ३२२ ॥

इति कुटजाद्यं घृतम् ।

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकम् ।
न्यग्रोधोदुम्बराश्वत्थ शुङ्गाश्च त्रिपलोन्मिताः ॥ ३२३ ॥
कषाय एव देया च जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं नागरं सुरदारु च ॥ ३२४ ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनकुङ्कुमम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्गुतिविषे स्थिरा ॥ ३२५ ॥
पद्मोत्पलानां किञ्जल्कं समङ्गा सनिदग्धिका ।
विल्वं मोचरसं पाठा भागाः कर्षसमन्विताः ॥ ३२६ ॥
चतुष्प्रस्थं घृतप्रस्थे कषायमुपकल्पयेत् ।
त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः ॥ ३२७ ॥
सुनिषस्रकचाङ्गेर्य्याः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ३२८ ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरच्युतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ ३२९ ॥
उत्थाने चातिबहुशः शोथे शूले गुदाश्रये ।

मूत्रग्रहे मूढ़वाते मन्दाग्नावरुचावपि ॥ ३३० ॥
प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ३३१ ॥
द्रव्याख्यष्टाविहावाप्य जलषोड़शके क्वथेत् ।
निःक्काथ्य प्रस्थशेषन्तु गृह्णीयात् प्रसृतं भिषक् ॥ ३३२ ॥

इति अवाक्पुष्पीघृतम् ।

न्यग्रोधोदुम्बराश्वत्थ वदरी प्लक्षवेतसाः ।
एभ्यः प्रवालांस्तरुणांस्त्रिपलांश्च समाहरेत् ॥ ३३३ ॥
अवाक्पुष्प्याः पलान्यष्टौ द्वौ च दार्व्यास्तथैव च ।
शालपर्ण्याः पले द्वे तु सर्वमेतत् समावपेत् ॥ ३३४ ॥
द्वे पले कालशाकस्य सर्वमेतत् समावपेत् ।
द्विद्रोणे सलिले साध्यमष्टभागावशेषितम् ॥ ३३५ ॥
घृतस्याऽर्द्धाढ़कञ्च स्यात् सकषायं सुखाग्निना ।
कुचाङ्गेर्य्याम्लिकाभ्याञ्च स्वरसः स्नेहसम्मितः ॥ ३३६ ॥
देवदारु च मुस्तञ्च चित्रकं विल्वपेशिका ।
कट्फलं शृङ्गवेरञ्च पिप्पली चन्दनं तथा ॥ ३३७ ॥
सौवेरमञ्जनं मूलं पिप्पल्याः कटुरोहिणी ।
गन्धप्रियङ्गुपुष्पञ्च शाल्मली जीवकाह्वया ॥ ३३८ ॥
वत्सकस्य च वीजानि तथा चातिविषाभया ।
एषामक्षसमा भागाः पृथग्दत्त्वा विपाचयेत् ॥ ३३९ ॥
वातगुल्ममतीसारं शूलं ज्वरमरोचकम् ।
स्त्रीणामसृग्दरं सर्वं रक्तपित्तप्रवाहिकाम् ॥ ३४० ॥
पाण्डुरोगं तथा कासं क्रमिदोषांश्च नाशयेत् ।
छर्दिं माक्षिकसंयुक्तं शमयेद्दीपनं परम् ॥ ३४१ ॥
गर्भाधानञ्च बन्ध्यानां करोत्यर्शोनिवारणम् ।
चाङ्गेरीघृतमित्युक्तं ख्यातमर्शो निवारणम् ॥ ३४२ ॥

बलमांसकरञ्चैतद्रक्तगुल्महरं तथा।
अर्शसां पित्तजातानां हितं तद्रक्तजेष्वपि।
सन्निपातसमुत्थेषु सर्वतो भिषजः क्रमः॥ ३४३॥

इति महच्चाङ्गेरीघृतम्।

कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन।
यावत्सान्द्ररसं तद्द्रव्यं स्वरसस्ततो ग्राह्यः॥ ३४४॥
मोचरसः समङ्गा फलिनी च पलांशकैस्त्रिभिस्तैश्च।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम्॥ ३४५॥
पूतः क्वथितः सान्द्रः स्वरसो दार्वीप्रलेपनो ग्राह्यः।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक् स्रावम्॥३४६॥
छागक्षीरप्रयुक्ता पेया मण्डेन वा यथाग्निबलम्।
जीर्णौषधस्तु शालीन् पयसा छागेन भुञ्जीत॥ ३४७॥
रक्तगुदजातीसारं सासृग्रुजो निहन्त्याशु।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयमार्गगम्॥ ३४८॥
अत्राष्टभागावशिष्टा कर्त्तव्या क्वाथकल्पना॥ ३४९॥

इति कुटजरसक्रिया।

कुटजत्वक् पलशतं जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमवतारयेत्॥ ३५०॥
वस्त्रपूतं ततः क्वाथं पचेल्लेहत्वमागतम्।
मुस्तं मोचरसं लोध्रं कपित्थफलधातकी॥ ३५१॥
भल्लातकं विड़ङ्गानि त्रिकटुं त्रिफलां तथा।
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च॥ ३५२॥
वचामतिविषां बिल्वं प्रत्येकन्तु पलं पलम्।
त्रिंशत्पलं गुड़स्याथ चूर्णीकृत्य निधापयेत्॥ ३५३॥
मधुनः कुड़वं दद्यात् घृतस्य कुड़वं तथा।
एष लेहः शमयति चार्शोरक्तसमुद्भवम्॥ ३५४॥

वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि ॥ ३५५ ॥
अम्लपित्तमतिसारं पाण्डुरोगमरोचकम् ।
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ॥ ३५६ ॥
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ।
यथा सात्म्यं निषेवेत पानाहारविचक्षणः ।
रोगानीकवधार्थाय कौटजो लेह उच्यते ॥ ३५७ ॥

इति कुटजलेहः ।

चित्रकं त्रिफला मुस्तं ग्रन्थिकञ्चविकामृता ।
हस्तिपिप्पल्यपामार्गं दण्डोत्पलकुठेरकाः ॥ ३५८ ॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् ।
भल्लातकसहस्रे द्वे छित्वा तत्रैव दापयेत् ॥ ३५९ ॥
तेन पादावशेषेण लोहपात्रे पचेद्भिषक् ।
तुलार्द्धं तीक्ष्णलोहस्य घृतस्य कुड़वद्वयम् ॥ ३६० ॥
त्र्यूषणं त्रिफलावह्निं सैन्धवं विड़मौद्भिदम् ।
सौवर्चलं विड़ङ्गानि पलिकांशानि कल्पयेत् ॥ ३६१ ॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च ।
शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥ ३६२ ॥
सिद्धशीते प्रदातव्यं मधुनः कुड़वद्वयम् ।
प्रातर्भोजनकाले वा ततः खादेद्यथाबलम् ॥ ३६३ ॥
अर्शांसि ग्रहणीरोगं पाण्डुरोगमरोचकम् ।
कृमिगुल्माश्मरीमेह शूलञ्चाशु व्यपोहति ॥ ३६४ ॥
करोति शुक्रोपचयं वलीपलितनाशनम् ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ३६५ ॥

इति चित्रकादि भल्लातकावलेहः ।

असात्म्यतायामेतेषां दाहादिक्रम इष्यते ॥ ३६६ ॥

भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः ।
बन्धनात् सुदृढं सूत्रं छिनत्त्यर्शोभगन्दरम् ॥ २६७ ॥

इति सूत्रबन्धनम् ।

स्नुहीकाण्डगते क्षीरे भल्लातकसमन्विते ।
ज्योतिष्मत् त्रिफलादन्तीकोशातक्यग्निसैन्धवैः ॥ २६८ ॥
चूर्णैरेतैः समघृतैः बन्धयेत् सूत्रकं दृढ़म् ।
सूत्रं तत्पातयेदर्शः छिन्नमूल इव द्रुमः ॥ २६९ ॥

इति क्षारसूत्रम् ।

श्वेतपुष्पः कालपुष्पो रक्तपुष्पस्तथैव च ।
पीतपुष्पो वरस्तेषु कालपुष्पश्च कीर्त्तितः ॥ २७० ॥
प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम् ।
कालपुष्पकमाहृत्य दग्ध्वा भस्म समाहरेत् ॥ २७१ ॥
आढ़कन्तु समादाय जलद्रोणे विपाचयेत् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥ २७२ ॥
शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत् पुनः ।
शनैः शनैर्मृदावग्नौ यावत्सान्द्रतनुर्भवेत् ॥ २७३ ॥
स्वर्जिकायावशूके च शुण्ठीमरिचपिप्पली ।
वचातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥ २७४ ॥
एषां चूर्णानि निक्षिप्य पृथगेवाऽष्टमाषकम् ।
दर्व्या सङ्घट्टितञ्चैव स्थापयेदायसे घटे ॥ २७५ ॥
एषः वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ।
नातितीक्ष्णो न च मृदुः शिवः शीघ्रं सपिच्छलः ।
शुक्लः श्लक्ष्णोऽत्यभिष्यन्दी क्षारस्याष्टाविमे गुणाः ॥ २७६ ॥

इति कालपुष्पादिक्षारः ।

करीषराशिमध्यस्थं कृत्वा कर्मसु योजयेत् ।
क्षारं क्षारोदकं कोष्णं न्यसेन्मन्दप्रवाहिनीम् ॥ २७७ ॥

तोये कालकपुष्पकस्य विपचेद्भस्माढ़कं षड्गुणे
पात्रे लोहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयेत् ।
दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेत्
यद्येरण्डजनालमेष दहति क्षारो वरो वाक् शतात् ॥३७८॥
पानीयं प्रतिसारणीयमिति च क्षारो द्विधा शस्यते
तत्राद्यो गरगुल्मकादिशमने दुर्नामकादौ परः ।
तुर्य्येणाष्टमकेन षोड़शगुणेनांशेन संव्यूहितो
मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकः शङ्कुकः॥३७९॥
पानीयं भावयित्वा तु स्रावयेच्च चतुर्गुणे ।
द्विगुणे षड्गुणे वारि तद्दारानेकविंशतिम् ॥ ३८० ॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदा स्राव्यं क्षाराम्भो ग्राह्यमिष्यते ॥ ३८१ ॥

इति क्षारः ।

हरीतकीनां प्रस्थार्द्धं प्रस्थमामलकस्य च ।
कपित्थानां दशपलं तदर्द्धा चेन्द्रवारुणी ॥ ३८२ ॥
विड़ङ्गं पिप्पली लोध्रं मरिचं सैलवालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥ ३८३ ॥
द्रोणशेषे रसे तस्मिन् पूतशेषे प्रदापयेत् ।
गुड़स्य द्विशतं रक्षेत् मासार्द्धं घृतभाजने ॥ ३८४ ॥
पलादूर्द्ध्वं भवत्येवं ततो मात्रा यथा बलम् ।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति सङ्क्षयम् ॥ ३८५ ॥
ग्रहणीपाण्डुरोगघ्नः प्लीहगुल्मोदरापहः ।
कुष्ठशोथारुचिहरो बलवर्णाग्निवर्द्धनः ॥ ३८६ ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ।
कृमिग्रन्थ्यर्वुदव्यङ्ग राजयक्ष्मज्वरान्तकृत् ॥ ३८७ ॥
पानमानमरिष्टादेः क्वाथपानसमं जगुः ।

भेषजत्वात्परं केचित् प्रथमं मदलक्षणम् ॥ ३८८ ॥

इत्यभयारिष्टः।

षड़ङ्गुलं सकर्णीकं कुर्य्याद्यन्त्रस्य मण्डलम्।
अङ्गुष्ठोदरविस्तीर्णं छिद्रं स्यादङ्गुलायतम् ॥ ३८९ ॥
पञ्चाङ्गुलं बालकानां वयस्थानां षडङ्गुलम्।
अर्शसान्तत् प्रयोक्तव्यं लुप्ताष्टन्तु भगन्दरे।
यन्त्रं सप्ताङ्गुलं स्त्रीणामायतं चतुरङ्गुलम् ॥ ३९० ॥

इति यन्त्रप्रमाणाद्युपदेशः।

तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुः।

तस्मिन् बलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरसम्भूताः प्रवाहिणी विसर्जनी संवरणी चेति। रोमान्तेभ्यो यवाध्यर्द्धो गुदे दृष्टः परिकीर्त्तितः प्रथमा तु गुदे अष्टादशाङ्गुलमात्रा तत्राऽचिरकालजातानि अल्पदोषलिङ्गोपद्रवाणि भेषजसाध्यानि। मृदुप्रसृतावगाढ़ानि उच्छ्रिताग्राणि क्षारेण कर्कशस्थिरपृथुकठिनानि अग्निना। तनु मूलानि उच्छ्रिताग्राणि क्लेदवन्ति च शस्त्रेण।

क्षारेण वह्निना वापि वातश्लेष्मसमुद्भवम्।
क्षारेणैव दहेदर्शः पित्तरक्तसमुद्भवम् ॥ ३९१ ॥

तत्र बलवन्तमातुरमर्शोभिः उपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाद्युपशान्त्यर्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदम् अन्यस्योत्सङ्गे निषण्णपूर्वकायम् उत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्तग्रीवासक्थिकं परिकर्मभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा ततोऽस्मिन् घृताभ्यक्तं यन्त्रमृज्वग्रमुखं पायौ शनैः शनैः

प्रवाहमानस्य प्रणिधाय प्रविष्टं चार्शो वीक्ष्य शलाकया उत्पीड्य पिचुवस्त्रयोः अन्यतरेण प्रमृज्य क्षारं पातयेदिति।

पद्मपत्रसमः पातः क्षारलेपः प्रशस्यते।
हेमन्ते ह्युन्नते सूर्य्ये वसन्तेऽस्तगते मतः॥ ३९२॥

पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शतमात्रमुपेक्षेत ततः प्रमृज्य क्षारव्याधिबलं चावेक्ष्य पुनः पातयेत् अथार्शः पक्वजाम्बवसङ्काशम् अभिवीक्ष्यावसन्नमीषन्नतमुपावर्त्तयेत् क्षारं प्रक्षालयेत् धान्याम्लदधिमस्तुशुक्तानामन्यतमेन ततो यष्टिमधुकमिश्रितसर्पिषा निर्वाप्य यन्त्रमपनीय उत्थाप्य तुरमुष्णोदककोष्ठेऽवगाह्य शीताभिरद्भिः परिषिञ्चेत। अशीताभिरित्येके ततो निर्वातमागारं प्रवेश्य आचारिकमादिशेत्।

उक्तञ्च—युञ्ज्यात्पाकाय लघ्वन्नं माषतक्रसमन्वितम्।
अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते॥ ३९३॥
इदमालेपनं तत्र समग्रमवचारयेत्॥ ३९४॥
अम्लीकाञ्जिकबीजानि तिलान् मधुकमेव च।
सर्पिषा सममात्राणि तथैवमनुलेपयेत्॥ ३९५॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः।
सावशेषं पुनर्दाहैश्चैकैकं समुपक्रमेत्॥ ३९६॥
प्राग्दक्षिणं ततो वामं ततः पृष्ठाग्रजं पुनः।
ज्वलनेनाथ सन्दग्धः पक्वजम्बूफलोपमः॥ ३९७॥
तत्र लेपं प्रयुञ्जीत पथ्याम्लक्षारचन्दनैः।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा॥ ३९८॥
विषदेवाह्व सुरसा कुष्ठ गुड़पुनर्नवैः।
कल्कैः कृतैरधो नाभेर्लेपयेद्वस्तिवङ्क्षणम्॥ ३९९॥
छाया सुशोषिता गोविट् पिण्डैः सौवीरपाचितैः।
स्वेदयेद् गुददेशन्तु दाहादिक्लेशशान्तये॥ ४००॥

क्षारमुष्णाम्बुनाऽवाप्य विबन्धे मूत्रवर्चसे।
पिबेत् व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम्॥ ४०१॥
आहारमुद्दिशेच्चापि खेदनं वेदनासु च।
जीर्णशाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवैः॥ ४०२॥
गुदेष्वर्शःसु सर्वेषु तद्देशे पूर्वजन्मनि।
जलौकाभिर्हरेच्चासृक् पुनर्जन्मनिवृत्तये॥ ४०३॥

तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिलाघवं बलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि। अतिदग्धे तु गुदावदरणं दाहो ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति। श्यामाल्पव्रणता कण्डुरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे तु लक्षणमिति।

स्वरसे तु कपित्थाम्लदाड़िमामलकोद्भवे।
द्विप्रस्थे सर्पिषोः प्रस्थं पचेत् क्षारार्त्तिदाहनुत्॥ ४०४॥

इति कपित्थाद्यं घृतम्।

रूढ़े सर्वव्रणे वैद्यः क्षारं दत्त्वानुवासयेत्।
पिप्पल्याद्येन तैलेन सेवेद्दीपनभेषजम्॥ ४०५॥
मेढ्रादिष्वपि जायन्ते यथास्वं नाभिजानि तु।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च॥ ४०६॥
नाभिकर्णाक्षिनासासु जातेष्वर्शःसु योजयेत्।
लेपं तैलञ्च पूर्वोक्तं घ्राणजे शस्त्रकर्म च॥ ४०७॥

प्रतिसारणेन च सैन्धवनिशायुगाङ्गारधूमकासीसलवणप्रलेपनानि नासामेहनगुदजानि शमयन्तीति।

प्रतिसारणमुद्दिष्टं चूर्णं कल्कश्च तत्त्रिधा।
कोलास्थिमात्रपिण्डेन घर्मेण नवसप्तषट्॥ ४०८॥
श्रेष्ठमध्यमहीनेषु कवलोक्तं च लक्षणम्।

इति प्रतिसारणमात्रा।

नासाजार्शःसु कुर्वीत चारेण प्रतिसारणम् ।
नासास्रोतःप्रमाणेन यन्त्रं सौवर्णराजतम् ॥ ४०९ ॥
अङ्गुलं वर्णकोपेतमर्द्धाङ्गुलमथायतम् ।
उत्तानशायिनः चारं दद्यात् पिचुशलाकया ॥ ४१० ॥
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो वहिः ।
कीलोपमं स्थिरखरं चर्मकीलन्तु तद्विदुः ॥ ४११ ॥
वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रन्थित्वं समवर्णता ॥ ४१२ ॥
चर्मकीलं दहेच्छित्वा चारेण दहनेन वा।
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये ।
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ ४१३ ॥
तस्मादर्शांसि सर्वाणि बहुव्याधिकराणि च ।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ ४१४ ॥
बाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ४१५ ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ४१६ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तराम्बलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥४१७॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ ४१८॥
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्या साध्योऽर्शसो हि सः ॥ ४१९ ॥
हृत्पार्श्वशूलं सम्मोहः छर्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ ४२० ॥
तृष्णारोचकशूलार्त्तमतिप्रस्नुतशोणितम् ।

शोथातीसारसंयुक्त मर्शांसि चपयन्ति हि ॥ ४२१ ॥
वेगावरोधः स्त्री पृष्ठयान मुत्कटकासनम् ।
यथास्वं दोषलञ्चान्न मर्शसां परिवर्जयेत् ॥ ४२२ ॥
इति वङ्गसेनसङ्कलिते अर्शोनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ अजीर्णनिदानमाह ।

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः ॥ १ ॥
विषमो वातजान् रोगां स्तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥ २ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित् पच्यते सम्यक् कदाचिन्न विपच्यते ।
मात्रातिमात्राप्यशिता सुखं यस्य विपच्यते ॥ ४ ॥
तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते ॥ ५ ॥
समाग्निं रक्षयेन्नित्य मन्नपानेश्चनैर्हितैः ।
मन्दाग्निं कटुतिक्तैश्च कषायवमनैर्हितैः ॥ ६ ॥
तीक्ष्णाग्निं मधुरस्निग्धैः विरेकगुरुशीतलैः ।
स्नेहाम्ललवणाद्यैश्च विषमाग्नि मुपाचरेत् ॥ ७ ॥

अथ चिकित्सामाह ।

अन्नं मण्डं पिबेदुष्णं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ८ ॥
सुतण्डुलानां प्रसृतद्वयञ्च तदर्द्धमुद्गः कटुकत्रयञ्च ।
कुस्तुम्बुरुसैन्धवहिङ्गुतैलैरेभिश्च सर्वैः क्रियते च मण्डः ॥९॥
[प्र]बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च ।

ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः ॥१०॥

हरीतकी भक्ष्यमाणा नागरेण गुड़ेन वा।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ११ ॥

सिन्धूत्थ हिङ्गु त्रिफला यवानी व्योषैर्गुड़ांशैर्गुड़कान् प्रकुर्यात्।
तैर्भक्षितैस्तृप्ति मवाप्नुवन्ना भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥१२॥

गुड़ेन शुण्ठीमथचोपकुल्यां पथ्यां तृतीयामथ दाडिमं वा।
आमेष्वजीर्णेषु गुदामयेषु वर्चोविवन्धेषु च नित्यमद्यात् ॥१३॥

विड़ङ्ग भल्लातक चित्रकामृता सनागरा तुल्यगुडेन सर्पिषा।
लिहन्ति ये मन्दहुताशना नरा भवन्ति ते वाड़वतुल्यवह्नयः॥१४

अभया निम्बसंयुक्ता भक्षितानलवृद्धिकृत्।
दद्रुविस्फोटकांश्चैव नाशयत्याशु देहिनाम् ॥ १५ ॥

दहनाजमोदसैन्धव नागरमरिचाम्लतक्रेण।
सप्ताहादग्निकरं पाण्डूर्शोविनाशनं परम् ॥ १६ ॥

हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गु युक्ता।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधां च ॥१७॥

शुण्ठीचूर्णसमायुक्तं यवक्षारं समालिहेत्।
सर्पिषा प्रातरुत्थाय ततो वह्निप्रदीपनम् ॥ १८ ॥

विजया पिप्पली शुण्ठी त्रिसमं परिकीर्त्तितम्।
अग्निसन्दीपनं नृणां हृट्दोषमयनाशनम् ॥ १९ ॥

नागराम्बु सदा पथ्यं जीर्णाऽजीर्णविशङ्किनाम् ॥ २० ॥

किञ्चिदामेन मन्दाग्नि रभयागुडनागरम्।
जग्ध्वा तक्रेण भुञ्जीत युक्तमन्नं षडूषणैः ॥ २१ ॥

विश्वाभया गडूचीनां कषायेण षडूषणम्।
पिबेच्छ्रुक्षणि मन्दाग्नौ त्वक्पत्रसुरभीकृतम् ॥ २२ ॥

कणामरीचशुण्ठीभिर्ग्रन्थिकानलचव्यकैः।
भिषग्भिराद्यै राख्यातं चतुष्पञ्च षडूषणम् ॥ २३ ॥

उपवासादि मन्दाग्निर्यवागूभिः पिबेत् घृतम्।
रौक्षे मन्दे पिबेत् सर्पिः तैलं वा दीपनैर्युतम्॥ २४॥
चूर्णारिष्टासवैर्मन्द मभिस्नेहादुपाचरेत्।
भिन्ने गुदोपलेपास्तु मले तैलसुरासवाः॥ २५॥
उदावर्त्ते तु मन्दाग्नौ निरूहाः सानुवासनाः।
व्याधियुक्तस्य मन्दाग्नौ सर्पिरेवाग्निदीपनम्॥ २६॥

इति अग्निमान्द्यम्।

अजीर्णानाह।

आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः॥ २७॥
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम्॥ २८॥
कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम्।
तीव्रं प्रवर्द्धयेदग्निं तदा तं भस्मकं वदेत्॥ २९॥
तृड्दाहश्वासमूर्च्छादीन् कृत्वैवात्यग्निसम्भवान्।
पक्त्वा रसादिकान् धातून्नाशयेदाशु जीवितम्॥ ३०॥
अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात् स्वप्नविपर्य्ययाच्च।
कालेऽपि सात्म्यं लघु चापि भुक्त मन्नं न पाकं भजते नरस्य॥३१
तृष्णाभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीड़ितेन।
प्रद्वेषयुक्तेनच सेव्यमान मन्नं न सम्यक् परिपाकमेति॥ ३२॥
ग्लानिगौरवमाटोपं भ्रमो मारुतमूढ़ता।
विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणम्॥ ३३॥
तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः।
उद्गारश्च यथाभुक्तमविदग्धे प्रवर्त्तते॥ ३४॥
विदग्धे भ्रमतृण्मूर्च्छा पित्ताच्च विविधा रुजः।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते॥ ३५॥

विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः।
मलवाताऽप्रवृत्तिश्च स्तम्भो मोहोऽङ्गसादनम्॥ ३६॥
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवैः।
अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि॥ ३७॥
प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्।
तन्मूलो रोगसङ्घात स्तद्विनाशाद्विनश्यति॥ ३८॥
मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः।
उपद्रवा भवन्त्येते मरणञ्चाप्यजीर्णतः॥ ३९॥
वचा लवणतोयेन वान्तिरामे प्रशस्यते।
धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः॥ ४०॥
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम्॥ ४१॥
अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति।
तद्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात्॥४२॥
विष्टब्धे स्वेदनं कार्य्यं पेयं वा लवणोदकम्।
रसशेषे दिवास्वप्नं लङ्घनं वातवर्ज्जनम्॥ ४३॥
आलिंप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम्॥ ४४॥
व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतिसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान्।
क्षीणान् क्षीणकफाञ्छिशून्मदहतान् वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान् कामन्दिवा स्वापयेत्॥४५॥
पथ्यापिप्पलीसंयुक्तं चूर्णं सौवर्चलं पिबेत्।
मस्तुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक्॥ ४६॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम्।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति॥ ४७॥

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्वं स शुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हिताशी ॥४८॥
विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य।
द्राक्षासितामाक्षिकसंप्रयुक्तां लीढ्वाऽभयां वै स सुखं लभेत् तु॥४९

चित्रकचविकानागर मागधिकाग्रन्थिकैर्यवागूः स्यात्।
गुल्मानिलशूलहरी रुचिप्रदा वह्निजननी च ॥ ५० ॥
वत्सकं सप्तपर्णञ्च करञ्जञ्च दुरालभाम्।
पाठामारग्वधं मूर्वां षड्ग्रन्थां मदनं दहेत् ॥ ५१ ॥
गोमूत्रेणोपयुक्तस्तु क्षारोऽयं वह्निदीपनः।
शूले निरन्नकोष्ठेऽद्भिः कोष्णाभिश्चूर्णितं पिबेत् ॥ ५२ ॥
हिङ्गुप्रतिविषाव्योष सौवर्चल वचाभया।
तीव्रार्त्तिरपि नाऽजीर्णी पिबेच्छूलघ्नमौषधम्।
दोषग्रस्तानलो नालं पक्तुं शक्तोऽहिताशनम् ॥ ५३ ॥
प्रातराशे त्वजीर्णे तु सायमाशो न दुष्यति।
अजीर्णे सायमाशे तु प्रातराशो विषीभवेत् ॥ ५४ ॥

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः।
प्रथमकवलभोजी सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्ति ॥ ५५ ॥

इति हिङ्ग्वष्टकम्।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा देया शृङ्गवेरं चतुर्गुणम् ॥ ५६ ॥
यवानिका पञ्चगुणा षड्गुणा च हरीतकी।
चित्रकं सप्तगुणितं कुष्ठं चाष्टगुणं भवेत् ॥ ५७ ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रशस्यते।
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥ ५८ ॥

सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा।
अङ्गानि यस्य शीर्य्यन्ति विषं वा येन भक्षितम् ॥ ५९ ॥
अर्शोहरो दीपनश्च श्लेष्मघ्नो गुल्मनाशनः।
चूर्णो ह्यग्निमुखो नाम्ना न क्वचित् प्रतिहन्यते ॥ ६० ॥

इति अग्निमुखचूर्णम्।

चित्रकहपुषा ग्रन्थिक पिप्पलीसौवर्चलाजमोदाभिः।
धान्यशठीयवपुष्करक्षाराजाजितिन्तिड़ीकैश्च ॥ ६१ ॥
चव्ययवानीदाड़िमसृद्दीकैलाम्लवेतसैश्च समैः।
अग्निमुखोऽयं चूर्णः काञ्जिकेन मस्तुनापि वा ॥ ६२ ॥
पीतोऽन्यतमेन नृभिः गुल्मारुचिवह्निसादशूलानि।
दुर्नामप्लीहोदर कफवातगदान्विनाशयति ॥ ६२ ॥

इति द्वितीयमग्निमुखचूर्णम्।

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम्।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम् ॥ ६४ ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च।
मरिचाजाजीशुण्ठीनामेकैकस्य पलं पलम् ॥ ६५ ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम्।
दाड़िमात् कुड़वञ्चैकं द्वे पले चाम्लवेतसात् ॥ ६६ ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्।
लवणं भास्करं नाम्ना भास्करेण विनिर्मितम् ॥ ६७ ॥
जगतोऽस्य हितार्थाय वातश्लेष्मामयापहम्।
तक्रमस्तुसुराशुक्त मम्लकाञ्जिकयोजितम् ॥ ६८ ॥
जाङ्गलानूपमांसेषु रसेषु विविधेषु च।
मन्दाग्नीनां खादयतां शक्तो भवति पावकः ॥ ६९ ॥
अर्शांसि ग्रहणीदोषं शोथकुष्ठभगन्दरान्।
हृद्रोगमामदोषांश्च विविधान् उदरे स्थितान् ॥ ७० ॥

प्लीहानं वातरक्तञ्च श्वासकासोदरक्रमीन्।
शूलञ्च नाशयत्येतद्दुष्टं नृप इवापदः॥ ७१॥

इति भास्करलवणम्।

सैन्धवसमूलमगधा चव्यानल नागरहरीतक्यः।
क्रमवृद्धमग्निवर्द्धनं करोति वड़वानलं चूर्णम्॥ ७२॥

इति वड़वानलचूर्णम्।

हिङ्गु सैन्धव कृष्णानां कृष्णामूलककोलयोः।
यवान्याश्च हरीतक्या दाड़िमाम्लिकयोस्तथा॥ ७३॥
वह्निनागरकोशाणां भागाः सम्बर्धिताः क्रमात्।
हिङ्गु द्वादशकं नाम चूर्णं ब्रह्मविनिर्मितम्॥ ७४॥
अरुचिं पञ्चगुल्मांश्च हृद्रोगं सन्नियच्छति।
अष्ठीलाध्मानशूलानां इन्दमर्शांसि नाशयेत्॥ ७५॥

इति हिङ्गुद्वादशकं चूर्णम्।

द्वौ क्षारौ चित्रकं पाठा करञ्जलवणानि च।
सूक्ष्मैलापत्रकं भार्गी क्रमिघ्नं हिङ्गु पुष्करम्॥ ७६॥
शठी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा।
धात्री जीरकवृक्षाम्ल श्रेयसी चोपकुञ्चिका॥ ७७॥
अम्लवेतसमम्लीका दाड़िमं सकटुत्रिकम्।
भल्लातकाजमोदा च यवानी सुरदारु च॥ ७८॥
अभयातिविषा श्यामा हपुषारग्वधं समम्।
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः॥ ७९॥
क्षाराणि लोहकिट्टञ्च तप्तं गोमूत्रसेचितम्।
सूक्ष्मचूर्णानि कृत्वा तु समभागानि कारयेत्॥ ८०॥
मातुलुङ्गरसेनैव भावयेद्दिवसत्रयम्।
दिनत्रयञ्च शुक्तेन आर्द्रकस्वरसेन च॥ ८१॥
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम्।

उपयुक्तं विधानेन नाशयत्यचिराद्गदम् ॥ ८२ ॥
अजीर्णक मथो गुल्मं प्लीहानं जठराणि तु ।
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम् ॥ ८३ ॥
प्रणुदत्युल्वणान् दोषान् नष्टमग्निञ्च दीपयेत् ।
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा च भाजने ।
दापयेदस्य चूर्णस्य विड़ालपदमात्रकम् ॥ ८४ ॥
गोदोहमात्रात्तत्सर्वं द्रवीभवति सोष्णकम् ॥ ८५ ॥

इति वृहदग्निमुखं चूर्णम् ।

पथ्या नागरकृष्णा करञ्जविल्वादिभिः सितातुल्यैः ।
वड़वामुख इव जरयति बहुगुर्वपि भोजनम् ॥ ८६ ॥

इति समस्तं वड़वामुखं चूर्णम् ।

हिङ्ग्वाम्लवेतसकटुत्रिकचित्रकेभ्यः
सक्षारपौष्करफलत्रिकदाड़िमेभ्यः ।
कार्य्यः पृथग्गुड़पलान्यवकृत्य चूर्णः
ज्वालामुखोऽयमनलस्य करोति दीप्तिम् ॥ ८७ ॥

इति ज्वालामुखं चूर्णम् ।

पिप्पल्यतिविषा हिङ्गु नागरेन्द्रयवाः वचा ।
पाठाजमोदकटुका वृषसौवर्चलाभयाः ॥ ८८ ॥
वृषद्वादशकं चूर्णमजीर्णानाह गुल्मनुत् ।
भगन्दरश्वासकास मूत्रकृच्छ्रार्शसां हितम् ॥ ८९ ॥

इति वृषद्वादशकं चूर्णम् ।

एलात्वङ् नागपुष्पाणां मात्रोत्तर विवर्द्धिता ।
मरिचं पिप्पली शुण्ठी चतुष्पञ्च षडुत्तराः ॥ ९० ॥
द्रव्याण्येतानि यावन्ति तावन्ती सितशर्करा ।
चूर्णमेतत् प्रयोक्तव्यमग्निसन्दीपनं परम् ॥ ९१ ॥

इति समशर्करं चूर्णम् ।

मरिचाग्निकणा पथ्या दाड़िमञ्च महौषधम्।
हिङ्गु सौवर्चलोपेतं चूर्णमग्निकरं परम्॥ ९२॥

इति मरिचाद्यं चूर्णम्।

नागरं कौटजं बीजं पिप्पली बृहती द्वयम्।
चित्रकं शारिवा पाठा चारं लवणपञ्चकम्॥ ९३॥
चूर्णं पिष्ठा सुरा मण्ड दधिकोष्णाम्बु काञ्जिकैः।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम्॥ ९४॥

इति नागराद्यं चूर्णम्।

पलिकैः पञ्चकोलैस्तु घृतं मस्तु चतुर्गुणम्।
सचारसिद्धमग्नाग्निं कफगुल्मञ्च नाशयेत्॥ ९५॥

इति मस्तुषट्पलं घृतम्।

शृङ्गवेररसप्रस्थं घृतप्रस्थञ्च तत्समम्।
चुक्रप्रस्थेन संयोज्यं तथा काञ्जिकमस्तुनोः॥ ९६॥
पिप्पली मरिचं हिङ्गु साजमोदं सजीरकम्।
हपुषाजाजि कृष्णा च सैन्धवं विड़मौद्भिदम्॥ ९७॥
सौवर्चलं यवचारं चित्रको हस्तिपिप्पली।
चविका पिप्पलीमूलं यवानी धान्यनागरम्॥ ९८॥
एतैः कर्षसमैर्भागैर्विपचेन्मृदुनाग्निना।
कफजान् हन्ति रोगांश्च वातजान् क्रमिसम्भवान्॥ ९९॥
अजीर्णं जरयत्याशु नराणां बलवर्धनम्।
गुल्मप्लीहोदरं शूलं ज्वरं हिक्कां प्रमीलिकाम्॥ १००॥
महाषट्पलमित्येतज्ज्वलनं दाववह्निवत्।
क्षिप्रमेव तथा रोगान्नाशयत्यशनिर्यथा॥ १०१॥

इति महाषट्पलं घृतम्।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा।
भल्लातकं यवानीञ्च विड़ङ्गं हस्तिपिप्पली॥ १०२॥

हिङ्गु सौवर्चलञ्चैव विड़सैन्धवचव्यकम् ।
सामुद्रञ्च यवक्षारं चित्रको वचया सह ॥ १०३ ॥
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत् ।
दशमूलरसे सिद्धं पयसा द्विगुणेन च ॥ १०४ ॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम् ।
विष्टम्भमामदौर्बल्यं प्लीहानमपकर्षति ॥ १०५ ॥
कासं श्वासं क्षयञ्चापि दुर्नाम सभगन्दरम् ।
कफजान् हन्ति रोगांश्च वातजान् कृमिसम्भवान् ॥१०६॥
तान् सर्वान्नाशयत्याशु शुष्कं दावानलो यथा ॥ १०७ ॥

इति मरिचाद्यं घृतम् ।

धान्यजीरकसंसिद्धं घृतमग्निविवर्द्धनम् ।
रोचनं दोषशमनं छर्दिदाहविनाशनम् ॥ १०८ ॥

इति धान्यजीरक घृतम् ।

धान्यकं निस्तुषं कृत्वा जले चाष्टगुणे पचेत् ।
तेन पादावशेषेण तत्कल्कैर्विपचेत् घृतम् ॥ १०९ ॥
वातरोगेषु सर्वेषु पैत्तिकेषु च शस्यते ।
कफजेषु च रोगेषु सर्पिरेतद्यथामृतम् ॥ ११० ॥

इति धान्य घृतम् ।

द्वे जीरके चित्रकं च यवानी नागरं तथा ।
पलिकानि च तत्सर्वं पञ्चैव लवणानि च ॥ १११ ॥
आरनालाढ़कं दत्त्वा घृतप्रस्थं विपाचयेत् ।
एतदग्निविवृद्ध्यर्थमर्शसां नाशनं परम् ॥ ११२ ॥

इति जीरक घृतम् ।

धान्यकस्य तु शुद्धस्य चतुःषष्टिपलानि च ।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥ ११३ ॥
घृतप्रस्थं पचेत्तेन शनैर्मृद्वग्निना भिषक् ।

जीरकस्य पलान्यष्टौ कल्कीकृत्य निधापयेत् ॥ ११४ ॥
अग्निसन्दीपनं हृद्यं पिबेच्छ्लेष्मनिवर्हणम्।
आमशूलं गुदे शूलं शूलं वङ्क्षणयोनिजम् ॥ ११५ ॥
आमवातमुदावर्त्तमर्शरोगांश्च नाशयेत्।

इति धान्यक घृतम्।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ॥ ११६ ॥
द्वौ क्षारौ हपुषा चैव दद्यादर्द्धपलोन्मितान्।
दधिकाञ्जिकशुक्तानि घृतमात्रासमानि च ॥ ११७ ॥
आर्द्रकस्य रसप्रस्थे घृतप्रस्थं विपाचयेत्।
एतदग्निमुखं नाम मन्दाग्नीनां प्रशस्यते ॥ ११८ ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम्।
ग्रन्थ्यर्वुदापचीकासकफमेदोऽनिलानपि ॥ ११९ ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम्।
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः।
सर्वांस्तान्नाशयत्याशु सूर्य्यस्तम इवोदितः ॥ १२० ॥

इति अग्निघृतम्।

यन्मस्वादि शुचौ भाण्डे सक्षौद्रं गुड़काञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ १२१ ॥

इत्यल्पचुक्रम्।

गुड़क्षौद्रारणालानि समस्तुनि यथोत्तरम्।
शंसन्ति द्विगुणान् भागान् सम्यक् चुक्रस्य सिद्धये ॥१२२॥

इति चुक्रसन्धानविधानम्।

प्रस्थं तण्डुलतोयत स्तुषजलात् प्रस्थत्रयं चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकफलान्यष्टौ गुड़ान्मानिके।
मान्यौ शोधितशृङ्गवेर सकलात् द्वे सिन्धुजाज्योः पले

द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढे ॥१२३॥
स्निग्धे धान्ययवादि राशिनिहितं त्रीन्वासरात् स्थापयेद्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट्शीतेऽष्टदिनान्यतः परिमितं विस्राव्य संवापयेत्
चातुर्जातपलेन संहितमिदं शुक्ताख्य चुक्राख्य यत्॥ १२४॥
हन्याद्वातकफामदोषजनितान् नानाविधानामयान्।
दुर्नामानि च शूलगुल्मजठरान् हत्वाऽनलं दीपयेत् ॥१२५॥

इति वृहच्चुक्रसन्धानविधानम्।

वह्नेर्द्विपञ्चमूलस्य क्वाथे पलशतद्वये।
अमृताया रसस्यैके पूतेऽस्मिन्नभयाढ़के॥ १२६॥
पचेद् गुड़तुलां तावद्यावदाऽऽपाकलक्षणम्।
अन्येद्युस्तत्र मधुनः सुशीते कुड़वद्वयम्॥ १२७॥
प्रक्षिपेत्त्रिसुगन्धस्य त्रिकटोश्च पलं पलम्।
प्रत्येकं स्याद्यवक्षाराच्छुक्तिस्तस्मिन् रसायने॥ १२८॥
उत्तमं कथितं पुंसामश्विभ्यामग्निवृद्धये।
जीर्य्यत्यपि हि काष्ठानि कासश्वासं क्षयं कृमीन्॥ १२९॥
गुल्मोदरार्शः कुष्ठानि सान्त्रवृद्धिं निहन्ति च।
योगशतैरप्यऽजितां त्र्यहाज्जयति पीनसान्॥ १३०॥
चित्रकहरीतक्यमृतेत्यत्र चित्रकादीनां त्रयाणामम्भः प्रत्येकं पञ्चाशत्पलं दत्त्वा विस्राव्य सार्द्धद्वादशवासराः स्थापयितव्यम्।

इति चित्रकगुड़ः।

द्वे पाठे दशमूलार्कं कट्फलातिविषात्रिवृत्।
भागैर्दशपलान् दत्त्वा जलद्रोणे विपाचयेत्॥ १३१॥
पादशेषे गुड़तुलां दत्त्वा पक्वे गुड़े ततः।
चूर्णितां पञ्चपलिकां चव्यव्योषहरीतकीम्॥ १३२॥
चित्रकं सयवक्षारं द्विगुणं तत्र दापयेत्।

दर्व्या प्रलेपनं वापि ततस्तमवतारयेत् ॥ १३३ ॥
हिङ्गुम्लवेतसं चव्यं त्रिवृतस्तु पलं तथा।
क्षिप्त्वा चैकीकृतं सर्वं स्थापयेद्भाजने शुभे ॥ १३४ ॥
ततः क्षारगुडं खादेदजीर्णारुचिनाशनम्।
प्लीहार्शः शोथपाण्डुत्व मेहकुष्ठगरापहम् ॥ १३५ ॥

इति क्षारगुडः।

द्वे पञ्चमूले त्रिफलां त्रिवृन्मूलं शतावरीम्।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शठीम् ॥१३६॥
पृथक् दशपलान् भागान् दग्ध्वा भस्म समाहरेत्।
त्रिसप्तकृत्वस्तद्भस्म जलद्रोणेन गालयेत् ॥ १३७ ॥
तद्द्रोणं साधयेदग्नौ चतुर्भागावशेषितम्।
ततो गुडतुलां दत्त्वा साधयेन्मृदुनाग्निना ॥ १३८ ॥
सिद्धं गुडन्तु विज्ञाय चूर्णानीमानि दापयेत्।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥ १३९ ॥
एतत्पञ्चपलान् भागान् पृथक्पञ्च पलानि च।
हरीतकीं त्रिकटुकं स्वर्जिकां चित्रकं वचाम् ॥ १४० ॥
हिङ्गुम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्।
अक्षप्रमाणां गुटिकां कृत्वा खादेद्यथाबलम् ॥ १४१ ॥
अजीर्णं जरयत्येष जीर्णं सन्दीपयत्यपि।
भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति ॥ १४२ ॥
प्लीहार्शःश्वयथुञ्चैव श्लेष्मकासमरोचकम्।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥ १४३ ॥
कुष्ठानि च प्रमेहांश्च गुल्मं चाशु व्यपोहति।
ख्यातः क्षारगुडो ह्येष रोगग्रस्ते प्रयोजयेत् ॥ १४४ ॥

इति क्षारगुडः।

स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति।

भवत्यजीर्णेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति॥१४५॥

प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्।
तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति ॥ १४६ ॥

इति अजीर्णाग्निमान्द्यनिदानचिकित्साधिकारः ।

विसूच्यादि रोगानाह ।

अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम्।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १४७ ॥
सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते॥ १४८ ॥
न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढ़ास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १४९ ॥

विसूच्या लक्षणमाह ।

मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥१५०॥

अलसकलक्षणमाह ।

कुक्षिरानह्यतेऽत्यर्थं प्रताम्यत्यथ कूजति ।
निरुद्धो मारुतश्चैव कुक्षेरुपरि धावति ॥ १५१ ॥
वातकम्पभ्रमानाहशूलादीन् प्रकरोति वा ।
पित्तं ज्वरातिसारौ च दाहादिस्वेदनानि च ॥ १५२ ॥
श्लेष्माङ्गगुरुताच्छर्दिवाग्भङ्गष्ठीवनानि च ॥ १५३ ॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदनु ।
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु ॥ १५४ ॥
नाधो गच्छति यो नोर्ध्वमाहारो न विपच्यते ।
तेन सोऽलसको नाम्ना शीघ्रं देहविनाशकृत् ॥ १५५ ॥
दोषास्त्वलसके प्रोक्ताश्छर्द्यतीसारवर्जिताः ।
कारकास्तीव्रशूलादेः स्रोतसः सन्निरोधकाः ॥ १५६ ॥

तिर्य्ययातास्तनुस्तब्धाः स्तम्भवत्स्तम्भयन्ति च।
स दण्डालसकस्त्याज्यः शीघ्रं देहविनाशकृत्॥ १५७॥

दुष्टञ्च भुक्तं कफमारुताभ्यां
प्रवर्त्तते नोर्ध्वमधश्च यस्य।
विलम्बिकां तां भृशदुश्चिकित्स्याम्
आचक्षते शास्त्रविदः पुराणाः॥ १५८॥

यत्रस्थमामं विरुजेत् तमेव देशं विशेषेण विकारजातैः।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च॥ १५९॥
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यन्तरजातनेत्रः।
क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरोऽसौ पुनरागमाय॥१६०
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम्॥ १६१॥
निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता।
अमी उपद्रवा घोरा विसूच्यां पञ्च दारुणाः॥ १६२॥
विसूच्यां सर्वरूपाणि सन्नियम्य चिकित्सकः।
वमनं कारयेत् क्षिप्र मुष्णेन लवणाम्बुना॥ १६३॥
यावत्सन्तिष्ठते दुष्टो नरस्याऽन्नरसो हृदि।
तावन्मर्माणि भिद्यन्ते विषं पीतवतो यथा॥ १६४॥
विसूच्यामतिवृद्धायां पार्ष्णोर्दाहः प्रशस्यते।
तद्दिने लङ्घनं कार्य्यं विरिक्तवदुपाचरेत्॥ १६५॥
जातिफलञ्च चुक्रञ्च मिष्टतैलेन पाचयेत्।
तेन मर्दनमात्रेण खल्लीशूलं निवारयेत्॥ १६६॥
कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम्॥ १६७॥

इति चुक्राभावेऽत्र काञ्जिकं देयम्।

अर्कपत्ररसप्रस्थं प्रस्थं धत्तूरकस्य च।

श्वेतस्नुहीरसप्रस्थं प्रस्थं शोभाञ्जनार्द्रकात् ॥ १६८ ॥
कुष्ठसैन्धवयोः कल्कं पले द्वे द्वे प्रमाणतः ।
एकीकृत्य समस्तं तदधिकं चाम्लकाञ्जिकम् ॥ १६९ ॥
तैलप्रस्थं समावाप्य पचेन्मृदग्निना शनैः ।
खल्लीं निवारयत्येतत् विसूचीरोगसम्भवाम् ॥ १७० ॥
पक्षाघातामवातांश्च गृध्रसीं खञ्जपङ्गुताम् ।

इति अर्करसादितैलम् ।

करञ्जनिम्बशिखरी गुडूच्यर्जुनवत्सकैः ।
पीतः कषायो वमनाद् घोरां हन्ति विसूचिकाम् ॥ १७१ ॥
हन्ति दन्त्यग्निकल्कस्तु पिप्पलीकल्कसंयुतः ।
पीतः कोष्णेन तोयेन क्षिप्रं हन्याद्विसूचिकाम् ॥ १७२ ॥
व्योषं करञ्जस्य फलं हरिद्रे मूलं समावाप्य च मातुलुङ्ग्याः ।
छाया विशुष्का वटिका तु कार्य्या हन्याद्विसूचीं नयनाञ्जनेन१७

इति अञ्जनम् ।

गुड़पुष्पसारशिखरी तण्डुलं गिरिकर्णिका हरिद्रे द्वे ।
अञ्जनगुटिका विलयति विसूचिकां त्रिकटुकसनाथा ॥ १७४ ॥

इति द्वितीयमञ्जनम् ।

त्वक्पत्ररास्नाऽगुरुशिग्रु कुष्ठैरत्यम्लपिष्टैः सवचाशताह्वैः ।
उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थ कारि ॥१७५॥
पिपासायामथोत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य च ॥ १७६ ॥
सरुग्वाऽऽनद्धमुदरं मम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवती कुष्ठशताह्वा बिल्वसैन्धवैः ॥ १७७ ॥
तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्त्तिं जठरस्य हन्यात् ।
स्वेदो घटे र्वा वहुवाष्पपूर्णै रुष्णैस्तथान्यैरपि पाणितापैः ॥१७
विलम्बिकाऽलसकयोर्वेगोत्सर्गो यथोचितः ।

लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ १७९ ॥
सुरसादिकरञ्जादि सहकाररसं तथा।
हिङ्गु सौवर्चलं चुक्रं मधुमद्यानि यानि च ॥ १८० ॥
एतेषामूर्द्धभागित्वात् सम्यक् जीर्णेऽपि देहिनाम्।
अजीर्णतायामिवोद्गारो गन्धतो ह्युपलक्ष्यते ॥ १८१ ॥

इति वङ्गसेनसङ्कलितः विसूचिकाऽलसकविलम्बिकानिदान-
चिकित्साधिकारः समाप्तः।

---

## अथ भस्मकनिदानमाह।

कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम्।
तीव्रं प्रवर्द्धयेदग्निं तदा तं भस्मकं वदेत् ॥ १ ॥
तृड्दाह श्वास मूर्च्छादीन् कृत्वैवात्यग्निसम्भवान्।
पक्वान्नमाशु धात्वादीन् सङ्क्षयन्नाशयेत्तनुम्।
क्षणाद्भुक्तं भवेद्भस्म स रोगो भस्मकः स्मृतः ॥ २ ॥
तं भस्मकं गुरुस्निग्ध सान्द्रमण्डहिमस्थिरैः।
अन्नपानैर्नयेच्छान्तिं पित्तघ्नैश्च विरेचनैः ॥ ३ ॥
अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धतक्रसर्पींषि।
संसेवेत यवागूं समधुच्छिष्टां ससर्पिष्काम् ॥ ४ ॥
असकृत्पित्तहरणं पायसं प्रतिभोजनम्।
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥ ५ ॥
यत्किञ्चिन्मधुरं सेव्यं श्लेष्मलं गुरुभोजनम्।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥
कफे पूर्वं जिते पित्ते मारुते वानलः समः।
समधातौ पचत्यन्नं पुष्ट्यायुर्बलवर्धनम् ॥ ७ ॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यान्युपहारयेत्।

निरिन्धनो रसं लब्ध्वा यथैवान्नेन पाचयेत् ॥ ८ ॥
कोलास्थि मज्जा कल्कस्तु पीतो वाप्युदकेन वै ।
अचिराद्विनिहन्त्येष प्रयोगो भस्मकं नृणाम् ॥ ९ ॥
नारीक्षीरेण संयुक्तां पिबेदौदुम्बरीं त्वचम् ।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥ १० ॥
सिततण्डुलसितकमलं छागक्षीरेण पायसं सिद्धम् ।
भुक्त्वा घृतेन पुरुषो द्वादशदिवसं बुभुक्षितो न भवेत् ॥११॥
विदारी स्वरसं क्षीरे पचेदष्टगुणं घृतम् ।
माहिषं जीवनीयेन कल्केनात्यग्निनाशनम् ॥ १२ ॥

इति वङ्गसेनसङ्कलितः भस्मकनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ क्रिमिनिदानमाह ।

क्रिमयस्तु द्विधाः प्रोक्ता वाह्याभ्यन्तरभेदतः ।
वहिर्मल कफाऽसृग्विट् जन्मभेदाच्चतुर्विधाः ॥ १ ॥
नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥
बहुपादाश्च सूक्ष्माश्च यूकालिख्याश्च नामतः ।
द्विधा ते कोठपिटिकाः कण्डूगण्डान् प्रकुर्वते ॥ ३ ॥
अजीर्णभोजी मधुराम्लसेवी द्रवप्रियः पिष्टगुड़ोपभोक्ता ।
व्यायामवर्जी च दिवाशयी च विरुद्धभोजी लभते क्रमींस्तु ॥४
माषपिष्टाम्ललवणगुड़शाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥ ५ ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥ ६ ॥
ज्वरो विवर्णता शूलं हृद्रोगः छर्दनं भ्रमः ।
भक्तद्वेषातिसारश्च सञ्जातक्रिमिलक्षणम् ॥ ७ ॥

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः।
पृथुवर्ध्मनिभाः केचित् केचित् गण्डूपदोपमाः॥ ८॥
रूढ़धान्याङ्कुराकारा स्तनुदीर्घास्तथाऽणवः।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते॥ ९॥
अन्त्रादा उदरावेष्टा हृदयादा महागुहाः।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते॥ १०॥
हृल्लासमास्यस्रवणमविपाकमरोचकम्।
छर्दिशूलज्वरानाह कार्श्यश्वयथुपीनसान्॥ ११॥
रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः।
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः॥ १२॥
केशादा लोमविध्वंसा रोमद्वीपा उदुम्बराः।
षड़ेते कुष्ठकर्माणः सहस्रौरसमातरः॥ १३॥
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः।
संवृद्धाश्च भवेयुश्च ते यदामाशयोन्मुखाः॥ १४॥
तदास्योद्गारनिःश्वासविड्गन्धानुविधायिनः।
पृथुवृत्ततनुस्थूलाः श्यावाः पीताः सिताऽसिताः॥ १५॥
ते पञ्च नामभिः ख्याताः ककेरुकमकेरुकाः।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति च॥ १६॥
विड्भेदशूलविष्टम्भ कार्श्यपारुष्यपाण्डुताः।
रोमहर्षाग्निसदन गुदकण्डू विमार्गगाः॥ १७॥

अथ चिकित्सामाह।

तेषामन्यतमं वैद्यो जिघांसुः स्निग्धमातुरम्।
सुरसादिविपक्वेन सर्पिषा वाऽन्नमादिशेत्॥ १८॥
विरेचयेत्तीक्ष्णतमैः योगैरास्थापयेद्धि च॥ १९॥
विड़ङ्ग तण्डुलव्योषशिग्रुभिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रमिघ्नी ससुवर्चिका॥ २०॥

विडङ्गव्योषसंयुक्त मन्नमण्ड' पिबेन्नरः।
दीपनं क्रमिनाशाय वह्निञ्च कुरुते भृशम् ॥ २१ ॥
सक्षौद्रः क्रमिजिद्भिः पीतः क्रमिहरशिग्रुजश्च क्वाथः।
पीतं मूत्रमजायाः ग्रन्थिकचूर्णान्वितं वापि ॥ २२ ॥
पुष्कराह्वाखिनिर्यासं क्रमिघ्नार्द्धेन संयुतम्।
लिह्यादूर्मस्थितः प्रातः सर्वक्रमिनिवारणम् ॥ २३ ॥
पारशीय यवानी पीता पर्य्युषिता वारिणा प्रातः।
गुडपूर्वा क्रमिजालं कोष्ठगतं पातयत्याशु ॥ २४ ॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत्।
किंशुकस्य रसं वापि धत्तूरस्यापि वा रसम् ॥ २५ ॥
मुस्ता सुपर्णी फलदारुशिग्रु क्वाथः सकृष्णाक्रमिशत्रु कल्कः।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रमीन्निहन्ति क्रमिजांश्च रोगान्॥२६
आखुपर्णीदलैः पिष्टैः पिष्टकेन तु पूपिकाः।
जग्ध्वा सौवीरकं चानु पिबेत् क्रमिहरं परम् ॥ २७ ॥
पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम्।
पिबेत्तद्बीजकल्कं वा तक्रेण क्रमिनाशनम् ॥ २८ ॥
लिह्यात् क्षौद्रेण वैड़ङ्ग' चूर्णं क्रमिविनाशनम्।
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ॥ २९ ॥
प्रत्यहं कटुकं तिक्तं भोजनञ्च हितं भवेत्।
क्रमीनां नाशनं ह्रुद्यमग्निसन्दीपनं परम् ॥ ३० ॥
पलत्रयं वचा दन्ती त्रिवृत्काम्पिल्लकैः समैः।
सिद्धं सर्पिर्गवां मूत्रे पीतं क्रमिविनाशनम् ॥ ३१ ॥

इति त्रिफलाद्यं घृतम्।

त्रिफलायाः त्रयः प्रस्थाः विडङ्ग' प्रस्थमेव च।
दीप्यञ्च दशमूलञ्च लाभतः समुपाहरेत् ॥ ३२ ॥
पादशेषे जलद्रोणे पूते सर्पिर्विपाचयेत्।

प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रमिनाशनम्॥ ३३॥
विडङ्गघृतमित्येतल्लेह्यं शर्करया सह।
सर्वक्रमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥ ३४॥

इति विड़ङ्गाद्यं घृतम्।

पिप्पली पिप्पलीमूलं सैन्धवं कृष्णजीरकम्।
चव्यचित्रकतालीसपत्रकं नागकेशरम्॥ ३५॥
एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्॥ ३६॥
दाडिमात् कुडवञ्चैव द्वे पले चाम्लवेतसात्।
सर्वमेकत्र संघृष्य योजयेत्कुशलो भिषक्॥ ३७॥
पिप्पल्याद्यमिदं ख्यातं नष्टवह्नेः प्रदीपनम्।
अर्शांसि ग्रहणीगुल्म मुदरं सभगन्दरम्॥ ३८॥
क्रमिकण्डूरुचिहरं सुरयोष्णोदकेन वा।
नातःपरतरं किञ्चिदामशोथनिषूदनम्॥ ३९॥

इति पिप्पल्याद्यं चूर्णम्।

पलङ्कषापले द्वे तु कृष्णायसपलद्वयम्।
पथ्यामृताक्षधात्रीणां पृथगेकैकशः पलम्॥ ४०॥
पूतीकचव्यव्योषाग्नि कारवीक्रमिनाशनैः।
चूर्णितैरर्द्धपलिकैस्तिलतैलं पलद्वयम्॥ ४१॥
त्रिफलाया रसप्रस्थे खण्डं प्रस्थयुगं पचेत्।
दार्वीप्रलेपात्पाकस्य चातुर्जातकसंयुतम्॥ ४२॥
सावित्रवटका ह्येते यथाग्निबलभक्षिताः।
क्रमिकोष्ठाग्निदौर्बल्य शोथगुल्मोदरव्रणान्॥ ४३॥
कामलापाण्डुरोगार्शो भगन्दरगदज्वरान्।
निहन्युर्वा सन्निरुद्धाः वयःस्थैर्य्यबलप्रदाः॥ ४४॥
वातप्रमेहशमनाः चक्षुष्याः पुष्टिवर्द्धनाः।

भवन्त्यतिस्निग्धभुजां वातातपनिषेविणाम् ॥ ४५ ॥

इति सावित्रवटकः ।

रसेन्द्रेण समायुक्तो रसो धत्तूरपत्रजः ।
ताम्बूलपत्रजो वापि लेपनं यूकनाशनम् ॥ ४६ ॥
ककुभकुसुमं विडङ्गं लाङ्गली भल्लातकं तथोशीरम् ।
श्रीवेष्टकं सर्जरसं मदनञ्चैवाष्टमं दद्यात् ॥ ४७ ॥
एष सुगन्धो धूपो मशकानां नाशनः श्रेष्ठः ।
शय्यासु मत्कुणानां शिरसि वस्त्रे च यूकानाम् ॥ ४८ ॥

इति मशकहरो धूपः ।

भण्डीपिष्टाऽऽरनालेन गोमूत्रेणाभिपिष्टकाः ।
कुनटीकटुतैलेन योगा यूकापहास्त्रयः ॥ ४९ ॥
लाक्षाभल्लातकश्च श्रीवासः श्वेताऽपराजिता ।
अर्जुनस्य फलं पुष्पं विडङ्गं सर्जगुग्गुलुः ॥ ५० ॥
एभिः कृतेन धूपेन शाम्यन्ति नियतं गृहे ।
भुजङ्गमूषका दंशा घुणा मशकमत्कुणा ॥ ५१ ॥

इति गृहे भुजङ्गादिनाशको धूपः ।

सविडङ्गं गन्धशिलया सुसिद्धं सुरभीजलेन कटुतैलम् ।
निखिलान् नयति विनाशं लिख्यासहितांश्च वै यूकान्॥५२॥

इति विड़ङ्गतैलम् ।

क्षीराणि मांसानि घृतानि चैव दधीनि शाकानि च पर्णवन्ति ।
समाषतोयान्मधुरान् रसांश्च कृमीन् जिघांसुः परिवर्ज्जयेत्तु॥५३॥

इति वङ्गसेनसङ्कलितः कृमिनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ पाण्डुरोगनिदानमाह ।

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणात् मृदः ॥ १ ॥

पिपासारुचिहृल्लासैरुदाहोऽङ्गगौरवम्।
रक्तलोचनता तस्य पूर्वरूपस्य लक्षणम्॥ २॥
व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीवतीक्ष्णम्।
निषेव्यमाणस्य समेत्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुताञ्च॥३॥
त्वक्स्फोटनिष्ठीवनगात्रसादो मृङ्गक्षणप्रेक्षणकूटशोथाः।
विण्मूत्रपीतत्व मथाविपाको भविष्यतस्तस्य पुरःसराणि॥४॥
त्वङ्मूत्र नयनादीनां रूक्षकृष्णारुणाभता।
वातपाण्ड्वामये कम्पतोदानाहभ्रमादयः॥ ५॥
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः।
भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामयी नरः॥ ६॥
कफप्रसेकश्वयथु तन्द्रालस्यातिगौरवैः।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः॥ ७॥
सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम्।
त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम्॥ ८॥
ज्वरारोचकहृल्लास छर्दितृष्णाक्लमान्वितः।
पाण्डुरोगी त्रिभिर्दोषै स्त्याज्यः क्षीणो हतेन्द्रियः॥ ९॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः।
कषाया मारुतं पित्त मूषरा मधुरा कफम्॥ १०॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत्।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च॥ ११॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम्॥ १२॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः।
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम्॥ १३॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति।
कालप्रकर्षाच्छूनाङ्गो यो वा पीतानि पश्यति॥ १४॥

बहुलं विट् सुहरितं सकफं योऽतिसार्य्यते ।
दीनः स्वेदादिदिग्धाङ्गः छर्दिमूर्च्छातृडन्वितः ॥ १५ ॥
स नास्त्यऽसृगक्षयाद्यस्तु पाण्डुः श्वेतत्वमाप्नुयात् ।
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो नरः ॥
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ॥ १६ ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनम् ।
गुदे मुखे शेफसि मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥१७॥
विवर्जयेत्पाण्डुकिनं यशोऽर्थी तथातिसारज्वरपीडितञ्च ।
साध्यञ्च पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ॥१८॥

अथ चिकित्सामाह ।

सम्पादयेत् क्षौद्रघृतप्रगाढ़ैर्हरीतकीचूर्णमयैः प्रयोगैः ।
पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तिक्तकमेव चापि ॥ १९ ॥
विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ २० ॥
विधिदिग्धोऽथ वातोत्थे तिक्त शीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ २१ ॥
द्विपञ्चमूलीक्वथितं सविश्वं कफात्मके पाण्डुगदे पिबेत्तत् ।
ज्वरेऽतिसारे श्वयथौ ग्रहण्यां श्वासेऽरुचौ कण्ठहृदामयेषु ॥२२॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतः सुभुक्तः पाण्ड्वामये दूरगतेऽपि शस्तम् ॥२३॥

इति श्रादिमोदकम् ।

दहनाजमोदसैन्धव नागरमरिचाम्लतक्रेण ।
सप्ताहादग्निबलं पाण्ड्वर्शो विमर्दनं परम् ॥ २४ ॥
सप्तरात्रं गवां मूत्रे भावितं चाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा वा पिबेन्नरः ॥ २५ ॥
गोमूत्रसिद्धमण्डूरचूर्णं सगुड़मभ्यसेत् ।
पाण्डुरोगं जयेत्सर्वं पक्तिशूलञ्च दारुणम् ॥ २६ ॥

अयोमलन्तु सन्तप्तं भूयो गोमूत्रसाधितम्।
मधुसर्पिर्युतं लीढ्वा पांण्डुरोगी सुखी भवेत्॥ २७॥
दीपनं चाग्निजननं शोथपाण्ड्वामयापहम्।
कल्याणकाह्वयं दद्याद्भक्षयेद्वा गुड़ं नरः॥ २८॥
मृत्तिकां भावितां दद्यात्तुल्यां निम्बरसेन वा।
वार्त्ताक्या कटुरोहिण्या गोमूत्रेण च भावयेत्॥ २९॥
मृद्द्वेषकरणार्थन्तु भिषक् पश्चान्नियोजयेत्।
मूर्वातिक्तानिशायास कृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः॥ ३०॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरचतुर्गुणे।
पाण्डुताज्वरविस्फोट शोफार्शो रक्तपित्तनुत्॥ ३१॥

इति मूर्वाद्यं घृतम्।

कटुकां रोहिणीं मुस्तां हरिद्रां वत्सकत्वचम्।
पटोलं चन्दनं मूर्वां त्रायमाणां दुरालभाम्॥ ३२॥
सपिप्पलीं कर्कटिकां पूतिकां देवदारु च।
पिष्ट्वाक्षमात्रं तैः सर्पिः प्रस्थं क्षीराढ़के पचेत्॥ ३३॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम्।
अर्शांस्यऽसृग्दरञ्चैव हन्याद्विस्फोटकांस्तथा॥ ३४॥

इति कटुकाद्यं घृतम्।

व्योषं विल्वं द्विरजन्यौ त्रिफलाद्विपुनर्नवा।
मुस्ता चायोरजः पाठा विड़ङ्गं देवदारु च॥ ३५॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम्।
सर्वान् प्रशमयत्याशु विकारान् मृत्तिकोद्भवान्॥ ३६॥

इति व्योषाद्यं घृतम्।

देवद्रुं त्रिफलां व्योषं वृश्चिकालीं ह्ययोरजः।
हरिद्रे चित्रकं भार्गीं पाठे द्वे च पुनर्नवाम्॥ ३७॥

विड़ङ्गं पिप्पलीं लोध्रं पचेन्मूत्रचतुर्गुणे ।
घृतं तत्पाण्डुरोगघ्नं ग्रहणीगुददोषनुत् ॥ ३८ ॥

इति देवदार्व्याद्यं घृतम् ।

रजनीक्वाथकल्काभ्यां घृतं पाण्ड्वामयापहम् ।
त्रिफलाकल्कगोमूत्रसिद्धं वा माहिषं घृतम् ॥ ३९ ॥

इति रजनी त्रिफलाद्यं घृतम् ।

दन्त्याश्चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः ।
तद्वत्प्रस्थो घृताद् गुल्मप्लीहहृद्रोगपाण्डुनुत् ॥ ४० ॥

दन्ती कुड़वोऽत्राष्टपलिकः षोड़शभिः सलिलकुड़वैः निःक्वाथ्य पादावशेषः कृतः ।

इति दन्तीघृतम् ।

ताम्ररजतरूप्यायो मलाः पञ्चपलाः पृथक् ।
चित्रकत्रिफलाव्योष विड़ङ्गैः पलिकैः सह ॥ ४१ ॥
शर्कराष्टपलोन्मिश्रा चूर्णिता मधुनाप्लुता ।
उदुम्बरसमां मात्रा मतः खादेद्यथाग्निमान् ॥ ४२ ॥
दिने दिने प्रयोगेण जीर्णे भुञ्जीत यथेप्सितम् ।
वर्जयित्वा कुलत्थांश्च काकमाचीकपोतकान् ॥ ४३ ॥
योगराज इति ख्यातो योगोऽयमम्रुतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ४४ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ।
कुष्ठानि गरजं मेहं श्वासं हिक्कामरोचकम् ॥ ४५ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ४६ ॥
सुवर्णमथवा रूप्यं योगे यत्र न सम्भवेत् ।
तत्र लोहेन कर्माणि भिषक्कुर्य्यादतन्द्रितः ॥ ४७ ॥

इति योगराजः ।

कुटजत्रिफलानिम्बपटोलघननागरैः।
भावितानि दशाहानि रसैर्द्विगुणितानि च ॥ ४८ ॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा।
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्या पलोन्मिता ॥४९॥
निदिग्धिफलमूलाभ्यां पलं युञ्ज्यात्त्रिजातकात्।
मधुत्रिपलसंयुक्ता कुर्य्यादक्षसमा गुटी ॥ ५० ॥
दाड़िमाम्लपयःक्षीर रसयूषसुरासवान्।
तां भक्षयित्वाऽनुपिबेन्निरन्नो हितभक्ष्यभाक् ॥ ५१ ॥
पाण्डु कुष्ठगरप्लीह कामलार्शोभगन्दरान्।
श्रुतिहृक कुक्षमूत्राग्नि दोषशोथगदोदरान् ॥ ५२ ॥
कासासृग्वातपित्तासृक् शूलगुल्मगलग्रहान्।
नेत्रचक्रगदान् हन्ति सर्वरोगहरा शुभा ॥ ५३ ॥

इति कुटजगुटिका।

त्र्यूषणं त्रिफला दारु हरिद्रे नीलिनीफलम्।
द्राक्षा चेन्द्रयवं मुस्ता मञ्जिष्ठा कटुरोहिणी ॥ ५४ ॥
शतावरी शिग्रुबीजं चित्रकं गजपिप्पली।
शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥ ५५ ॥
पाठा भल्लातकं दन्ती विशाला सदुरालभा।
शठी मधुरसा रास्ना विडङ्गञ्च समाक्षिकम् ॥ ५६ ॥
एतैश्चूर्णैः समैर्वापि लोहं द्विगुणमाहरेत्।
यावच्छूकञ्च सम्भृत्य गवां मूत्रेण पाचयेत् ॥ ५७ ॥
ततोऽक्षमात्रां गुटिकां पाययेत्तण्डुलाम्बुना।
पाण्डुरोगं जयत्याशु ब्रह्मदण्ड इवासुरान् ॥ ५८ ॥
कृमिकुष्ठप्रमेहार्शो ग्रहणीदोषशोथहा।
भगन्दरश्वासकास प्लीहगुल्मोदरापहा ॥ ५९ ॥

इति त्र्यूषणादिगुटी।

अथ कामलानिदानम्।

पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते॥ ६०॥
हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः॥ ६१॥
दाहाऽविपाकदौर्बल्य सदनाऽरुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता॥ ६२॥
कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला॥६३॥
कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः।
सरक्ताक्षिमुखच्छर्दि विण्मूत्रो यश्च ताम्यति॥ ६४॥
दाहारुचितृडानाह तन्द्रामोहसमन्वितः।
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते॥ ६५॥
छर्द्यरोचकहृल्लास ज्वरक्लमनिपीड़ितः।
नश्यति श्वासकासार्त्तो विड्भेदी कुम्भकामली॥ ६६॥

अथ चिकित्सामाह।

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता॥ ६७॥
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः॥ ६८॥
अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसं शुभम्।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत्॥ ६९॥
नस्यं कर्कोटमूलस्य घ्रेयं वा जालिनीफलम्॥
गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली।
भक्तं तक्रेण भुञ्जीत स जहात्याशु कामलाम्॥ ७०॥
लोहचूर्णं निशायुग्मं त्रिफलां कटुरोहिणीम्।
प्रलिह्य मधुसर्पिर्भ्यां कामलार्त्तः सुखी भवेत्॥ ७१॥

किराततिक्तं सुरदारु दार्वी मुस्ता गुडूची कटुका पटोलम् ।
दुरालभा पर्पटकं सनिम्बं कटुत्रिकं वापि फलत्रिकञ्च ॥ ७२ ॥
विडङ्गसारञ्च समांशकानि सर्वैः समं चूर्णमथात्र लौहम् ।
सर्पिर्मधुभ्यां गुटिका विधेया तक्रानुपानात् भिषजा प्रयोज्यम्७३
निहन्ति पाण्डुं श्वयथुं प्रमेहं हलीमकं हृद्ग्रहणीप्रदोषम् ।
श्वासञ्च कासञ्च सरक्तपित्तमर्शांस्यथो वाग्ग्रहमामवातम् ॥७४॥
व्रणान् सगुल्मान् कफविद्रधींश्च श्वित्राणि कुष्ठं सततप्रयोगात् ७५

इत्यष्टादशाङ्ग गुटिका ।

धात्री लोहरजो व्योष निशाक्षौद्राज्यशर्करा: ।
लीढ़ा निवारयत्याशु कामलामुद्धतामपि ॥ ७६ ॥
तुल्यां वायोरजःपथ्याहरिद्रां क्षौद्रसर्पिषा ।
चूर्णितां कामली लिह्याद् गुड़क्षौद्रेण चाभयाम् ॥ ७७ ॥
हरिद्रात्रिफलानिम्ब वलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ ७८ ॥

इति हरिद्राद्यं घृतम् ।

गुडूचीरसकल्काभ्यां सिद्धं क्षीरचतुर्गुणे ।
माहिषं घृतमेवाशु कामलाहरमुत्तमम् ॥ ७९ ॥

इति गुड़ूचीघृतम् ।

अयोरजो हरिद्रे द्वे त्रिफला कटुरोहिणी ।
चूर्णं कामलिनां श्रेष्ठं घृतमाक्षिकसंयुतम् ॥ ८० ॥
सकफे मारुते पित्तं कामलायां वहिः क्षिपेत् ।
तस्य स्युः पीतमूत्रत्वक् श्वेतविट् दशनानि च ॥ ८१ ॥
विष्टम्भगौरवाटोप हिक्काश्वासज्वरादयः ॥ ८२ ॥
तं हि कट्वम्लरूक्षैश्च शिखितित्तिरदक्षजैः ।
रसैर्यूषैश्च कौलत्थैर्मुद्गजैश्चापि भोजयेत् ।
व्योषाढ्यं वीजपूराम्लं पिबेद् वातप्रशान्तये ॥ ८३ ॥

कुम्भाख्यकामलायान्तु हितः कामलिको विधिः ॥ ८४ ॥

गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु ।

मासं माक्षिकधातुं वा किट्टं वाथ हिरण्यजम् ॥ ८५ ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारम् ।

विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥८६

इति कुम्भकामला चिकित्सा ।

कामलार्त्तः सृजेद्यस्तु तैलपिष्टनिभं मलम् ।

कफवद्धगुदार्त्तस्य श्लेष्मघ्नैःकामलां हरेत् ॥ ८७ ॥

इति कामला चिकित्सा ।

अथ हलीमकनिदानम् ।

यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः ।

बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ॥ ८८ ॥

स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासस्तृष्णाऽरुचिर्भ्रमः ।

हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥ ८९ ॥

सन्तापो भिन्नवर्चश्च वहिरन्तश्च पीतता ।

पाण्डुता नेत्रयोर्यस्य तं हलीमकिनं वदेत् ॥ ९० ॥

अथ हलीमकचिकित्सामाह ।

पिबेत् खदिरतोयेन मद्यं लोहरजांसि च ॥ ९१ ॥

सिता तिक्ता बला यष्टी त्रिफला रजनीयुगैः ।

लेहं लिह्यात् समध्वाज्यं हलीमकप्रशान्तये ॥ ९२ ॥

इति सितादो लेहः ।

मधुरैरन्नपानैस्तं वातपित्तहरैर्हरेत् ।

कामलापाण्डुरोगोक्तां क्रियां चात्र प्रयोजयेत् ॥ ९३ ॥

अमृतलतारसकल्के प्रसाधितं तुरगविद्विषा सर्पिः ।

क्षीरचतुर्गुणमेतद्धितरेव हलीमकार्त्तेभ्यः ॥ ९४ ॥

इत्यमृताद्यं घृतम् ॥ इति हलीमकचिकित्सा ।

फलत्रिका मृतावासा तिक्ता भूनिम्ब निम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम्॥ ९५॥
दार्वीतिक्ताभयारिष्ट वर्षाभू षु पटोलजः।
क्वाथः शोथोदरश्वास कामला पाण्डु रोगनुत्॥ ९६॥
त्र्यूषणं त्रिफलामुस्तं विडङ्गञ्चित्रकं समम्।
लोहचूर्णं नवगुणं कृत्वा चूर्णं पिबेन्नरः॥ ९७॥
मासं तक्रेण गोमूत्रैर्लिह्याद्वा मधुसर्पिषा।
स जयेत् पाण्डु हृद्रोग कुष्ठशोथ भगन्दरान्॥ ९८॥
कृमीनर्शांसि जयति मन्दाग्नित्वमरोचकम्।
युक्तितोऽभ्यसनाच्चैव जरां न लभतेऽचिरात्॥ ९९॥
इन्द्रियाणां विशुद्धिश्च बलवर्णप्रसादनम्।
मासेन लभते जन्तु रेतच्चूर्णात् नवायसात्॥ १००॥

इति नवायसं चूर्णम्।

पुनर्नवात्रिवृद्व्योषं विडङ्गं दारुचित्रकम्।
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकम्॥ १०१॥
कटुका पिप्पलीमूलं मुस्तञ्चेति पलोन्मितम्।
मण्डूरं द्विगुणं चूर्णाद् गोमूत्रार्द्धाढ़के पचेत्॥ १०२॥
गुडेन वटकान् कृत्वा तक्रेणाऽलोड्य तान् पिबेत्।
ते पाण्डु रोगं प्लीहानमर्शांसि विषमज्वरम्॥ १०३॥
श्वयथुं ग्रहणीदोषं हन्युः कुष्ठकृमींस्तथा।

इति मण्डूरवटकः।

त्र्यूषणं त्रिफला मुस्तं विड़ङ्गं चव्यचित्रकौ।
दार्वीत्वङ्माक्षिकं धातु ग्रन्थिकं देवदारु च॥ १०४॥
एषां द्विपलिकान् भागान् कृत्वा चूर्णं पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम्॥ १०५॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत्ततः।

उदुम्बरसमान् कुर्य्या वटकांस्तान् यथाग्नितः ॥ १०६ ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजयेत् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥ १०७ ॥
कुष्ठानि गरजं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहान् प्लीहानं शमयन्त्यपि ॥ १०८ ॥

इति बृहन्मण्डूरवटकः ।

निम्बं पटोलं कुटजं त्रिफला मुस्तनागरम् ।
पचेज्जलाढ़के पादशेषे दद्याच्च शीतले ॥ १०९ ॥
शिलाजतुपलान्यष्टौ मासं संस्थापयेच्च तम् ।
उद्धृत्य तं शिलातुल्य मेतांश्चापि पलोन्मितान् ॥ ११० ॥
मोचधात्रीफलतुगा कर्कटादिनिदिग्धिकाः ।
त्रिवर्णपादसंयुक्तं चौद्रं त्रिपलसंयुतम् ॥ १११ ॥
पयोऽनुपानं गुटिकां कृत्वा खादेद्यथाबलम् ।
कामलापाण्डुरोगार्त्तः शोथज्वरनिपीड़ितः ॥ ११२ ॥

इति निम्बादिगुटिका ।

विड़ङ्गमुस्तत्रिफला देवदारु षड़ूषणैः ।
निर्वाप्य सप्तधा मूत्रे मण्डूरं ग्राह्यमिष्यते ॥ ११३ ॥
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ।
तैरच्चमात्रां गुटिकां कृत्वा खादेद्दिने दिने ॥ ११४ ॥
कामला पाण्डुरोगार्त्तः सुखमापद्यते च्चणात् ।

इति मण्डूरगुटिका ।

विभीतकाऽयोमलनागराणां चूर्णं तिलानां गुड़सम्प्रयुक्तम् ।
तक्रानुपानं गुटिका निहन्ति ह्यतिप्रवृद्धानपि पाण्डुरोगान्११५

इति विभीतकाद्या गुटिका ।

पञ्चकोलं समरिचं देवदारुफलत्रिकम् ।
हिङ्गुमुस्तसमायुक्ता भागास्त्रिपलसम्मिताः ॥ ११६ ॥

यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः।
पक्त्वा चाष्टगुणे मूत्रे घनीभूतं तमुद्धरेत्॥ ११७॥
ततोऽक्षमात्रान् वटकान् पिबेत्तक्रेण तक्रभुक्।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम्॥ ११८॥
अर्शांसि ग्रहणीं शोथमूरुस्तम्भं हलीमकम्।
कृमिं प्लीहानमुदरं गलरोगञ्च नाशयेत्॥ ११९॥
मण्डूरो वज्रनामायं रोगानीकप्रणाशनः॥ १२०॥
निर्वाप्य सप्तधा मूत्रे मण्डूरं ग्राह्यमिष्यते।
ग्राहयेदष्टगुणितं गोमूत्रं सर्वचूर्णतः॥ १२१॥

इति मण्डूरवज्रवटकः।

विड़ङ्गं त्रिफला व्योषं दार्वी कृष्णमयोरजः।
कामला पाण्डुरोगघ्नं लिह्यात् क्षौद्रघृतप्लुतम्॥ १२२॥

इति विड़ङ्गाद्यं लौहम्।

रसमामलकीनान्तु संशुद्धं यन्त्रपीड़ितम्।
द्रोणं पचेत्तु मृद्वग्नौ तत्र चेमानि दापयेत्॥ १२३॥
चूर्णितं पिप्पलीप्रस्थं मधुकं द्विपलं तथा।
प्रस्थं गोस्तनिकायाश्च द्राक्षायाः कल्कपेषितम्॥ १२४॥
शृङ्गवेरपले द्वे च तुगाक्षीर्य्याः पलद्वयम्।
तुलार्द्धं शर्करायाश्च घनीभूतं समुद्धरेत्॥ १२५॥
मधुप्रस्थसमायुक्तं लेहयेत्पलसम्मितम्।
हलीमकं कामलाञ्च पाण्डुत्वं चापकर्षति॥ १२६॥

इति आमलक्यवलेहः।

पचेत् खदिरनिःक्वाथे विड़ङ्गधान्यायोरजः।
बलातिबलासिता यष्टी त्रिफला रजनीद्वयम्॥ १२७॥
लेहं लिह्यात्समध्वाज्यैः पाण्डुरोगी हलीमकी।

स लेहः कामलां हन्यात् अपि संवत्सरोत्थिताम् ॥ १२८ ॥

इति खदिरलेहः ।

कृष्णे द्वे ग्रन्थिकं वह्निर्दीप्यकोषणसैन्धवम् ।
कृमिघ्नं त्रिफला धान्य कालजामजमोदकम् ॥ १२९ ॥
पलिकानि त्रिवृत्यञ्च तैलं सर्पिः पलाष्टकम् ।
रसप्रस्थत्रयं धात्र्या गुड़स्यार्द्धशतं पचेत् ॥ १३० ॥
एतत्कल्याणकं पाण्डु कामलाऽर्शोज्वरापहम् ।
मेहकुष्ठक्षयश्वास ग्रहणीहृद्रसायनम् ॥ १३१ ॥

इति कल्याणगुड़ः ।

पुनर्नवा निम्बपटोलशुण्ठी तिक्तामृता दार्व्यभया कषायः ।
सर्वाङ्गशोथोदरकासशूलं श्वासान्वितं पाण्डुगदं निहन्ति ॥१३२

यवगोधूमशाल्यन्न रसैर्जाङ्गलजैः समैः ।
मुद्गाढ़कीमसूराद्यैरेषु भोजनमिष्यते ॥ १३३ ॥

इति वङ्गसेनसङ्कलितः पाण्डुरोगकामलाकुम्भकामलाहलीमकनिदान-
चिकित्साधिकारः समाप्तः ।

---

## अथ रक्तपित्तनिदानमाह ।

घर्मव्यायामशोकाध्व व्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥ १ ॥
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ।
ततः प्रवर्त्तते रक्त मूर्द्धञ्चाधो द्विधापि वा ॥ २ ॥
ऊर्द्धं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्त्तते ॥ ३ ॥
केचिच्चैव यकृत्प्लीह्ना प्रवदन्त्यसृजो गतिम् ॥ ४ ॥
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धश्च निःश्वासे भवत्यस्मिन् भविष्यति ॥ ५ ॥

सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम्।
श्यावारुणं सफेनञ्च तनुरूक्षञ्च वातिकम्॥ ६॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्।
मेचकागारधूमाभ मञ्जनाभञ्च पैत्तिकम्॥ ७॥
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम्।
ऊर्द्धगं कफसंसृष्ट मधोगं मारुतानुगम्।
द्विमार्गं कफवाताभ्या मुभाभ्यां तत्प्रवर्त्तते॥ ८॥
ऊर्द्धं साध्यमधो याप्यमसाध्यं युगपद्गतम्॥ ९॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम्।
रक्तपित्तं सुखे काले साध्यं स्यात् निरुपद्रवम्॥ १०॥
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते।
यत्त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत्॥ ११॥
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत्॥ १२॥

दौर्बल्यं श्वासकास ज्वर वमथुमदाः पाण्डुता दाहमूर्च्छाः
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीड़ा।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूयनिष्ठीवनञ्च
भक्तद्वेषोऽविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गात्॥ १३॥
मांसप्रक्षालनाभं क्वथितमिव च यत् कर्दमाम्भोनिभं वा
मेदः पूयास्रकल्पं यकृदिव यदि वा पक्कजम्बूफलाभम्।
यत् कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकाराः
तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति॥ १४॥

येन चोपहतो रक्तं रक्तपित्तेन मानवः।
पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयम्॥ १५॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः॥ १६॥
पित्तास्रं शमयेन्नादौ प्रवृत्तं बलिनो यतः।

हृत्पाण्डु ग्रहणीदोष प्लीहगुल्मज्वरादिकृत् ॥ १७ ॥
गलग्रहं पूतिनस्यं मूर्च्छाञ्च ह्यरुचिं तथा ।
कुष्ठाख्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधञ्च कुर्य्यात् स्तम्भनमादितः ॥ १८ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवाम्यमविरेच्यञ्च शमनीयैरुपाचरेत् ॥ १९ ॥
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥ २० ॥

अथ चिकित्सामाह ।

ऊर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम् ।
प्रागधोगमने पेयं वामनञ्च यथा बलम् ॥ २१ ॥
आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाऽथवा ।
विरेचनं प्रयोक्तव्यं शर्करामाक्षिकोत्तरम् ॥ २२ ॥
मुस्तेन्द्रयवयष्ट्याह्वं मदनाह्वं पयो मधु ।
शिशिरं वमनं योज्यं रक्तपित्तहरं परम् ॥ २३ ॥
शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगते ।
रक्तातिसारहन्त्री च योज्यो विधिरशेषतः ॥ २४ ॥
शालिषष्टिकनीवार कोरदूषप्रसाधिका ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥ २५ ॥
मसूरमुद्गचणकाः समकुष्ठाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥ २६ ॥
दाड़िमामलकं कोलमम्लार्थं चापि दापयेत् ।
पटोलनिम्बवेत्राग्र प्लक्षवेतसपल्लवाः ।
शाकार्थं शाकसात्म्यानां तण्डुलीयादयो हिताः ॥ २७ ॥
पारावतकपोतांश्च लावरक्ताक्षवर्त्तकान् ।
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान् ॥२८॥

रक्तपित्तहरान् दद्या द्रसांस्तेषां प्रयोजयेत् ॥ २९ ॥
ईषदम्लाननम्लांश्च घृतभृष्टान् ससैन्धवान्।
कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ॥ ३० ॥
पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः।
जलं खर्जूरमृद्वीकामधुकैः सपरूषकैः ॥ ३१ ॥
ह्रीवेरमुत्पलं धान्यं चन्दनं यष्टिकामृता।
वृषोशीरयुतः क्वाथः शर्करामधुसंयुतः ॥ ३२ ॥
रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा ॥ ३३ ॥
पद्मोत्पलानां किञ्जल्कं पृश्निपर्णी प्रियङ्गुका।
जले साध्यरसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ॥ ३४ ॥
चन्दनोशीरलोध्राणां रसे तस्मिन् सनागरे।
किराततिक्तकोशीरमुद्गानां तद्वदेव तु ॥ ३५ ॥
शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तजे।
वातोत्तरे तित्तिरिःस्यादुदुम्बररसे शृतः ॥ ३६ ॥
मयूरप्लक्षनिर्यूहः न्यग्रोधस्य च कुक्कुटः।
रसो विषोत्पलादीनां वार्त्ताकक्षकरौ हितौ ॥ ३७ ॥
तृष्यते तिक्तसंसिद्धं तृष्णाघ्नं वा कफोदकम्।
सिद्धं विदारीगन्धाद्यैः शृतशीतमथापि वा ॥ ३८ ॥
प्रियङ्गुञ्जनमृल्लोध्रः श्लक्ष्णचूर्णावचूर्णितः।
वासाक्वाथो रसो वाऽसृक् पित्तजित्ससितामधुः ॥ ३९ ॥
वृषपत्राणि संपीड्य रसं समधुशर्करम्।
पिबेत्तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ४० ॥
एवं त्वगेलानतचन्दनानां श्यामाकशुण्ठीमधुकोत्पलानाम्।
स्याद्वात्रीवासाद्विगुणोत्तराणां चूर्णं सिताक्षौद्रसमन्वितानाम् ४१
दाहे ज्वरे लोहितपित्तयुक्ते कासे क्षये शोणितमूत्रकृच्छ्रे।
रक्तेऽतिमात्रं पतिते मुखेन गुदेऽथ नासाश्रुतिमेढ्रयोनौ ॥ ४२ ॥

प्रोक्तं पुरा रक्तविनिग्रहार्थं चूर्णं वशिष्ठेन महागदघ्नम् ।

इति पद्मकादिचूर्णम् ।

उत्पलं कुसुमं पद्मं कल्हारं लोहितोत्पलम् ।
मधुकञ्चेति पित्तासृक् तृष्णाछर्दिहरो गणः ॥ ४३ ॥
तथा वृषाकषायञ्च शर्करा मधुसंयुतम् ।
पाययेत्तेन सद्यो हि रक्तपित्तं प्रशाम्यति ॥ ४४ ॥
आटरूषकनिर्यूहं प्रियङ्गुमृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ४५ ॥
वासाकषायोत्पलमृत्प्रियङ्गु लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात् पित्तासृजो वेगमुदीर्णमाशु ४६
वासायां विद्यमानाया माशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ४७ ॥
तालीशचूर्णयुक्तः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्तश्वासतमक स्वरभेदरक्तपित्तहरः ॥ ४८ ॥
आटरूषकमृद्वीका पथ्या क्वाथः सशर्करः ।
क्षौद्राढ्यः सकलश्वासरक्तपित्तनिवर्हणः ॥ ४९ ॥
शतावरीवराराम्ना काश्मर्य्यं सपरूषकम् ।
पाययेद्रक्तपित्तघ्नं सद्यः शूलहरं परम् ॥ ५० ॥
चन्दनेन्द्रयवाः पाठा कटुका सदुरालभा ।
गुडूचीवासकं लोध्रं पिप्पलीक्षौद्रसंयुतम् ॥ ५१ ॥
कफान्वितं जयेद्रक्तं तृष्णाकासज्वरापहम् ॥ ५२ ॥
पिबेच्छीतकषायं वा जम्ब्वाम्राजुर्नसम्भवम् ।
उदुम्बरफलानाञ्च रसं समधु पाययेत् ॥ ५३ ॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु ।
मोदकः सन्निपातोर्द्ध्वरक्तपित्तज्वरापहः ॥ ५४ ॥
अतसीकुसुमसमङ्गा वटप्ररोहत्वगम्भसा पीता ।

प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५५ ॥
उशीरकालीयकलोध्रपद्मकं प्रियङ्गुकाकट्फलशङ्खगैरिकम्।
पृथक् पृथक् चन्दनतुल्यभागिकं सशर्करां तण्डुलधावनप्लुतम् ५६
रक्तं सपित्तं तमकं पिपासां दाहञ्च पित्तं शमयन्ति सद्यः ॥५७॥

वृषस्य स्वरसं कृत्वा द्रवैरेभिः प्रयोजयेत्।
प्रियङ्गुमृत्तिकालोध्र मञ्जनञ्चेति चूर्णयेत्।
एतच्चूर्णन्तु पातव्यं रसक्षौद्रसमन्वितम् ॥ ५८ ॥
नासिकामुखपायुभ्यो योनिमेढ्राच्च वेगतः।
रक्तपित्तं स्रवद्धन्ति सिद्ध एष प्रयोगराट् ॥ ५९ ॥
यच्च शस्त्रक्षतेनैव रक्तं स्रवति वेगतः।
तदप्यनेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ ६० ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ ६१ ॥
इक्षूणां मध्यकाण्डानि सकन्दं नीलमुत्पलम्।
केसरं पुण्डरीकस्य मोचामधुकपद्मकैः ॥ ६२ ॥
वटप्ररोहशृङ्गाश्च द्राक्षाखर्जूर एव च।
एतानि समभागानि कषायमवतारयेत् ॥ ६३ ॥
व्युषितं मधुसंयुक्तं पाययेच्छर्करान्वितम्।
सप्रमेहं रक्तपित्तं क्षिप्रमेतन्नियच्छति ॥ ६४ ॥
लोहगन्धिनि निःश्वासे उद्गारे धूमगन्धिनि।
पृथ्वीकां शाणमात्रान्तु खादेद् द्विगुणशर्कराम् ॥ ६५ ॥
कषायैर्विविधैर्योगैर्दीप्तेऽग्नौ विजिते कफे।
रक्तपित्तं नचेच्छाम्येत्तत्र वातोल्वणं पयः ॥ ६६ ॥
छागं पयः स्यात्परमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणे शृतं वा ॥६७॥
यष्टीमधुकार्जुनजीवनीय द्राक्षा बला गोक्षुरकैःशृतं वा ६८

द्राक्षया फलिनीभिर्वा प्रियालु मधुकेन वा ।
श्वदंष्ट्रया शतावर्य्या रक्तजित्साधितं पयः ॥ ६९ ॥
पक्कोदुम्बरकाश्मर्यः पथ्या खर्जूरगोस्तनी ।
मधुना हन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥ ७० ॥
खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णन्तु मधुना लिहन्नारोग्यमश्नुते ॥ ७१ ॥
वासकस्य रसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना पीता रक्तपित्तं द्रुतं जयेत् ॥ ७२ ॥
स्वरसः सरसः प्रोक्तः कल्को दृषदि पेषितः ।
क्वथितस्तु शृतः शीतः शर्वरीमुषितो हिमः ॥ ७३ ॥
द्रव्येण यावता द्रव्य मेकीभूयाऽर्द्रतां व्रजेत् ।
तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥ ७४ ॥
क्षीरेण लाक्षां मधुमिश्रितेन प्रपीय जीर्णे पयसान्न मद्यात् ।
सद्यो निहन्याद्रुधिरं क्षतोत्थं कान्तार्जुनानामथवापि कल्कम्७५
कल्कं मधूकत्रिफलार्जुनानां निशिस्थितं लोहमये सुपात्रे ।
साज्यं विलिह्यानुपिबेत्सुशीतं सशर्करं छागपयः क्षुधार्त्तः ॥७६॥
अतिनिस्सृतरक्तो वा क्षौद्रयुक्तं पिबेदनु ।
सकृद्वा भक्षयेदाजं मांसं पित्तसमायुतम् ॥ ७७ ॥
पारावतस्य मांसं वा घृतसिद्धं सशर्करम् ।
भक्षयेन्मधुना शीतं रक्तपित्तनिवारणम् ॥ ७८ ॥
सकफे ग्रथिते रक्ते चारः सक्षौद्रसर्पिषा ।
मृणालोत्पलपद्मानां किंशुकासनयोस्तथा ॥ ७९ ॥
मधुकस्य प्रियङ्गूना मवलेहः पृथक् पृथक् ।
प्रायेणोपहताग्नित्वात् सपित्तमतिसार्य्यते ॥ ८० ॥
प्राप्नोति चास्यवैरस्यं नवान्नमभिनन्दति ।
नागरेन्द्रयवौ तत्र पातव्यौ तण्डुलाम्बुना ।

सिद्धा यवागूर्जीर्णे वा चाङ्गेरीतक्रदाड़िमैः॥ ८१॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम्।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन॥ ८२॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं पिबेद्वा॥८३॥
रसो दाड़िमपुष्पोत्थो रसो पूर्वाभवोऽथवा।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित्॥ ८४॥
रसो दाड़िमपुष्पस्य दूर्वारससमन्वितः।
अलक्तकरसोपेतः पथ्यारससमन्वितः॥ ८५॥
योजितो नसयोः क्षिप्रं त्रिदोषमपि दारुणम्।
नासारक्तं प्रवृत्तन्तु हन्यादिति किमद्भुतम्॥ ८६॥
दूर्वाभयादाड़िमपुष्पकाणां लाक्षामलक्याः स्वरसेन नस्यम्।
दिनत्रयं यः कुरुते प्रभाते नासाऽसृजं नाम रुजं निहन्ति॥८७॥
श्यामाऽश्व मोरटानन्ता शर्कराभिः शृतं घृतम्।
सर्वदोषहरं हृद्यं नस्यं नासागतेऽसृजि॥ ८८॥

इति श्यामाघृतम्।

दूर्वाभव्यफलं माषकुलत्थौ वंशपत्रिका।
जलस्थलोद्भवौ कर्णमोचकौ खरमञ्जरी॥ ८९॥
दण्डोत्पलस्य मूलन्तु निःक्वाथ्याष्टगुणेऽम्भसि।
तत्पादशेषितं तैलं तुल्यं कृत्वा विपाचयेत्।
तत्तैलं प्रतिमर्षेण चानाहाख्यं गदं जयेत्॥ ९०॥

इति दूर्वाद्यं तैलम्।

रक्तातिसारिकं कर्म रक्ते स्यात्पायुगामिनि।
पित्तप्रमेहिकं कर्म मेढ्रगे विनियोजयेत्॥ ९१॥
शृतं,क्षीरं पिबेच्चापि पञ्चमूल्या तृणाह्वया।
गोकण्टकानां स्वरसैः पर्णिनीभिस्तथा पयः॥ ९२॥

हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम्।
मेढ्रगे विहितश्चापि वस्तिरुत्तरसंज्ञिकः॥ ९३॥

इति तृणपञ्चमूलीक्षीरम्।

चन्दनं नलदं लोध्रं मुशीरं पद्मकेशरम्।
नागपुष्पञ्च विल्वञ्च भद्रमुस्तं सशर्करम्॥ ९४॥
ह्रीवेरञ्चैव पाठा च कुटजोत्पलमेव च।
शृङ्गवेरं सातिविषा धातकी सरसाञ्जनम्॥ ९५॥
आम्रास्थि जम्बूसारास्थि तथा मोचरसोऽपि च।
नीलोत्पलं समङ्गाञ्च सूक्ष्मैला दाड़िमत्वचम्॥ ९६॥
चतुर्विंशतिरेतानि समभागानि कारयेत्।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत्॥ ९७॥
योगो लोहितपित्तानामर्शिनां ज्वरिणां तथा।
मूर्च्छामदोपसृष्टानां तृष्णार्त्तानां प्रदापयेत्॥ ९८॥
अतीसारं तथा छर्दिं स्त्रीणाञ्च रजसो ग्रहम्।
प्रच्युतानाञ्च गर्भाणां स्थापनं परमुच्यते।
अश्विनोः सम्मतो योगो रक्तपित्तनिवर्हणः॥ ९९॥

इति चन्दनाद्यं चूर्णम्।

दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलबालुका।
सिता लोध्रमुशीरञ्च मुस्तं चन्दनपद्मकौ॥ १००॥
विपचेत्कार्षिकैरेतैः सर्पिराजं सुखाग्निना।
तण्डुलाम्बु त्वजाक्षीरं दद्यादेवं चतुर्गुणम्॥ १०१॥
द्राक्षायष्ट्याह्वमधुक काश्मरी चन्दनं सितम्।
पिष्ट्वा तत्कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत्॥ १०२॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत्॥ १०३॥
चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी।

मेढ्रपायुप्रवृत्ते तु वस्तिकर्म प्रयोजयेत्।
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्॥ १०४॥

इति दूर्वाद्यं घृतम्।

दूर्वा सेन्दीवरं पद्मं मञ्जिष्ठा शैलबालुका।
रास्ना मुस्ता तथोशीरं चन्दनं मधुकाह्वयम्॥ १०५॥
पद्मकं लोध्रकुष्ठञ्च चन्दनं रजनीद्वयम्।
काकोल्यौ शारिवे चेति कल्कैरेभिश्च कार्षिकैः॥ १०६॥
घृतप्रस्थमजाक्षीरं तण्डुलोदकसंयुतम्।
दूर्वायाः स्वरसेनापि साधितं मृदुनाग्निना॥ १०७॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत्॥ १०८॥
रक्तस्रावीणि चार्शांसि लेपयेत्तेन सर्पिषा।
मेढ्रपायुप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्॥ १०९॥
पित्तजेषु विकारेषु स्फोटादिषु च बुद्धिमान्।
विषेषु कीटदोषेषु विसर्पेषु प्रयोजयेत्॥ ११०॥

इति महादूर्वाद्यं घृतम्।

न्यग्रोधोदुम्बराश्वत्थशुङ्गानाऽऽपोथ्य वासयेत्।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत्॥ १११॥
तदर्द्धं शर्करायुक्तं लेहयेत् क्षौद्रपादिकम्।
अधो वा यदि वा चोर्द्धं रक्तं यस्य प्रवर्त्तते॥ ११२॥
सुखं तस्याशु युज्येत अग्निवेशवचो यथा।

इति शुङ्गाद्यं घृतम्।

शतावरीदाड़िमतिन्तिड़ीकं काकोलीमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूगकस्य घृतं प्रचेत् क्षीरचतुर्गुणञ्च॥ ११३॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्ति॥ ११४॥

इति शतावरीघृतम्।

हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ।
मेढ्रगे विहितश्चापि वस्तिरुत्तरसंज्ञिकः ॥ ९३ ॥

इति तृणपञ्चमूलीक्षीरम् ।

चन्दनं नलदं लोध्रं मुशीरं पद्मकेशरम् ।
नागपुष्पञ्च विल्वञ्च भद्रमुस्तं सशर्करम् ॥ ९४ ॥
ह्रीवेरञ्चैव पाठा च कुटजोत्पलमेव च ।
शृङ्गवेरं सातिविषा धातकी सरसाञ्जनम् ॥ ९५ ॥
आम्रास्थि जम्बूसारास्थि तथा मोचरसोऽपि च ।
नीलोत्पलं समङ्गाञ्च सूक्ष्मैला दाड़िमत्वचम् ॥ ९६ ॥
चतुर्विंशतिरेतानि समभागानि कारयेत् ।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥ ९७ ॥
योगो लोहितपित्तानामर्शिनां ज्वरिणां तथा ।
मूर्च्छामेदोपसृष्टानां तृष्णार्त्तानां प्रदापयेत् ॥ ९८ ॥
अतीसारं तथा छर्दिं स्त्रीणाञ्च रजसो ग्रहम् ।
प्रच्युतानाञ्च गर्भाणां स्थापनं परमुच्यते ।
अश्विनोः सम्मतो योगो रक्तपित्तनिवर्हणः ॥ ९९ ॥

इति चन्दनाद्यं चूर्णम् ।

दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलबालुका ।
सिता लोध्रमुशीरञ्च मुस्तं चन्दनपद्मकौ ॥ १०० ॥
विपचेत्कार्षिकैरेतैः सर्पिराजं सुखाग्निना ।
तण्डुलाम्बु त्वजाक्षीरं दद्यादेवं चतुर्गुणम् ॥ १०१ ॥
द्राक्षायष्ट्याह्वमधुक काश्मरी चन्दनं सितम् ।
पिष्ट्वा तत्कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत् ॥ १०२ ॥
तत्पानं वमतो रक्तं नावनं नासिकागते ।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत् ॥ १०३ ॥
चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी ।

मेढ्रपायुप्रवृत्ते तु वस्तिकर्म प्रयोजयेत्।
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्॥ १०४॥

इति दूर्वाद्यं घृतम्।

दूर्वा सेन्दीवरं पद्मं मञ्जिष्ठा शैलबालुका।
रास्ना मुस्ता तथोशीरं चन्दनं मधुकाह्वयम्॥ १०५॥
पद्मकं लोध्रकुष्ठञ्च चन्दनं रजनीद्वयम्।
काकोल्यौ शारिवे चेति कल्कैरेभिश्च कार्षिकैः॥ १०६॥
घृतप्रस्थमजाक्षीरं तण्डुलोदकसंयुतम्।
दूर्वायाः स्वरसेनापि साधितं मृदुनाग्निना॥ १०७॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत्॥ १०८॥
रक्तस्रावीणि चार्शांसि लेपयेत्तेन सर्पिषा।
मेढ्रपायुप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्॥ १०९॥
पित्तजेषु विकारेषु स्फोटादिषु च बुद्धिमान्।
विषेषु कीटदोषेषु विसर्पेषु प्रयोजयेत्॥ ११०॥

इति महादूर्वाद्यं घृतम्।

न्यग्रोधोदुम्बराश्वत्थशुङ्गानाऽऽपोथ्य वासयेत्।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत्॥ १११॥
तदर्द्धं शर्करायुक्तं लेहयेत् क्षौद्रपादिकम्।
अधो वा यदि वा चोर्द्धं रक्तं यस्य प्रवर्त्तते॥ ११२॥
सुखं तस्याशु युज्येत अग्निवेशवचो यथा।

इति शुङ्गाद्यं घृतम्।

शतावरीदाड़िमतिन्तिड़ीकं काकोलीमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूगकस्य घृतं प्रचेत् क्षीरचतुर्गुणञ्च॥११३॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्ति॥११४॥

इति शतावरीघृतम्।

शतावर्य्यास्तु मूलानां रसं प्रस्थद्वयं मतम् ।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥ ११५ ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।
काकोलीक्षीरकाकोली मृद्वीका मधुकं तथा ॥ ११६ ॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद् घृतम् ॥ ११७ ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च ।
क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम् ॥ ११८ ॥
अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम् ।
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥ ११९ ॥
एतान् रोगान्निहन्त्याशु छिन्नाभ्राणीव मारुतः ।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥ १२० ॥
शतावर्य्यादिके चाज्ये शर्करामधुपादिकम् ।

इति वृहच्छतावरीघृतम् ।

वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः ।
प्रदायकल्कं विपचेद् घृतं तत्सक्षौद्रमाश्वेव निहन्ति रक्तम्॥१२१

शाणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्कान् कृत्वा प्रशंसन्ति पुष्पकञ्च चतुष्पलम् ॥ १२२ ॥

इति वासाद्यं घृतम् ।

समूलपत्रशाखन्तु वृषं धौतं सुकुट्टितम् ।
स्वरसं तस्य निष्कास्य कषायं वा जले शृतम् ॥ १२३ ॥
चतुर्गुणे जले तस्मिन् घृतप्रस्थं विपाचयेत् ।
कुसुमैर्मञ्जरीभिश्च कल्कपेषैः सुखाग्निना ॥ १२४ ॥
विघट्टयेत् काष्ठदर्व्या पात्रे लोहमये दृढे ।
अनेन विधिना पक्वं मधुपादसमायुतम् ॥ १२५ ॥
पिबेत्कासे क्षये श्वासे रक्तपित्ते हलीमके ।

शिरोपघाते तिमिरे तथा सन्ने च पावके ॥ १२६ ॥
न तुल्यमस्ति भैषज्यं विशेषाद्रक्तपित्तिनाम् ।

इति वासाघृतम् ।

वासाकल्करसे सर्पिः पयसा सह पाचयेत् ।
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ॥ १२७ ॥
उशीरमधुकानन्ता शारिवोत्पलपद्मकैः ।
त्रायन्त्युत्पलमूर्वाभिर्मदयन्त्याश्च पल्लवैः ॥ १२८ ॥
सिताक्षौद्रयुतं हन्याद्रक्तपित्तं सुदारुणम् ।
पैत्तिकं वातिकं गुल्मं स्वरभेदं हलीमकम् ॥ १२९ ॥
ये चान्ये कीर्त्तिता रोगा रक्तपित्तकफाश्रयाः ।
तान् सर्वान्नाशयत्येतत्पीयमानं हिताशिना ॥ १३० ॥

इति महावासाद्यं घृतम् ।

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरीविदारी च शालिपर्णी बला तथा ॥ १३१ ॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मर्य्याश्च फलञ्चैव माषबीजं तथैव च ॥ १३२ ॥
पृथग्दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषे रसे तस्मिन् पूतशीते प्रदापयेत् ॥ १३३ ॥
मृद्वीका पद्मकं कुष्ठं पिप्पलीरक्तचन्दनम् ।
पत्रकं नागपुष्पञ्च आत्मगुप्ताफलं तथा ॥ १३४ ॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः ।
पृथक्कर्षसमा भागाः शर्करायाः पलद्वयम् ॥ १३५ ॥
रसः स्यात्पौण्ड्रकेक्षूणा माढ़काढ़कमाहरेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥ १३६ ॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं पाण्डुरोगं वर्णभङ्गं स्वरक्षयम् ॥ १३७ ॥

मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलञ्च नाशयेत्।
एतद्राज्ञां प्रदातव्यं बह्वन्तःपुरचारिणाम्॥ १३८ ॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम्।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम्॥ १३९ ॥
श्रेष्ठं बलकरं धन्यं हृद्यं वृष्यं रसायनम्।
ओजस्तेजस्करं स्वर्य मायुष्यं प्राणवर्द्धनम्॥ १४० ॥
संवृंहयति शुष्कांश्च पुरुषान् दुर्बलेन्द्रियान्।
सर्वरोगविनिर्मुक्त स्तोयसिक्तो यथा द्रुमः।
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम्॥ १४१ ॥

इति कामदेवघृतम्।

अनन्ता शारिवा पद्मं सलोध्रं नीलमुत्पलम्।
कल्कैरेतैः पचेत्सर्पिः सक्षीरं नावनं परम्॥ १४२ ॥
रक्तपित्तं प्रशमयेन्नारीणां प्रदरं तथा॥ १४३ ॥

इत्यनन्ताद्यं घृतम्।

हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्धगे।
वासाघृतं शतावर्य्या सिद्धं वा परमं हितम्॥ १४४ ॥
दूर्वामधूकमञ्जिष्ठा द्राक्षेक्षुरसचन्दनैः।
शारिवाद्वयनक्ताह्वै स्तैलप्रस्थं विपाचयेत्॥ १४५ ॥
क्षीरं चतुर्गुणं दत्त्वा सिद्धमभ्यञ्जने हितम्।
रक्तपित्तहरं ह्येत द्बल्यं वातघ्नमुत्तमम्।
दूर्वातैलमितिख्यातं शशिवर्णकरं महत्॥ १४६ ॥

इति दूर्वाद्यं तैलम्।

मधूकं मधुकं द्राक्षा त्वक्क्षीरी पिप्पली तथा।
त्रिजातस्य त्रयः कर्षाः शर्करायाः पलद्वयम्॥ १४७ ॥
द्राक्षामधुकखर्जूरं पलांशं श्लक्ष्णचूर्णितम्।
मधुना गुटिका बद्धाः घ्नन्तीह पित्तशोणितम्॥ १४८ ॥

कासश्वासारुचिच्छर्दिं मूर्च्छाहिक्कामदभ्रमान्।
क्षतक्षयं स्वरभ्रंशं प्लीहानं दीर्घमारुतान्॥ १४९॥
रक्तनिष्ठीवहृत्पार्श्वं रुक्‌पिपासाज्वरानपि।

इति मधुकाद्या गुटिका।

वृद्धं पुरातनं वापि कुष्माण्डं कठिनं दृढ़म्।
त्वक्‌सिराभिर्विनिर्मुक्तं मन्त्रबीजैर्विवर्जितम्॥ १५०॥
स्विन्नं सुपिष्टं दृषदि वस्त्रेणैव तु पीड़ितम्।
विशुष्कमातपे किञ्चिद् गृह्णीयात्तु तुलां ततः॥ १५१॥
औदुम्बरे कटाहे तु पचेत् प्रस्थं तु सर्पिषः।
कृत्वा क्षौद्रनिभं तस्मिन् क्षिपेत् खण्डशतं भिषक्॥१५२॥
कुष्माण्डपीड़नात् तोयं तेनैव विपचेत्पुनः।
मुक्तसर्पिर्यदा पश्येत्तदा पक्वं विनिर्दिशेत्॥ १५३॥
सुस्विन्नपाके निष्पन्ने सर्पिरर्द्धं क्षिपेन्मधु।
कणापलद्वयं चूर्णं जीरकञ्च सनागरम्॥ १५४॥
त्रिसुगन्धं सधन्याकं मरिचं शुक्तिपाणिकम्।
खादेदग्निबलापेक्षी पथ्यभुञ्जानया नरः॥ १५५॥
कासं श्वासं क्षतक्षीणं यक्ष्माणं हृदये रुजम्।
रक्तपित्तं ज्वरं दाहं तृट्‌छर्दिञ्च विमुञ्चति॥ १५६॥
वैस्वर्य्यं पीनसं कार्श्यं जीमूतमिव मारुतः।

इति खण्डकुष्माण्डकम्।

कुष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत्तप्ते घृतप्रस्थे शनैस्ताम्रमये कटे॥ १५७॥
यदा मधुनिभः पाक स्तदा खण्डशतं न्यसेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च।
त्वगेलापत्रमरिचधन्यकानां पलार्द्धकम्॥ १५८॥
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेत् मुहुः।

तत् पक्कं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम् ॥ १५९ ॥
तद्यथाऽग्निबलं खादेद्रक्तपित्ती क्षतक्षयी ।
कासश्वासतमश्छर्दि तृष्णाज्वरनिपीड़ितः ॥ १६० ॥
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ।
उरःसन्धानकरणं बृंहणं स्वरबोधनम् ॥ १६१ ॥
अश्विभ्यां निर्मितं श्रेष्ठं कुष्माण्डकरसायनम् ।

इति खण्डकुष्माण्डकः ।

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः ।
पक्कं पलशतं खण्डं वासाक्काथाढ़के पचेत् ॥ १६२ ॥
शुभाधात्रीघनैर्भार्गी त्रिसुगन्धैश्च कर्षिकैः ।
शैलेयविश्वधन्याकमरिचैश्च पलांशकैः ॥ १६३ ॥
पिप्पलीकुड़वञ्चैव मधुमानीं प्रदापयेत् ।
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ १६४ ॥
युक्तसर्पिषि कुष्माण्डे पाके बन्धेनुमुद्रया ॥ १६५ ॥

इति वासाखण्डकुष्माण्डः ।

कुष्माण्डकविधानेन शूरणः परिकीर्त्तितः ।
अर्शसां मूढ़वातानां मन्दाग्नीनां विशेषतः ॥ १६६ ॥

इति शूरणपाकः ।

क्षीरमिक्षुरसं यूषं पञ्चमूलीकषायजम् ।
अनुपानं प्रयोक्तव्यं खण्डकुष्माण्डकादिषु ॥ १६७ ॥
तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढ़कं भिषक् ॥ १६८ ॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धाच्छतं तथा ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥१६९॥
कुड़वं पलमात्रन्तु चातुर्जातन्तु चूर्णितम् ।

च्छिन्ना विलोड़ितं खादेत् रक्तपित्ती यथानलम् ॥ १७० ॥
कासश्वासगृहीतश्च यक्ष्मणा च प्रपीड़ितः ॥ १७१ ॥

इति वासाखण्डः ।

वासाकुटजकुष्माण्ड शतपत्रा सहामृता ।
नित्यमार्द्राः प्रयोक्तव्या मानतो द्विगुणा मताः ॥ १७२ ॥
क्षीरं चतुर्गुणं लेहाद् घृतं द्विगुणमुत्तमम् ।
चूर्णपादश्च वैड़ङ्गं दद्यान्मधुसिते समे ॥ १७३ ॥
एकीकृत्य पचेल्लेहं खादेदग्निबलं यथा ।
रक्तपित्तं जयत्युग्रं खण्डखाद्यं रसं स्मृतम् ॥ १७४ ॥

इति शर्करासमं लेहम् ।

अमृता त्रिवृता दन्ती श्रावणी खदिरो वृषः ।
चित्रको भृङ्गराजश्च कोकिलाक्षः सपुष्करः ॥ १७५ ॥
पुनर्नवाबलाकाशाः शिग्रुमोरटदारकाः ।
स्नुहीरविरसो दर्भः कुशास्थि सह पीवरी ॥ १७६ ॥
गवाक्षीवरुणः कन्दश्चविका तालमूलिका ।
नागबलाकणामूलं कुष्ठं ब्राह्मणयष्टिका ॥ १७७ ॥
पलोन्मितानि सर्वाणि जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमुपकल्पयेत् ॥ १७८ ॥
त्रिफलायास्तथा प्रस्थं जलाष्टगुणपाचितम् ।
तस्मादष्टावशेषस्तु कषायः सुपरिस्रुतः ॥ १७९ ॥
माक्षिकेण हतश्चापि पुटितश्च यथाविधि ।
आयसं चूर्णितं पूतं पलं षोड़शसम्मितम् ॥ १८० ॥
पलान्यभ्रस्य चत्वारि तावन्ति गन्धकस्य च ।
द्वे पले च रसस्यापि पुटितस्य यथाविधि ॥ १८१ ॥
गुड़स्य च पलान्यष्टौ सितायाश्चाथ पैत्तिके ।
रक्तपित्तेऽथ खण्डस्य मत्स्यण्ड्या वाथ कार्षिके ॥ १८२ ॥

गुग्गुलोर्द्विपलं दत्त्वा प्रस्थार्द्धं सर्पिषस्तथा।
एवं पाकविधिज्ञस्तु पचेल्लोहं समाहितः॥ १८३॥
शीतेऽवतार्य्य मधुनः क्षिपेदष्टपलं भिषक्।
माक्षिकस्य विशुद्धस्य द्विपलं रजसः क्षिपेत्॥ १८४॥
शिलाजतोस्तथा चूर्णं पलार्द्धं सम्मितं भिषक्।
अथैषां प्रक्षिपेच्चूर्णं पलमात्रं पृथक् पृथक्॥ १८५॥
त्रिकटुत्रिफलादन्ती त्रिवृता जीरकद्वयम्।
गायत्रिसारं तालीशं धन्याकं मधुयष्टिका॥ १८६॥
शुभा रसाञ्जनं शृङ्गी चित्रकं चव्यमुस्तकम्।
चातुर्जातककङ्कोलं लवङ्गं जातिकं फलम्॥ १८७॥
द्राक्षाखर्जूरकं चूर्णं पलार्द्धं सम्मितं भिषक्।
एषः लोहवरः श्रीमान् सर्वव्याधिप्रणाशनः॥ १८८॥
यत्र यत्र प्रयुञ्जीत तत्तदाशु विनाशयेत्।
रक्तपित्तेऽम्लपित्ते च क्षये कुष्ठे ज्वरेऽरुचौ॥ १८९॥
दुर्नाम्नि चोदरे शूले ग्रहण्याञ्चामवातके।
वातरक्ते मूत्रकृच्छ्रे प्रमेहे शर्करागदे॥ १९०॥
अस्योपयोगान्मनुजस्तारुण्यमधिगच्छति।
ब्रह्मचर्य्येण कुर्वीत प्लुतं माक्षिकसर्पिषा॥ १९१॥
माषकं रक्तिकावृद्ध्या यावदष्टौ च माषकाः।
वर्द्धयेद् द्विदलं सूपं मांसं चानूपसम्भवम्॥ १९२॥
ककारपूर्वकं सर्वं प्रयत्नेन विवर्जयेत्।
अमृताख्यो वरो लोहः सर्वत्रैवोपयुज्यते॥ १९३॥
अनेन जन्तवः स्वस्था नीरुजः सन्ति नान्यथा।

इति अमृताख्यं लोहरसायनम्।

शतावरीछिन्नरुहा वृषमुण्डतिका बला।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा १९४॥

भार्गीपुष्करमूलञ्च पृथक् पञ्चपलानि तु।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्॥ १९५॥
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य च।
पलद्वादशं देयं रुक्मलोहस्य चूर्णितम्॥ १९६॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः।
पचेत्ताम्रमये पात्रे गुड़ादेः पाकवद्यथा॥ १९७॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्।
शृङ्गं विड़ङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम्॥ १९८॥
त्रिफलाधान्यकं पत्रं द्वयं मरिचकेशरम्।
चूर्णं दत्त्वा सुमथितं स्निग्धभाण्डे निधापयेत्॥ १९९॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः॥ २००॥
गुरुवृष्यान्नपानानि स्निग्धं मांसादि वृंहणम्।
रक्तपित्तं प्रदुष्टञ्च क्षयं कासं विशेषतः॥ २०१॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा॥ २०२॥
आनाहं रक्तस्रावञ्च अम्लपित्तं निहन्ति च।
चक्षुष्यं वृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम्॥ २०३॥
आरोग्यं पुत्रदं श्रेष्ठं कायाऽग्निबलवर्द्धनम्।
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्त्तितम्॥ २०४॥
छागं पारावतं मांसं तित्तिरिक्रकराः शशाः।
कुलिङ्गाः कृष्णसारा ये तेषां मांसानि योजयेत्॥ २०५॥
नारिकेरपयः पानं सुनिषन्नकवास्तुकम्।
शुष्कमूलकजीराख्यं पटोलं वृहतीफलम्॥ २०६॥
फलं वार्त्ताकुपक्वाम्रं खर्जूरं स्वादु दाड़िमम्।
ककारपूर्वकं यच्च मांसं चानूपसम्भवम्॥ २०७॥

वर्जनीयं विशेषेण खण्डकाद्यं समग्रता।

इति खण्डखाद्यो लेहः।

यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षीणक्षतहितं च यत्॥ २०८॥
शीतावगाहसेकाद्याः प्रशस्ता रक्तपित्तिनाम्।
दाड़िमामलकं विद्वानम्लसात्म्याय दापयेत्॥ २०९॥
शालिषष्टिकनीवार चणमुद्गमसूरकाः।
श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥ २१०॥
पटोलनिम्बवेत्राग्र तण्डुलीयादयो हिताः।
पारावतकपोतांश्च लावान् रक्ताक्षवर्णकान्॥ २११॥
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान्।
रक्तपित्तहरान् विद्याद्रसांस्त्वेषां प्रयोजयेत्।
ईषदम्लाननम्लांश्च घृतभृष्टान् सशर्करान्॥ २१२॥
सामान्यो हितयोगेषु द्रव्यशक्तिं समीक्ष्य हि।
प्रयोज्यो रक्तपित्तादौ योगो वातादिजे गदे॥ २१२॥

इति वङ्गसेनसङ्कलितः रक्तपित्तनिदानचिकित्साधिकारः समाप्तः।

---

## अथ राजयक्ष्मनिदानमाह।

वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात्।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्॥ १॥
कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु।
अतिव्यवायिनो वापि क्षीणे रेतस्यऽनन्तराः।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः॥ २॥
श्वासाङ्गसादकफसंस्रवतालुशोष-
वम्यग्निसादमदपीनसकासनिद्राः।

शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ३ ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च।
तं वाहयन्ति सनदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून् पवनधूमदवार्दितांश्च ॥ ४ ॥
अंसपार्श्वाभितापश्च सन्तापः करपादयोः।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मिणः ॥ ५ ॥
कासो ज्वरः पार्श्वशूलं स्वरभेदो महारुचिः।
अग्निमान्द्यं विजानीयाल्लक्षणं राजयक्ष्मणः ॥ ६ ॥
स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ ७ ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च।
कासः कण्ठस्य चोद्ध्वंसि विज्ञेयः कफकोपतः ॥ ८ ॥
भक्तद्वेषो ज्वरः कासः श्वासः शोणितदर्शनम्।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥ ९ ॥
एकादशभिरेभिर्वा षड्भिर्वापि समन्वितम्।
कासातिसारपार्श्वार्त्ति स्वरभेदाऽरुचिज्वरैः ॥ १० ॥
त्रिभिर्वा पीड़ितं लिङ्गैः ज्वरकासाऽसृगामयैः।
जह्याच्छोषार्दितं जन्तुं स्वमिच्छन् विपुलं यशः ॥ ११ ॥
सर्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षयैः।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १२ ॥
महाशनं क्षीयमाण मतिसारप्रपीड़ितम्।
शूलमुष्कोदरञ्चैव यक्ष्मिणं परिवर्जयेत् ॥ १३ ॥
शुक्लाक्षमन्नद्वेष्टार मूर्द्धश्वासनिपीड़ितम्।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ १४ ॥

परं दिनसहस्रन्तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीड़ितः ॥ १५ ॥
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥ १६ ॥
व्यवायशोकवार्द्धक्यव्यायामाऽध्वप्रशोषितान् ।
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥ १७ ॥
व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथा पूर्वं क्षीयन्ते चास्य धातवः ॥ १८ ॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥ १९ ॥
जराशोषी कृशो मन्दो नष्टबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः ॥ २० ॥
ष्ठीवति श्लेष्मणा हीनो गौरवारुचिपीड़ितः ।
संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥ २१ ॥
अध्वशोषी च स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥ २२ ॥
व्यायामशोषी भूयिष्ठ मेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥ २३ ॥
रक्तक्षयाद्वेदनाभि स्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषः स चासाध्यतमः स्मृतः ॥ २४ ॥

अथ चिकित्सामाह ।

व्यवायशोषिणां क्षीररसमांसाज्यभोजनैः ।
सकलैर्मधुरैर्हृद्यैः जीवनीयैरुपाचरेत् ॥ २५ ॥
हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः ।
दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत् ॥ २६ ॥
आस्यासुखैर्दिवास्वप्न शीतैर्मधुरबृंहणैः ।
तक्रमांसरसाहारै रध्वशोषिणमाचरेत् ॥ २७ ॥

व्रणशोषं जयेत् स्निग्धैर्दीपनैः स्वादुशीतलैः।
ईषदम्लैरनम्लैर्वा यूषमांसरसादिभिः॥ २८॥
व्यायामशोषिणं स्निग्धैः क्षतक्षयहितैर्हिमैः।
उपाचरेज्जीवनीयैर्विधिना श्लेष्मिकेण तु॥ २९॥
बलिनो बहुदोषस्य पञ्चकर्म्माणि कारयेत्।
यक्ष्मिणः क्षीणदेहस्य तत्कृतं स्याद्विषोपमम्॥ ३०॥
शुक्रायत्तं बलं पुंसां मलायत्तञ्च जीवितम्।
अतो विशेषात् संरक्षेद् यक्ष्मिणो मलरेतसी॥ ३१॥
शालिषष्टिकगोधूम यवमुद्गादयो हिताः।
मद्यानि जाङ्गलाः पक्षिमृगाः पथ्या विशुष्यताम्॥ ३२॥
मूलकानां कुलत्थानां यूषैर्वा सूपसंस्कृतैः।
सपिप्पलीकं सयवं सकुलत्थं सनागरम्॥ ३३॥
दाड़िमामलकोपेतं स्निग्धमाजं रसं पिबेत्।
येन षड्विनिवर्त्तन्ते विकाराः पीनसादयः॥ ३४॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम्।
पादस्थं संस्कृतं चाज्यं षड़ङ्गो यूष उच्यते॥ ३५॥

इति षड़ङ्गयूषः।

धन्याकं पिप्पली विश्व दशमूलीजलं पिबेत्।
पार्श्वशूलज्वरश्वास पीनसादिनिवृत्तये॥ ३६॥
अश्वगन्धामृता भार्गी दशमूलीवचावृषा।
पुष्करातिविषा घ्नन्ति क्षयं क्षीररसाशिनः॥ ३७॥
कपिमांसं समादाय श्लक्ष्णचूर्णन्तु कारयेत्।
तत्पिबेत् क्षीरसंयुक्तं क्षयरोगहरं परम्॥ ३८॥
छारिणं छागमांसन्तु श्लक्ष्णचूर्णीकृतं शुभम्।
अजाक्षीरेण पातव्यं क्षयव्याधिविनाशनम्॥ ३९॥
दशमूलवचारास्ना पुष्करसुरदारुनागरैः क्वथितम्।

पेयं पार्श्वशिरोरुक् क्षयकासादिशान्तये सलिलम् ॥ ४० ॥
ककुभत्वङ्नागबला वानरिबीजानि चूर्णितं पयसि ।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ४१ ॥

स्थिरा पुनर्नवैरण्ड वासर्षभाः सजीरकाः ।
श्वदंष्ट्राभीरुलाङ्गुली विदारी हंसपादिका ॥ ४२ ॥
बृहत्यौ वृश्चिकाली च द्वे मेदे मर्कटी तथा ।
शोषगुल्मानिलश्वास कासपित्तहरो गणः ॥ ४३ ॥
द्विपञ्चमूलीमगधा धान्यनागरजं जलम् ।
चातुर्जातकसंयुक्तं पिबेन्नित्यं क्षयातुरः ।
कासज्वरादिशमनं बलपुष्टिविवर्द्धनम् ॥ ४४ ॥

समूलपत्रच्छदपल्लवाया रसः प्रयोज्यो मदयन्तिकायाः ।
मासोपयोगेन समस्तलिङ्गं यक्ष्माणमुग्रं हरति प्रसह्य ॥ ४५ ॥

छागमांसं पयः छागं छागं सर्पिः सनागरम् ।
छागोपसेवाशयनं छागमध्ये तु यक्ष्मनुत् ॥ ४६ ॥
कुष्माण्डकफलोत्थेन रसेन परिपेषितम् ।
लाक्षाकर्षद्वयं पीत्वा जयेद्रक्तक्षयं नरः ॥ ४७ ॥
व्योषं शतावरीचीणि फलानि द्वे बले तथा ।
सर्वामयहरो योगः सेव्यो लोहरजोऽन्वितः ॥ ४८ ॥
एतदुरःक्षतं हन्ति कण्ठजां विविधां रुजम् ।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम् ॥ ४९ ॥
मधुनाढ्या विडङ्गाश्म जतुलोहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिनः ॥ ५० ॥
चव्यव्योषविडङ्गानि चूर्णं कृत्वा लिहेन्नरः ।
सर्पिर्मधुभ्यां मुच्येत क्षयरोगान्न संशयः ॥ ५१ ॥
दिनकरदीधितिशोषित पारावतमांसमनुदिनं नियतम् ।
यो लेढ़िमधुघृताभ्यां स जयति यक्ष्माणमत्युग्रम् ॥ ५२ ॥

कृष्णाद्राक्षासितालेह: क्षयहा क्षौद्रतैलवान्।
मधुसर्पिर्युतो वाश्वगन्धा कृष्णासितोद्भव: ॥ ५३ ॥
शर्करामधुसंयुक्तं नवनीतं लिहेत् क्षयी।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥ ५४ ॥
शतपुष्पा नतं कुष्ठं मधुकं देवदारु च।
पिष्ट्वा लेप: ससर्पिष्क: पृष्ठपार्श्वांशरुक्षु च ॥ ५५ ॥
चूर्णं काकुभमिष्टं वासकरसभावितं बहून् वारान्।
मधुघृतसितोपलाभिर्लेह्यं क्षयकासरक्तपित्तहरम् ॥ ५६ ॥
जीवन्ती शतवीजा च विकसा सपुनर्नवा।
अश्वगन्धाभयाभार्गी तर्कारी मधुकं बला ॥ ५७ ॥
विदारीसर्षपा कुष्ठं तण्डुलीयातसीफलम्।
माषास्तिलाश्च किण्वञ्च सर्वमेकत्र चूर्णयेत् ॥ ५८ ॥
यवचूर्णञ्च द्विगुणं दध्ना युक्तं समाक्षिकम्।
एतदुद्वर्त्तनं कार्य्यं पुष्टिवर्णबलप्रदम् ॥ ५९ ॥
पुष्टये शोषिणां कार्य्यमभ्यङ्गोद्वर्त्तनादिकम्।

इति जीवन्त्याद्युद्वर्त्तनम्।

पिबेन्नागबलामूलं सार्द्धं कर्षं विवर्द्धितम्।
पलं क्षीरयुतं मासं क्षीरवर्त्तीरनन्नभुक् ॥ ६० ॥
एष प्रयोग: पुष्ट्यायुर्बलारोग्यकर: पर: ॥ ६१ ॥
सितोपलातुगाक्षीरी पिप्पली बहुला त्वच:।
अन्त्यादूर्द्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ ६२ ॥
चूर्णितं प्राशयेदेतच्छ्वासकासज्वरापहम्।
पार्श्वशूलञ्च मन्दाग्निं सुप्तजिह्वामरोचकम्।
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे ॥ ६३ ॥

इति सितोपलादिलेह:।

तालीसपत्रं मरिचं नागरं पिप्पली शुभा।

यथोत्तरं भागवृद्ध्या त्वगेला चार्द्धभागिके ॥ ६४ ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥ ६५ ॥
हृत्पाण्डु ग्रहणीदोषप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढ़वातानुलोमनम् ॥ ६६ ॥
कल्पयेद् गुटिकाञ्चैव चूर्णं पक्त्वा सितोत्पलम् ।
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृता ॥ ६७ ॥

इति तालीसादिचूर्णगुटिका ।

तालीशं चित्रकं व्योषं दाड़िमं तिन्तिड़ीयकम् ।
एतेषां पलिकान् भागान् दीप्यको गजपिप्पली ॥ ६८ ॥
यवानी शतभेद्यञ्च क्रमिघ्नं ग्रन्थिकं तथा ।
चव्यञ्च केसरञ्चैव हपुषाजाज्यधान्यकम् ॥ ६९ ॥
जातीफलं लवङ्गञ्च त्रिसुगन्धं कणा शुभा ।
एतेषां कर्षमेकन्तु द्विगुणा शर्करा भवेत् ॥ ७० ॥
पीनसं राजयक्ष्माणं हृद्रोगं वातपैत्तिकम् ।
मूत्रकृच्छ्रान्नेत्ररोगान् पाण्डुरोगं हलीमकम् ॥ ७१ ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव ह्येकादशगलग्रहान् ॥ ७२ ॥
ज्वरांच्छूलानि चार्शांसि भगन्दरांश्च शोषकान् ।
वैस्वर्य्यहननञ्चैव ऊरुस्तम्भं हनुग्रहम् ॥ ७३ ॥
महातालीशमित्येतत् सर्वान् व्याधीन् व्यपोहति ॥ ७४ ॥

इति महातालीशादिचूर्णम् ।

तालीशमरिचनागर पिप्पलीतन्त्र लत्रुटिफलत्वचः ।
जातिफलमृणालं त्वक्चीरीमुस्ततुल्यांशम् ॥ ७५ ॥
चूर्णं त्रिगुणसितोत्पल मेतद्रुच्यं प्रदीपनं हृद्यम् ।
ज्वररक्तपित्तकास श्वासक्षयगुल्मशूलघ्नम् ॥ ७६ ॥

क्षय्यतिसारग्रहणी हृद्रोगान् मूढ़मारुतं दाहम्।
करचरणादिषु शमयति पाण्डुगदं कण्ठरोगञ्च ॥ ७७ ॥

इति तालीशाद्यं चूर्णम्।

कर्पूरचोचकं कोल जाजीफलदलैः समैः।
लवङ्गमांसीमरिचैः कृष्णाशुण्ठीविवर्द्धितैः ॥ ७८ ॥
चूर्णं सिता समं हृद्यं रोचनं क्षयकासजित्।
वैस्वर्य्यश्वासगुल्मार्शः छर्दिकण्ठामयापहम् ॥ ७९ ॥
प्रयुक्तं चान्नपानेषु भेषजद्वेषिणां हितम् ॥ ८० ॥

इति कर्पूराद्यं चूर्णम्।

जातिफलं विड़ङ्गानि चित्रकं तगरं तिलाः।
तालीशं चन्दनं शुण्ठी लवङ्गं चोपकुञ्चिका ॥ ८१ ॥
कर्पूरं चाभया धात्री मरिचं पिप्पलीतुगा।
एषामक्षसमा भागाश्चातुर्जातकसंयुताः ॥ ८२ ॥
पलानि सप्तमङ्गायाः शर्करा सम योजिताः।
जयेत्कासं क्षयं श्वासं ग्रहणीमग्निमार्दवम् ॥ ८३ ॥
वातश्लेष्मोद्भवांश्चान्यान् प्रतिश्यायानरोचकान्।
एतानेव रुजो हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ८४ ॥

इति जातिफलादिचूर्णम्।

शृङ्गार्जुनाश्वगन्ध नागबलापुष्कराह्वयाछिन्नरुहाः।
तालीसादिसमेता लेहा मधुसर्पिर्भ्यां यक्ष्महराः ॥ ८५ ॥

शृङ्गाद्यं चूर्णम्।

यवानीतिन्तिड़ीकञ्च नागरञ्चाम्लवेतसम्।
दाड़िमं वदरञ्चाम्लं कार्षिकानुपकल्पयेत् ॥ ८६ ॥
धान्यसौवर्चलाजाजी वराङ्गं चार्द्धकर्षिकम्।
पिप्पलीनां पलञ्चैकं द्वे पले मरिचस्य च ॥ ८७ ॥
शर्करायाश्च चत्वारो पलान्येकत्र चूर्णयेत्।

जिह्वासंशोधनं हृद्यं तच्चूर्णं भक्तरोचकम् ॥ ८८ ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविबन्धनुत् ॥ ८९ ॥

इति यवान्याद्यं चूर्णम् ।

सूक्ष्मैलाकेसरं त्वक् च पत्रं तालीशजं तुगा ।
पृथ्विका दाडिमं धान्यं जीरकञ्च द्विकार्षिकम् ॥ ९० ॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरम् ।
मरिचं दीप्यकञ्चैवं वृक्षाम्लं चाम्लवेतसम् ॥ ९१ ॥
अजमोदाजगन्धा च दधित्थञ्चेति कार्षिकम् ।
प्रदेयमिह शुद्धायाः शर्करायाश्चतुष्पलम् ॥ ९२ ॥
चूर्णमस्ति प्रदातव्यं परमं रुचिवर्द्धनम् ।
प्लीहकासमथार्शांसि श्वासं शूलं ज्वरं वमिम् ॥ ९३ ॥
निहन्ति दीपयत्यग्निं बलवर्णप्रदं परम् ।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥ ९४ ॥

इति सूक्ष्मैलाद्यं चूर्णम् ।

गुडूची शारिवा रास्ना पञ्चमूलीबलावृषम् ।
समूलपत्रशाखन्तु पृथग्दशपलानि च ॥ ९५ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
पिप्पलीचन्दनं लोध्रं ह्रीवेरोशीरपर्पटम् ॥ ९६ ॥
पाठाभूनिम्बयष्ट्याह्व त्रायन्ती नीलमुत्पलम् ।
मुस्तकेन्द्रयवाः शुण्ठी कटुकं सदुरालभम् ॥ ९७ ॥
त्वक्पत्रं वृषमूलञ्च कल्कैरर्द्धपलैर्भिषक् ।
अजाक्षीरेण तत्तुल्यं घृतप्रस्थं विपाचयेत् ॥ ९८ ॥
हन्ति यक्ष्माणमत्युग्रं रक्तपित्तं त्रिदोषजम् ।
श्वासकासक्षतक्षीण दाहशोथरुजापहम् ॥ ९९ ॥

इत्यमृताद्यं घृतम् ।

वासामृतारिष्टनिदिग्धिकानां रसेऽश्वगन्धेभवलार्जुनानाम्।
सिद्धं सपञ्चोषणपुष्कराणां कल्कैर्घृतं छागपयस्सु शोषे॥१००॥

इति वासाद्यं घृतम्।

बलाविदारिगन्धाभ्यां विदार्य्यामलकेन च।
सिद्धं सलवणं सर्पिर्नस्यं पेयमनुत्तमम्॥ १०१॥

इति बलाद्यं घृतम्।

घृतं खर्जूरमृद्वीका मधुकैः सपरूषकैः।
सपिप्पलीकैर्वैस्वर्य्यकासश्वासज्वरापहम्॥ १०२॥

इति खर्जूराद्यं घृतम्।

एलाजमोदामलकाभयाक्ष गायत्रिनिम्बाशनसालसारान्।
विड़ङ्गभल्लातकचित्रकञ्च कटुत्रिकाम्भोदसुराष्ट्रिकांस्तु॥१०३॥
पक्का जले तेन पचेत्तु सर्पिस्तस्मिंस्तु सिद्धे त्ववतारिते च।
त्रिंशत्पलान्यत्र सितोपलाया दद्यात्तुगाक्षीरिपलानि षट् च १०४
प्रस्थे घृतस्य द्विगुणञ्च दद्यात् क्षौद्रं ततो मन्थकृतं विदध्यात्।
पलं पलं प्रातरतो लिहेच्च पश्चात्पिबेत् क्षीरमतन्द्रितश्च॥१०५॥
एतद्विधेयं परमं पवित्रं दोषघ्नमायुष्यतमं तथैव।
यक्ष्माणमाशु व्यपहन्ति नूनं पाण्ड्वामयञ्चैव भगन्दरञ्च॥ १०६॥
न चात्र किञ्चित्परिवर्जनीयं रसायनञ्चैतदुपास्यमानम्।

इति एलामन्थघृतम्। अत्र चतुर्गुणक्वाथेन कल्कमिदं पाच्यम्।

दशमूलीशृतात् क्षीरात् सर्पि र्यदुदियान्नवम्।
सपिप्पलीकं सक्षौद्रं घृतं स्वरविशोधनम्॥ १०७॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम्॥ १०८॥

इति दशमूलीशृतं घृतम्।

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम्॥

कल्कोऽत्र पादिकः कार्य्यः क्षीरञ्चापि चतुर्गुणम् ॥ १०९ ॥

इति षड़ङ्गघृतम् ।

जीवन्ती मधुकं द्राक्षा फलानि कुटजस्य च ।
शुण्ठीपुष्करमूलञ्च व्याघ्रीगोक्षुरकं बला ॥ ११० ॥
नीलोत्पलं चामलकी त्रायमाणा दुरालभा ।
पिप्पली च समञ्जिष्ठा घृतं वैद्यो विपाचयेत् ॥ १११ ॥
एतद् व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्रं व्यपोहति ॥ ११२ ॥

इति जीवन्त्याद्यं घृतम् ।

पिप्पलीगुड़संयुक्तं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ ११३ ॥

इति पिप्पलीघृतम् ।

यष्टीबलागुड़ूच्यल्प पञ्चमूलतुलां पचेत् ।
द्रोणेऽपामष्टभागस्थे तत्र पात्रं पचेद् घृतम् ॥ ११४ ॥
धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्मणे ।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ॥ ११५ ॥
प्रवलं राजयक्ष्माण मुन्मूलयति शीलितम् ।

इति पाराशरघृतम् ।

श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीं बलाम् ।
भागानेतान्मितान् कृत्वा पलं पर्पटकस्य च ॥ ११६ ॥
पचेदष्टगुणे तोये चतुर्भागावशेषिते ।
रसे तु पूते द्रव्याणामेषां कल्कं समाचरेत् ।
शठीपुष्करमूलानां पिप्पलीत्रायमाणयोः ॥ ११७ ॥
आमलक्याः किरातस्य तिक्तस्य कुटजस्य च ।
फलानां शारिवायाश्च सुपिष्टानक्षसम्मितान् ॥ ११८ ॥
तैः साधयेद् घृतप्रस्थं क्षीरं द्विगुणितं भिषक् ।

ज्वरं दाहं भ्रमं शोष मंशपार्श्वशिरोरुजम् ॥ ११९ ॥
तृष्णाच्छर्दिमतीसार मेतत्सर्पिर्व्यपोहति।
पचेदष्टगुणेनात्र घृतं ज्ञेयं चिकित्सकैः ॥ १२० ॥

इति श्वदंष्ट्राद्यं घृतम्।

छागमांसं तुलां गृह्य साधयेदुल्वणेऽम्भसि।
पादशेषेण तेनैव सर्पिः प्रस्थं विपाचयेत् ॥ १२१ ॥
ऋद्धिर्वृद्धिश्च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोलीकल्कैः पृथक् पलोन्मितैः॥१२२॥
सम्यक् सिद्धे चावतार्थ्य शीते तस्मिन् प्रदापयेत्।
शर्करायाः पलान्यष्टौ मधुनः कुड़वं क्षिपेत् ॥ १२३ ॥
पलं पलं लिहेत्प्रातर्यक्ष्माणं हन्ति दुस्तरम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम् ॥ १२४ ॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदुस्तरम्।
बलमांसकरं वृष्यमग्निसन्दीपनं परम् ॥ १२५ ॥
स्त्रीषु चतुष्पदे श्रेष्ठं पुंसु वै विहगे मतम्।

इति छागलाद्यं घृतम्।

द्विपञ्चमूलस्य पचेत्कषाये प्रस्थद्वयं मांसरसस्य चैकम्।
कल्कं बलायाः सुनियोज्य गर्भे सिद्धं पयः प्रस्थयुतं घृतञ्च॥१२६॥
सर्वाभिघातोत्थितयक्ष्मशूल क्षतक्षयोत्कासहरं प्रदिष्टम् ॥१२७॥

इति बलागर्भं घृतम्।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठा सलिलं दारु कट्फलं पूतिकेशरम् ॥ १२८ ॥
पत्रैले च मुरामांसी कङ्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥ १२९ ॥
त्वग्रेणु नलिका चैभिस्तैलं मस्तुचतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥ १३० ॥

अपस्मारज्वरोन्माद कृत्या लक्ष्मीविनाशनम्।
आयुः पुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥ १३१ ॥

इति चन्दनाद्यं तैलम्।

क्षीरे चतुर्गुणे तैलं प्रस्थं सिद्धं तिलोद्भवम्।
शतशः पाचितं यष्टी पलकल्केन यत्नतः ॥ १३२ ॥
पाननस्यादिभिर्यक्ष्महृद्गुदामयपाण्डुजित्।
ऊर्द्ध्वजत्रुगुदोन्माद रक्तपित्तविसर्पनुत्। १३३ ॥

इति शतपाकतैलम्।

ज्वरसन्तापदौर्बल्ये लाक्षातैलं प्रयोजयेत्।
बालरोगाधिकारोक्तं पारम्पर्य्योपदेशतः ॥ १३४ ॥
वासकस्य रसप्रस्थं मानिका सितशर्करा।
पिप्पलीद्विपलं सर्पिर्दत्त्वा मृद्वग्निना पचेत् ॥ १३५ ॥
लेहीभूते ततः पश्चात् शीते क्षौद्रपलाष्टकम्।
दत्त्वावतारयेद्वैद्यो मात्रया लेहमुत्तमम् ॥ १३६ ॥
निहन्ति राजयक्ष्माणं श्वासकासञ्च दारुणम्।
पार्श्वशूलञ्च हृच्छूलं रक्तपित्तं ज्वरं तथा ॥ १३७ ॥

इति वासावलेहः।

त्वक्क्षीरीश्रावणीद्राक्षा मूर्वर्षभकजीवकैः।
वीरद्विक्षीरकाकोली बृहतीकपिकच्छुभिः ॥
खर्जूरविषमेदाभिः क्षीरपिष्टैः पलोन्मितैः ॥ १३८ ॥
धात्रीविदारीक्षुरसप्रस्थैः प्रस्थं घृतं पचेत्।
शर्करायास्तुलां शीते क्षौद्रार्द्धप्रस्थमेव च ॥ १३९ ॥
दत्त्वा सर्पिर्गुड़ान् कुर्य्यात् कासहिक्काज्वरापहान्।
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ॥ १४० ॥
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम्।

इति सर्पिर्गुड़ः।

विल्वाग्निमन्थश्योनाक काश्मर्य्यः पाटलाबला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा वृहतीद्वयम्॥ १४१॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु।
अमृता चाभया वृद्धिर्जीवकर्षभकौ शठी॥ १४२॥
मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने।
विदारीवृषमूलानि काकोली काकनासिका॥ १४३॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत्॥ १४४॥
ज्ञात्वा रसगतानेतानौषधानथ तद्रसान्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः॥ १४५॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत्॥ १४६॥
षट्पलं मधुनश्चात्र सिद्धसिते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा॥ १४७॥
पलमेकं निदध्याच्च त्वगैलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः॥ १४८॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्द्धनम्॥ १४९॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति॥ १५०॥
अस्य मात्रां प्रयुञ्जीत योऽपरुन्ध्यान्नभोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥ १५१॥
मेधां स्मृतिं कान्तिमनामयत्व मायुः प्रहर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम्॥ १५२॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य पूर्वं विभर्त्ति रूपं नवयौवनानाम्॥ १५३॥

केचिदिच्छन्ति मत्स्यण्डाः स्थाने तु शितशर्करा ।
मृदुकल्कसमः पाको भृष्टधात्र्या प्रशस्यते ॥ १५४ ॥
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ।
अयन्तु च्यवनप्राशः पित्तोद्रेके प्रशस्यते ॥ १५५ ॥
चत्वारः षड्यवाश्चास्य दीयते प्रथमं किल ।

इति च्यवनप्राशावलेहः ।

उच्चटेक्षुरसः क्षौद्रं तुगाक्षीर्य्याश्च बुद्धिमान् ।
प्रस्थं प्रस्थं पृथग्गृह्य शर्कराद्धतुलां तथा ॥ १५६ ॥
आत्मगुप्ताफलानाञ्च कुड़वं मरिचस्य च ।
त्रिसुगन्धीकृतावापं मन्थानेन विमन्थयेत् ॥ १५७ ॥
पलिकान्मोदकान् कृत्वा स्थापयेद्भाजने वरे ।
एतद्द्विकालमेकं वा खादेदग्निबलं प्रति ॥ १५८ ॥
बटकान्नियताहारी ब्रह्मचारी जितेन्द्रियः ।
स हन्याद्यक्ष्मिणः सद्य एकादशविधं क्षयम् ॥ १५९ ॥
स्वरवर्णबलौदार्य्यं तुष्टिपुष्टिविवर्द्धनम् ।
आयुष्यं पौष्टिकं चाग्र्यं भूतोपहतचेतसाम् ।
व्याकुलीकृतदेहानां वृद्धानां क्षीणरेतसाम् ॥ १६० ॥
वाजीकरणमप्येवं वन्ध्यानां पुत्रदं परम् ।
धनुः स्त्रीमद्यभाराध्वखिन्नानां बलवर्द्धनम् ॥ १६१ ॥
हृत्प्लीहग्रहणीदोष मूत्रकृच्छ्रापतन्त्रकम् ।
अपस्मारविषोन्मादनाशनं तद्रसायनम् ॥ १६२ ॥

इत्युच्चटाद्यो मोदकः ।

ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥ १६३ ॥
नित्यं स्वदेवपूजा भक्तिर्भैषज्यदेवतागुरुषु ।
छागलमांसपयोऽश्नन् जीवति यक्ष्मी चिरं धृतिमान् ॥१६४॥

उपद्रवान् सत्वरवैकृतादीन् जयेद्यथा क्षिप्र मवेक्ष्य शास्त्रम्।
त्यजेत् कुवैद्यप्रतिपादितानि बुद्धेर्विरुद्धानि च भेषजानि॥१६५॥

इति वङ्गसेनसङ्कलितः राजयक्ष्मनिदानचिकित्साधिकारः समाप्तः।

---

## अथ क्षतक्षयनिदानमाह।

धनुराऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
युद्ध्यमानस्य वलिभिः पततो विषमोच्चतः॥ १ ॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः।
शिला काष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान्॥ २ ॥
अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीं वा तरतो हयैर्वा सह धावतः॥ ३ ॥
सहसोत्पततो दूरं तूर्णं वापि प्रनृत्यतः।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा॥ ४ ॥
विक्षते वक्षसि व्याधिर्वलवान् समुदीर्य्यते॥ ५ ॥
स्त्रीषु चातिप्रसक्तस्य रूक्षस्याल्पमिताशनः।
उरोविरुध्यतेऽत्यर्थं भिद्यतेऽथ विदह्यते॥ ६ ॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते।
क्रमाद्वर्णं वलं वीर्य्यं रुचिरग्निश्च हीयते॥ ७ ॥
ज्वरो दाहो मनोदैन्यं विड्भेदोऽग्निवधावपि।
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहु॥ ८ ॥
कासमानस्य वाऽभीक्ष्णं कफः सान्द्रश्च जायते।
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसः क्षयात्॥ ९ ॥
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्॥ १० ॥
उरोरुक् शोणितच्छर्दिः काशो वैशेषिकः क्षते।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः॥ ११ ॥

क्रियाजयकरत्वाच्च क्षय इत्यभिधीयते।
संशोषणाद्रसादीनां शोष इत्युच्यते बुधैः ॥ १२ ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो वलवतो नवः।
परिसंवत्सरो याप्यः सर्वलिङ्गं विवर्जयेत् ॥ १३ ॥
भक्तद्वेषो ज्वरः श्वासः कासशोणितदर्शनम्।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥ १४ ॥
परं दिनसहस्रन्तु यदि जीवति मानवः।
सुभिषग्भिरुपक्रान्त स्तरुणः शोषपीड़ितः ॥ १५ ॥

अथ चिकित्सामाह।

प्राणरोधात् क्षयाद्वापि कोष्ठात्पूतियुतात्तथा।
क्षतोरस्यन्नपाकेन निःश्वासो वाऽतिपूतिकः ॥ १६ ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयोऽद्याच्च सशर्करम् ॥
पार्श्ववस्तिरुजि चाल्प पित्ताग्निस्तां सुरायुताम् ॥ १७ ॥
भिन्नविट्कः समुस्ताभिर्विषापाठा सवत्सका।
बलाश्वगन्धा श्रीपर्णी बहुपत्री पुनर्नवा ॥ १८ ॥
पयसा नित्यमभ्यस्ताः शमयन्ति क्षतक्षयम् ॥ १९ ॥
शर्करायवगोधूमं जीवकर्षभकौ मधु।
शृतं क्षीरानुपानञ्च लिह्यात् क्षीणः क्षतः कृशः ॥ २० ॥
इक्ष्वालिका विसग्रन्थि पद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ २१ ॥
रक्तष्ठीवी पिबेत्सिद्धं लाक्षारसपयो घृतैः।
वर्षाभूशर्करामुस्त शालितण्डुलजं रजः ॥ २२ ॥
लाक्षाचूर्णन्तु सुकृतं क्षौद्राज्येन समन्वितम्।
सकृल्लीढ़ं शमयति शोषोद्भूतां वमिं तथा ॥ २३ ॥
एलापत्रं त्वचो द्राक्षा पिप्पल्यर्द्धं पलं तथा।

सितामधुकखर्जूर मृद्वीकाश्च पलोन्मिताः॥ २४ ॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत्।
अक्षमात्रास्ततश्चैकां भक्षयेच्च दिने दिने॥ २५ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम्॥ २६ ॥
शोथप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम्।
गुटिकातर्पणीवृष्या रक्तपित्तञ्च नाशयेत्॥ २७ ॥

इत्येलाद्यागुटिका।

यष्ट्याह्वनागवलयोः क्वाथे क्षीरसमे घृतम्।
पयसापिप्पलीमांसी कल्कैः सिद्धं क्षये हितम्॥ २८ ॥

इति यष्ट्याह्वं घृतम्।

घृतं बलानागबलार्जुनाम्बु सिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलक्षतरक्तपित्तं कासानिलोत्थान् शमयत्युदीर्णान्॥२९॥

इति बलाद्यं घृतम्।

श्वदंष्ट्रोशीरमञ्जिष्ठा बलाकाश्मर्य्यकत्तृणम्।
दर्भमूलं पृश्निपर्णी बलासर्षपका स्थिरा॥ ३० ॥
पलिकान् साधयेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्तवर्षाभू मेदाजीवन्तिजीवकैः॥ ३१ ॥
शतावर्य्यादिमृद्वीका शर्कराश्रावणीवृषैः।
प्रस्थं सिद्धं घृताद्दात पित्तहृद्रोगगुल्मनुत्॥ ३२ ॥
मूत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहम्।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदम्॥ ३३ ॥

इति श्वदंष्ट्राद्यं घृतम्।

द्राक्षायाः सम्मितं प्रस्थं मधुकस्य पलाष्टकम्।
पचेत्तोयाढ़के शुद्धे पादशेषेण तेन तु॥ ३४ ॥
पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम्।
प्रदाय सर्पिषः प्रस्थं पचेत् क्षीरे चतुर्गुणे॥ ३५ ॥

सिद्धे शीते पलान्यष्टौ शर्कराया: प्रदापयेत् ।
एतद्द्राक्षाघृतं सिद्धं क्षीणक्षतसुखावहम् ॥ ३६ ॥
वातपित्तज्वरश्वास सविस्फोटहलीमकान् ।
प्रदरं रक्तपित्तञ्च हन्यान्मांसबलप्रदम् ॥ ३७ ॥

इति द्राक्षाद्यम् घृतम् ।

क्षीरे धात्रीविदारीक्षुक्षीरीणाञ्च तथा रसे ।
पचेत्समे घृतप्रस्थं मधुकैरिक्षुकान्वितैः ॥ ३८ ॥
द्राक्षादिचन्दनोशीरशर्करोत्पलपद्मकैः ।
मधूककुसुमानन्ता काश्मरीतृणसंज्ञकैः ॥ ३९ ॥
प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलां तथा ।
पलार्द्धकांश्च संचूर्ण्य त्वगेलापत्रकेसरान् ॥ ४० ॥
विनीय तस्य संलिह्यात् मात्रां नित्यं सुयन्त्रितः ॥ ४१ ॥
अमृतप्राशमित्येतदश्विभ्यां परिकीर्त्तितम् ।
क्षीरमांसाशिनां हन्ति रक्तपित्तं क्षतक्षयम् ॥ ४२ ॥
तृष्णारुचिश्वासकास छर्दिमूर्च्छाप्रमर्दनम् ।
मूत्रकृच्छ्रज्वरघ्नञ्च बलं स्त्रीरतिबर्द्धनम् ॥ ४३ ॥

इत्यमृतप्राशः ।

बलाविदारीह्रस्वा च पञ्चमूलीपुनर्नवा ।
पञ्चानां क्षीरवृक्षाणां शुङ्गाः मुष्टि शिकाः पृथक् ॥ ४४ ॥
विपाच्य सलिलद्रोणे पूते पादावशेषिते ।
पादांशे छागगोक्षीरे विदार्य्याः स्वरसे पृथक् ॥ ४५ ॥
जीवनीयैः पचेत्कल्के रक्षमात्रै घृताढ़कम् ।
सितापलानि पूते च शीते द्वात्रिंशद्दापयेत् ॥ ४६ ॥
गोधूमं पिप्पलीभार्गीं चूर्णं शृङ्गाटकस्य च ।
समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितम् ॥ ४७ ॥
स्थानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत् ।

तान् जग्ध्वा पलिकान् क्षीरं मद्यं चानुपिबेत्कफे॥ ४८॥
शोषे कासे क्षये क्षीणे श्रमस्त्रीभारकर्षिते।
रक्तनिष्ठीवने तापे पीनसे चोरसि क्षते॥ ४९॥
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः॥ ५०॥
अत्र षोड़शगुणे जले निःक्वाथ्य चतुर्भागावशिष्टक्वाथे द्विगुणं क्षीरं विदार्य्याजरसयोः प्रत्येकं द्विपञ्चाशत्पलैः पाकः।

इति सर्पिर्गुड़ः।

गोक्षीरार्द्धाढ़कं सर्पिः प्रस्थमिक्षुरसाढ़कम्।
रसं विदार्य्याः कुड़वं रसात् प्रस्थञ्च तैत्तिरात्॥ ५१॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान्।
मधूकपुष्पकुड़वं पिप्पलीकुड़वं तथा॥ ५२॥
कुड़वार्द्धं तुगाक्षीर्य्याः खर्जूराणि च विंशतिः।
पृथग्विभीतकान् पञ्च पिप्पल्यश्च चतुर्थकान्॥ ५३॥
त्रिंशत्पलानि खण्डाद्वा मधुकात्कर्षमेव च।
तथार्द्धपलिकान्यत्र जीवनीयानि दापयेत्॥ ५४॥
सिद्धेऽस्मिन् कुड़वं क्षौद्राच्छीते प्रक्षिप्य मोदकान्।
कारयेन्मरिचाजाजी पलचूर्णावचूर्णितान्॥ ५५॥
वातासृक् पित्तरोगेषु क्षतकासक्षयेषु च।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते॥ ५६॥
क्षयिदुर्वलभीरूणां पुष्टिवर्णबलार्थिनाम्।
योनिदोषक्षतस्रावदुर्वलानाञ्च योषिताम्॥ ५७॥
गर्भार्थिनीनां गर्भञ्च स्रवेद्यासां म्रियेत च।
धन्या बल्या हितास्तासां शुक्रशोणितवर्द्धनाः॥ ५८॥

इति सर्पिर्मोदकः।

यद्यच्च तर्पणं शीतमविदाहि हितं लघु।
अन्नपानं निषेव्यन्तु क्षतक्षीणे सुखार्थिभिः॥ ५९॥

शोकं स्त्रियः क्रोधमसूयताञ्च
त्यजेदुदारान् विषयान् भजेत्तु ।
तथा द्विजातींस्त्रिदशान् गुरूंश्च
वाचश्च पुण्याः शृणुयात् द्विजेभ्यः ॥ ६० ॥

इति वङ्गसेनसङ्कलितः चतक्षयनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ कासनिदानमाह ।

धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥ १ ॥
प्राणो ह्युदानानुगतः प्रदुष्टः सम्भिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात् सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥२॥
पञ्च कासाःस्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ ३ ॥
पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥
हृच्छङ्खमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलःस्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥ ५ ॥

### अथ चिकित्सामाह ।

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत् ।
सर्पिर्भिर्वस्तिभिः पेया क्षीरयूषरसादिभिः ॥ ६ ॥
वास्तुको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहात्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥ ७ ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च ।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥ ८ ॥
ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान् ।
रसैः मांसात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ ९ ॥

दशमूलीशृतः कासश्वासहिक्कारुजापहा।
यवागूर्दीपनी वृष्या वातरोगविनाशिनी ॥ १० ॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ ११ ॥
रसं कर्कटकानां वा घृतभृष्टं सनागरम्।
वातकासप्रशमनं शृङ्गीमत्स्यस्य वा पुनः ॥ १२ ॥
शठीशृङ्गीकणाभार्गी गुड़वारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥ १३ ॥
भार्गीद्राक्षाशठीशृङ्गी पिप्पलीविश्वभेषजैः।
गुड़तैलयुतो लेहो हितो मारुतकासिनाम् ॥ १४ ॥
चूर्णिता विश्वदुःस्पर्शा शृङ्गी द्राक्षा शठी सिता।
लीढ़ा तैलेन वातोत्थं कासं जयति दुस्तरम् ॥ १५ ॥
दशमूलीकषायेण भार्गीकल्कैर्घृतं पचेत्।
दध्नतित्तिरिनिर्यूहे तत्परं वातकासनुत् ॥ १६ ॥

इति दशमूलाद्यं घृतम्।

भार्गीकल्कैर्घृतं तत्क्वाथ पचेद्दध्नि चतुर्गुणे।
भार्गीरसं द्विगुणितं वातकासहरं परम् ॥ १७ ॥

इति भार्ग्यादिघृतम्।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकां मानिकांशांस्त्रीन् कुलत्थान् वदरान् यवान् १८
तुलार्द्धं राजमाषस्य पादशेषेण तेन तु।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥ १९ ॥
सिद्धं तदृशभिः कल्कैः नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥ २० ॥
पञ्चकासाञ्छिरःकम्पं शूलं वङ्क्षणयोनिजम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलं जयेत् ॥ २१ ॥

जीवकर्षभकौ मेदे काकोल्यौ मधुकं सह ।
जीवन्तीजीवनीयोऽयं मधुरो जीवनो गणः ॥ २२ ॥
सूर्प्पपर्णीं विना केचिदष्टवर्गमिमं विदुः ।
ऋद्धिवृद्धियुतं चान्ये जीवन्ती मधुकं विना ॥ २३ ॥

इति रास्नाद्यं घृतम् ।

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम् ।
शठीपुष्करमूलञ्च श्रेयसी सुरसा वचा ॥ २४ ॥
भार्गी छिन्नरुहा रास्ना कर्कटाख्या च कार्षिकान् ।
कल्कान्निदिग्धिकाङ्कस्य कषाये पलविंशतिः ॥ २५ ॥
मत्स्यण्डिकाया दत्त्वा तु सर्पिषः कुड़वं पचेत् ।
सिद्धशीते पृथक् क्षौद्र पिप्पली कुड़वान्वितम् ॥ २६ ॥
चतुष्पलं तुगाक्षीर्य्याः चूर्णितं तत्र दापयेत् ।
लेहयेत्कासहृद्रोग श्वासगुल्मनिवारणम् ॥ २७ ॥

इति कण्टकार्य्यावलेहः । [ इति वातकासनिदानम् । ]

उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः ।
पित्तेन पीतानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥२८॥
काकोली बृहती मेदा युग्मैः सवृषनागरैः ।
पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥ २९ ॥
बला द्विबृहती द्राक्षा वासाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥ ३० ॥
शठीह्रीवेरबृहती शर्करा विश्वभेषजम् ।
पक्वा रसं पिबेत्पूतं सघृतं पित्तकासनुत् ॥ ३१ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत्समधुशर्करम् ॥ ३२ ॥
द्राक्षामधुकखर्जूर पिप्पलीमरिचान्वितम् ।
पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥ ३३ ॥

मह्विष्यजाविगोक्षीर धात्रीफलरसैः समैः।
सर्पिःप्रस्थं पचेद्युक्त्या पित्तकासनिवारणम्॥ ३४॥

इति षट्प्रस्थं घृतम्।

आपोथ्य क्षीरिणां शृङ्गान् पचेत् क्षीरचतुर्गुणे।
द्राक्षाकल्के घृतं सिद्धं लिह्यात् तत्पित्तकासनुत्॥ ३५॥

इति क्षीरघृतम्।

क्षीरवृक्षाङ्कुरक्काथं पक्कं क्षीरसमं घृतम्।
पाययेत्पित्तकासघ्नं मधुना चावलेहयेत्॥ ३६॥

इति द्वितीय क्षीरघृतम्। इति पित्तकासः।

प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्त्तः कफपूर्णदेहः।
अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन॥ ३७॥

कफजे छर्दनं कार्य्यं मामि लङ्घनमेव च।
शस्तं यवान्नविकृतियूषांश्च कटुतिक्तकान्॥ ३८॥

मुद्गामलाभ्यां यवदाड़िमाभ्यां कर्कन्धुना मूलकशुण्ठकेन।
शुण्ठीकणाभ्यां सकुलत्थकेन यूषो नवाङ्गः कफरोगहर्त्ता॥३९॥

इति नवाङ्गयूषः।

शठी सातिविषा मुस्तं शृङ्गी कर्कटस्य च।
अभया शृङ्गवेरञ्च समं दृषदि पेषयेत्॥ ४०॥
हिङ्गुसैन्धवसंयुक्तं सुखोदकपरिप्लुतम्।
काले पानाय दातव्यं श्लेष्मकर्म्मनिवर्हणम्॥ ४१॥
तैलभृष्टञ्च पिप्पल्याः कल्काचं ससितोत्पलम्।
पिबेद्वा कफवातघ्नं कुलत्थं सलिलप्लुतम्॥ ४२॥
पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत्॥ ४३॥
पौष्करं कट्फलं भार्गीं विश्वपिप्पलीसाधितम्।
पिबेत् क्काथं कफोद्रेके कासश्वासे च हृद्ग्रहे॥ ४४॥

देवदारुशठीरास्ना शृङ्गीधन्वयवासकम् ।
तैलक्षौद्रयुतं लिह्याच्छ्लेष्मकासे सुदारुणे ॥ ४५ ॥
व्योषपुष्करमृद्वीका त्रिफला-शठिचित्रकैः ।
मधुतैलयुतो लेहः श्लेष्मकासनिवर्हणः ॥ ४६ ॥
समूलपत्रशाखायाः कण्टकार्य्या रसाढ़के ।
घृतप्रस्थं बलाव्योष विड़ङ्गशठिचित्रकैः ॥ ४७ ॥
सौवर्चलयवक्षार विल्वामलकपुष्करैः ।
वृश्चीक-वृहतीपथ्या-यवानीदाड़िमादिभिः ॥ ४८ ॥
द्राक्षापुनर्नवा-चव्य दुरालभाम्लवेतसैः ।
शृङ्गी तामलकी भार्गी रास्नागोक्षुरकैः पचेत् ॥ ४९ ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्टकारीघृतं सिद्धं कफकासनिषूदनम् ॥ ५० ॥

इति वृहत्कण्टकारीघृतम् ।

व्योषाजमोदचित्रक जीरकषड्ग्रन्थिकचव्यकल्कितम् ।
सर्पिः कफकासहरं वासकरससाधितं समधु ॥ ५१ ॥

इति व्योषाद्यं घृतम् ।

निर्गुण्डिपत्रस्वरसेन सिद्धं
सर्पिः कफोत्थं विनिहन्ति कासम् ॥ ५२ ॥

इति निर्गुण्डीघृतम् ।

विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत्कासं ध्रुवमास्यविधारितम् ॥ ५३ ॥

इति क्षयकासः ।

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं बलाभया ।
शुण्ठीपर्पटकं शृङ्गी सुराह्वश्च जले शृतम् ॥ ५४ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासे हिक्काज्वरेषु च ॥ ५५ ॥

इति कट्फलादिः क्वाथः ।

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमानमीषाम्।
कर्षार्द्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥५६॥
सितासमं चूर्णमिदं प्रसह्य रोगानिमांस्तु प्रबलान्निहन्ति।
कासज्वरारोचकमेहगुल्म श्वासाग्निमान्द्यग्रहणीगदेषु ॥ ५७ ॥

इति लघुलवङ्गादिसमशर्करं चूर्णम्।

सिंहास्यामृतसिंहीनां क्वाथं मधुसमायुतम्।
पिबेत्सपित्ते कफजे कासे श्वासे ज्वरे क्षये ॥ ५८ ॥
वासकः स्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ ५९ ॥
वातश्लेष्मकृते कासे तालीसाद्यं प्रयोजयेत्।
पित्तयुक्ते भवेच्छ्रेष्ठं वंशरोचनया युतम् ॥ ६० ॥
दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराक्षशठीविल्व सुरसाव्योषहिङ्गुभिः ॥ ६१ ॥
पेयानुपानं तत्पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ६२ ॥

इति दशमूलाद्यं घृतम्।

भृङ्गराजरसप्रस्थं शृङ्गवेररसं तथा।
कटुतैलस्य च प्रस्थं गोमूत्रप्रस्थसंयुतम् ॥ ६३ ॥
दशमूलकुलत्थांश्च शुष्कमूलकशिग्रुकम्।
भार्गीं च कुड़वांशानि क्वाथयेत्सलिलाढ़के ॥ ६४ ॥
पादशेषेण तेनापि कल्कं दत्त्वा विपाचयेत्।
देवदारुवचाकुष्ठं शताह्वा लवणत्रयम् ॥ ६५ ॥
हिङ्गुतुम्बुरुणी व्योषं यवानीजीरकद्वयम्।
चित्रकं पिप्पलीमूलं वरा भृङ्गरसस्तथा ॥ ६६ ॥
कट्फलं चित्रकञ्चैव समभागानि कारयेत्।
सम्यक् सिद्धञ्च विज्ञाय पाने नस्ये प्रयोजयेत् ॥ ६७ ॥

वातश्लेष्मात्मके कासे प्रतिश्यायै च पीनसे।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च।
तैलं त्विदं भृङ्गराजं कफव्याधिविनाशनम् ॥ ६८ ॥

इति भृङ्गराजतैलम्। इति वातपित्तश्लेष्माधिकारः।

अथ निदानम्।

अतिव्यवायभाराऽध्व युद्धाऽश्वगजनिग्रहैः।
रूक्षस्योरःक्षतात् वायुर्गृहीत्वा कासमावहेत् ॥ ६९ ॥
स पूर्वं कासवे शुष्कं ततः ष्ठीवेत्सशोणितम्।
कण्ठेन रुजताऽत्यर्थं विभिन्नेनैव चोरसा ॥ ७० ॥
सूचीभिरिव तीक्ष्णाभि स्तुद्यमानेन शूलिना।
दुःखस्पर्शेन शूलेन भेदपीड़ाभितापिना ॥ ७१ ॥
पर्वभेदज्वरश्वास तृष्णा वैस्वर्य्यपीड़ितः।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥ ७२ ॥

अथ चिकित्सामाह।

कासे नु क्षतजे वल्यैर्जीवनीयैर्घृतैरपि।
शमनैः पित्तकासघ्नैरन्यैश्च मधुरौषधैः ॥ ७३ ॥
यवागूं वा पिबेत्सिद्धां क्षतोरस्कः सुशीतलाम् ॥ ७४ ॥
द्राक्षेक्षुबालिकापद्म मृणालोत्पलचन्दनैः।
शृतां पेयां मधुयुतां सन्धानार्थं पिबेत् क्षती ॥ ७५ ॥
दध्निक्षुबालिकापद्ममृणालोत्पलचन्दनैः।
मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी ॥ ७६ ॥
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा।
लिह्यात्तन्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ ७७ ॥

इतीक्ष्वाद्यवलेहः।

पिप्पलीपद्मकं द्राक्षा सुपक्वं वृहतीफलम्।
घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥ ७८ ॥

मञ्जिष्ठमूर्वानतवह्निपाठाः क्षणां हरिद्रां विलिहेद्विचूर्ण्य।
क्षौद्रेण कासे क्षतजे क्षयोत्थे पिबेद् घृतं चेक्षुरसे विपक्वम् ॥७९॥
इक्ष्विक्षुबालिकापद्म मृणालोत्पलचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ८० ॥

इतीक्ष्वादिभिर्क्षीरपाकः।

पञ्चाशच्च पलं स्विन्नं कूष्माण्डात् प्रस्थमाज्यतः।
पक्वं पलशतं खण्ड' वासाक्वाथाढ़के पचेत् ॥ ८१ ॥
शुभ्रा धात्री घना भार्गी त्रिसुगन्धैश्च कार्षिकैः।
पिप्पलीकुड़वञ्चैव मधुमानं प्रदापयेत् ॥ ८२ ॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥
युक्तसर्पिषु कूष्माण्डे पाके गन्धेन मुद्रया ॥ ८३ ॥

इति वासाकूष्माण्डकः। इति क्षतकासः।

विषमासात्म्यभोज्याति व्यवायातिप्रजागरैः।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥ ८४ ॥
कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम् ॥ ८५ ॥
सगात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत कासी।
शुष्कञ्च निष्ठीवति दुर्बलश्च प्रक्षीणमांसो रुधिरं सपूयम् ॥८६॥
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ॥८७
इत्येष क्षयजः कासः क्षीणानां देहनाशनः।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥ ८८ ॥
नवौ कदाचित् सिध्येतामपि पादगुणान्वितौ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्त्तितः ॥ ८९ ॥
त्रीन् पूर्वान् साधयेत् साध्यान् पथ्यैर्याप्यांस्तु यापयेत् ॥९०॥

अथ चिकित्सामाह।

पिप्पलीपद्मकं लाक्षा सम्पक्वं बृहतीफलम्।

घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥ ९१ ॥
चूर्णं काकुभनिष्कं वासकरसभावितं बहुन् वारान् ।
मधुघृतसितोपलाभिर्लेह्यं क्षयकासपित्तहरम् ॥ ९२ ॥
पिप्पलीगुड़संसिद्धं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ ९३ ॥

इति पिप्पल्याद्यं घृतम् ।

कुलीरशृङ्गीश्वटकैणलावान्निःक्वाथ्य वर्गैर्मधुरैस्तथान्यैः ।
पचेद्घृतं तत्तु निषेव्यमाणं हन्यात् क्षयोत्थं क्षतजञ्च कासम्॥९४

इति कुलीराद्यं घृतम् ।

द्विपञ्चमूलीत्रिफला भार्गी शुण्ठी सचित्रकैः ।
कुलत्थपिप्पलीमूल पाठाकोलयवैर्जले ॥ ९५ ॥
शृते नागरदुस्पर्श शठीपिप्पलीपौष्करैः ।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥ ९६ ॥
सिद्धेऽस्मिन् चूर्णितौ क्षारौ द्वौ पञ्चलवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीड़ितः ॥ ९७ ॥

इति द्विपञ्चमूलाद्यं घृतम् ।

शुभेऽह्नि सुदेशसम्भूतं मूलशतं सम्यगश्वगन्धायाः ।
पुण्येऽहनि संक्षुण्णं विपचेद् द्रोणेऽम्भसि च विद्वान् ॥ ९८ ॥
ज्ञात्वाष्टभागसिद्धं गृह्णीयात्तद्रसं सुपरिपूतम् ।
द्वे चैवात्र पलशते दद्याच्छागस्य मांसस्य ॥ ९९ ॥
सर्पिःप्रस्थमथैकं गव्यञ्च पयश्चतुर्गुणं दद्यात् ।
कल्कानक्षसमानानूर्द्ध्वमतः सम्प्रवक्ष्यामि ॥ १०० ॥
काकोलीद्वयमृद्धी मेदे द्वे जीरकं स्वयं गुप्ताम् ।
वृषभकमेलां मधुकं मृद्वीकां यासपिप्पल्यौ ॥ १०१ ॥
जीवन्तीसुपकुल्यां बलां विदारीं शतावरीं चात्र ।
दत्त्वा सम्यग्विपचेत् सर्पिरथोद्धृत्य स्थित्वा च ॥ १०२ ॥

मधुशर्करयोः कुड़वं दत्त्वा भाण्डे शुभे स्थितं मृदितम्।
लीढ्वा तत्पाणितले यथेष्टमाहारमश्नीयात्॥ १०३॥
क्षीणक्षतशिशुवृद्धाः क्षीणेन्द्रियहीनबलवर्णमांसाश्च।
प्राश्य प्रकुर्यात् सद्यः पुष्टिबलारोग्यतेजांसि॥ १०४॥
उपयुज्य सर्पिरेतत् सप्ततिवर्षो युवेव पुनर्भूत्वा।
बहुशः स्त्रियोऽधिगच्छेत् न चात्र शुक्रक्षयं लभते॥१०५॥
पुत्रार्थिनीच नारी लभते पुत्रान् वयस्यतीतेऽपि।
वन्ध्या लभते पुत्रं प्राश्येदश्वाश्वगन्धाद्यम्॥ १०६॥
उपभुंक्ते यः पुरुषो मासत्रयं द्विमासं मासं वा।
नारीशतं स गच्छेन्नैव भजेद्योषितां तृप्तिम्॥ १०७॥
खालित्यवलीपलितैर्नचास्य देहोऽभिभूयते क्षिप्रम्।
वातव्याधिभिरार्त्तस्तथैव हृद्वस्तिरोगार्त्तः॥ १०८॥
न चिरादपि रोगार्त्ता भुञ्जानाः सर्पिररोगा भवन्ति।
अतोजगद्धितार्थिं सर्पिरिदं वाजिगन्धायाः॥ १०९॥
श्रेष्ठं वाजीकरणं निर्द्दिष्टाश्विभ्यां पूर्वं बहुशः।
प्रोक्तं हृष्यं बल्यं क्षयकासहरं पुष्टिकरञ्च॥ ११०॥

इत्यश्वगन्धाद्यं घृतम्।

पिप्पलीमधुकं वापि कार्षिकञ्च सितोत्पलम्।
प्रस्थिकं गव्यमाज्यञ्च क्षीरमिक्षुरसं तथा॥ १११॥
यवगोधूममृद्वीका चूर्णमामलकाद्रसम्।
तैलञ्च प्रसृतांशानि तत्सर्वं मृदुनाग्निना॥ ११२॥
पचेल्लेहं घृतक्षौद्र युक्तः सश्वासकासनुत्।
क्षयहृद्रोगकासघ्नो हितो वृद्धाऽल्परेतसाम्॥ ११३॥

इति पिप्पल्याद्योऽवलेहः।

सन्निपातभवो ह्येष क्षयकासः सुदारुणः।
सन्निपातहितं तस्मात् कार्य्यमत्र चिकित्सितम्॥ ११४॥

इति क्षयकासः।

अमृतानागरं फञ्जी व्याघ्रपर्णीसुसाधितः ।
क्वाथः पिप्पलीचूर्णाढ्यः कासश्वासौ जयत्यलम् ॥ ११५ ॥
भार्गी सनागरा सिंही कुलत्थं मूलकं तथा ।
पिबेत् पिप्पलीचूर्णेन कासश्वासं व्यपोहति ॥ ११६ ॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेत्कासश्वासघ्नं प्रतिश्यायकफापहम् ॥ ११७ ॥
पथ्या शुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ॥ ११८ ॥
नागरेणाभया तद्वत् कासमाशु व्यपोहति ॥ ११९ ॥
स पिप्पलीपुष्करमूलपथ्या शुण्ठीशठीमुस्तकसूक्ष्मचूर्णैः ।
गुड़ेन युक्ता गुटिकाः प्रयोज्याः श्वासेषु कासेषु च वर्द्धितेषु १२०
अष्टाङ्गचूर्णसंयुक्तं पक्वा क्षीरं प्रयोजयेत् ।
कासं श्वासान्वितं घोरं हन्यादेतन्नःसंशयः ॥ १२१ ॥
पञ्चकोलैः शृतं क्षीरं कफघ्नं लघु शस्यते ।
श्वासकासारुचिहरं बलवर्णाग्निवर्द्धनम् ॥ १२२ ॥

इति कासश्वासः ।

वाम्यमानस्य कासेन नासास्रावे स्वरे जड़े ।
क्षवथौ गन्धनासे च धूमपानं प्रयोजयेत् ॥ १२३ ॥

अथ कासे धूमानां पानम् ।

मनःशिलैला मरिचं मांसीमुस्तं सगुग्गुलम् ।
धूमन्तस्यानु च पयः सुखोष्णं सगुड़ं पिबेत् ॥ १२४ ॥
पञ्चकासान् क्षयद्वन्द्व सर्वदोषसमुत्थितान् ।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान् ॥ १२५ ॥

इति मनःशिलादिधूमपानम् ।

मनःशिलालिप्तदलं वदर्य्यावर्मशोषितम् ।
सक्षीरं धूमपानन्तु महाकासनिवारणम् ॥ १२६ ॥

पिष्ट्वा त्रिपुटधत्तूर मूलव्योषमनःशिलाः।
तेन प्रलिप्य वसनं धूमवर्त्तिः प्रयोजयेत्॥ १२७॥
धूमं तस्याः पिबेद्यस्तु त्र्यहात् कासमुदस्यति॥ १२८॥
अर्कक्षीरशिले तुल्ये तदर्द्धञ्च कटुत्रिकम्।
चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमन्तु योगवित्॥ १२९॥
जातेरुत्तरदिङ्मूल शिलैलागुग्गुलुः समः।
अजामूत्रेण पिष्टोऽयं धूमः कासहरः परः॥ १३०॥
भक्षयेदथ तच्चूर्णं पिबेद् दुग्धमथाम्बुना।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥ १३१॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा।
कण्टकार्य्याः कणायाश्च चूर्णं मधुयुतं लिहेत्॥ १३२॥
देवदारुबलारास्ना त्रिफलाव्योषपद्मकैः।
सविड़ङ्गैः शिलातुल्यं तच्चूर्णं सर्वकासनुत्॥ १३३॥
कुनटीसैन्धवव्योष विड़ङ्गामलहिङ्गुभिः।
लेहः साज्यमधुः कासश्वासहिक्कानिवारणः॥ १३४॥

इति कुनट्यादिलेहः।

हरीतकीकणाशुण्ठी मरिचं गुड़संयुतम्।
कासघ्नो मोदकः प्रोक्तः परं चाऽनलदीपनः॥ १३५॥

इति हरीतक्याद्यो मोदकः।

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्ध्वमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु॥ १३६॥

इति अर्कांशसमचूर्णम्।

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमानमीषाम्।
पलार्द्धमात्रं मरिचस्य दद्यात्पलानि चत्वारिमहौषधस्य॥१३७॥

सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान्निहन्यात्।
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यं ग्रहणीप्रदोषान्॥१३८

इति बृहच्छर्करा समचूर्णम्।

कर्षः कर्षार्द्धमथो पलं पलद्वयं तथार्द्धकर्षश्च।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम्॥ १३९॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविनिर्मुक्ताः।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम्॥ १४०॥

अत्र दाड़िमं दाड़िमफलत्वक् च। इति मरिचाद्यं चूर्णम्।

प्रस्थं विभीतकानामस्थि विहाय साधयेदजामूत्रे।
लेहयेदवलेहोऽयं मधुयुक्तः श्वासकासघ्नः॥ १४१॥

इति विभीतकावलेहः।

जीवन्तीं मधुकं पाठां त्वक्क्षीरं त्रिफलां शठीम्।
मुस्तैलां पिप्पलीं द्राक्षां द्वौ बृहत्यौ विभीतकम्॥ १४२॥
शारिवां पौष्करं मूलं कर्कटाख्यं रसाञ्जनम्।
पुनर्नवां लोहरजस्त्रायमाणां यवानिकाम्॥ १४३॥
भार्गीं तामलकीमृद्धिं विड़ङ्गं धन्वयासकम्।
क्षारं चित्रकहिंग्वम्लवेतसं देवदारु च॥ १४४॥
चूर्णीकृत्य पलांशानि लेहयेन्मधुसर्पिषा।
चूर्णं पाणितलं पश्च कासान्नैतद्व्यपोहति॥ १४५॥

इति जीवन्त्याद्यं चूर्णम्।

पद्मकं त्रिफलां व्योषं विड़ङ्गं सुरदारु च।
चूर्णीकृत्य पलांशानि लेहयेन्मधुसर्पिषा॥ १४६॥
एतैश्चूर्णैः समैः सर्वैः पृथक् क्षौद्रं घृतं सिताम्।
लिह्याल्लेहं विपच्यैतत् सर्वकासहरं परम्॥ १४७॥

इति पद्मकाद्यं चूर्णम्।

सर्पिर्गुडूचीवृषकण्टकारीक्वाथेन कल्केन च सिद्धमेतत्।
पेयं पुराणज्वरकासशूलश्वासाग्निमान्द्यं ग्रहणीगदेषु॥ १४८॥

इति सिंहामृतं घृतम्।

घृतं रास्नाबलापथ्या श्वदंष्ट्रा कल्कपाचितम्।
कण्टकारीरसे सर्पिः पञ्चकासनिसूदनम्॥ १४९॥

इति कण्टकारीघृतम्।

समूलपत्रशाखायाः कण्टकार्य्यास्तुलां शुभाम्।
क्षुण्णां पचेज्जलद्रोणे चतुर्भागावशेषिते॥ १५०॥
मिश्रिते तत्कषायेऽस्मिन् घृतप्रस्थं विपाचयेत्।
कल्कान् विल्वप्रमाणांश्च तत्रेमानि प्रदापयेत्॥ १५१॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
सौवर्चलं यवक्षारो रास्ना त्रिकटुकं वचा॥ १५२॥
एतत्सर्पिः प्रशंसन्ति पञ्चकासनिवारणम्।
श्वासं कासं प्रतिश्यायं श्लेष्मकासञ्च नाशयेत्॥ १५३॥
निदिग्धिकाघृतमिदं न व्याधिरतिवर्त्तते।
जातशूलोऽपि संवृद्धो देवसेनामिवासुराः॥ १५४॥

इति कण्टकारीघृतम्।

कण्टकार्य्यास्तुलां क्षुण्णां कृत्वा द्रोणेऽम्भसि पचेत्।
तेनाढ़केन क्वाथेन घृतप्रस्थं विपाचयेत्॥ १५५॥
रास्नादुःस्पर्शषड्ग्रन्था पिप्पलीद्वयचित्रकैः।
सौवर्चलयवक्षार कृष्णामूलैश्च तं जयेत्॥ १५६॥
कासश्वासकफष्ठीवहिध्मारोचकपीनसान्॥ १५७॥

इति कण्टकारीघृतम्।

समूलपत्रशाखन्तु श्लक्ष्णं कृत्वाटरूषकम्।
तस्य कुर्य्यात्पलशतं द्वौ प्रस्थौ पञ्चमूलयोः॥ १५८॥
हरीतकी विभीतक्योर्वल्कलं कुड़वद्वयम्।

दद्यादामलकानाञ्च कुड़वञ्च त्रिभागशः ॥ १५९ ॥
निःक्वाथ्य सलिलद्रोणे चतुर्भागावशेषिते ।
भेषजानि सुपिष्टानि तत्रेमानि प्रदापयेत् ॥ १६० ॥
द्वे मेदे द्वे हरिद्रे च जीवकर्षभकावुभौ ।
काकोलीक्षीरकाकोली चन्दनं मधुकं तथा ॥ १६१ ॥
मुद्गपर्णी माषपर्णी पयस्या चापि पिप्पली ।
मरिचं चाश्वगन्धा च सशुण्ठी काकनासिका ॥ १६२ ॥
सूक्ष्मैला शतपुष्पा च मृद्वीका च शतावरी ।
एतैः सर्पिर्विपक्तव्यं गवां क्षीरे चतुर्गुणे ॥ १६३ ॥
सर्वकासापहं सर्पिः क्षीणक्षतसुखावहम् ।
हिक्काश्वासहरञ्चैव स्वररक्तप्रसादनम् ॥ १६४ ॥

इति वृहद्वासकाद्यं घृतम् ।

कण्टकार्य्यास्तुलां सम्यग् जलद्रोणे विपाचयेत् ।
पादावशेषिते तस्मिन् कल्कानेतान् प्रदापयेत् ॥ १६५ ॥
दुरालभा छिन्नरुहा भार्गी कर्कटकाह्वया ।
रास्ना मुस्तं शटी चव्यं चित्रकं त्र्यूषणं तथा ॥ १६६ ॥
पलांशानि पलान्यत्र शर्करायास्तु विंशतिः ।
घृततैलपलान्यस्मिन्नष्टावष्टौ प्रदापयेत् ॥ १६७ ॥
कल्कीकृत्य घृते शीते मधुनोऽष्टपलं क्षिपेत् ।
चतुःपलं पिप्पलीनां तुगाक्षीर्य्याश्चतुःपलम् ॥ १६८ ॥
एषः लेहः शमयति पञ्चकासांश्चिरोत्थितान् ॥

इति कण्टकारीलेहः ।

समूलपुष्पच्छदकण्टकार्य्यास्तुलां जलद्रोणपरिप्लुताञ्च ।
हरीतकीनाञ्च शतं निदध्यादेतत्तु पक्त्वा चरणावशेषम् ॥१६९॥
गुड़स्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तार्य्य ततः सुशीते ।
कटुत्रिकञ्च त्रिपलप्रमाणं पलानि षट्पुष्परसस्य चापि ॥१७०॥

क्षिपेच्चतुर्जातपलं यथाग्निप्रयुज्यमानो विधिनावलेहः।
वातात्मकं पित्तकफोद्भवञ्च द्विदोषकासानपि च त्रिदोषान् १७१
क्षतोद्भवं च क्षयजञ्च हन्यात् सपीनसश्वाससुरःक्षतञ्च।
यक्ष्माणमेकादशसुग्ररूपं भृगूपदिष्टं हि रसायनं स्यात् ॥१७२॥

इति व्याघ्रीहरीतकी।

दशमूलीं स्वयङ्गुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गं पिप्पलीमूलचित्रकान् ॥ १७३ ॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतञ्चैकं जले पञ्चाढ़के पचेत् ॥ १७४ ॥
यवैः स्विन्नैः कषायन्तु पूतं तच्चाभयाशतम्।
पचेद् गुड़तुलां दत्त्वा कुड़वञ्च पृथग् घृतात् ॥ १७५ ॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
कुड़वं पलमानं च चातुर्जातविचूर्णितम् ॥ १७६ ॥
लिह्याद् द्वे चाभये नित्यमतः खादेद्रसायनम्।
तद्बलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ॥ १७७ ॥
पञ्चकासान् क्षयं श्वासं हिक्काः सविषमज्वरान्।
हन्यात् गुल्मग्रहण्यर्शो हृद्रोगारुचिपीनसान् ॥ १७८ ॥
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ १७९ ॥

इत्यगस्त्यहरीतकी।

संख्या पलानां शतशो मताऽगस्त्यहरीतकी ॥ १८० ॥
यथोद्दिष्टगुणं कुर्वन् पित्तञ्च कुरुते यदि।
तथा सायं गुड़ो योज्य एष एवाल्पमात्रया ॥ १८१ ॥
आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च।
शुष्कद्रव्यचतुष्केण कुड़वः समुदाहृतः ॥ १८२ ॥
यवगोधूममाषाश्च तिलाश्चापि नवा हिताः।
पुराणा विरसा रूक्षा न तदर्थकराः स्मृताः ॥ १८३ ॥

हरीतक्योऽपि नवा ग्राह्याः ।
अभयानां शतं दारु शङ्खपुष्पीं मधूलिकाम् ।
स्वयं गुप्तां पञ्चमूल्यौ द्वे शटीं पुष्कराह्वयम् ॥ १८४ ॥
पञ्चकोलबला हस्तिपिप्पली साश्मभेदकान् ।
भार्गीं पुनर्नवाञ्चैव द्विपलांशां यवाढ़कम् ॥ १८५ ॥
पचेत्पञ्चाढ़के तोये पादशेषं तथोद्धरेत् ।
विनीय चाभयां तत्र पुनश्चाग्नावधिश्रयेत् ॥ १८६ ॥
दत्त्वा गुड़तुलां तत्र कषाये कुड़वं पृथक् ।
तैलात् पिप्पलीचूर्णाच्च घृतात् चौद्रात्तथैव च ॥ १८७ ॥
पक्का तल्लेहवत् स्थाप्यं घृतभाण्डे विधानतः ।
पथ्यभुङ् नियताहारः खादेद् द्वे द्वे हरीतकी ॥ १८८ ॥
हन्याच्च ग्रहणीगुल्मपाण्ड्वर्त्तिविषमज्वरान् ।
यक्ष्मार्शः प्लीह वैस्वर्य्यं श्वासकासारुचिक्षयान् ॥ १८९ ॥
बलवर्णाग्निजननं बलीपलितनाशनम् ।
रसायनमिदं सिद्ध मगस्त्यविहितं मतम् ॥ १९० ॥

इति वृहदगस्त्यहरीतकी ।

यवाढ़के सप्तजलाढ़कानि हरीतकीनान्तु शतं गुरूणाम् ।
लौहे कटाहे समधिश्रयित्वा द्रव्याणि चैतानि समावपेत॥१९१
दन्त्यश्वगन्धाचिरविल्वमूलं भल्लातकं विल्वफलं नतञ्च ।
उभे हरिद्रे गजपिप्पली च पत्राणि मूलानि च चित्रकस्य॥१९२॥
पिप्पल्यपामार्गमथात्मगुप्ता सर्वाणि कुर्य्यात्पलसम्मितानि ।
एकत्र सर्वाणि भिषग्विदग्धाद् द्विपञ्चमूलीं च यवप्रमाणाम् १९३
मृदूनि सुस्विन्नयवान् विदित्वा शनैः प्रयत्नादवतारयेच्च ।
विस्राव्य तेनैव जलेन सार्द्धं पचेत्पुराणस्य शतं गुड़स्य ॥१९४॥
भूयो गुरूणामपि तत्र दद्याद्धरीतकीनाञ्च सहस्रमन्यत् ।
प्रस्थं पुराणस्य घृतस्य दद्यान्नवस्य तैलस्य च तावदेव ॥ १९५ ॥

शीते मधु स्नेहसमन्तु दद्यात्
पलानि चाष्टावथ पिप्पलीनाम्।
सा कल्कमिश्रा त्वथ सेव्यमाना
सर्वान् ज्वरान्नाशयतीह मासात्॥ १९६॥
मासद्वयेनैव च नेत्ररोगान्निहन्त्यपूर्वाञ्च करोति दृष्टिम्।
कुष्ठानि मासत्रयतो निहन्ति प्रभिन्नकर्णाङ्गुलिनासिकानि १९७
भगन्दरं श्लीपदवातगुल्मं
श्वासं तथा मासचतुष्टयेन।
सम्भक्षिता पञ्चभिरेव मासैः
करोति केशान् भ्रमराञ्जनाभान्॥ १९८॥
षड्भिस्तु मासैः खलु सापि कुर्य्यात्
केशान् सुनीलान् घनकुञ्चिताग्रान्।
सहस्रपथ्यामथ चोपयुञ्ज्य
बलं भवेदुत्तमकुञ्जरस्य॥ १९९॥
स्वरं मयूरस्य हयस्य वेगं शरच्छशाङ्कस्य पराञ्च कान्तिम्।
सौभाग्यमेधास्मृतिसत्वयुक्तो बलान्वितः पद्मदलायताक्षः॥२००॥
जीवेत्समानाञ्च सहस्रमग्र्यं प्रयोगकालादिति सत्यवाक्यम्।
समीक्ष्य कल्पांस्तु चकार योगं हिताय लोकस्य मुनिर्वशिष्ठः२०१

इति वशिष्ठहरितकी।

कुलत्थानां पलशतं दशमूलपलं तथा।
शतं ब्राह्मणयष्ट्याश्च चतुर्गुणजले शृतम्॥ २०२॥
पादावशेषे पूते च गुड़स्यार्द्धतुलां पचेत्।
पाकं ज्ञात्वावतार्य्यैव सुशीते श्लक्ष्णचूर्णितम्॥ २०३॥
षट्पलञ्च तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा।
कुड़वं मधुनो दद्यात् स्थापयेत् स्निग्धभाजने॥ २०४॥
खादेदग्निबलापेक्षी नाशयेदचिरादयम्।

यक्ष्माणं पीनसं कासं श्वासं जीर्णमजीर्णकम् ॥ २०५ ॥
जीर्णज्वरं पाण्डुरोगं हृद्रोगं श्लेष्ममारुतम् ।
कुलत्थगुड़ इत्युक्तः सर्वोपद्रवनाशनः ॥ २०६ ॥

इति कुलत्थगुड़ः ।

चतुष्पलं मूलकशुण्ठिकस्य तथैव शुद्धस्य कुलत्थकस्य ।
तुल्यं प्रदद्याद्दशमूलतश्च द्रोणेऽम्भसः सर्वमिदं पचेत्तु ॥ २०७ ॥
दत्त्वा हविस्तैलपलाष्टकञ्च गुड़स्य शुद्धस्य तुलां तथैव ।
तावत्पचेद्यावदिदं समस्तं सङ्घट्य दर्व्या गुड़पाकमिति ॥२०८॥
चूर्णीकृतैर्जीरकचव्यशृङ्गी भार्गीत्रिसौगन्धिककट्फलैश्च ।
मुस्तायवानीशटिपुष्करैश्च सव्योषकैरर्द्धपलप्रमाणैः ॥ २०९ ॥
सार्द्धं क्षिपेत् माक्षिकप्रस्थमात्रं दद्यात् सुशीतेऽथ वह्निरपेक्ष्याम् ।
मात्रां ततो लेहवदालिहेच्च पथ्याशनश्च त्वथ योगकाले ॥२१०॥
कफोद्भवा ये च विकारजाता सश्वासकासा हृदयक्षताश्च ।
हृत्पार्श्वशूलज्वरछर्द्दितृष्णा स्वरक्षयारोचकवह्निसादाः
ते नाशमायान्त्युपयोगतश्च कुलत्थसंज्ञस्य गुड़स्य शीघ्रम् ॥२११॥

इति द्वितीयः कुलत्थगुड़ः ।

खादिरवासकपल्लवं छायाशुष्कञ्च संचूर्ण्य ।
त्रिभागपिप्पलीयुक्तं कटुत्रयं मधुनावलिह्यात् ॥ २१२ ॥

इति कासश्लेष्मघ्नचूर्णम् ।

इति वङ्गसेनसङ्कलितः कासनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ हिक्कानिदानमाह ।

विदाहि गुरुविष्टम्भि रूक्षाभिष्यन्दिभोजनैः ।
शीतपानासनस्नानरजोधूमातपानिलैः ॥ १ ॥
व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ।

आमदोषाभिघातस्त्रीक्षयरोगप्रपीड़नैः ॥ २ ॥
विषमाशनाध्यशनैस्तथा संशमनैरपि।
हिक्काश्वासश्च कासश्च नृणां समुपजायते ॥ ३ ॥
मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत् प्लीहान्त्राणि मुखादिवाक्षिपन्।
सघोषवानाशु हिनस्त्यसून् यत-
स्ततस्तु हिक्केति भिषग्भिरुच्यते बुधैः ॥ ४ ॥
प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः।
हिक्कां करोति संरुध्य तासां लिङ्गं पृथक् शृणु ॥ ५ ॥
अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा।
वायुः कफेनानुगतः पञ्चहिक्काः करोति च ॥ ६ ॥
कण्ठोरसो गुरुत्वञ्च वदनस्य कषायता।
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ ७ ॥
पानान्नैरतिसंयुक्तैः सहसा पीड़ितोऽनिलः।
हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक् ॥ ८ ॥
चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते।
कम्पयन्ती शिरोग्रीवां यमलान्तां विनिर्दिशेत् ॥ ९ ॥
विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात् प्रधावति ॥ १० ॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी।
अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥ ११ ॥
मर्म्माण्यापीड़यन्तीव सततं या प्रवर्त्तते।
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥ १२ ॥
आयम्यते हिक्कतो यस्य देहो
दृष्टिश्चोर्द्धभ्राम्यते यस्य नित्यम्।
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं

तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ॥ १३ ॥
अतिसञ्चितदोषस्य भक्तद्वेषक्रतस्य च ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥ १४ ॥
आयासात् या समुत्पन्ना हिक्का हन्त्याशु जीवितम् ।
यमिका या प्रलापार्त्ति मोहतृष्णासमन्विता ॥ १५ ॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ।
आसां क्षुद्रान्नजाः साध्याः शेषाः प्राणहरा मताः ॥ १६ ॥
यथाग्निरिद्धोः पवनानुवृद्धो वज्रं यथा वा सुरराजमुक्तम् ।
रोगास्तथैते खलु दुर्निवाराः श्वास सहिक्का च विलम्बिका च १७
प्राणावरोधतर्जनविस्मापनभयभाषकैश्च घोरैः ।
कथाप्रयोगैः शमयेद्धिक्कां घोरां मनोघातैः ॥ १८ ॥
हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ।
रसान् पिबेत् फलिन्याश्च लाजशक्तून् ससैन्धवान् ॥ १९ ॥
मधुकं मधुसंयुक्तं पिप्पलीशर्करान्विता ।
नागरं गुड़संयुक्तं हिक्काघ्नं नावनत्रयम् ॥ २० ॥
स्तन्येन मक्षिकाविष्टा नस्यं बालक्तकाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ २१ ॥
मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत् ।
अप्यसाध्या नयत्यस्तं हिक्काक्षौद्रावलेहनात् ॥ २२ ॥
सद्य एव महायोगः काशमूलभवं रजः ।
हिक्कार्त्तो मधुना लिह्याच्छुण्ठीधात्री कणान्वितम् ॥ २३ ॥
प्रवालत्रिफलाशङ्ख चूर्णं मधुघृतप्लुतम् ।
पिप्पलीगैरिकं चेति लेहो हिक्कानिवारणः ॥ २४ ॥
कोलमज्जाञ्जनं लाजा तिक्ता काञ्चनगैरिकम् ।
कृष्णाधात्रीसिताशुण्ठी कासीसन्दधिनाम च ॥ २५ ॥

पाटल्याः सफलं पुष्पं कृष्णाखर्जूरमुस्तकम्।
षडेते पादिका लेह्या हिक्काघ्ना मधुसंयुताः॥ २६॥
नैपाल्यागोविषाणाभ्यां कुष्ठसर्जरसस्य च।
धूमं कुशस्य वासाज्यं पिबेद्धिक्कोपशान्तये॥ २७॥
निर्धूमाङ्गारनिक्षिप्त श्लक्ष्णमाषरजोद्भवः।
हिक्का पञ्च निहन्त्याशु धूमः पीतो न संशयः॥ २८॥
सुपूतिकीटं लसुनोग्रगन्धाहिंग्वन्वितं चूर्णमिदं सुभावितम्।
अजाविमूत्रेण च सप्तकृत्वा घ्राणानिषिक्तं विनिहन्ति हिक्काम्२९

इति सुपूतिकीटाद्यं चूर्णम्।

हरेणवोऽथ पिप्पल्यः क्वाथहिङ्गुसमायुतः।
हिक्काप्रशमनः श्रेष्ठो धन्वन्तरिवचो यथा॥ ३०॥
कुकूलानलसंस्विन्न इक्षुवाल्यप्रसम्भवः।
रसः समाक्षिकः पीतो हिक्कामाशु नियच्छति॥ ३१॥
नारीक्षीरेण वा सिद्धं सर्पिर्मधुरकैरपि।
नासानिसिक्तं पीतं वा सद्यो हिक्कां नियच्छति॥ ३२॥

इति नारीक्षीराद्यं घृतम्।

यत्किञ्चित्कफवातघ्न मुष्णं वातानुलोमनम्।
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम्॥ ३३॥
हिक्काश्वासे पिबेद्भार्गीं सविश्वामुष्णवारिणा।
नागरं वा सिताभार्गी सौवर्चलसमन्वितम्॥ ३४॥
अभयानागरकल्कं पौष्करयावशूकमरिच कल्कं वा।
तोयेनोष्णेन पिबेच्छ्वासी हिक्की च तच्छान्त्यै॥ ३५॥
तृषितो दशमूलस्य क्वाथं वा देवदारुजम्।
मदिरां वा पिबेद्युक्त्या हिक्काश्वासनिपीड़ितः॥ ३६॥
दशमूलीरसे सर्पिर्दधिमण्डेन साधयेत्।
कृष्णासौवर्चलक्षार वयस्थाहिङ्गुरोचकैः।

कायस्थया च तत्पानाद्धिक्काश्वासौ नियच्छति ३७ ॥

इति दशमूलाद्यं घृतम् ।

वासाघृतं वाथ पिबेत्पिबेत् तूषणमेव वा ।
वातपित्तानुबन्धे तु गुड़विश्वसमन्वितम् ॥ ३८ ॥
छागक्षीरं प्रयोक्तव्यं शृतं तोये चतुर्गुणे ।
श्वासघ्नं भेषजं यच्च तच्च कार्य्यं प्रयत्नतः ॥ ३९ ॥

इति वङ्गसेनसङ्कलितः हिक्कानिदानचिकित्साधिकारः समाप्तः ।

---

## अथ श्वासनिदानम् ।

यैरेव कारणैर्हिक्का बहुभिः संप्रवर्त्तते ।
तैरेव कारणैः श्वासः घोरो भवति देहिनाम् ॥ १ ॥
महोर्ध्वछिन्नतमकक्षुद्रभेदैस्तु पञ्चधा ।
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ २ ॥
प्राग्रूपं तस्य हृत्पीड़ा शूलमाध्मानमेव च ।
आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च ॥ ३ ॥
यदा स्रोतांसि संरुध्य मारुतः कफमूर्च्छितः ।
विष्वग्व्रजति संक्रुद्ध स्तदा श्वासान् करोति सः ॥ ४ ॥
उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसति संरुद्धो मत्तर्षभ इवानिशम् ॥ ५ ॥
प्रनष्टसंज्ञाविज्ञान स्तथा विभ्रान्तलोचनः ।
विवृताच्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥ ६ ॥
दीर्घं प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥ ७ ॥
ऊर्द्धं श्वसति यो दीर्घं न च प्रत्याहरत्यधः ।
श्लेष्मावृत्तमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ ८ ॥

ऊर्द्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः।
प्रमुह्यन्वेदनार्त्तश्च शुष्कास्यो रतिपीड़ितः॥ ९॥
ऊर्द्ध्वश्वासे प्रकुपिते चाधः श्वासो निरुध्यते।
मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्यैव हन्त्यसून्॥ १०॥
यस्तु श्वसिति विच्छिन्नं सर्वप्राणैर्निपीड़ितः।
न वा श्वसिति दुःखार्त्तो मर्मच्छेदरुगर्दितः॥ ११॥
आनाह स्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना।
विप्लुताक्षः परिक्षीणः श्वसन्रक्तैकलोचनः॥ १२॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून्॥ १३॥
प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च॥ १४॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीड़कम्॥ १५॥
प्रताम्यति सवेगेन त्रस्यते स निरुध्यते।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः॥ १६॥
श्लेष्मणा मुच्यमानेन भृशं भवति दुःखितः।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम्॥ १७॥
तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्।
न चापि लभते निद्रां शयानः श्वासपीड़ितः॥ १८॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति॥ १९॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्त्तिमान्।
विशुष्कास्यो बहुश्वासो मुहुश्चैवावधम्यते॥ २०॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च प्रवर्द्धते।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः॥ २१॥

ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकन्तु तम्।
उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः॥ २२॥
तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रताम्यति।
मज्जतस्तमसीवास्य विद्यात्प्रतमकन्तु तम्॥ २३॥
रूक्षायासोद्भवः कोष्ठे क्षुद्रो वातमुदीरयेत्।
क्षुद्रश्वासेन सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः॥ २४॥
हिनस्ति न स गात्राणि न च दुःखं यथोत्तरे।
न च भोजनपानानां निरुणद्ध्युचितां गतिम्॥ २५॥
नेन्द्रियाणां व्यथाञ्चैव काञ्चिदापादयेद्रुजम्।
स साध्य उक्तो बलिनः सर्वो वाऽव्यक्तलक्षणः॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते॥ २६॥
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च॥ २७॥
कामं प्राणहरा रोगा बहवो न तु ते तथा।
यथा श्वासश्च कासश्च हरते प्राणमाशु हि॥ २८॥
वाताधिको भवेत् क्षुद्रस्तमकस्तु कफोत्तरः।
कफाद्वाताधिकात्पित्तसंसृष्टः छिन्नसंज्ञकः॥
श्वासो मारुतसंसृष्टो महानूर्द्धस्तथा मतः॥ २९॥

अथ चिकित्सामाह।

स्नेहवस्ति कृते केचिदूर्द्ध्वञ्चाधश्च शोधनम्।
मृदुप्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि॥ ३०॥
दशमूली शटी रास्ना पिप्पली विश्वपौष्करैः।
शृङ्गीतामलकीभार्गी गुडूचीनागराग्निभिः॥ ३१॥
यवागूं विधिना सिद्धं कषायं वा पिबेन्नरः।
कासहृद्ग्रहपार्श्वार्त्ति हिक्काश्वासप्रशान्तये॥ ३२॥
कुलत्थयवकोलाम्ब दशमूलबलाजलम्।
पानार्थं कल्पयेत् कास हिक्काश्वासनिवृत्तये॥ ३३॥

कुलत्थनागरव्याघ्रीवासाभिः क्वथितं जलम्।
पीतं पौष्करसंयुक्तं श्वासकासनिवारणम्॥ ३४॥
दशमूलकषायस्तु पुष्करेण विचूर्णितः।
श्वासकासप्रशमनः पार्श्वशूलविनाशनः॥ ३५॥
रम्भाकुन्दशिरीषाणां कुसुमं पिप्पलीयुतम्।
पिष्ट्वा तण्डुलतोयेन पीत्वा श्वासं व्यपोहति॥ ३६॥
देवदारुवचाभार्गी विश्वपौष्करकट्फलैः।
कृत्वा क्वाथो जयत्याशु श्वासकासानशेषतः॥ ३७॥

शृङ्गीमहौषधिकणाघनपुष्कराणां
चूर्णं शटीमरिचशर्करया समेतम्।
क्वाथेन पीतममृताहृषपञ्चमूल्याः
श्वासं त्र्यहेण शमयेत् अतिदोषमुग्रम्॥ ३८॥

कूष्माण्डकसिताचूर्णं पीतं कोष्णेन वारिणा।
शीघ्रं शमयति श्वासं कासञ्चैव सुदारुणम्॥ ३९॥
व्याघ्रीदुरालभाशृङ्गी विल्वमध्यत्रिकण्टकैः।
अमृताग्निकृतैरेतैः यूषः स्याच्छ्वासनुत्परः॥ ४०॥
कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः।
कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च॥ ४१॥
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः॥ ४२॥
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम्।
सर्पिर्मधुभ्यां विलिहन् हन्ति श्वासान् सुदारुणान्॥ ४३॥
गुड़ं कटुकतैलेन मिश्रयित्वा समं लिहन्।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत्॥ ४४॥
श्वाविधः सूचका दग्धा सक्षौद्रघृतशर्करा।
श्वासकासहरा वर्हिपादौ वा मधुसर्पिषा॥ ४५॥
हरिद्रां मरिचं द्राक्षां गुड़ं रास्नां कणां शटीम्।

तैलेन विलिहन् हन्याच्छ्वासान् प्राणहरानपि ॥ ४६ ॥
हरिद्रापत्रमैरण्ड मूलं लाक्षां मनःशिलाम् ।
देवदारुघनं मांसीं पिष्ट्वा वर्त्तिः प्रकल्पयेत् ॥ ४७ ॥
तां घृताक्तां पिबेद्धूमं श्वासं हन्ति सुदारुणम् ।
श्वासहिक्कापरिगतं स्निग्धैः स्वेदैरुपाचरेत् ॥ ४८ ॥
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितः कफः ।
श्वासो विलयनं याति मारुतश्च प्रशाम्यति ॥ ४९ ॥
स्निग्धं ज्ञात्वा ततश्चैनं भोजयित्वा रसौदनम् ।
वातश्लेष्मविबन्धे वा भिषग्धूमं प्रयोजयेत् ॥ ५० ॥

शृङ्गीकटुत्रयफलत्रयकण्टकारी
भार्गीं सपुष्करजटालवणानि पञ्च ।
चूर्णं पिबेदशिशिरेण जलेन हिक्का-
श्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ ५१ ॥

इति शृङ्ग्यादि चूर्णम् ।

निदिग्धिकां चामलकप्रमाणां हिंग्वार्द्रयुक्तां मधुना सुयुक्ताम् ।
लिहन्नरः श्वासनिपीड़ितो हि श्वासं जयत्येव बलात् त्र्यहेण ५२

भल्लातकमधुपर्णी पथ्यादशमूलनागरक्वाथः ।
तमके कफप्रधाने शस्तः श्वासे च मारुतजे ॥ ५३ ॥
पथ्या कषायमथवा पिबेद्रसं मार्कवस्य मधुना ।
तमके पुष्करजं वा सनागरं चौरमेकञ्च ॥ ५४ ॥
शटीपुष्करजीवन्ती त्वक्चुस्त' पुष्कराह्वयम् ।
सुरसा तामलक्यौ वा पिप्पल्यगुरुनागरम् ॥ ५५ ॥
बालकञ्च समं चूर्णं कृत्वाष्टगुणशर्करम् ।
सर्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत् ॥ ५६ ॥
श्रत्रैकस्माद्द्रव्यादष्टगुणा शर्करा ॥ सर्वथेति पानभोजनादिषु ॥

इति शट्याद्यं चूर्णम् ।

हिंस्राविडङ्गपूतिक त्रिफलाव्योषचित्रकैः।
द्विचीरं सर्पिषः प्रस्थं चतुर्गुणजले प्लुतम् ॥ ५७ ॥
कर्षमात्रैः पचेत्तद्धि श्वासकासौ व्यपोहति।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं चयं तथा ॥ ५८ ॥

इति हिंस्राद्यं घृतम्।

सौवर्चल यवचार कटुकाव्योषचित्रकैः।
घृतं वचाविड़ङ्गैश्च साधितं श्वासशान्तये ॥ ५९ ॥

इति सौवर्चलघृतम्।

कुलत्थरससंयुक्तं पञ्चकोलशृतं घृतम्।
दीपनं श्वासकासघ्नं कफव्याधिहरं परम् ॥ ६० ॥

इति कुलत्थाद्यं घृतम्।

तिक्तासौवर्चलचारपथ्यात्रिकटुहिङ्गुभिः।
समालुरैर्घृतं सिद्धं सचीरं श्वासकासनुत् ॥ ६१ ॥
गुल्मानाहञ्च शमयेत् प्रवृद्धान् गुदजानपि।

इति तिक्ताद्यं घृतम्।

कुलत्थदशमूलञ्च तथा ब्राह्मणयष्टिका।
प्रस्थं प्रस्थञ्च संगृह्य वारिद्रोणेन साधयेत् ॥ ६२ ॥
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत्।
चीरकं द्विगुणं दत्त्वा कल्कितैः पञ्चकोलकैः ॥ ६३ ॥
सचारैः पलिकैः सर्वैः शनैर्दह्निना पचेत्।
कासश्वासहरञ्चैव हिक्काञ्च विषमज्वरम् ॥ ६४ ॥
हन्यात्तथार्शोग्रहणी हृद्रोगारुचिपीनसान्।
गुल्मं प्लीहामयं हन्याद्दलवर्णाग्निवर्द्धनम् ॥ ६५ ॥
अग्निसन्दीपनञ्चैव कौलत्थं षट्पलं घृतम् ॥ ६६ ॥

इति कुलत्थाद्यं घृतम्।

सुवहाकालिकाभार्गी शुकाख्यं कौचुलं फलम्।

काकादनीशृङ्गवेरं वर्षाभूर्बृहतीद्वयम् ॥ ६७ ॥
पलमात्रैर्घृतप्रस्थं पचेदेतैर्जलाढ़के ।
कदुष्णं पीतमेतद्धि श्वासामयविनाशनम् ॥ ६८ ॥

इति सुवहाद्यं घृतम् ।

तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे ।
पीयमानं यथा न्यायं श्वासकासौ व्यपोहति ॥ ६९ ॥

इति भृङ्गराजतैलम् ।

तिस्रस्तिस्रस्तु पूर्वाह्ने भुक्ताग्रे भोजनस्य च ॥ ७० ॥
पिप्पल्यः किंशुकक्षारभाविता घृतभाजिताः ।
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ॥ ७१ ॥
जेतुं कासक्षयश्वासहिक्काशोषगलामयान् ।
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरान् ॥ ७२ ॥
वैस्वर्य्यं पीनसं शोफं गुल्मं वातबलासकम् ।
मासमेवाश्नतो युक्त्या माध्विकां पिबतोऽनु च ॥ ७३ ॥
अवधारितवेगस्य यक्ष्मा न भवति ध्रुवम् ।

इति क्षारपिप्पली ।

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथा परम् ।
शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ॥ ७४ ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते ।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः ॥ ७५ ॥
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम् ।
शीते च मधुनश्चात्र षट्पलानि प्रदापयेत् ॥ ७६ ॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत्ततः ॥ ७७ ॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ॥ ७८ ॥

स्वरवर्णप्रदोह्येष जठराग्निप्रदीपनः।
हरीतकीशतस्यात्र प्रस्थत्वादाढ़कं जलम् ॥ ७९ ॥

इति भार्गीगुड़ः।

कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका।
शतं शतञ्च संगृह्य जलद्रोणे विपाचयेत् ॥ ८० ॥
पादावशेषे तस्मिंस्तु गुड़स्यार्द्धतुलां क्षिपेत् ॥ ८१ ॥
शीतीभूते च पक्वे च मधुनोऽष्टौ पलानि च ॥ ८२ ॥
षट्पलानि तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयम्।
त्रिसुगन्धिकयुक्तञ्च खादेदग्निबलं प्रति ॥ ८३ ॥
श्वासं कासं ज्वरं हिक्कां नाशयेत्तमकं तथा।
योगसन्दर्शनादत्र वृद्धवैद्योपदेशतः ॥ ८४ ॥
जलं चतुर्गुणं देयं स्वल्पत्वाद्द्रोणवारिणा।
मानसान्निध्यसंवादाद्द्विपलं त्रिसुगन्धिनः ॥ ८५ ॥

इति कुलत्थगुड़ः।

इति वङ्गसेनसङ्कलितः श्वासनिदानचिकित्साधिकारः समाप्तः ॥

---

## अथ स्वरभेदनिदानमाह।

अत्युच्चभाषणविषाध्ययनाभिघात-
सन्दूषणैः प्रकुपिताः पवनादयस्तु।
स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥ १ ॥
वातेन कृष्णनयनाननमूत्रवर्चा
भिन्नं शनैः वदति गर्दभवत् स्वरञ्च।
पित्तेन पीतनयनाननमूत्रवर्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ॥ २ ॥

कृच्छ्रात्कफेन सततं कफरुद्धकण्ठः
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ।
सर्वात्मके भवति सर्वविकारसम्पत्
तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ ३ ॥
धूप्येत वाक्क्षयकृते क्षयमाप्नुयाच्च
वागेषु चापि हतवाक् परिवर्जनीयः ।
अन्तर्गतं स्वरमलक्ष्यपदं चिरेण
मेदोऽन्वयाद्वदति दिग्धगलस्तृषार्त्तः ॥ ४ ॥
क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यः सहजोऽपि जातः ।
मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥ ५ ॥

अथ चिकित्सामाह ।

स्निग्धान् स्वरातुरनरानपकृष्टदोषान्
संयोजयेद्वमनरेचनवस्तिभिश्च ।
नस्यावपीड़मुखधावनधूमलेहैः
सम्पादयेत्तु विविधैः कवलग्रहैश्च ॥ ६ ॥
यः श्वासकासविधिरादित एव चोक्तः
तच्चाप्यशेषमवचारयितुं यतेत ।
वैशेषिकञ्च विधिमूर्द्धमतो वदामि
तद्वै स्वरातुरहितं निखिलं निबोध ॥ ७ ॥
स्वरोपघातेऽनिलजे भुक्तोपरिघृतं पिबेत् ॥ ८ ॥
कासमर्दकवार्त्ताक मार्कवस्वरसैः पचेत् ।
पीतं घृतं हन्त्यनिलं सिद्धं वार्त्ताकजे रसे ॥ ९ ॥

इति कासमर्दादिघृतम् ।

तथा कोष्णं जलं देयं भुक्ते घृतगुड़ौदने ।
पैत्तिके तु विरेकश्च पयश्च मधुरैः शृतम् ॥
लिहेन्मधुरकाणां वा चूर्णं मधुसमायुतम् ॥ १० ॥

अश्नीयाच्च ससर्पिष्कं यष्टीमधुकषायकम् ॥ ११ ॥
शृङ्गांस्त्वचं चीरवतां द्रुमाणां सङ्कुट्य दुग्धे विपचेत्तु तेन।
कल्केन यष्टीमधुकस्य सर्पिः सिद्धं पिबेत्तन्मधुशर्करात्तम् ॥ १२ ॥

इति शृङ्गाद्यं घृतम्।

पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये ॥ १३ ॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥ १४ ॥
पलत्रिकत्र्यूषणयावशूकचूर्णञ्च हन्यात् स्वरभेदमाशु।
किं वा कुलत्थं वदनान्तरस्थं स्वरामयं हन्त्यथ पौष्करं वा ॥१५॥
वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
कफे सक्षारकटुकं क्षौद्रं केवलमिष्यते ॥ १६ ॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्क्रमते श्लेष्मा स्वरश्चाशु प्रसीदति १७ ॥
अगुरुसुरदारुदार्वीं सलिलं स्वरभेदहृत्पिबेत्कोष्णम्।
व्याघ्रीसुरतरुनागर ससिंहमुखक्काथमथवापि ॥ १८ ॥
तैलाक्तं स्वरभेदे वा खादिरं धारयेन्मुखे।
पथ्या पिप्पलीसंयुक्तं युक्तं वा नागरेण तु ॥ १९ ॥
वदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ २० ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते।
क्षयजे सर्वजे वापि प्रत्याख्यायाचरेत् क्रियाम् ॥ २१ ॥
निदिग्धिकापलशतं तदर्द्धं ग्रन्थिकस्य च।
चित्रकस्य तदर्द्धञ्च दशमूलञ्च तत्समम् ॥ २२ ॥
द्रोणद्वयेऽपां निःक्काथ्य कषायाढ़कमाहरेत्।
पूते क्षिपेत्तदर्द्धन्तु पुराणस्य गुड़स्य च ॥ २३ ॥

सर्वमेकत्र कृत्वा च लेहवत्साधु साधयेत्।
अष्टौ पलानि पिप्पल्या स्त्रिजातकपलं तथा ॥ २४ ॥
मरिचानां पलन्त्वेकं सर्वमेकत्र चूर्णितम्।
मधुनः कुड़वं दत्त्वा तदश्नीयाद्यथानलम् ॥ २५ ॥
स्वरभेदहरं मुख्यं प्रतिश्यायहरं परम्।
श्वासकासाग्निमान्द्यार्शो गुल्ममेहगलामयान् ॥ २६ ॥
आनाहमूत्रकृच्छ्राणि हन्याद् ग्रन्थ्यर्बुदानि च ॥ २७ ॥

इति निदिग्धिकालेहः।

शर्करामधुमिश्राणि शृतानि मधुरैः सह।
पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ २८ ॥
वातादिजनितश्वासकासघ्ना ये प्रकीर्त्तिताः।
योगास्तांश्चापि युञ्जीत यथा दोषं चिकित्सकः ॥ २९ ॥

चव्याम्लवेतसकटुत्रयतिन्तिड़ीकं
तालीशजीरकतुगादहनैः समांशैः।
चूर्णं गुड़प्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ३० ॥

इति चव्यादिचूर्णम्।

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम् ॥ ३१ ॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ ३२ ॥
स्वरसानां चालाभे चूर्णस्याढ़कमुदकस्य च।
तद्वारिपर्य्युषितं मृदितं स्वरसवत् प्रयोज्यम् ॥ ३३ ॥

इति कण्टकारीघृतम्।

हिक्काश्वासे क्षये कासे स्वर्य्याणि पठितानि तु।
सर्पींषि तानि योज्यानि भिषग्भिः स्वरसंक्षये।

इति वङ्गसेनसङ्कलितः स्वरभेदनिदानचिकित्साधिकारः समाप्तः।

## अथारोचकनिदानमाह ।

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः ।
अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च नरोऽनिलेन ॥ १ ॥
कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम् ।
माधुर्य्यपैच्छिल्यगुरुत्वशैत्य विबन्धसम्बन्धयुतं कफेन ॥ २ ॥
अरोचके शोकभयातिलोभक्रोधाद्य हृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकञ्चास्यमथारुचिश्च त्रिदोषजेनैकरसं भवेत्तु ॥ ३ ॥

हृच्छूलपीड़नयुतं पवनेन पित्तात्
तृड्दाहशोषबहुलं सकफप्रसेकम् ।
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्या-
द्वैगुण्यमोहजड़ताभिरथापरञ्च ॥ ४ ॥

प्रक्षिप्तन्तु मुखे चान्नं यत्र नास्वादते नरः ।
अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ॥ ५ ॥
चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा तु भोजनम् ।
द्वेषं करोति यो जन्तुः स भक्तद्वेष उच्यते ॥ ६ ॥
यस्य चान्ने भवेच्छ्रद्धा सभक्तच्छन्द उच्यते ।
कुपितस्य भयार्त्तस्य ज्वरितस्य विरोधकः ॥ ७ ॥

### अथ चिकित्सामाह ।

वस्तिः समीरणे पित्ते विरेको वमनं कफे ।
कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ ८ ॥

वान्तोवचाद्भिरनिले विधिवत् पिबेत् तु
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम् ।
कृष्णाविड़ङ्गयवभस्महरेणु भार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥ ९ ॥
पैत्ते गुड़ाम्बुमधुकैर्वमनं प्रशस्तं

लेह्यः ससैन्धवसितामधुसर्पिरिष्टः ।
निम्बाम्बुच्छर्दितवतः कफजेऽनुपानं
राजद्रुमाम्ब् मधुना सह दीप्यकाढ्यम् ॥ १० ॥
मरिचं मधुना लेह्यं कफजेऽरोचके भिषक् ।
अरुचौ कवलास्तावद्धूमाः सुमुखधावनम् ॥
मनोज्ञमन्नपानञ्च हर्षणाऽऽश्वासनानि च ॥ ११ ॥
कुष्ठसौवर्चलाजाजी शर्करामरिचं विड़म् ।
धान्यैलापद्मकोशीर पिप्पल्यश्चन्दनोत्पलम् ॥ १२ ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाड़िमनिर्य्यासस्त्वजाजीशर्करायुतः ॥ १३ ॥
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः ।
चत्वारोऽरोचकान् हन्युर्वाताद्येकजसर्वजान् ॥ १४ ॥
अम्लिकागुड़तोयञ्च त्वगेलामरिचान्वितम् ।
अभक्तच्छन्दरोगेषु शस्तं कवलधारणम् ॥ १५ ॥
शृङ्गवेररसञ्चैव मधुना सह योजयेत् ।
अरुचिश्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १६ ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ १७ ॥
कारव्यजाजीपत्रैला व्योषवृक्षाम्लदाड़िमम् ।
सक्षौद्रशर्करं हृद्यं रुचि वह्निप्रदीपनम् ॥ १८ ॥
इच्छाविनाशजनितेषु च बाधकेषु
भावान् भवाय वितरेत् खलु शक्यरूपान् ।
अर्थेन चाप्यपचितेषु पुनर्भवाय
पौराणिकैः श्रुतिपथैरनुमानयेत्तम् ॥ १९ ॥
दैन्यं गते मनसि बोधनमत्र शस्तं
दद्यात् प्रियं मनसि सेव्यमरोचकेषु ॥ २० ॥

सात्मग्रान् स्वदेशरचितान् विविधांश्च भक्ष्यान्
पानानि मूलफलखाण्डवरागलेहान्।
सेवेद्रसांश्च विविधान्विविधैः प्रकारै-
र्भुञ्जीत चापि लघुरुच्यमनः सुखानि॥ २१॥
यस्य यदीप्सितं किञ्चित्तद्देयमरुचौ सदा।
विड़ङ्गमधुसंयुक्तो रसो दाड़िमसम्भवः॥
असाध्यमपि संहन्यादरुचिं वक्त्रधारितः॥ २२॥
अष्टादशशिग्रुफलानि दशमरिचानि विंशतिपिप्पल्यः।
आर्द्रकपलं गुड़पलं प्रस्थत्रयमारनालस्य॥ २३॥
विडलवणसहितमेतत्खजाहतं सुरभिगन्धाढ्यम्।
व्यञ्जनसहस्रघाति ज्ञेयं कलहंसकं नाम्ना॥ २४॥

इति कलहंसकाञ्जिकम्।

द्वे पले दाड़िमादष्टौ खण्डाद्व्योषात्पलत्रयम्।
त्रिसुगन्धिपलञ्चैकं चूर्णमेकत्र कारयेत्॥ २५॥
दीपनं रोचनं हृद्यं पीनसज्वरकासजित्।

इति दाड़िमाद्यं चूर्णम्।

पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च।
सितापलचतुष्कञ्च नागरार्द्धपलं तथा॥ २६॥
धान्यसौवर्चलाजाज्य स्त्वगेले चार्द्धकार्षिके।
कोलदाड़िमवृक्षाम्ल यवानी चाम्लवेतसम्॥ २७॥
कार्षिकांश्चूर्णयेदेतान् हृद्यमन्नप्ररोचनम्।
प्लीहहृद्ग्रहणीदोष पञ्चकासनिवर्हणः॥ २८॥
खाण्डवो नाम गुल्मार्त्ति विबन्धानाह शूलनुत्।

इति खाण्डवचूर्णम्।

तालीशोषणचव्यनागरवरैस्तुल्यांशकैर्द्विस्ततः।
कृष्णाग्रन्थिकतिन्तिड़ीकहुतभुग्त्वक्क्षीरकाख्यैर्युतः।

विश्वैलावदराम्ल वेतसघनैर्धान्याजमोदायुतै-
स्त्वंशैर्दाड़िमपाद एष विहित श्रेष्ठः सितार्द्धायुतः ॥२९॥
कण्ठास्योदरहृद्विकारशमनः कायाग्निसन्दीपनो
गुल्माध्मानविसूचिका गुदरुजाश्वासक्रमिच्छर्दिहा।
कासारुच्यतिसारमूढ़मरुतां वा हृद्रुजां नाशनः
चूर्णोऽयं भिषजामतीव कथितः ख्यातो महाखाण्डवः ॥३०

इति महाखाण्डवः।

यतोक्तन्तु यवान्याद्यं चूर्णमत्र प्रयोजयेत् ॥ ३१ ॥
यवानी तिन्तिड़ीकञ्च नागरं साम्लवेतसम्।
दाड़िमं वादरञ्चाम्लं कार्षिकानुपकल्पयेत् ॥ ३२ ॥
धान्यसौवर्चलाजाजी वराङ्गमर्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥ ३३ ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचकम् ॥ ३४ ॥
हृत्पीड़ापार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शो विकारनुत् ॥ ३५ ॥

इति यवानीखाण्डवचूर्णम्।

लवङ्गकङ्कोलमुशीरचन्दनं नतं सनीलोत्पलकृष्णजीरकम्।
एला सकृष्णागुरुभृङ्गकेशरं कणा सविश्वा नलदं सहाम्बुना ३६
कर्पूरजातीफलवंशरोचनं सिताष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषनुत् ॥ ३७॥
उरो विबन्धं तमकं गलग्रहं सश्वासयक्ष्मारुचिपीनसं तथा।
ग्रहण्यतीसारमथांसृजः चयं प्रमेहरोगञ्च निहन्ति सत्वरम् ॥३८

इति लवङ्गाद्यं चूर्णम्।

सूक्ष्मैलापत्रकं त्वक् च पत्रं तालीशजन्तुगा।
मृद्वीकाजीरकं धान्यं दाड़िमं चार्द्धकार्षिकम् ॥ ३९ ॥

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम्।
मरिचं दीप्यकञ्चैव वृक्षाम्लं चाम्लवेतसम्॥ ४०॥
अजमोदामश्वगन्धा दधित्थं चापि कार्षिकम्।
प्रदेयं चातिशुद्धायाः शर्करायाश्चतुःपलम्॥ ४१॥
चूर्णमग्निप्रसादं स्यात्परमं रुचिवर्द्धनम्।
प्लीहानं कासमर्शांसि शूलं श्वासं वमिं ज्वरम्॥ ४२॥
निहन्ति दीपयत्यग्निं बलवर्णप्रदं परम्।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम्॥ ४३॥

इति सूक्ष्मैलाद्यं चूर्णम्।

व्याघ्रीस्वरसविपक्कं रास्नाकट्फलगोक्षुरव्योषैः।
सर्पिः स्वराभिघातं हन्यात् कासं च पञ्चविधम्॥ ४४॥

इति वङ्गसेनसङ्कलितः अरोचकनिदानचिकित्साधिकारः समाप्तः।

---

## अथ छर्दिरोगनिदानमाह।

दुष्टैर्दोषैः पृथक् सर्वैर्बीभत्सालोकनादिभिः।
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते॥ १॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि।
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः॥ २॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः।
नार्य्याश्चापन्नसत्वायाः स्तथातिद्रुतमश्नतः॥ ३॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः।
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः॥ ४॥
हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम्॥ ५॥

हृत्पार्श्वपीड़ामुखशोषशीर्ष नाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषाय़म् ॥६ ॥
कृच्छ्रेण चाऽल्पं महता च वेगेनार्त्तोऽनिलाच्छर्दयतीह दुःखम् ७
क्षीणस्य या छर्दिरतिप्रवृत्ता सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदन्त्य साध्यां साध्यां चिकित्सेदनुपद्रवाञ्च ॥८॥

अथ वातछर्दिचिकित्सामाह ।

आमाशयोत्क्लेशभवा हि सर्वाः
स्युः छर्दयो लङ्घनमेव तस्मात् ।
प्राक् कारयेत् मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ ९ ॥

ससैन्धवं पिबेत्सर्पिर्वातछर्दिनिवारणम् ।
लवणत्रययुक्तेन संयुक्तं त्र्यूषणेन च ।
हन्यात् क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ॥ १० ॥
मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम् ।
यवागूं मधुमिश्रां च पञ्चमूलीशृतां पिबेत् ॥ ११ ॥

धान्याकविश्वदशमूलकषायसिद्धान्
यूषान्रसान् पवनवम्यरुचिप्रशान्त्यै ।
पीत्वा सुखानि लभते मधुमिश्रितं वा
शङ्खाह्वया स्वरसमूषणचूर्णयुक्तम् ॥ १२ ॥

इति वातछर्दिः ।

अथ पित्तछर्दिनिदानम् ।

मूर्च्छापिपासामुखशोषमूर्द्धताल्वक्षिसन्तापतमो भ्रमार्त्तः ।
पित्तं भृशोष्णं हरितं सतिक्तं धूम्रञ्च पित्तेन वमेत्सदाहम् ॥१३॥

अथ पित्तछर्दिचिकित्सा ।

छर्द्यां पित्तोद्भवायान्तु श्लक्ष्णकुम्भोद्भवं रजः ।
मृद्वीकेक्षुविदारीणां रसोरेकाय शस्यते ॥ १४ ॥

पित्तोपशमनीयानि पानानि शिशिराणि च।
कषायाण्युपयुक्तानि घ्नन्ति पित्तयुतां वमिम्॥ १५॥

लाजामसूरयवमुद्गकृता यवागूः
छर्द्यां हिता मधुयुता बहुपित्तजायाम्।
यूषाः सुगन्धिमधुतिक्तरसप्रगाढ़ा
मृद्भृष्टलोष्टभवमम्बु हितं तृषायाम्॥ १६॥
तृट्दाहपित्तबहुलेषु वमीगतेषु
द्राक्षारसं पिबति माक्षिकसंयुतञ्च॥ १७॥

सोदीच्यं गैरिकं पेयं सेव्यं वा तण्डुलाम्बुना।
शीतं धात्रीरसाद्यं वा पित्तछर्दिनिवृत्तये॥ १८॥
चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवार्य्यते॥ १९॥
चन्दनञ्च मृणालञ्च बालकं तगरं वृषम्।
सतण्डुलोदकक्षौद्रः कल्कः पीतो वमिं जयेत्॥ २०॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारतृट्दाह ज्वरघ्नः संप्रकाशितः॥ २१॥
क्वाथः पर्पटजः पीतः सक्षौद्रः छर्दिनाशनः॥ २२॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।
अधोभागीकृते दोषे छर्दिः शीघ्रं निवर्त्तते॥ २३॥
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दि पित्ताम्लसम्भवाम्॥ २४॥
सिताचन्दनमध्वक्तं लिहेद्वा मक्षिकाशकृत्।
सोपद्रवा पित्तभवा छर्दिरेतेन शाम्यति॥ २५॥
सर्पिः क्षौद्रसितोपेतान् लाजशक्तून् पिबेत् तथा।
पित्तच्छर्दिश्च तेनाशु प्रशाम्यति सुदुस्तरा॥ २६॥

इति पित्तच्छर्दिचिकित्सा।

अथ कफछर्दिनिदानम्।

तन्द्रास्यमाधुर्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्त्तः।
स्निग्धं घनं स्वादुकफं विशुद्धं सलोमहर्षोऽल्परुजं वमेत्तु ॥२७॥

अथ कफछर्दिचिकित्सा।

छर्द्यां कफोद्भवायान्तु वमनं योजयेद्भिषक्।
तोयैः सर्षपसिन्धूत्थहिङ्गुनिम्बकणायुतैः ॥ २८ ॥
शस्यन्ते शालिगोधूमयवमुद्गमकुष्ठकाः।
तक्रकाञ्जिकयूषाश्च पटोलाद्याश्च भोजने ॥ २९ ॥
आरग्वधादिनिर्यूहं दशाङ्गं योग्यमेव च।
पाययेन्मधुसंयुक्तं कफछर्दिविनाशनम् ॥ ३० ॥

मनःशिलायाः फलपूरकस्य रसैः कपित्थस्य च पिप्पलीनाम्।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं लिह्यात्कफच्छर्दियुते च वेगे॥३१॥

विड़ङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत्।
विड़ङ्गप्लक्षशुण्ठीनामथवा श्लेषजां वमिम् ॥ ३२ ॥

सजाम्बवं वा वदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसम्प्रयुक्तां लिह्यात्कफच्छर्दिविनिग्रहार्थम्॥३३॥

इति कफच्छर्दिचिकित्सा।

अथ त्रिदोषछर्दिनिदानम्।

शूलाविपाकारुचिदाहतृष्णा श्वासप्रमोहप्रवलं प्रसक्तम्।
छर्दिस्त्रिदोषाल्लवणाम्लनीलं सान्द्रोष्णरक्तं वमतां नृणां स्यात्३४

विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्ध्वमेति।
उत्पन्नदोषस्य समाचितन्तु दोषं समुद्धूय नरस्य कोष्ठात् ॥३५॥
विण्मूत्रयोस्तत्समगन्धवर्णं तृट्श्वासकासार्त्तियुतं प्रसक्तम्।
दुष्टं नरश्छर्दयतीह वेगात् तयार्दितश्चाशु विनाशमेति ॥ ३६ ॥

अथ त्रिदोषजछर्दिचिकित्सा।

पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम्।

दत्त्वा मधुपलञ्चैव कुड़वं सलिलस्य च।
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम्॥ ३७॥
मसूरसक्तवः क्षौद्रं मर्दिता दाड़िमाम्भसा।
पीता निवारयत्याशु छर्दिं दोषत्रयोद्भवाम्॥ ३८॥
श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः।
पेयश्छर्दित्रये शीतो मुर्वा वा तण्डुलाम्बुना॥ ३९॥
समाक्षिका मधुरसा पीता वा तण्डुलाम्भसा।
तर्पणं वा मधुयुतं तिसृणामपि भेषजम्॥ ४०॥
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम्।
तिसृष्वपि भवेत्पथ्यं माक्षिकेण समन्वितम्॥ ४१॥
युक्ताम्ललवणः पिष्टाः कुस्तुम्बुर्य्योऽथवा हिताः।
तण्डुलाम्बुयुतं खादेत् कपित्थं त्र्यूषणेन वा॥ ४२॥
एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम्।
चूर्णं सितामधुयुतं मनुजो विलिह्य
छर्दिं निहन्ति कफमारुतपित्तजां च॥ ४३॥
इत्येलादि चूर्णम्। इति त्रिदोषच्छर्दिचिकित्सा।
कोलमज्जाकणाधात्री लाजाविल्वफलत्रिकम्।
श्यामाञ्जनाब्दकौलत्थं माक्षिकं विट्सितायुतम्॥ ४४॥
कणोषणकपित्थन्तु त्वगेलापत्रकं समम्।
सक्षौद्राः पादिका लेहाः षड़ेते छर्दिनाशनाः॥ ४५॥
कोलामलकमज्जानौ मक्षिकाविट् सितामधु।
सकृष्णतण्डुलो लेहश्छर्दिमाशु निरच्छति॥ ४६॥
लाजाकपित्थमधुमागधिकोषणानां
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम्।
पथ्यामृतामरिचमाक्षिकपिप्पलीनां

लेहास्त्रय: सकलवम्यरुचिप्रशान्त्यै ॥ ४७ ॥
मनःशिलामागधिकोषणानां चूर्णं कपित्थाम्लरसेन युक्तम् ।
लाजैः समांशैर्मधुनावलीढ़ं छर्दिं प्रसक्तामसकृन्निहन्ति ॥ ४८ ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्वापितं जले ।
तज्जलं पानमात्रेण छर्दिं जयति दुर्जयाम् ॥ ४९ ॥
जात्या रसः कपित्थस्य पिप्पलीमरिचान्वितः ।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्वणाम् ॥ ५० ॥

अत्र जातीशब्देन धात्र्याः ग्रहणम् ।

निम्बाम्रपल्लवगवेधुकधान्यमेव
ह्रीवेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढ़ा निहन्ति मधुना सदुरालभा वा ॥ ५१ ॥
विदलानि च मुद्गानां पिप्पल्यश्चैव कुट्टिता ।
आशु तत्सलिलं पेयं समधु छर्दिनाशनम् ॥ ५२ ॥
सौवर्चलमजाज्यश्च पिप्पलीमरिचानि च ।
युक्तोऽयं मधुना लेहः श्रेष्ठः छर्दिनिवारणः ॥ ५३ ॥
मातुलुङ्गरसो लाजा शर्करामधुसंयुतः ।
पिप्पलीचूर्णसंयुक्तः श्रेष्ठः छर्दिनिवारणः ॥ ५४ ॥
कृष्णोषणसिताचूर्णं लाजतुल्यं समाक्षिकम् ।
कपित्थवीजपूराम्ल कल्कितं छर्दिनाशनम् ॥ ५५ ॥
प्रियङ्ग्वञ्जनमुस्तानि पाययेत्तु यथाबलम् ।
तृष्णातिसारछर्दिघ्नं सक्षौद्रतण्डुलाम्बुना ॥ ५६ ॥
आम्रास्थिविल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ५७ ॥
जम्ब्वाम्रफलशतं क्षौद्रं दत्त्वा सुशीतलं सलिलम् ।
लाजैरवचूर्ण्य पिबेच्छर्द्यतिसारे परं सिद्धम् ॥ ५८ ॥

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् ।
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम् ।
तृष्णारुचिप्रशमनं दाहज्वरहरं परम् ॥ ५९ ॥

पद्मकाद्यं घृतम् ।

कल्याणकत्र्यूषणजीवकानि घृतानि हृद्यानि तु छर्दिरोगे ॥६०॥

इति साधारणविधिः ।

अथ आगन्तुजछर्दिनिदानम् ।

वीभत्सजा दौर्हृदजामजा च ह्यसात्म्यतो वा कृमिजा च या हि ।
सा पञ्चमी तांश्च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥६१॥
शूलहृल्लासबहुला कृमिजा च विशेषतः ।
कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ ६२ ॥

अथ आगन्तुजछर्दिचिकित्सा ।

बीभत्सजामबीभत्सैर्हेतुभिः संहरेद्वमिम् ।
दौर्हृदोत्थां वमिं हृद्यैः काङ्क्षितैर्वस्तुभिर्जयेत् ॥ ६३ ॥
लङ्घनैर्वमनैर्वापि सात्म्यैर्वा सात्म्यसम्भवाम् ।
कृमिहृद्रोगवच्चापि साधयेत् कृमिजां वमिम् ॥ ६४ ॥
यथादोषञ्च वितरेच्छस्तं विधिमनन्तरम् ।
पवनघ्नी चिरोत्थासु प्रयोज्या छर्दिषु क्रिया ॥ ६५ ॥

अथ छर्दितृष्णाचिकित्सामाह ।

फलु प्रवालं छिन्नायाः मधुकं नीलमुत्पलम् ।
क्षुसैः शीतकषायोऽयं तृष्णाछर्दिनिवारणः ॥ ६६ ॥
एतैरेवौषधैः सिद्धां लाजपेयां पिबेन्नरः ।
सशर्करां समाक्षिकां तृष्णाछर्दिनिवारणाम् ॥ ६७ ॥
आम्रजम्बुकषायं वा पिबेन्माक्षिकसंयुतम् ।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ ६८ ॥
वटशुङ्गं सितालोध्रं दाड़िमं मधुकं मधु ।

पिबेत्तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ ६९ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
भोजयेत्तेन शाम्येत छर्दितृष्णे चिरोत्थिते ॥ ७० ॥
महाकल्याणकं सर्पिः कल्याणकमथापि वा ।
शतावरीघृतं वापि तृष्णाछर्दिनिवारणम् ॥ ७१ ॥
कासश्वासौ ज्वरस्तृष्णा हिक्का वैचित्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाः छर्देरुपद्रवाः ॥ ७२ ॥

इति वङ्गसेनसङ्कलितः छर्दितृष्णाछर्दिनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ तृष्णानिदानमाह ।

भयश्रमाभ्यां बलसङ्क्षयाद्वा उर्ध्वं चितं पित्तविवर्द्धनैश्च ।
पित्तं सवातं कुपितं नराणां तालु प्रसन्नं जनयेत्पिपासाम् ॥१॥
स्रोतःस्वऽपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च ॥२॥
भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु ॥ ३ ॥
क्षामास्यता मारुतसम्भवायान्तोदस्तथा शङ्खशिरस्सु चापि ।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विहृद्धिमेति ॥४॥
मूर्च्छान्नविद्वेषविलापदाह रक्तेक्षणत्वं प्रततश्च शोषः ।
शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां सुखधूमनञ्च॥५॥
वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णाबलासेन भवेत्तथानु ।
निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम्॥६॥
क्षतस्य रुक् शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु॥७॥
रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु ।
पेपीयतेऽम्भः स सुखं न याति वा सन्निपातार्दिति केचिदाहुः ।
रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग् व्यवस्येत् ।८॥

त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता।
स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति ॥ ९ ॥
क्षीणस्वरःप्रताम्यन् दीनाननः संशुष्कहृदयगलतालुः।
भवति खलु सोपसर्गात् तृष्णा सा शोषिणी कष्टा ॥ १० ॥
ज्वरमोहक्षयकास श्वासाद्युपसृष्टदेहानाम्।
सर्वास्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ॥
घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया ॥ ११ ॥

अथ तृष्णाचिकित्सामाह।

वातघ्नमन्नपानं मृदुलघुशीतञ्च वाततृष्णायाम्।
स्याज्जीवनीयसिद्धं क्षीरघृतं वातजे तर्षे ॥ १२ ॥
तृष्णातिवृद्धावुदरे च पूर्णे तं वामयेन्मागधिकोदकेन।
विलोमनञ्चात्र हितं विधेयं स्याद्दाड़िमाम्रातकमातुलुङ्गैः ॥१३॥
सुवर्णरौप्यादिभिरग्नितप्तैः लोष्टैः कृतं वा सिकतोत्करैर्वा।
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं क्षौद्रयुतं हितं वा ॥१४॥
तृष्णायां पवनोत्थायां सगुड़ं दधि शस्यते।
रसाश्च बृंहणाः शीता गुडूच्या रस एव च ॥ १५ ॥
पञ्चाङ्गकाः पञ्चगणा य उक्तास्तेष्वम्बुसिद्धं प्रथमे गणे वा।
पिबेत्सुखोष्णं मनुजोऽल्पशस्तु तृषो विमुच्येत हि वातजायाः॥१६॥

इति वाततृष्णा।

पित्तोत्थितां पित्तहरैर्विपक्वं निघ्नन्ति तोयं पय एव वापि॥१७॥
स्वादुतिक्तं द्रवं शीतं पित्ततृष्णापहं परम्।
काश्मर्यं शर्करायुक्तं चन्दनोशीरधान्यकम्।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ १८ ॥
स्याज्जीवनीयसिद्धं क्षीरं घृतं वा पित्तजे तर्षे।
तद्वद् द्राक्षाचन्दन खर्जूरोशीरमधुसंयुतं तोयम् ॥ १९ ॥
द्राक्षाचन्दनखर्जूरी पीतं मधुयुतं जलम्।

तृष्णाहरं पिबेद्वापि मधुना तण्डुलोदकम् ॥ २० ॥

इति पित्ततृष्णा ।

तप्तं द्रवञ्च कटूष्णं कफतृष्णानिवर्हणम् ॥ २१ ॥

विल्वाढ़कीधातकीपञ्चकोल दर्भेषु सिद्धं कफजां निहन्ति ।
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ २२ ॥

सजीरधान्यार्द्रकशृङ्गवेर-
सौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति
पीतानि सद्यः शमयन्ति तृष्णाम् ॥ २३ ॥

लाजोदकं मधुयुतं शीतं गुड़विमर्दितम् ।
काश्मर्य्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः ॥ २४ ॥
शर्कराकेसरं चौद्रं कृष्णाजीरकदाड़िमैः ।
स्नेहो वा तृट्जयी कृष्णा मधुचीरद्रुमाङ्कुरैः ॥ २५ ॥
अम्लं दाड़िमवीजं पीतं धात्रीफलञ्च धान्याम्लैः ।
आर्द्रपटास्तरणकृतप्रावृतगात्रस्तृषां जयति ॥ २६ ॥
गोस्तनेक्षुरसचीर यष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पीतैस्तृषा शाम्यति दारुणा ॥ २७ ॥
कर्णशिरो मुखलेपः चुक्रिकयाम्लदाड़िमरसेन ।
तर्पयति शीघ्रमेव जलौघवत्सैकतराशिम् ॥ २८ ॥
कोलदाड़िमवृक्षाम्लचुक्रिकाचुक्रिकारसः ।
पञ्चाम्लको मुखे लेपः सद्यस्तृष्णां नियच्छति ॥ २९ ॥
चीरेक्षुरसमाध्वीक चौद्रशीधुगुड़ोदकैः ।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः ॥ ३० ॥
तालुशोषे पिबेत्सर्पिर्घृतमण्डमथापि वा ।
धान्याम्लमास्यवैरस्य मलदौर्गन्ध्यनाशनम् ॥
तदेव शृतशीतं हि मुखशोषहरं परम् ॥ ३१ ॥

वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ ३२ ॥
जिह्वातालुगलक्लोमशोषे मूर्द्धनि दापयेत् ।
केशरं मातुलुङ्गस्य घृतसैन्धवसंयुतम् ॥ ३३ ॥
दाड़िमं वदरं लोध्रं कपित्थं बीजपूरकम् ।
पिष्ट्वा मूर्ध्नि प्रलेपश्च पिपासादाहनाशनः ॥ ३४ ॥
वारिशीतं मधुयुक्त माकण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ ३५ ॥

वटप्ररोहैर्मधुकुष्ठकोत्पलैः
सलाजचूर्णैर्गुटिकां प्रकल्पयेत् ।
सुसंहिता सा वदने विधारिता
तृष्णां प्रवृद्धामपि हन्ति सत्वरम् ॥ ३६ ॥

इति सामान्यविधिः ।

क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ।
क्षयोत्थितां क्षीरघृतं निहन्यात् मांसोदकं वा मधुकोदकं वा ३७
आमोद्भवां विल्ववचायुतानां जयेत्कषायैरथ दीपनानाम् ।
उल्लेखनैर्गुर्वशनप्रजातां जयेत् क्षतोत्थां तु विनापिपासाम् ॥३८॥
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुड़ाम्बुना शमयेत् ।
अतिरूक्षदुर्वलानां तृषां शमयेन्नृणामिहाशु पयः ॥ ३९ ॥
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ ४० ॥
मूर्च्छाछर्दितृषादाह स्त्रीमद्यभृशकर्षिताः ।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥ ४१ ॥
तृष्यन्नूर्द्धामयी क्षीणो न लभेत जलं यदि ।
मरणं दीर्घरोगञ्च प्राप्नुयात् त्वरितं नरः ॥ ४२ ॥
सात्म्यान्नपानभैषज्यैस्तृषार्त्तस्य जयेत्तृषाम् ।
तस्यांञ्जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥४३॥

तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वर्जयेत् ॥ ४४ ॥
अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् ।
तोयाभावे पिपासार्त्तः क्षणात्प्राणैर्विमुच्यते ॥ ४५ ॥

इति वङ्गसेनसङ्कलितः तृष्णानिदानचिकित्साधिकारः समाप्तः ।

---

## अथ मूर्च्छानिदानमाह ।

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ।
वेगाघातादभीघाताद्धीनसत्वस्य वा पुनः ॥ १ ॥
करणायतनेषूग्रा वाह्येष्वाभ्यन्तरेषु च ।
निविशन्ते यदा दोषा स्तदा मूर्च्छन्ति मानवाः ॥ २ ॥
संज्ञावहासु नाड़ीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ३ ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्त्तिता ॥ ४ ॥
वातादिभिः शोणितेन मद्येन च विषेण च ।
षट्स्वप्येतासु पित्तं हि प्रभुत्वेनावतिष्ठति ॥ ५ ॥
हृत्पीड़ाजृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च ।
सर्वासां पूर्वरूपाणि यथास्वन्तं विभावयेत् ॥ ६ ॥
नीलं वा यदि वा कृष्णमाकाशमथवारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ॥ ७ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीड़ा हृदयस्य च ।
कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसम्भवे ॥ ८ ॥
रक्तं हरितवर्णञ्च वियत्पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ९ ॥

सपिपासः ससन्तापो रक्तपीताकुलेक्षणः।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥ १० ॥
मेघसङ्काशमाकाशमावृतं वा तमोघनैः।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ११ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ १२ ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १३ ॥
पृथिव्यापस्तमोरूपं रक्तगन्धश्च तन्मयः।
तस्माद्रक्तस्य गन्धेन भुवि मूर्च्छन्ति मानवाः ॥ १४ ॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदपि मुह्यति ॥ १५ ॥
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः।
त एव तस्मात्ताभ्यान्तु मोहौ स्यातां यथेरितौ ॥ १६ ॥
स्तब्धाङ्गदृष्टिस्त्वसृजागूढ़ोच्छ्वासश्च मूर्च्छितः ॥ १७ ॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥ १८ ॥
वेपथुः स्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते।
वेदितव्यं तीव्रतरैर्यथास्वं बिषलक्षणैः ॥ १९ ॥
मूर्च्छा पित्ततमप्राया रजः पित्तानिलाद्भ्रमः।
तमो वातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ॥ २२ ॥
अनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः।
क्लमः स इति विज्ञेयः इन्द्रियार्थप्रबाधकः ॥ २१ ॥
इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्त्तस्येव यस्यैतत्तस्य तन्द्रां विनिर्दिशेत् ॥ २२ ॥
इन्द्रियाणान्तु मनसो मोहो निद्रा निगद्यते।
विमोहस्त्विन्द्रियाणान्तु स तु तन्द्रा निरुच्यते ॥ २३ ॥

दोषेषु मदमूर्च्छाया गतवेगेषु देहिनाम्।
स्वयमेवोपशाम्यन्ति सन्न्यासेनौषधैर्विना ॥ २४ ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबलामलाः।
सन्न्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २५ ॥
स ना सन्न्याससन्न्यस्तः काष्ठीभूतो मृतोपमः।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ॥ २६ ॥

अथ चिकित्सामाह।

सेकावगाहा मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छासु निवारितानि ॥ २७ ॥
सिद्धानि वर्गे मधुरे पयांसि
सदाड़िमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च
मूर्च्छासु पथ्याश्च सतीनमुद्गाः ॥ २८ ॥
मूर्च्छां प्रशस्ताम्बुशिरोविरेकैः
जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः ॥ २९ ॥

कोलमज्जोषणोशीरं केशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ्वा कृष्णां वा मधुसंयुताम् ॥ ३० ॥
भ्रमः पित्तस्य संवृद्धो जायते पवनस्य च।
अतस्तयोः प्रशमनीं क्रियामत्रावचारयेत् ॥ ३१ ॥
महौषधामृता चौद्रं पुष्करं ग्रन्थिकोद्भवम्।
पिबेत्कणायुतं क्वाथं मूर्च्छायाञ्च मदेषु च ॥ ३२ ॥
पिबेद् दुरालभाक्काथं सघृतं भ्रमशान्तये।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ३३ ॥
कार्पासवीजपाण्डुर तण्डुलतक्रैः प्रकल्पिता पेया।

धान्यकहिङ्गुनागरजीरकलवणैर्विनाशयेद् भ्रमणम् ॥३४॥
खिन्नमामलकं पिष्ट्वा द्राक्षया सह संसृजेत्।
विश्वभेषजसंयुक्तं मधुना सह लेहयेत्।
तेनास्य शाम्यते मूर्च्छा श्वासः कासस्तथैव च ॥ ३५ ॥
पञ्चमूलकषायञ्च मधुना सितया पिबेत्।
यथास्वञ्च ज्वरघ्नानि कषायाणि प्रयोजयेत् ॥ ३६ ॥
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः।
मद्यजायां पिबेन्मद्यं निद्रां सेवेत वा सुखम् ॥ ३७ ॥
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ३८ ॥
कृष्णा शताह्वा शुण्ठीनां साभयानां पलं पलम्।
गुड़स्य षट्पलान्येषा गुटिका भ्रमनाशिनी ॥ ३९ ॥

इति भ्रमनाशिनीगुटी।

अञ्जनान्यवपीड़ाश्च धूमाः प्रधमनानि च।
सूचीभिस्तोदनं शस्तं दाहपीड़ानखान्तरे ॥ ४० ॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने ॥ ४१ ॥
उत्थितो लब्धसंज्ञश्च लशुनस्य रसं पिबेत्।
खादेत् सव्योषलवणवीजपूरककेशरम् ॥ ४२ ॥
पथ्याक्काथेन संसिद्धं घृतं धात्रीरसेन च।
सर्पिः कल्याणकं वापि मदमूर्च्छापहं पिबेत् ॥ ४३ ॥

इति वङ्गसेनसङ्कलितः मूर्च्छानिदानचिकित्साधिकारः समाप्तः।

---

## अथ मदात्ययनिदानमाह।

ये विषस्य गुणाः प्रोक्तास्ते मद्येऽपि प्रकीर्त्तिताः।
तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ॥ १ ॥

किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्।
अयुक्तियुक्तं रोगाय युक्तियुक्तं तथामृतम्॥ २॥
प्राणाः प्राणभृतामन्नं तदयुक्तन्तु हन्त्यसून्।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्॥ ३॥
विधिना मात्रया काले हितैरन्नैर्यथा बलम्।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम्॥ ४॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम्।
भवेदायुःप्रकर्षाय बलायोपचयाय च॥ ५॥
काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च।
विधिना सेव्यमाने तु मद्ये सन्निहिता गुणाः॥ ६॥
तदेवानन्नमज्ञेन सेव्यमानममात्रया।
कायाग्निना ह्यग्निसमं समेत्य कुरुते मदम्॥ ७॥
मदेन करणानान्तु भावान्यत्वे कृते सति।
निगूढ़मपि भावं स्वं प्रकाशं कुरुतेऽवशः॥ ८॥
श्लैष्मिकांश्चाल्पपित्तांश्च स्निग्धान्मात्रोपसेविनः।
पानं न बाधतेऽत्यर्थं विपरीतांश्च बाधते॥ ९॥

अथ त्रिगुणमदलक्षणमाह।

बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्न निद्रारतिवर्द्धनश्च।
सम्पाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यो प्रथमो मदो हि॥ १०॥
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः।
आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन॥ ११॥
गच्छेदगम्यानगुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः।
ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषस्त्वतन्त्रः॥ १२॥
चतुर्थे तु मदे मूढ़ो भग्नदार्विव निष्क्रियः।
कार्य्याकार्य्यविभागाज्ञो मृतादपि परो मृतः॥ १३॥
को मदं तादृशं गच्छेदुन्माद इव चापरः।

बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ १४ ॥
निर्भुक्तमेकान्तत एव मद्यं निषेव्यमाणं पुरुषेण नित्यम् ।
उत्पादयेत् कष्टतमान् विकारानुत्पादयेच्चापि शरीरभेदम् ॥१५॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥ १६ ॥
अत्यम्लभक्ष्यावततोदरेण सजीर्णभक्तेन तथा बलेन ।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान्१७
पानात्ययं परमदं पानाजीर्णमथापि वा ।
पानविभ्रमसंज्ञञ्च तेषां वक्ष्यामि लक्षणम् ॥ १८ ॥
हिक्काश्वासशिरः कम्पपार्श्वशूलप्रजागरैः ।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ १९ ॥
तृष्णादाहज्वरस्वेद मोहातिसारविभ्रमैः ।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ २० ॥
छर्द्यरोचकहृल्लास तन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ २१ ॥
ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः ॥ २२ ॥
श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च
विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च ।
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञाः
तृष्णारुजा शिरसि सन्धिषु चापि भेदः ॥ २३ ॥
आध्मानमुग्रमथवोद्गिरणं विदाहः
पाने त्वजीर्णमुपगच्छति लक्षणानि ।
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ॥ २४ ॥
हृद्गात्रतोदकफसंस्रवकण्ठधूम-
मूर्च्छावमिज्वरशिरोरुजनप्रदेहाः ।

द्वेषः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः ॥ २५ ॥
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतं त्यजेत्तु ।
जिह्वौष्ठतालुमसितं त्वथवापि नीलं
पीते च यस्य नयने रुधिरप्रभे वा ॥ २६ ॥
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं त्यजेत्तु ॥ २७ ॥
ध्वंसको विक्षयश्चैव रोगश्चास्योपजायते ।
श्लेष्मप्रसेकहृत्कण्ठास्यशोषश्च सहिष्णुता ।
तन्द्रानिद्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ २८ ॥

अथ चिकित्सामाह ।

मद्यं सौवर्चलं व्योषं युक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ २९ ॥
योजयेन्मातुलुङ्गाम्लदाड़िमैः पानकान्यपि ।
स्निग्धाम्ललवणाम्लांश्च रसान् जाङ्गलजान् शुभान् ॥ ३० ॥
सूक्तं सौवर्चलं शृङ्गी वृषणार्द्रकदीप्यकैः ।
मद्यं पीत्वा जयत्युग्रं पवनोत्थं मदात्ययम् ॥ ३१ ॥
पित्तात्मके मधुरवर्गं कषायसिद्धं
मद्यं हितं समधुशर्करमिष्टगन्धि ।
पीत्वा च मद्यमपि चेक्षुरसप्रगाढ़ं
किञ्चित् क्षणस्थितमथोल्लिखितव्यमेव ॥ ३२ ॥
सतीनमुद्गमिश्रान् वा दाड़िमामलकान्वितान् ।
द्राक्षामलकखर्जूरपरुषकरसेन वा ।
कल्पयेत्तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ ३३ ॥
पित्ते क्षौद्रसितायुक्तं मद्यमर्द्धोदकं पिबेत् ।

पित्तपानात्यये योज्या सर्वतश्च क्रिया हिमाः॥ ३४॥
वमनद्रव्यसंयुक्त मद्येनोल्लेखनं हितम्।
पानरोगे कफोद्भूते लङ्घनञ्च यथा बलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः॥ ३५॥
त्रिफलाया रसो वापि व्योषचूर्णसमन्वितः।
शुष्कमूलकजो यूषः कौलत्थो वा मधूल्कटः॥ ३६॥
यवान्न विकृतिर्योज्या जाङ्गलान्नकृतानि च।
सौवर्चलमजाजीश्च वृक्षाम्लं साम्लवेतसम्।
त्वगेला मरिचार्द्धांशं शर्कराभागयोजितम्॥ ३८॥
एतल्लवणमष्टाङ्ग मग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशुद्धये॥ ३९॥

अत्रैकद्रव्यभागात्तु त्वगेला मरिचानामर्द्धांशकत्वम्। शर्करायाश्च सौवर्चलादिभिश्च तुल्यो भागः।

इति अष्टाङ्गलवणम्।

सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सकैः।
आभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः॥४०॥
न चेन्मद्यक्रमं हित्वा क्षीरमस्य प्रयोजयेत्।
लङ्घनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे॥ ४१॥
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः।
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत्॥ ४२॥
मन्थः खर्जूरमृद्वीका वृक्षाम्लाम्लिकदाड़िमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत्॥ ४३॥
चव्यं सौवर्चलं हिङ्गु जीरकं विश्वदीप्यकम्।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम्॥ ४४॥

इति चव्यादिचूर्णम्।

मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः।

सप्ताहात् पथ्यभुजो मदमूर्च्छाकामलोन्मादान् ॥ ४५ ॥

इति मधुत्रिफलागुड़ार्द्रकयोगौ ।

अहानि सप्त चाष्टौ च नृणां पानात्ययं स्मृतम् ।
पानं हि भजते जीर्णमत ऊर्द्ध्वं विमार्गगम् ॥ ४६ ॥
कुष्माण्डकरसः सगुड़ः शमयति मदमाशु मदनकोद्रवजम् ।
धत्तूरकञ्च दुग्धं सशर्करञ्च पानयोगेन ॥ ४७ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम् ।
सद्यः प्रशमयेत्पीतमात्रमेवारिशीतलम् ॥ ४८ ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणादपि च ।
शाम्यति पूगफलमदश्चूर्णं रुजा शर्कराकबलात् ॥ ४९ ॥
मद्यं पीत्वा यदि ना तत्क्षणमवलेढि शर्करां सघृताम् ।
जातु न मदयति मद्यं मनागपि प्रथितवीर्य्यमपि ॥ ५० ॥
कट्फलमुस्तगुडूची माषैः क्रमविवर्द्धितैश्च तत्सर्वम् ।
चर्वितमुखधृतमात्रं हन्याद्गन्धं सुराप्रभवम् ॥ ५१ ॥
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ।
सर्पिः कल्याणकं वापि मदमूर्च्छापहं पिबेत् ॥ ५२ ॥
शतावरी सवृश्चिक यष्टीकल्कैः शृतं घृतम् ।
पयः पुनर्नवाक्वाथे पानात्ययमपोहति ॥ ५३ ॥
घृतं पुष्टिकरं पानान्मद्यपानहृतौजसः ।

इति शतावरीपुनर्नवाद्यं घृतम् ।

ये च तृष्णादयो रोगास्ते निवार्य्याः स्वभेषजैः ॥ ५४ ॥
मद्यप्रक्षीणदेहस्य वस्तयः सानुवासनाः ।
अभ्यङ्गोत्सादनस्नानसर्पिः क्षीरनिषेवणम् ॥ ५५ ॥
जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ।
पिबेत्सुरां नैव लभेत रोगान् मनोपघातांश्च मदं न याति ॥५६॥
यं दोषमधिकं पश्येत्तमादौ प्रतिकारयेत् ।

कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥ ५७ ॥
कान्तिश्च हीना च विहीनकर्णौ जिह्वातिनीला दशनाबली च।
नेत्रे तु रक्ते शुकपक्षपीते कृष्णाधरौ यत्र विवर्जनीयः ॥ ५८ ॥

इति वङ्गसेनसङ्कलितः पानात्ययपरमदपानाजीर्णपानविभ्रमनिदान-
चिकित्साधिकारः समाप्तः।

---

## अथ मद्यजदाहनिदानमाह।

त्वचं प्राप्तः सपानोष्मा पित्तरक्ताभिमूर्च्छितः।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ १ ॥

अथ चिकित्सामाह।

शतधौतघृताभ्यक्तं दिह्यात्तु यवशक्तुभिः।
कोलामलकसंयुक्तै र्दाड़िमाम्लेन बुद्धिमान् ॥ २ ॥
छादयेत्तस्य सर्वाङ्गमारणालार्द्रवाससा।
लामज्जकेन युक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दि तालवृन्तोपवीजनैः।
सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥ ४ ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं दाहतृष्णोपशान्तये ॥ ५ ॥
क्षीरैः क्षीरकषायैश्च सुशीतैश्चन्दनान्वितैः।
अन्तर्दाहं प्रशमयेदेतैश्चान्यैः सुशीतलैः ॥ ६ ॥
फलिनीलोध्रसेव्याम्बु हेमपत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ७ ॥
श्लक्ष्णसूक्ष्मकृतो लेपश्चन्दनस्यापि दाहनुत्।
त्वग्जातस्योष्मणो रोधाच्छीतकृत्त्वमथागुरु ॥ ८ ॥
ह्रीवेरपद्मकोशीर चन्दनक्षोदवारिणा।

सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥
आमलक्याश्च कुड़वं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थेन पयसः पिष्ट्वा पचेत् प्रस्थे च सर्पिषि ॥ १० ॥
प्रस्थं दत्त्वा सितायाश्च वासापलचतुष्टयम् ।
जीरकं मरिचं कृष्णां चातुर्जातं क्षिपेत्पुनः ॥ ११ ॥
कर्षं दत्त्वा ततः स्निग्धे भाण्डे धृत्वोपभोजयेत् ।
दाहं सुदुर्जयं हन्ति मूर्च्छां छर्दिं चिरोत्थिताम् ॥ १२ ॥

इति आमलक्यादिखण्डः ।

मातुलुङ्गरसक्षौद्र प्रलेपात् दाह नाशनम् ।
शस्यते चात्र पानानि शीतानि विविधानि च ॥ १३ ॥
शीतवातजलस्पर्शः शीतान्युपवनानि च ।
पित्तज्वरहरं यच्च दाहे तत्कार्य्यमिष्यते ॥ १४ ॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ १५ ॥
कुशादिशालिपर्णीभिर्जीवकर्षभसाधितम् ।
तैलं घृतञ्च दाहघ्नं वातपित्तविनाशनम् ॥ १६ ॥

इति कुशाद्यं घृतम् ।

अथ रक्तजदाहनिदानम् ।

कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ।
संधूप्यते चोष्यते च ताम्राभस्ताम्रलोचनः ।
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते ॥ १७ ॥

अथ चिकित्सामाह ।

तं विलङ्घ्य विधानेन संसृष्टाहारमाचरेत् ।
प्रशाम्यत्यथवा दाहो रसैस्तुष्टस्य जाङ्गलैः ॥ १८ ॥
शाखाश्रयं यथा न्यायं रोहिणीं व्यधयेच्छिराम् ॥ १९ ॥

अथ पित्तजदाहनिदानम्।

पित्तज्वरसमः पित्तात् स चाप्यस्य विधिः स्मृतः॥ २०॥
तृष्णानुरोधादब्धातौ क्षीणे तेजः समुद्भवः।
सबाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः।
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते॥ २१॥

अथ चिकित्सा।

पाययेत् काममम्भश्च शर्कराम्भः पयोऽपि वा।
क्षीरमिक्षुरसं वापि कारयेत् पित्तजं विधिम्॥ २२॥

अथ रक्तपूर्णकोष्ठजदाहनिदानम्।

असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः।
विधिः सद्योव्रणीयोक्तस्तस्य लक्षणमेव च॥ २३॥
धातुक्षयोत्थो यो दाहस्तेन मूर्च्छा तृषान्वितः।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीड़ितः॥ २४॥
क्षतजोऽनश्नतश्चान्यः शोचतो वाप्यनेकधा।
तेनान्तर्दह्यतेऽत्यर्थं तृष्णा मूर्च्छा प्रलापकम्॥ २५॥
मर्म्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः।
सर्व्व एव च वर्ज्याः स्युः शीतगात्रेषु देहिनः॥ २६॥

अथ चिकित्सामाह।

तमिष्टविषयोपेतं सुहृद्भिरभिसम्मितम्।
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत्॥ २७॥
सर्व्व एव विवर्ज्यास्तु शीतगात्रेषु देहिषु।
प्रशान्तोपद्रवो वापि शोधनं प्राप्तमाचरेत्॥ २८॥

इति वङ्गसेनसङ्कलितः दाहनिदानचिकित्साधिकारः समाप्तः।

---

## अथोन्मादनिदानमाह ।

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः ॥ १ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
मानसेन च दुःखेन स पञ्चविध उच्यते ॥ २ ॥
विषाद्भवति षष्ठस्तु यथास्वं तेषु भेषजम् ।
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च ॥ ३ ॥

विरुद्धदुष्टाशुचि भोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ ४ ॥
तैरल्पसत्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥ ५ ॥
धीविभ्रमः सत्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च ।
अबद्धवाक्यं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ॥ ६ ॥
रूक्षाल्पशीतान्नविरेक धातुक्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तातिदुःखं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥७॥
अस्थानहास्यस्मितगीतनृत्यवागङ्गविक्षेपणरोदनानि ।
पारुष्य कार्श्यारुणवर्णता च जीर्णे बलं चानिलजस्य रूपम् ॥८॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य हृदिस्थितं पूर्ववदाशु कुर्य्यात् ॥ ९ ॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषाः पीताचभापित्तकृतस्य लिङ्गम् १०
संपूरणैर्मन्दविचेष्टनैश्च सोष्मा कफो मर्मणि संप्रवृद्धः ।
बुद्धिं स्मृतिं चाप्युपहन्ति चित्तं प्रमोहयन् संजनयेद्विकारम् ॥११॥
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा ।
छर्दिश्च लाला च रणश्च भंक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात् १२

यः सन्निपातप्रभवोऽपि घोरः सर्वैः समस्तैरपि हेतुभिः स्यात्।
सर्वाणि रूपाणि विभर्त्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः॥१३

चोरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा।
गाढ़ं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः॥ १४॥
चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चातिमूढ़ः।
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेन भवेद्विसंज्ञः॥ १५॥
अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः।
जागरूको ह्यसन्देह मुन्मादेन विनश्यति॥ १६॥

अथ चिकित्सामाह।

वातिके स्नेहपानं प्राग्विरेकः पित्तसम्भवे।
कफजे वमनं कार्य्यं परो वस्त्यादिकः क्रमः॥ १७॥
यच्चोपदिश्यते किञ्चित् अपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः॥ १८॥
द्रुमाग्निजलशैलेभ्यो विषमेभ्यश्च तं सदा।
रक्षेदुन्मादिनं चैव सद्यः प्राणहरं हि तत्॥ १९॥
ब्राह्मी कुष्माण्डीफल षड्ग्रन्था शङ्खपुष्पिका स्वरसाः।
उन्मादहृतो दृष्टाः पृथगीते कुष्ठमधुमिश्राः॥ २०॥
चाङ्गेरीरसकाञ्जिक गुड़समभागाः सुमथिताः क्रमशः।
उन्मादरोगशमनाः पीता दिवसत्रयेणैव॥ २१॥
मण्डूकपर्ण्याः स्वरसः कनकदलसंयोजितः समभागः।
शमयत्युन्मादगदं तृणराजवल्लीरसयुक्तः॥ २२॥
सितकुसुमवलायाः सार्द्धकर्षत्रयं यः

शिखरिचरणकोलं क्षीरपाकेन पक्वम् ।
पिबति तदनु शीतं प्रातरुत्थाय नित्यम्
जयति झटिति घोरं व्याधिमुन्मादमुग्रम् ॥ २३ ॥
सिद्धार्थको हिङ्गुवचा करञ्जो देवदारु च
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ।
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयं
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥ २४ ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्मादं हृत्वा लक्ष्मीज्वरापहम् ॥ २५ ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा गोमूत्रे च तदर्थकृत् ॥ २६ ॥

इति सिद्धार्थकाद्यञ्जनम् ।

दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम् ॥ २७ ॥
उन्मादशान्तये पेयो रसो वा तिलमाषजः ।
प्रयोज्यं सार्षपं तैलं नस्याभ्यञ्जनयोः सदा ॥ २८ ॥
आश्वासयेत् सुहृद्भिश्च वाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च ॥ २९ ॥
बद्धं सार्षपतैलाक्त मुत्तानमातपे न्यसेत् ।
कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैःस्पृशेत् ॥ ३० ॥
कषाभिस्ताड़यित्वा च सुबद्धं विजने गृहे ।
रुन्ध्याच्चेतो हि विद्वांस्तं यथा व्रजति तत्सुखम् ॥ ३१ ॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ।
त्रासयेच्छस्त्रहस्तैश्च शत्रुभिस्तस्करैस्तथा ॥ ३२ ॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधैरेनं तर्जयन्तो नृपाज्ञया ॥ ३३ ॥

देहदुःखभयेभ्यो हि परं प्राणभयं भवेत्।
तेन तस्य शमं याति सर्वतो विप्लुतं मनः॥ ३४॥
सततं धूपयेच्चैनं श्वगोमांसैश्च पूतिभिः॥ ३५॥
इष्टद्रव्यविनाशेन मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्त्या शान्त्याश्वासैः शमं नयेत्॥ ३६॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवात्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्॥ ३७॥
बुद्ध्वा दोषं वयःसात्म्यं देशकालं बलाबलम्।
चिकित्सितमिदं कुर्य्यादुन्मादे भूतदोषजे॥ ३८॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च॥ ३९॥
अपस्मारक्रियां वापि ग्रहोद्दिष्टाञ्च कारयेत्।
शान्तिं दोषविशुद्धिञ्च स्नेहवस्तिभिराचरेत्॥ ४०॥
मृदुपूर्वान्तु विषजे क्रियामूर्द्धां प्रयोजयेत्।
शोकशान्तिमुपनयेदुन्मादे पञ्चमे भिषक्॥ ४१॥
उरोबाहुललाटस्थां शिरां मुक्त्वा प्रयत्नतः।
निवाते शमनं युंज्याद्बिल्वाद्यम्बुकणान्वितम्॥ ४२॥
त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपाः॥ ४२॥
गोमूत्रपिष्टैरेतैस्तु वर्त्तिर्नेत्राञ्जने हिता।
चातुर्थिकमपस्मार मुन्मादं वा नियच्छति॥ ४४॥

इति त्र्यूषणाद्या वर्त्तिः।

कुष्ठाश्वगन्धे लवणाजमोदे द्वे जीरके त्रीणि कटूनि पाठा।
माङ्गल्यपुष्प्या च समानचूर्णं कृत्वा च चूर्णेन वचोद्भवेन॥४५॥
तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मिताया:।
सर्पिर्मधुभ्याञ्च ततोऽक्षमात्रं लिह्यान्नरः सप्तदिनं हिताशी॥४६॥

ऐश्वर्य्यमिच्छन्मनसश्च धैर्य्यं मेधां तथेच्छन्द्विगुणञ्च कालम्।
पठेन्नरः श्लोकसहस्रमङ्कस्तद्वत् प्रयोज्यं द्विगुणञ्च कालम् ॥४७॥

सारस्वतमिदं चूर्णं ब्रह्मणा निर्मितं स्वयम्।
जगद्धिताय लोकानां दुर्मेधानां विचेतसाम् ॥ ४८ ॥

इति सारस्वतं चूर्णम्।

हिङ्गुसौवर्चलव्योषै र्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ ४९ ॥

इति हिंग्वाद्यं घृतम्।

जटिला पूतना केशी चारटी मर्कटी वचा।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥ ५० ॥
वयस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयस्थानाकुलीद्वयम् ॥ ५१ ॥
कटम्भरा वृश्चिकाली सस्थिराऽपि च तैर्घृतम्।
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ॥ ५२ ॥
महापैशाचकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानां चाग्निदीपनम् ॥ ५३ ॥

इति महापैशाचिकं घृतम्।

त्रिफलालक्ष्मणाऽनन्ता समङ्गा शारिवामृता।
ब्राह्मी पाठा द्विबृहती द्विस्थिरा द्विपुनर्नवा ॥ ५४ ॥
सहदेवी सूर्य्यवल्ली वयस्था गिरिकर्णिका।
तोयकुम्भे पचेदेतत् पलांशं पादशेषिते ॥ ५५ ॥
नतं कौन्ती वचा कुष्ठं कृष्णासर्षपसैन्धवैः।
निरुक् सवर्णवत्सायाः संसिद्धं पयसा च गोः ॥ ५६ ॥
पुष्ययोगे घृतप्रस्थं सुहेमकलशे स्थितम्।
पानाभ्यञ्जनतो मेधा स्मृत्यायुः पुष्टिवर्धनम्।
रक्षोघ्नञ्च विषघ्नञ्च सारस्वतमिदं घृतम् ॥ ५७ ॥

इति सारस्वतं घृतम्।

क्वाथ्ये विचूर्णिते चिप्ता ततः षोड़शिकं जलम्।
पादशेषं प्रकर्त्तव्यमेषः क्वाथविधिः स्मृतः॥ ५८॥
दशमूली तथा रास्ना वातारिस्त्रिवृता बला।
मूर्वा शतावरी चेति क्वाथ्यैस्तु कुड़वैः पृथक्॥ ५९॥
कृतक्वाथं पृथक् प्रस्थद्वयं मृद्वग्निना पचेत्।
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरानन्ता द्वे रजन्यौ शारिवे द्वे प्रियङ्गुका॥ ६०॥
नीलोत्पलैला मञ्जिष्ठा दन्तीदाड़िमकेसरम्।
विड़ङ्गं पृश्निपर्णी च कुष्ठचन्दनपद्मकैः॥ ६१॥
तालीशपत्रं वृहती मालतीकुसमं नवम्।
अष्टाविंशतिभिः कल्कैः एतैः कर्षसमन्वितैः॥ ६२॥
चतुर्गुणं जलं दत्त्वा पिष्टैस्तद् विपचेत् घृतम्।
अपस्मारे ज्वरे शोषे कासे मन्दानले कृशे॥ ६३॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके।
मूत्रकृच्छ्रे कटीशूले विसर्पाभिहतेषु च॥ ६४॥
कण्डूपाण्डूामयोन्माद विषमेहगरेषु च।
भूतोपहतचित्तानां गद्गदानामचेतसाम्॥ ६५॥
शस्तं स्त्रीणाञ्च बन्ध्यानां धन्यमायुर्बलप्रदम्।
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहनिवारणम्॥ ६६॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च॥

इति पानीयकल्याणकं घृतम्।

द्विजलं सचतुःक्षीरं तस्यात् कल्याणकं महत्।
एभ्य एव स्थिरादीनि जले पक्त्वैव विंशतिम्॥ ६७॥
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम्।
वीराद्विमाष काकोली स्वयं गुप्तर्षभर्द्धिभिः॥ ६८॥
मेदया च समैः कल्कैस्तस्मात् कल्याणकं महत्।

बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ ६९ ॥

इति महाकल्याणकं घृतम्।

श्यामा मधुरसा रास्ना देवदारु शतावरी।
श्वदंष्ट्रा दशमूलञ्च तैर्युक्त्या क्वाथकल्कितैः ॥ ७० ॥
साधितश्चैतसं नाम घृतं चेतो विकारनुत्।
उन्मादमदमूर्च्छायां ज्वरापस्मारभेषजम् ॥ ७१ ॥

इति चैतसं घृतम्।

पञ्चमूल्या च काश्मर्य्या रास्नैरण्डत्रिवृद्बला।
मूर्वाशतावरी चेति क्वाथैर्द्विपलिकैरिमैः ॥ ७२ ॥
कल्याणकस्य चांशेन चैतसं नाम तद्घृतम्।
सर्वचेतो विकाराणां शमनं परमुच्यते ॥ ७३ ॥
कार्य्यः कषायो द्विगुणाष्टतोयैः पानीयकल्याणककल्कपाच्यम्।

इति द्वितीयं चैतसं घृतम्।

निशायुक् त्रिफला श्यामा वचा सिद्धार्थहिङ्गुभिः।
शिरीषकटभी श्वेता मञ्जिष्ठा व्योषदारुभिः ॥ ७४ ॥
समैः कल्कैर्घृतं मूत्रे सिद्धमुन्मादनाशनम् ॥

इति निशाद्यं घृतम्।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठा सरलं दारु शठ्येलापूतिकेशरम् ॥ ७५ ॥
पत्रं तैल्वं सुरा मांसी कङ्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवणागुरुकुङ्कुमम् ॥ ७६ ॥
त्वग्रेणुनलिका चेति तैलान्मस्तु चतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं परमं मतम् ॥ ७७ ॥
अपस्मारग्रहोन्माद कृत्यालक्ष्मीज्वरापहम्।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥ ७८ ॥

इति चन्दनाद्यं तैलम्।

विवृतामिषमद्यो यो हिताशी प्रयतः शुचिः।
निजागन्तुभिरुन्मादैर्न कदाचित् स युज्यते॥ ७९॥
प्रसादश्चेन्द्रियार्थानां बुद्धग्रात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम्॥ ८०॥

अथ भूतोन्मादनिदानमाह।

अमर्त्यवाग्विक्रमवीर्य्यचेष्टाज्ञानादिविज्ञानबलादिभिर्यः।
उन्मादकालो नियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम्॥ ८१॥

सन्तुष्टः शुचिरथ दिव्यमाल्यगन्धो
निस्तन्द्रोऽप्यवितथसंस्कृतप्रभाषी।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः॥ ८२॥
संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः।
सन्तुष्टो भवति न चान्नपानजातैः
दुष्टात्मा भवति च देवशत्रुजुष्टः॥ ८३॥
हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः।
नृत्यन् वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीड़ितो मनुष्यः॥ ८४॥
ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतमतिरल्पवाक्सहिष्णुः।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीड़ितो मनुष्यः॥ ८५॥
प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः।
मांसेप्सुस्तिलगुड़पायसाभिकाम-

स्तृङ्गक्तो भवति पितृग्रहाभिजुष्टः ॥ ८६ ॥
यस्तूर्व्यां प्रसरति सर्पवत् कदाचित्
सृक्किण्यौ विलिहति जिह्वया तथैव ।
क्रोधालुर्गुड़मधुदुग्धपायसेप्सुः
विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥ ८७ ॥
मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति स राक्षसैर्गृहीतः ॥ ८८ ॥
देवविप्रगुरुद्वेषी वेदवेदाङ्गनिन्दकः ।
आत्मपीड़ाकरोऽहिंस्रो ब्रह्मराक्षससेवितः ॥ ८९ ॥
उद्धस्तः कृशपुरुषो विरुद्धभाषी-
दुर्गन्धो भृशमशुचिस्तथातिलोलः ।
बह्वाशी विजनवनान्तरोपसेवी
व्याचेष्टन् व्रसति रुदन् पिशाचजुष्टः ॥ ९० ॥
स्थूलाक्षो द्रुतमटनः सफेनलेही
निद्रालुः पतति च कम्पते च योऽति ।
यश्चाद्रिद्विरदनगादिविच्युतः सन्
सोऽसाध्यो भवति तथा त्रयोदशाब्दे ॥ ९१ ॥

देवग्रहाः पौर्णमास्या मसुराः सन्ध्ययोरपि ।
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यपि ॥ ९२ ॥
पितरः कृष्णपक्षे स्युः पञ्चम्यामपि चोरगाः ।
रक्षांसि रात्रौ पैशाचाः चतुर्दश्यां विशन्ति हि ॥ ९३ ॥
दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ।
स्वमणिं भास्कराचिंश्च यथा देहञ्च देहधृक् ।
विंशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणाम् ॥ ९४ ॥

अथ चिकित्सामाह।

सर्पिष्पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ॥ ९५ ॥
पूजावल्युपहारेष्टि होममन्त्राञ्जनादिभिः।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥ ९६ ॥
रक्तमाल्यानि गन्धश्च वीजानि मधुसर्पिषी।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ॥ ९७ ॥
ऋक्षजम्बुकरोमाणि शल्लकीलसुनं तथा।
हिङ्गु मूत्रञ्च वस्तस्य धूपमस्य प्रयोजयेत्।
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ॥ ९८ ॥
शिरीषवीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम्।
मञ्जिष्ठां रजनीं कुष्ठं वस्तमूत्रेण पेषयेत् ॥ ९९ ॥
वार्त्तीच्छायाविशुष्का च सा योज्या नयनाञ्जने ॥ १०० ॥
कर्पासास्थिमयूरपिच्छवृहतीनिर्माल्यपिण्डीतकै-
स्त्वङ्मांसी वृषदंशविट् तुषवचाकेशाहिनिर्मोचनैः।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् ॥ १०१ ॥

इति महाधूपवरः।

कल्याणकं प्रयुञ्जीत महद्वा चैतसं घृतम्।
तैलं नारायणं वाथ महन्नारायणं तथा ॥ १०२ ॥
न च रौद्रं प्रयुञ्जीत प्रयोगं देवताग्रहे।
ऋते पिशाचादन्येषु प्रतिकूलं न वा चरेत् ॥ १०३ ॥
वैद्यांस्तु वै निहन्युस्ते ध्रुवं क्रुद्धा महौजसः।
हिताहितविधानञ्च नित्यमेव समाचरेत् ॥ १०४ ॥

इति वङ्गसेनसङ्कलितः उन्मादभूतोन्मादनिदानचिकित्साधिकारः समाप्तः ॥

---

## अथापस्मारनिदानमाह।

चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः।
कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥ १ ॥
वातात्पित्तात्कफात्सर्वैर्दोषैः स स्याच्चतुर्विधः।
तमसो दर्शनं ध्यानं हृत्कम्पो नेत्रवैकृतम्।
भ्रमो हृदयशून्यत्वं भाविनस्तस्य लक्षणम् ॥ २ ॥
तमः प्रवेशः संरम्भो दोषोद्रेकहतस्मृतिः।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ ३ ॥
हृत्कम्पशून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढ़ता।
निद्रानाशश्च तस्मिंश्च भविष्यति भवन्त्यथ ॥ ४ ॥
कम्पते दशते दन्तान् फेनोद्वामी श्वसित्यपि।
परुषारुणकृष्णानि पश्येद्रूपाणि चाऽनिलात् ॥ ५ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः।
सतृष्णोष्णानलव्याप्त लोकदर्शी च पैत्तिकः ॥ ६ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः।
पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ ७ ॥
सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः।
अपस्मारः स चाऽसाध्यो यः क्षीणस्याऽनवश्च यः ॥ ८ ॥
प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवम्।
नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत् ॥ ९ ॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः।
अपस्माराय कुर्वन्ति वेगं किञ्चिदथान्तरम् ॥ १० ॥
देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्।
शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयः ॥ ११ ॥

अथ चिकित्सामाह।

पूर्वं युञ्ज्यादपस्मारे छर्दनादीनि बुद्धिमान्।

वातिकं वस्तिभिः प्रायः पैत्तिकन्तु विरेचनैः।
कफजं वमनैर्धीमानपस्मारमुपाचरेत्॥ १२॥
ततस्तीक्ष्णं प्रयुञ्जीत भिषक् सम्यग्विशोधनम्।
सर्वतः शुद्धदेहस्य स्यादुन्मादहरी क्रिया॥ १३॥
उपयोगि ग्रहोक्तानां योगानां चाथ शेषतः।
शिग्रुकट्वङ्गकिण्हिही निम्बत्वग्रससाधितम्॥
चतुर्गुणे गवां मूत्रे तैलमभ्यञ्जने हितम्॥ १४॥
गोधानकुलनागानां वृषभर्क्षगवामपि।
पित्तेषु तैलं सिद्धञ्च नस्याभ्यङ्गेषु पूजितम्॥ १५॥
तीक्ष्णैरुभयतो भागैः शिरश्चापि विरेचयेत्।
पूजां रुद्रस्य कुर्वीत तद्गणानां विशेषतः॥ १६॥
तैलेन लशुनं सेव्यं पयसा च शतावरीम्।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम्॥ १७॥
उद्बन्धननरग्रीवापाशं दग्ध्वा कृतामसी।
शीताम्बुना समं पीत्वा हन्त्यपस्मारमुद्धतम्॥ १८॥
विदह्य निर्द्रवां कृत्वा छागजामन्त्रनालिकाम्।
तामम्लसाधितां खादेदपस्मारमुदस्यति॥ १९॥
निर्गुण्डी भव वन्दाक पाननस्योपयोगतः।
उपैति सहसा नाशमपस्मारो महागदः॥ २०॥
मनोह्वा तार्क्ष्यजञ्चैव शकृत्पारावतस्य च।
अञ्जनाद्धन्त्यपस्मारमुन्मादञ्च विशेषतः॥ २१॥
श्वशृगालविड़ालानां कपीनाञ्च गवामपि।
पित्तानि नस्यतो दद्यादपस्मृतिनिवृत्तये॥ २२॥
यष्टीहिङ्गुवचादारु शिरीषलशुनामयैः।
साजमूत्रैरपस्मारे सोन्मादे नावनाञ्जने॥ २३॥
कपित्थाच्छारदान्मुद्गान् मुस्तोशीरयवांस्तथा।

सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तिं प्रकल्पयेत् ॥ २४ ॥
अपस्मारे तथोन्मादे सर्पदंष्ट्रे गरार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ २५ ॥
बद्धपायुं विपर्य्याचं शीतपादकरोदरम्।
विद्याज्जलमृतं जन्तुं शूनपान्नाभिमेहनम् ॥ २६ ॥
इति जलमृतलक्षणमिदम्।

पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ २७ ॥
याभिः क्रियाभिः सिद्धाभिर्हृदयं सम्प्रबुद्ध्यते।
स्रोतांसि चास्य शुद्ध्यन्ति स्मृतिं संज्ञाञ्च विन्दति ॥ २८ ॥
नकुलोलूकमार्जार गृध्रकीटाहिकाकजः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ २९ ॥
गोमूत्रसिद्धार्थकशिग्रुपर्णैरुद्वर्त्तनं तैरथवा प्रलेपः।
पूतिश्च गोमत्स्यकृतोऽत्र धूमो नस्यञ्च तीक्ष्णैरवबोधनार्थम्॥३०॥
अपेतराक्षसीकुष्ठं पूतनाकेश रोचकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचयेत् ॥ ३१ ॥
मूलं वह्निशिखाया गवाच्यालीढं नरेण मासेन।
निःशेषयत्यपस्मृतिमिति सिद्धं नात्र सन्देहः ॥ ३२ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥ ३३ ॥
उत्तरदिग्गतमुस्तकमूलं बुद्ध्या समुद्धृतं पेष्यम्।
पीतं पयसा हन्यादपस्मृतिं गो सवर्णवत्सायाः ॥ ३४ ॥
कूष्माण्डकफलोत्थेन रसेन परिपेषितम्।
अपस्मारविनाशाय यष्ट्याह्वं स पिबेत्त्र्यहम् ॥ ३५ ॥
काकोत्तरगतं मूलं योगानीतं विधूपितम् ॥ ३६ ॥
उग्रमक्षमितं चूर्णं कृतञ्च मधुसर्पिषा।

भक्षयेत् क्षीरभक्ताशी त्रिदिनेऽपस्मृतिक्षयः ॥ ३७ ॥
कृकलासस्य मत्तस्य ग्रीष्मे च जठरे क्षिपेत्।
विपाटिते च मरिचं शोषे स्थाप्यं प्रयत्नतः।
चूर्णयित्वा प्रधमयेदपस्मारनिवृत्तये ॥ ३८ ॥
मदनस्य च वीजानि चूर्णयित्वा तथैव च।
पिण्डीतकस्य चाल्पस्य कर्षकं पेषयेज्जले ॥
ततोऽस्य पानमात्रेण नश्यतेऽपस्मृतिर्गदः ॥ ३९ ॥
त्रिपाठिना विक्रमेण ह्ययमुक्तो न संशयः।
दुश्चिकित्स्यो ह्यपस्मारश्चिरकाली महागदः ॥ ४० ॥
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥ ४१ ॥
हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ ४२ ॥
पञ्चकोलं समरिचं त्रिफलं विड़सैन्धवम्।
कृष्णाविड़ङ्गपूतीक यवानीधान्यजीरकम् ॥ ४३ ॥
पीतमुष्णाम्बुना चूर्णं वातश्लेष्मामयापहम्।
अपस्मारे तथोन्मादे अर्शसां ग्रहणीगदे ॥ ४४ ॥
एतत्कल्याणकं चूर्णं नष्टस्याग्नेश्च दीपनम्।

इति कल्याणकं चूर्णम्।

पलङ्कषा वचा यष्टी वृश्चिकाली च सर्षपा।
जटिला पूतनाकेशी नाकुली हिङ्गुजीरकैः ॥ ४५ ॥
लसुनातिविषा तिक्ता कुष्ठैर्विड़्भिश्च पक्षिणाम्।
मांसाशिनां यथा लाभं वस्तमूत्रे चतुर्गुणे ॥ ४६ ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ ४७ ॥

इति पलङ्कषातैलम्।

त्रिफलाव्योषकुष्ठाब्दयवक्षारफणिज्जकैः।
एभिः कल्कीकृतैर्द्रव्यैर्गजमूत्रे चतुर्गुणे ॥ ४८ ॥

साधितं नावनं तैलमपस्मारं विनाशयेत् ॥ ४९ ॥

इति त्रिफलातैलम् ।

ब्राह्मीरसवचाकुष्ठं शङ्खपुष्पीभिरेव च ।
पुराणं पक्वमुन्मादग्रहापस्मारहृद्‌घृतम् ॥ ५० ॥

इति ब्राह्मीघृतम् ।

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ ५१ ॥

इति कुष्माण्डघृतम् ।

गोसकृद्रसदध्याम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चातुर्थिकोन्मादमपस्मारविनाशनम् ॥ ५२ ॥

इति स्वल्पपञ्चगव्यघृतम् ।

द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनी कटुरोहिणी ॥ ५३ ॥
शम्याकफलमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥ ५४ ॥
भार्गी पाठा त्रिकटुकं त्रिवृता निचुलानि च ।
श्रेयसीमाढ़कीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥ ५५ ॥
द्वे शारिवे रोहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥ ५६ ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिदं ख्यातं महत्तदमृतोपमम् ॥ ५७ ॥
अपस्मारे तथोन्मादे श्वयथावुदरेष्वपि ।
गुल्मार्शः पाण्डुरोगेषु कामलायां हलीमके ॥ ५८ ॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थिकनिवारणम् ।

इति महापञ्चगव्यं घृतम् ।

जङ्गमानां वयस्थानां चर्मरोमनखादिकम् ।

क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥ ५९ ॥
शणस्त्रिवृत्तथैरण्ड दशमूली शतावरी।
रास्ना मागधिका शिग्रु क्वाथ्ये द्वे द्वे पले पृथक् ॥ ६० ॥
विदारी मधुकं मेदे द्वे काकोल्यौ तथा सिता।
खर्जूरी भीरुमृद्वीका युञ्जातं गोक्षुरं तथा ॥ ६१ ॥
चैतसस्य घृतस्यांशैः पक्तव्यं सर्पिरुत्तमम्।
महाचैतससञ्ज्ञन्तु ज्वरापस्मारनाशनम् ॥ ६२ ॥
मदोन्मादप्रतिश्याय तृतीयकचतुर्थकान्।
पाप्मालक्ष्मी जयेदेतत् सर्वग्रहनिवारणम् ॥ ६३ ॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम् ॥ ६४ ॥
द्रव्य आपोथिते क्वाथ्ये दत्त्वा षोड़शिकं जलम्।
पादशेषञ्च कर्त्तव्यमेष क्वाथविधिः स्मृतः ॥ ६५ ॥

इति महच्चैतसं घृतम्।

मधूकद्विपले कल्के द्रोणे चामलकीरसे।
तस्मिन् सिद्धं घृतप्रस्थं पित्तापस्मारभेषजम् ॥ ६६ ॥

इति मधूकघृतम्।

मांसक्षीरेक्षुरसयोः काश्मर्य्यष्टगुणे घृते।
कार्षिकैर्जीवनीयैश्च सर्पिः प्रस्थं विपाचयेत्।
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति ॥ ६७ ॥

इति मांसीघृतम्।

वचा शम्याककैरण्डवयस्था हिङ्गुचोरकैः।
सिद्धं पलङ्कषायुक्तैर्वातश्लेष्मात्मके घृतम् ॥ ६८ ॥

इति वचाद्यं घृतम्।

कटभी निम्बकट्वङ्गमधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थं प्रशस्यते ॥ ६९ ॥

इति कटभीतैलम्।

शिग्रुकुष्ठशिलाजाजी लशुनव्योषहिङ्गुभिः ।
वत्समूत्रे शृतं तैलं नावनं स्यादपस्मृतौ ॥ ७० ॥

इति शिग्रुतैलम् ।

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम् ॥ ७१ ॥

इति जीवनीययमकम् ।

इति वङ्गसेनसङ्कलितोऽपस्मारनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ वातव्याधिनिदानमाह ।

रूक्षशीताल्पलघ्वन्न व्यवायातिप्रजागरैः ।
लङ्घनप्लवनात्यध्वव्यायामादिप्रचेष्टितैः ॥ १ ॥
विषमादुपचाराद्वा दुष्टासृक् स्रावणादति ।
धातूनां संक्षयाच्चिन्ता शोकरोगातिकर्षणात् ॥ २ ॥
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्म्मबाधाद्गजोष्ट्राश्व शीघ्रयानादिसेवनात् ॥ ३ ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रयान् ॥ ४ ॥
अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ॥ ५ ॥
आत्मरूपन्तु यद्व्यक्तमपायो लघुता पुनः ।
सङ्कोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ॥ ६ ॥
लोमहर्षः प्रलापश्च पार्श्वपृष्ठकटीग्रहाः ।
खाञ्जपाङ्गुल्यकुब्जत्वशोषोऽङ्गानामनिद्रताम् ॥ ७ ॥
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ।
शिरोनासाक्षिजत्रूनां ग्रीवायाश्चापि हुण्डनम् ॥ ८ ॥
भेदस्तोदार्त्तिराक्षेपो मोहश्चायास एव च ।

एवं विधानि रूपाणि कुरुते कुपितोऽनिलः।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ ९ ॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः।
व्रध्नहृद्रोगगुल्मार्शपार्श्वशूलञ्च मारुते ॥ १० ॥
सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम्।
वेदनाभिः परीताश्च स्फुटन्तीवास्थिसन्धयः ॥ ११ ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः।
जङ्घोरुत्रिकहृत्पृष्ठ रोगशोफा गुदे स्थिते ॥ १२ ॥
रुक्पार्श्वोदरहृन्नाभ्यां तृष्णोद्गारविसूचिकाः।
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥ १३ ॥
पक्वाशयस्थेऽन्त्रकूजं शूलाटोपौ करोति च।
कृच्छ्रमूत्रपुरीषत्व मानाहन्त्रिकवेदनाम् ॥ १४ ॥
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः ॥ १५ ॥
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते।
आतन्यते सरागा च सर्वरुक् त्वग्गतेऽनिले ॥ १६ ॥
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः।
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥ १७ ॥
गुर्वङ्गन्तुद्यतेऽत्यर्थं दण्डमुष्टिहतं तथा।
सरुक् स्तिमितमत्यर्थं मांसमेदोगतेऽनिले ॥ १८ ॥
भेदोऽस्थिपर्वणां सन्धि शूलं मांसबलक्षयः।
अस्वप्नं सन्तता रुक् च मज्जास्थिकुपितेऽनिले ॥ १९ ॥
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥ २० ॥
कुर्य्याच्छिरागतः शूलं शिरः कुञ्चनपूरणम्।
बाह्याभ्यन्तरमायामं खल्लीकुब्जत्वमेव च ॥ २१ ॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः।

हन्ति सन्धिगतः सन्धीन् शूलशोथौ करोति च ॥ २२ ॥
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ।
दौर्बल्यं सदनं तन्द्रा वैरस्यञ्च कफावृते ॥ २३ ॥
उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रमः क्लमः ।
अस्वेदहर्षौ मन्दाग्निः शीतता च कफावृते ॥ २४ ॥
स्वेददाहौष्ण्यमूर्च्छाः स्युः समाने पित्तसंयुते ।
कफेन सङ्गो विण्मूत्रे गात्रहर्षश्च जायते ॥ २५ ॥
अपाने पित्तयुक्ते तु दाहौष्ण्यं रक्तमूत्रता ।
अधःकाये गुरुत्वञ्च शीतता च कफावृते ॥ २६ ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ।
गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥ २७ ॥
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ।
स्तम्भनोत्क्षेपणश्वास शोफशूलानि सर्वशः ॥ २८ ॥

अथ चिकित्सामाह ।

नरञ्च शुद्धवातार्त्तमादौ पानं नियोजयेत् ।
वसायाश्चाथ मज्जायाः तैलस्याथ घृतस्य च ॥ २९ ॥
अभ्यङ्गं स्वेदनं वस्तिर्नस्यं स्नेहो विरेचनम् ।
स्निग्धाम्ललवणस्वादु वृष्यं वातामयापहम् ॥ ३० ॥
पटोलकफलैर्यूषो वृष्यो वातहरो लघुः ।
वाट्यालककृतो यूषः परं वातविनाशनः ॥ ३१ ॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ॥ ३२ ॥
कोलं कुलत्था सुरदारुरास्ना माषा उमातैलफलानिकुष्ठम् ।
वचाशताह्वायवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ३३ ॥
स्नेहैश्चतुर्भिर्दशमूलमिश्रै र्गन्धौषधैश्चानिलहृत्प्रदेहः ।
आनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात् ॥ ३४ ॥
निरस्थिपिशितं पिष्टं स्विन्नं गुड़घृतान्वितम् ।

कृष्णामरिचसंयुक्तं वेशवारमिति स्मृतम्॥ ३५॥

इति वेशवारः।

बृहत् फाणिज्जकोत्थेन रसेन परिलेपयेत्।
प्रदेशं वायुना ग्रस्तं नरः सम्यक् प्रशान्तये॥ ३६॥
तिन्तिड़ीकदलैः सिद्धं तालखिण्डिकया सह।
पिष्ट्वा सुखोष्णमालेपं दद्याद्वातरुजापहम्॥ ३७॥
वाजिगन्धाबलातिस्रो दशमूली महौषधम्।
द्वे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः॥ ३८॥

इति वाजिगन्धादिगणः।

सहचराऽमरदारु सनागरं क्वथितमम्भसि तैलविमिश्रितम्।
पवनपीड़ितदेहगतिः पिबन् द्रुतविलम्बितगो भवतीच्छया॥३९॥

पलमर्द्धपलञ्चापि रसोनस्य च कुट्टितम्।
हिङ्गुजीरकसिन्धूत्थ सौवर्चलकटुत्रिकैः॥ ४०॥
चूर्णैस्तैर्माषकोन्मानैरवचूर्ण्य विलोड़ितम्।
यथाग्निभक्षितं प्रातरुबुक् क्वाथानुपानतः॥ ४१॥
दिने दिने प्रयोक्तव्यं सासमेकं निरन्तरम्।
वातरोगान्निहन्त्याशु चार्दितं चापतन्त्रकम्॥ ४२॥
एकाङ्गरोगिणे दद्यात्तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भेषु च गृध्रस्यां क्रमिदोषे विशेषतः॥ ४३॥

इति पेयं रसोनम्।

पलमर्द्धपलं वापि रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थ सौवर्चलकटुत्रिकैः॥ ४४॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोड़ितम्।
यथाग्निभक्षितं प्रातरुबुक् क्वाथानुपानतः॥ ४५॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातामयं निहन्त्येव मर्दितं चापतन्त्रकम्॥ ४६॥

एकाङ्गरोगिणां रोगं तथा सर्वाङ्गरोगिणाम्।
ऊरुस्तम्भगृध्रसीश्च शूलदन्द्वं क्रमीनपि ॥ ४७॥
कटिपृष्ठामयं हन्याज्जाठरञ्च समीरणम्।

इति स्वल्परसोनपिण्डः।

पिष्ट्वा ससूक्ष्मं लशुनस्य कन्दं घृतेन लिह्याद् घृतभोजनाशी।
तस्य प्रणश्यन्ति हि वातरोगाः संस्कारहीनात् पुरुषादिवार्थः ४८

दशमूलस्य निर्यूहो हिङ्गुपुष्करचूर्णितः।
शमयेत्परिपीतस्तु वातं मिश्रिणसंज्ञितम् ॥ ४९ ॥
वातग्रहप्रदेशे च स्वेदः कार्य्यो विजानता।
सिद्धार्थकविमिश्रैस्तु पत्रैर्मदनमिश्रितैः ॥ ५० ॥
यदा तेन विधानेन सदोषत्वान्न सिद्ध्यति ॥ ५१ ॥
भेषजैः स्नेहसंयुक्तैर्भोज्यैर्हि प्रचितो मलः।
मार्गं रुद्ध्वाऽनिलं रुन्ध्यात्तस्मात्तमनुलोमयेत् ॥ ५२ ॥
क्षीणो यश्च विरेकैः स्यात्तं निरूहैरुपाचरेत् ॥ ५३ ॥
शीतोष्णस्निग्धरूक्षाद्यैर्वातलो यो न शाम्यति।
विकारस्तत्र विज्ञेयो दुष्टमेवात्र शोणितम् ॥ ५४ ॥
पिबेत् कुटजबीजानां चूर्णं प्रातः सुखाम्बुना।
शुण्ठीचित्रकयुक्तानां कुक्षिवातनिवारणम् ॥ ५५ ॥
प्रातरुत्थाय यत्नेन तैलमात्रासमन्वितम्।
पिबेद्वृषणवातघ्न मार्द्रकस्वरसं बुधः ॥ ५६ ॥
ऊर्द्ध्ववातविनाशाय वासापत्रसमन्वितम्।
श्यामामूलं पिबेत्पिष्टं क्षीरेण परिमिश्रितम् ॥ ५७ ॥
सुप्तवाते त्वसृङ्मोक्षं कुर्य्याच्च बहुशो भिषक्।
दिह्याच्च लवणागार धूमैस्तैलसमन्वितैः ॥ ५८ ॥
हृदयानिलनाशाय गुडूचीमरिचान्वितम्।
पिबेत्प्रातः प्रयत्नेन सम्यगुष्णाम्भसा सह ॥ ५९ ॥

पिबेदुष्णाम्भसा पिष्टं साश्वगन्धं विभीतकम्।
गुड़युक्तं प्रयत्नेन हृदयानिलनाशनम्॥ ६०॥
देवदारुसमायुक्तं नागरं परिपेषितम्।
हृद्वातवेदनार्त्तस्तु पीत्वा सुखमवाप्नुयात्॥ ६१॥
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम्॥ ६२॥
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः।
सानूपमांसः सुस्विन्नः सर्वस्नेहसमन्वितः॥ ६३॥
सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्त्तितः।
तेनोपनाहं कुर्वीत सदा वै वातरोगिणाम्॥ ६४॥
काकोल्यादिगणो ग्राह्यो नाष्टवर्गिकसंज्ञिकः।
वातघ्नो दशमूलादि वर्गोऽम्लो दाड़िमादिकम्॥ ६५॥
सर्वस्नेहश्चतुःस्नेहो लवणं सैन्धवादिकम्।
अम्लादिभिश्च संस्कार्य्यं काकोल्यादित्रयं त्रिभिः॥ ६६॥

इति साल्वणः स्वेदः।

दशमूलीवलास्तिस्रो विदारीपृश्निपर्णिका।
शतावर्य्यश्वगन्धा च जीवनीयगणैः सह॥ ६७॥
श्यामापुनर्नवैरण्ड पृश्नि पर्णी च मर्कटी।
पुण्डरीकं तुगाक्षीरी शाल्मलीसुरदारु च॥ ६८॥
कुष्ठशूरणमूलानि कर्कटाख्यामृता निशा।
आम्रातकोकिलाख्यश्च शठीपाषाणभेदकः॥ ६९॥
अलर्को वसुघण्टा च सूर्य्यावर्त्तः सकाञ्चनम्।
यवकोलकुलत्थाश्च तिलोमासर्षपास्तथा॥ ७०॥
रास्नाप्रसारणीकुष्ठं मातुलुङ्गाम्लवेतसौ।
चूक्रानूपानि मांसानि स्नेहाश्चत्वार एव च॥ ७१॥
काञ्जिकं दधितक्रञ्च जम्बीरं तिन्तिड़ीफलम्।
कुक्कुटीवीजपूरञ्च सर्वाणि लवणानि च॥ ७२॥

सुखोष्णैस्तैलयुक्तैस्तु सुपिष्टैर्वातरोगिषु ।
उपनाहः सदा कार्य्यो वातव्याधिनिवृत्तये ॥ ७३ ॥
अयं हि गुल्मञ्च तथान्त्रवृद्धिं हन्यात्तथा शोफमुदग्रमाङ्गम् ।
हन्यान्नरस्यार्दितवातमुग्रमाजानुशोथञ्च तथार्दितं वा ॥ ७४ ॥

इति महाशाल्वनः ।

वायौ जठरजे युञ्ज्यात् क्षारचूर्णादिपाचनम् ।
विशेषतस्तु कोष्ठस्थे वाते क्षिप्रं पिबेन्नरः ॥ ७५ ॥
पाचनीयरसैर्युक्तैरन्यैर्वा पातयेन्मलान् ।
गुदपक्वाशयस्थे तु कर्मौदावर्त्तिकं हितम् ॥ ७६ ॥
आमाशयस्थे त्वनिले प्रशस्तं प्राग्भोजनं दीपनपाचनञ्च ।
प्रच्छर्दनं तीक्ष्णविरेचनञ्च पुरामुद्गा यवशालयश्च ॥ ७७ ॥
भूतीकपथ्या शठिपुष्कराणि विल्वं गुडूचीसुरदारुशुण्ठी ।
विडङ्गवासातिविषा कणा च क्वाथास्त्रयः सामसमीरणघ्नाः ॥७८
आमाशयगते वायौ छर्दिः स्रावो यथाक्रमम् ।
देयः षट्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ ७९ ॥
चित्रकेन्द्रयवौ पाठा कटुकातिविषाभया ।
महाव्याधिप्रशमनो योगः षट्धरणस्मृतः ॥ ८० ॥
योगेऽस्मिन् भिषजा ग्राह्याः षण्णां षट्धरणाः पृथक् ।
दिनेषु षट्सु दातव्यास्तेन षट् धरणः स्मृतः ॥ ८१ ॥

इति षट्धरणो योगः ।

वह्नेः संवृंहणं कार्य्यं कर्मौदावर्त्तिकं तथा ।
पक्वाशयगते वापि देयं स्नेहविरेचनम् ॥ ८२ ॥
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ।
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ८३ ॥
श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहा क्रमः ।
स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च ॥ ८४ ॥

वायौ त्वगाश्रितेऽभ्यङ्गं स्नेहं स्वेदञ्च योजयेत् ।
रक्तस्थे शीतलान् लेपान् विरेकं रक्तमोक्षणम् ॥ ८५ ॥
मांसमेदोगते वाते सविरेकं निरूहणम् ।
अस्थिमज्जागते स्नेहं वाह्याभ्यन्तरतो भिषक् ॥ ८६ ॥
केतकी नागबलातिबलानां यद्‌बहुलेन रसेन विपक्कम् ।
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिर्हरति॥८७॥

इति केतकाद्यं तैलम् ।

सन्धिस्नायुगते वाते दाहस्नेहोपनाहनम् ।
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥ ८८ ॥
अवगाह कुटीकर्षुः प्रस्तराभ्यङ्गवस्तिभिः ।
जयेत् सर्वगतं वातं शिरामोक्षैश्च बुद्धिमान् ॥ ८९ ॥
एकाङ्गवातं मतिमान् शृङ्गैश्चावस्थितं जयेत् ॥ ९० ॥
वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितम् ॥ ९१ ॥
सर्वाङ्गगतमेकाङ्गस्थितं वापि समीरणम् ।
रुणद्धि केवलो वस्तिस्तोयवेगमिवाचलः ॥ ९२ ॥
पिबेदैरण्डतैलं वा वस्तिकुक्षिगुदाश्रये ।
दशमूलीकषायेण मातुलुङ्गरसेन वा ॥ ९३ ॥
मूर्द्धस्थे स्नेहनस्तस्य शिरोवस्तिश्च लेपनम् ॥ ९४ ॥
बला विल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिं प्रकुर्वं वा नस्यं शीर्षगतेऽनिले ॥ ९५ ॥

इति बलादिघृतमण्डः ।

तैलं सङ्कुचिते त्वङ्गे माषसैन्धवसाधितम् ।
बाहुशीर्षगते नस्यं पानञ्चोपरिभक्तकम् ॥ ९६ ॥
गर्भे शुष्के तु वातेन बालानां चापि शुष्यताम् ।
सिताकाश्मर्य्यमधुकैर्हितमुत्थापने पयः ॥ ९७ ॥

अथ हनुग्रहमाह।

जिह्वा निर्लेखनाच्छुष्क चर्वणादभिघाततः।
कुपितो हनुमूलस्थः संश्रयित्वाऽनिलो हनुम्॥ ९८॥
करोति विवृतास्यत्वमथवा संवृतास्यताम्।
हनुग्रहः स तेन स्यात् कृच्छाच्चर्वणभाषणम्॥ ९९॥

अथ चिकित्सामाह।

संवृतं चिवुकं स्विन्ना मुन्नाम्यास्यञ्च बुद्धिमान्।
विवृतां नामयित्वा तु कुर्य्यादायामवत् क्रियाम्॥ १००॥
सगुड़ां पक्वविम्बीन्तु प्रक्षिप्य वदनान्तरे।
स्रस्तं सङ्गमयेत् स्थानं स्निग्धस्विन्नञ्च नाशयेत्॥ १०१॥
अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
अर्दिते शोथयुक्ते तु वमनं रक्तमोक्षणम्॥ १०२॥
श्लेष्मभागे क्षयं नीते वृंहणैः समुपाचरेत्।
रसोनं घृततैलाभ्यां पिवेद्वाप्यर्दितापहम्॥ १०३॥

अथ जिह्वास्तम्भमाह।

वाग्वादिनी शिरासंस्थो जिह्वां स्तम्भयतेऽनिलः।
जिह्वास्तम्भः सं तेनान्नपानवाक्येष्वनीशता॥ १०४॥

अथ चिकित्सामाह।

जिह्वास्तम्भे यथावस्थं वातव्याधिचिकित्सितम्।
सामान्योक्ता क्रिया चात्र अर्दितस्य हिता मता॥ १०५॥

अथ मन्यास्तम्भमाह।

दिवा स्वप्नासनस्थानविकृतोर्ध्वं निरीक्षणैः।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः॥ १०६॥

अथ चिकित्सामाह।

पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा।
रूक्षं स्वेदं तथा नस्यं मन्यास्तम्भे प्रयोजयेत्॥ १०७॥

अथ कुब्जलक्षणमाह।

हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्।
क्रुद्धो वायुर्यदा कुर्य्यात्तदा तं कुब्जमादिशेत्॥ १०८॥

अथ चिकित्सा।

वातघ्नैर्दशमूल्या च वातकुब्जमुपाचरेत्।
स्नेहैर्मांसरसैर्वापि प्रवृद्धं तं विवर्जयेत्॥ १०९॥

अथ शिरीग्रहमाह।

रक्तमाश्रित्य पवनं कुर्य्यान्मूर्द्धधराः शिराः।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः॥११०॥

अथ चिकित्सा।

शिरोग्रहे तु कर्त्तव्या शिरोगतमरुत्क्रिया॥ १११॥

अथ निदानम्।

अंसदेशस्थितो वायुः शोषयित्वांऽसबन्धनम्।
अंसबन्धनशोषः स्याद्बाहुशोषः सवेदनः।
शिरां संकुच्य तत्रस्थो जनयत्यपबाहुकम्॥ ११२॥
स्फिक्पायुकटिपृष्ठोरुजानुजङ्घापदं क्रमात्।
गृध्रसीस्तम्भरुक् तोदैर्गृह्णाति स्पन्दते मुहुः॥ ११३॥
वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः।
वातजायां भवेत्तोदो देहस्यातीव वक्रता॥
जानुजङ्घोरुसन्धीनां स्फुरणं स्तम्भता भृशम्॥ ११४॥
वातश्लेष्मोद्भवायान्तु गौरवं वह्निमार्दवम्।
तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च॥ ११५॥
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः।
बाह्वोः कर्म्मक्षयकरी विश्वाचीति हि सोच्यते॥ ११६॥

अथ चिकित्सा।

बाहुशोषे पिबेत् भुक्त्वा सर्पिः कल्याणकं महत्

वातेऽपबाहुके नस्यं स्वेदं चोत्तरभक्तिकम् ॥ ११७ ॥
वलामूलस्तं तोयं सैन्धवेन समन्वितम् ।
बाहुशोषगते वायौ मन्यास्तम्भे च शस्यते ॥ ११८ ॥
परमौषधमपबाहुकमन्यास्तम्भोर्द्ध्वजत्रुगतरोगे ।
शीतलजलेन नावन मुपशमने जिङ्गिनी च पुरः ॥ ११९ ॥
नस्येन शीतपयसा शुकशिम्बीमूलजिङ्गिनीं पिष्ट्वा ।
अपबाहुककन्धरपीड़ा मचिराद्विनाशयेद्योग एषः ॥ १२० ॥
काकोडुम्बरिदुग्धैः सरामठैर्हरेत् सर्वयोगविच्च ।
कपिकच्छुमूलयुक्तैर्नस्यैरपबाहुजां पीड़ाम् ॥ १२१ ॥
मूलं बलायास्त्वथ पारिभद्रं तथात्मगुप्तास्वरसं पिबेद्वा ।
नस्यन्तु यो माषरसेन दद्यान्मासादसौ वज्रसमानबाहुः ॥१२२॥
दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् ।
सायं भुङ्क्त्वा पिबेन्नस्यं विश्वाच्यामपबाहुके ॥ १२३ ॥
माषसिन्धुबलारास्ना दशमूलकहिङ्गुभिः ।
वचाजटाशताख्याभिः सिद्धं तैलं सनागरम् ॥ १२४ ॥
ऊर्द्ध्वं भक्ताशनाद्दन्याद्बाहुशोषापबाहुकौ ।
पक्षाघातं तथैवाशु विश्वाचीमुद्धतामपि ॥ १२५ ॥

इति माषतैलम् ।

अथ निदानम् ।

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदि ।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ १२६ ॥
कम्पते गमनारम्भे खञ्जन्निव च गच्छति ।
कलायखञ्जं तं विद्यात् मुक्तसन्धिप्रबन्धनम् ॥ १२७ ॥
हृष्येते चरणौ यस्य भवेतां च प्रसुप्तकौ ।
पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ १२८ ॥

पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः।
विशेषतश्चङ्क्रमणात् पाददाहं तमादिशेत्॥ १२९॥
वातशोणितजः शोथो जानुमध्ये महारुजः।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत्॥ १३०॥
रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्॥ १३१॥

अथ चिकित्सा।

खञ्जपङ्ग्वोः कलायाख्ये विश्वाचीपादहर्षयोः।
पाददाहे च गृध्रस्यां क्रोष्टुके वातकण्टके॥ १३२॥
शिरां विध्वाशु कुर्वीत यथाविधि चिकित्सकः।
उपाचरेदभिनवं खञ्जं पङ्गुमथापि वा।
विरेकाऽऽस्थापनस्वेदगुग्गुलुस्नेहवस्तिभिः॥ १३३॥
पादहर्षे तु कर्त्तव्यः कफव्याधिहरो विधिः।
वातरक्तक्रमं कुर्य्यात् पाददाहे विशेषतः॥ १३४॥
मसूरविदलैः पिष्टैः शृतशीतेन वारिणा।
चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तये॥ १३५॥
नवनीतेन संलिप्तौ वह्निना परितापितौ।
मुच्यतः चरणौ क्षिप्रं परितापात् सुदारुणात्॥ १३६॥
गुग्गुलुं क्रोष्टुशीर्षे तु गुडूचीं त्रिफलाम्भसा।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारुकम्॥ १३७॥
रसं तित्तिरिमांसस्य क्रोष्टुके मधुरं पिबेत्।
वातरक्तक्रियाभिश्च जयेज्जाम्बुकमस्तकम्॥ १३८॥
रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा॥ १३९॥
पुनर्नवायाः श्वेताया स्तैलं मूलेन साधयेत्।
वातकण्टकमाहन्यात् पादाभ्यङ्गेन मर्दनात्॥ १४०॥

अथ निदानम् ।

नाभेरधस्तात्सञ्जातः सञ्चारी यदि वाऽचलः ।
अष्ठीलावद्घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः ॥
वाताष्ठीलां विजानीयाद्वहिर्मार्गावरोधिनीम् ॥ १४१ ॥
एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम् ॥ १४२ ॥

अथ चिकित्सामाह ।

अष्ठीलायाः क्रिया कार्य्या गुल्मस्यान्तरविद्रधेः ।
चूर्णं हिङ्ग्वादिकञ्चात्र पिबेदुष्णेन वारिणा ॥ १४३ ॥

अथ निदानम् ।

अधो या वेदना याति वर्च्चोमूत्राशयोत्थिता ।
भिन्दतीव गुदोपस्थं सा तूनी नामतो मता ॥ १४४ ॥
गुदोपस्थोत्थिता या तु प्रतिलोमं विधाविता ।
वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ॥ १४५ ॥

अथ चिकित्सा ।

तून्याञ्च प्रतितून्याञ्च प्रशस्ताः स्नेहवस्तयः ।
पिबेद्वा स्नेहलवणं पिप्पल्यादिमथाम्बुना ॥ १४६ ॥
उष्णेन रामठक्षारं प्रलीढ़मथवा घृतम् ।

अथ निदानमाह ।

वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ॥ १४७ ॥
अयोरजः श्वेतलोध्र मञ्जनं मरिचं तथा ।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥ १४८ ॥
पलाण्डुहिङ्गुलशुनं वचाकटुकरोहिणी ।
जीवन्तीरससंयुक्तं तन्द्राविलयनं परम् ॥ १४९ ॥

निदानम् ।

साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ।

आध्मानमिति जानीयाद् घोरं वातनिरोधजम् ॥ १५० ॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात् कफव्याकुलिताऽनिलम् ॥ १५१ ॥
आध्माने लङ्घनं पूर्वं दीपनं पाचनं ततः।
फलवर्त्तिक्रियां कुर्य्याद्वस्तिकर्म च शोधनम् ॥ १५२ ॥
प्रत्याध्माने समुत्पन्ने कुर्य्याल्लङ्घनछर्दने।
दीपनानि प्रयुञ्जीत पूर्ववद्वस्तिकर्म्म च ॥ १५३ ॥

निदानम्।

सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः।
खल्ली तु पादजङ्घोरु करमूलावमोटिनी ॥ १५४ ॥
वायुं वेपथुनामानं स्वेदाभ्यङ्गानुवासनैः।
उपाचरेन्निरूहैश्च शिरोवस्तिविरेचनम् ॥ १५५ ॥
कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः।
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥ १५६ ॥
भल्लातकानि सिन्धूत्थ मधूच्छिष्टमहौषधम्।
अम्लेन पयसा वाऽपि घृतमेतद्विपाचयेत् ॥ १५७ ॥
एतेनोद्वर्त्तनं कार्य्यं प्रदेहश्चैव शाम्यति।
अतिप्रवृद्धां खल्लीं तु तत्क्षणादेव नाशयेत् ॥ १५८ ॥

इति भल्लातकाद्यं घृतम्।

अथ निदानमाह।

आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः।
नरान् करोत्यवचनान् मूकमिन्मिणगद्गदान् ॥ १५९ ॥

अथ चिकित्सामाह।

प्रस्थं घृतस्य पलिकैः शीगुवचाधातकीलोध्रलवणैः।
आजे पयसि सपाठैः सिद्धं सारस्वतं नाम्ना ॥ १६० ॥
विधिवदुपयुज्यमानं जड़गद्गदमूकतां क्षणाज्जित्वा।

स्मृतिमतिमेधाप्रतिभाः कुर्य्यात् सम्यगिष्टवाग्भवति॥१६१॥

इति सारस्वतं घृतम्।

सहरिद्रावचाकुष्ठं पिप्पलीविश्वभेषजम्।
अजाजी चाजमोदा च यष्टिमधुकसैन्धवम्॥ १६२॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः॥ १६३॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिःस्वनः॥ १६४॥
जड़गद्गदमूकत्वं लेहः कल्याणको जयेत्।

इति कल्याणको लेहः।

अथ निदानम्।

मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते।
विकारान् विविधान् वापि प्रतिलोमे भवन्ति च॥१६५॥
स्थाननामानुरूपैश्च लिङ्गैः शेषान् विनिर्द्दिशेत्।
सर्व्वेष्वेतेषु संसर्गं पित्तादेरुपलक्षयेत्॥ १६६॥
यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः।
तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः॥ १६७॥
मुहुर्मुहुस्तदाऽऽक्षेपादाक्षेपक इति स्मृतः॥ १६८॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्द्ध्वं प्रवर्त्तते।
पीड़यन् हृदयं गत्वा शिरः शङ्खौ च पीड़येत्॥ १६९॥
धनुर्व्वन्नामयेद्गात्राण्याक्षिपेन्मोहयेत्तथा।
अकृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षो वा निमीलिकः॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः॥ १७०॥
दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति।
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः॥ १७१॥
वायुना दारुणं प्राहुरेके तमपतानकम्॥ १७२॥

कफान्वितो यदा वायुर्धमनीष्वेव तिष्ठति।
स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः॥ १७३॥
धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसंज्ञितः।
विवर्णबद्धवदनः स्रस्ताङ्गो नष्टचेतनः।
प्रस्विद्यंश्च धनुस्तम्भे दशरात्रं न जीवति॥ १७४॥
अङ्गुलीगुल्फजठर हृद्वक्षोगलसंश्रितः।
स्नायुप्रतानमनिलो यदा क्षिपति वेगवान्॥ १७५॥
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्।
अभ्यन्तरं धनुरिव यदा नमति मानवः॥ १७६॥
तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली॥ १७७॥
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च।
तमसाध्यं बुधाः प्राहुः पृष्ठकव्युरुभञ्जनम्॥ १७८॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः।
कुर्य्यादाक्षेपकन्त्वन्यं चतुर्थमभिघातजम्॥ १७९॥
गर्भपातनिमित्तश्च शोणितप्रस्रवाच्च यः।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः।
गते वेगे भवेत् स्वास्थ्यं सर्व्वेष्वाक्षेपकादिषु॥ १८०॥

अथ चिकित्सामाह।

अथापतानकेनार्त्तमस्रस्ताक्षमवेपनम्।
अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम्॥ १८१॥
अखट्वापातिनञ्चैव त्वरितं समुपाचरेत्॥ १८२॥
तत्र प्रागेव सुखिन्नं स्निग्धाङ्गे तीक्ष्णनावनम्।
स्रोतोविशुद्धये युञ्ज्यादन्नपाने ततो घृतम्॥ १८३॥
विदार्य्यादिगणक्वाथे दधिक्षीररसैः शृतम्।
नातिमात्रं ततो वायुर्व्याप्नोति सहसैव च॥ १८४॥
वेगान्तरेऽनु मूर्द्धानमसकृच्चास्य रेचयेत्।

अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिवर्हणैः ॥ १८५ ॥
श्वसनासु विमुक्तासु तथा संज्ञां न विन्दति ।
सौवर्चलाभयाव्योषसिद्धं सर्पिश्चले कफे ॥ १८६ ॥
अपतानकिने शस्तं दशमूलीशृतं जलम् ।
पिप्पलीचूर्णसंयुक्तं जीर्णे मांसरसौदनम् ॥ १८७ ॥
हन्त्यभुक्तवता पीतमम्लं दध्यपतानकम् ।
मरिचेन समायुक्तं स्नेहवस्तिरथापि वा ॥ १८८ ॥
कुलत्थयवकोलानि भद्रदार्व्यादिकं गणम् ।
निष्क्वाथ्यानूपमांसञ्च तेनाम्लैः पयसाऽथवा ॥ १८९ ॥
स्वादुकन्दयुतं चेमं महास्नेहं विपाचयेत् ।
स्वेदाभ्यङ्गावगाहैश्च नस्यपानानुवासनैः ।
स हन्ति वातं तेनैव स्नेहस्वेदान् प्रयोजयेत् ॥ १९० ॥

इति महास्नेहः ।

पलाष्टकं तिल्वकतो वचायाः प्रस्थं पलं शिग्रु च पञ्चमूलम् ।
सैरण्डसिंहीत्रिवृतं घटेऽपां पक्त्वा पचेत्पादशृतेन तेन ॥ १९१ ॥
दध्नोपेतं यावशूकांशविल्वैः सर्पिष्प्रस्थं हन्ति तत्सेव्यमानम् ।
दुष्टान्वातानेकसर्वाङ्गसंस्थान् योनिव्यापद्ब्रध्नगुल्मोदरञ्च ॥१९२॥

इति तिल्वकघृतम् ।

चिकित्सितमिदं कुर्य्याच्छुद्धवातेऽपतानके ।
संसृष्टदोषे संसृष्टं कुर्य्याद्येन क्रियापथम् ॥ १९३ ॥
दोषमाक्षेपके ज्ञात्वा शिरां विद्धा यथाक्रमम् ।
समीरणहरं कर्म्म कारयेत् कुशलो भिषक् ॥ १९४ ॥
वाह्ये चाभ्यन्तरायामे योज्या चार्दितवत् क्रिया ।
अथापतन्त्रकेणार्त्तमातुरं नापतर्पयेत् ।
निरूहवस्तिं वमनं सेवयेन्न कदाचन ॥ १९५ ॥
श्वसनाः कफवाताभ्यां रुद्धास्तस्य विमोचयेत् ।

तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति ॥ १९६ ॥
मरिचं शिग्रुवीजानि विड़ङ्गञ्च फणिज्झकम्।
एतानि श्लक्ष्णचूर्णानि दद्याच्छीर्षविरेचनम् ॥ १९७ ॥

इति मरिचादिनस्यम्।

हिङ्ग्वम्लवेतसं शुण्ठी ससौवर्चलदाड़िमम्।
पिबेद्वातकफघ्नञ्च बातहृद्रोगनुद्वितम् ॥ १९८ ॥
हरीतकीवचारास्ना सैन्धवं चाम्लवेतसम्।
घृतमार्द्रकसंयुक्तमपतन्त्रकनाशनम् ॥ १९९ ॥
विभीतकं सातिविषं भद्रमुस्तञ्च पिप्पलीम्।
भार्गीं च शृङ्गवेरञ्च सूक्ष्मचूर्णानि कारयेत् ॥ २०० ॥
चूर्णान्येतानि मद्येन पीतान्युष्णोदकेन वा।
नाशयन्ति नृणां शीघ्रं कासश्वासापतानकम् ॥ २०१ ॥

इति विभीतकादिचूर्णम्।

अथ निदानम्।

गृहीत्वोर्द्धन्तनो वायुः शिरास्नायुं विविश्य च।
पक्षमन्यतमं हन्ति सन्धिबन्धान् विमोक्षयन् ॥ ९८ ॥
कृत्स्नोर्द्धकायस्तस्य स्यादकर्म्मण्यो विचेतनः।
एकाङ्गरोगं तं केचिदन्ये पक्षबधं विदुः ॥ २०३ ॥
सर्वाङ्गरोगं तं केचित् सर्वकायस्थितेऽनिले ॥ २०४ ॥
दाहसन्तापमूर्च्छाः स्युः वायौ पित्तसमन्विते।
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥ २०५ ॥
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः।
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ २०६ ॥

अथ चिकित्सामाह।

पक्षघातिनमक्षीणं स्निग्धं स्विन्नं विरेचितम्।
वस्तिभिः संप्रयुञ्जीत क्रमेणाक्षेपकस्य च ॥ २०७ ॥

माषात्मगुप्तामैरण्डश्टतं वाव्यालकं तथा।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातं विनाशयेत्॥ २०८॥
आत्मगुप्तावलामाषविश्वैरण्डश्टतं जलम्।
ससैन्धवं पिबेन्नासारन्ध्रेणाशु व्यपोहति॥
पक्षाघातं शिरोरोगं नेत्ररोगहरं परम्॥ २०९॥
माषबलाशुकशिम्बी कत्तृणरास्नोरुबूकाश्वगन्धानाम्।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णः॥ २१०॥
अपहरति पक्षवातं मन्यास्तम्भसकर्णनादरुजम्।
दुर्जयमर्दितवातं पक्षाहाज्जयति चावश्यम्॥ २११॥
माषिके हिङ्गुसिन्धूत्थे जरणाद्यास्तु शाणिकाः।

इति माषादिनस्यम्।

ग्रन्थिकाऽग्निकणाशुण्ठी रास्नासैन्धवकल्कितम्।
माषक्वाथाम्बुना तैलं पक्षाघातं व्यपोहति॥ २१२॥

इति ग्रन्थिकादितैलम्।

माषात्मगुप्तातिविषोरुबूक रास्नाशताह्वालवणैः सुपिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति हि पक्षवातम्॥२१३॥

इति माषतैलम्।

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम्।
दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम्॥ २१४॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतम्।
एवं मांसरसाभ्यासाद्वातरोगानशेषतः॥
हन्ति सन्ध्यस्थिमज्जःस्थान् वृक्षमिन्द्राशनिर्यथा॥ २१५॥
लेहवद् द्विगुणेनायमालोड्यालोड्य चातपे।
दशमूलाम्बुना शोष्यः सप्तवारान् सुगुग्गुलुः॥ २१६॥

इति आदित्यपाकगुग्गुलुवटकः।

शुक्लैरण्डस्य मूलानि युग्मं सहचरस्य च।

सुस्ता दुरालभा दीप्या देवाह्वं कटुका शटी ॥ २१७ ॥
पञ्चकोलं बला पथ्या क्षुद्रे द्वे च पुनर्नवा।
विषोग्रा वाजिगन्धा च शतावर्य्याटरुषकम् ॥ २१८ ॥
धान्यं छिन्नरुहा चैव विड़ङ्गं व्याधिघातकम्।
गोक्षुरं वृद्धदारु च दीप्यको निशयुग्मकम् ॥ २१९ ॥
चतुस्त्रिंशतिको भागः पीतः कौशिकसंयुतः।
सर्व्ववातविकारघ्नः पाचनो दीपनो लघुः ॥ २२० ॥
आमवातस्य शोथस्य स्रोतसां कफनाशनः।

इत्येरण्डादिर्गुग्गुलुयुतः क्वाथः।

आभाश्वगन्धाहबुषागुडूची शतावरीगोक्षुरकश्च रास्ना।
श्यामाशताह्वा च शटी यवानीसनागरा चेति समैश्च चूर्णम्२२१
देयं भवेत्कौशिकमत्र तुल्यं देयं तथा सर्पिरतोऽर्द्धभागम्।
अत्त्वार्द्धमात्रन्तु ततः प्रयोगात् कृत्वानुपानं सुरयाथ यूषैः॥२२२॥
मद्येन वा कोष्णजलेन वाथ क्षीरेण वा मांसरसेन वापि।
कटिग्रहे गृध्रसि बाहुपृष्ठे हनुग्रहे जानुनि पादयुग्मे ॥ २२३ ॥
सन्धिस्थिते चास्थिगते च वाते
मज्जागते स्नायुगते च कोष्ठे।
रोगान् जयेद्वातकफानुबन्धान्
वातेरितान् हृद्ग्रहयोनिदोषान् ॥ २२४ ॥
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति सिद्धाः ॥ २२५ ॥

इति त्रयोदशाङ्गगुग्गुलुः।

व्योषं सग्रन्थिकं पथ्यां चित्रकं जीरकद्वयम्।
अजमोदा यवानी च वचाचव्यमवल्गुजम् ॥ २२६ ॥
लवणत्रितयं क्षारौ सम भागानि कारयेत्।
यावन्त्येतानि चूर्णानि तावन्तं गुग्गुलुं शुभम् ॥ २२७ ॥

पादार्द्धसम्मितं चात्र योजयेदम्लवेतसम् ।
गुटिकैषा हिता वाते सामे सन्ध्यस्थिमज्जगे ॥ २२८ ॥
दृढ़ीकरोति भग्नञ्च जठरानलदीपनी ।
पूजिता देवदेवेन कालपाशेन शम्भुना ॥ २२९ ॥

इति स्वायम्भुवगुग्गुलुवटी ।

गन्धर्वहस्ताटरूषमुस्तकनक्तमालपूतीकारग्धचित्रकाणां पत्राण्याहृत्यार्द्राणि लवणेन सहोलूखले संक्षुद्य स्नेहघटे संक्षिप्यालिप्य गोशकृद्भिर्दाहयेत् एतत्पत्रलवणमुपदिशति वातरोगिणामिति पत्रलवणम् । एवं स्नुहीकाण्डवार्त्ताकुशिग्रु-लवणानि संक्षुद्य घटे सर्पिस्तैलवसामज्जानं प्रक्षिप्याऽवलिप्या-ऽवलिप्य पूर्ववद्दहेत् एतत् स्नेहलवणमुपदिशति हि वातरोगिषु।

इति स्नेहलवणम् ।

त्रिफलाशङ्खिनीदन्तीविड़ङ्गं त्रिवृता सुधा ।
कार्षिकाणि पचेत्तानि तिल्वकस्य पलेन च ॥ २३० ॥
दध्नि च त्रिवृताक्वाथे घृतप्रस्थं चतुर्गुणम् ।
तिल्वकाख्यं घृतं तत्स्याद्विरेके वातरोगिणाम् ॥ २३१ ॥

इति तिल्वकाख्यं घृतम् ।

रास्नापुष्करविल्वाग्नि शिग्रुसैन्धवगोक्षुरैः ।
कृष्णां पिष्ट्वा पचेत्सर्पिः कृत्स्नं वातार्त्तिनाशनम् ॥२३२॥

इति रास्नादिघृतम् ।

अश्वगन्धाकषाये च कल्कैः क्षीरं चतुर्गुणम् ।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम् ॥ २३३ ॥

इत्यश्वगन्धाद्यं घृतम् ।

द्रोणेऽम्भसः पचेद्भागान् दशमूलांश्चतुष्पलान् ।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ।

क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित् ॥ २३४ ॥

इति दशमूलाद्यं घृतम्।

आजं चर्म्मविनिर्मुक्तं त्यक्त्वा शृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥ २३५ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम् ॥ २३६ ॥
छागल्याद्यमिदं नाम्ना सर्ववातविकारनुत्।
अर्दिते कर्णशूले च बाधिर्य्ये मूकमिम्मिणे ॥ २३७ ॥
जड़गद्गदपङ्गूनां खञ्जे गृध्रसीकुब्जयोः।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥ २३८ ॥
द्वाविंशच्च पलान्येव देयानि दशमूलतः।
घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते।
तज्ज्ञातव्यमिहार्य्येण भागतो द्विगुणं भवेत् ॥ २३९ ॥

इति छागल्याद्यं घृतम्।

बलानिष्क्वाथकल्काभ्यां तैलपक्वं पयोऽन्वितम्।
सर्ववातविकारघ्नमेवं शैलेयपाचितम् ॥ २४० ॥

इति बलाशैलेयतैलम्।

बलाग्निमन्थमैरण्ड बृहतीद्वयगोक्षुरम्।
विल्वनागबलाभीरुश्योनाकं पारिभद्रकम् ॥ २४१ ॥
पाटला साश्वगन्धा च केतकी च प्रसारणी।
पृश्निपर्णी स्थिरा चैव श्वदंष्ट्रा बृहतीद्वयम् ॥ २४२ ॥
एषां दशपलान् भागान् वारिद्रोणद्वये पचेत्।
पादशेषं परिस्राव्य तैलं प्रस्थद्वयं पचेत् ॥ २४३ ॥
कल्कानि जीवयानि रास्नासैन्धवदारु च।
कुष्ठं मांसीवचाग्रन्थि मञ्जिष्ठासरलानि च ॥ २४४ ॥
त्वक्पत्रकं वराङ्गञ्च एलामुस्तकबालकम्।

एतैः कल्कैः सुपिष्टैश्च पाचयेन्मृदुनाग्निना ॥ २४५ ॥
क्षीरञ्च द्विगुणं दद्याच्छतावर्य्यारसस्य च ।
एतत्तैलवरं तेषां रोगाणां वातजन्मनाम् ॥ २४६ ॥
नाशयेद्वातरक्तञ्च आमवातं सुदारुणम् ।
गृध्रसीपीठसर्पेषु चाढ्यवाते सदाहितम् ॥
पाने वस्तौ तथाभ्यङ्गे नस्ये चैव प्रयोजयेत् ॥ २४७ ॥

इति महाबलातैलम् ।

बलामूलीकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ २४८ ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ।
पचेदवाप्य मधुरं गणं सैन्धवसंयुतम् ॥ २४९ ॥
तथाऽगुरुं सर्जरसं सरलं देवदारु च ।
मञ्जिष्ठां पद्मकं कुष्ठ मेलां कालानुशारिवाम ॥ २५० ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ २५१ ॥
तत्साधु सिद्धं सौवर्णे राजते मृण्मयेऽपि वा ।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत् ॥ २५२ ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ।
यथा बलमतो मात्रां सूतिकायै प्रदापयेत् ॥ २५३ ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ।
क्षीणे वाते मर्म्महते मथितेऽभिहते तथा ॥ २५४ ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते ।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥ २५५ ॥
हिक्काश्वासमधीमन्थं गुल्मं कासं सदुस्तरम् ।
षण्मासादुपयुज्यैतदन्त्रवृद्धिं व्यपोहति ॥ २५६ ॥
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ।

एतद्धि राज्ञाकर्त्तव्यं राजमान्याश्च ये नराः।
सुखिनः सुकुमाराश्च धनिनश्चापि मानिनः॥ २५७॥

इति महाबलातैलम्।

साधयित्वा जलद्रोणे तुलां सहचरस्य च।
पादशेषे पचेत्तैलं दत्वा क्षीरं चतुर्गुणम्॥ २५८॥
चन्दनाऽगुरुयष्ट्याह्व शटीदेवद्रुमं घनम्।
सैन्धवञ्चाजमोदा च काकोल्यौ जीरकावुभौ॥ २५९॥
कुष्ठं सौवर्च्चलं व्योषं रास्ना भार्गीत्रिकण्टकम्।
एतै रक्षसमैर्भागैः शर्कराया: पलाष्टकम्॥ २६०॥
पक्कं प्रयोजयेत्पानादभ्यङ्गे नावनेऽपि वा।
ऊर्द्धवाते ह्यधोवाते पक्षाघातेऽपबाहुके॥ २६१॥
कर्णवाते शिरःकम्पे शिरोरोगे तथार्दिते।
सर्ववातकृते दोषे कफमेदःकृतेऽनिले॥ २६२॥

इति सहचराद्यं तैलम्।

कृत्स्नां सहचरादेकां कृत्वा जर्जरितां तुलाम्।
काश्मरीपाटलाविल्वं तुलाभिरथापरम्॥ २६३॥
अश्वगन्धां बलां तद्वत् मूलं शतावरं वचाम्।
चतुर्द्रोणे विपक्तव्यं चतुर्भागावशेषितम्॥ २६४॥
शताह्वाहिङ्गुयष्ट्याह्व देवदारु सचित्रकम्।
त्वगेला कृमिहन्ता च रास्नातगरसैन्धवाः॥ २६५॥
महासहचरं तैलं वातश्लेष्महरं परम्।
पाने नस्ये तथाभ्यङ्गे वस्तिकर्म्मणि शस्यते॥ २६६॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति॥ २६७॥

इति महासहचराद्यं तैलम्।

शालिपर्णी पृश्निपर्णी बला च बहुपुत्रिका ।
एरण्डस्य च मूलानि बृहत्याः पूतिकस्य च ॥ २६८ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एतेषां पलिकान् भागान् तैलप्रस्थं विपाचयेत् ॥ २६९ ॥
आजञ्चैवाथ गव्यञ्च क्षीरं दद्याच्चतुर्गुणम् ।
अस्य पक्वस्य तैलस्य शृणु वीर्य्यमतःपरम् ॥ २७० ॥
अश्वानां वातभग्नानां कुञ्जराणां तथैव च ।
तैलमेतत्प्रयोक्तव्यं सर्ववातनिवारणम् ॥ २७१ ॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धञ्च भेदकम् ॥
कामलापाण्डुरोगञ्च शर्करामश्मरीं हरेत् ॥ २७२ ॥
क्षीणेन्द्रिया नरा ये च जरया जर्जरीकृताः ।
येषां चापि क्षयो व्याधिरन्त्रवृद्धिश्च दारुणा ॥ २७३ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रयोजयेत् ॥ २७४ ॥
गर्भमश्वतरी विन्देत् किं पुनर्मानुषी तथा ।
एतदङ्गवरं तैलं विष्णुना परिकीर्त्तितम् ॥ २७५ ॥

इति विष्णुतैलम् ।

बलाश्वगन्धामरदारुरास्ना स्थिरावचानागबला सलोहम् ।
आरुष्करं चन्दनपुष्कराख्यं नतं गुडूचीलवणोत्तमं च ॥ २७६ ॥
काकोलिमेदे मधुकं विदारी सचित्रकं गुग्गुलुजीरकञ्च ।
द्राक्षागुरुर्नागरधान्यकञ्च एतानि सर्वाणि समानि कृत्वा ॥२७७
कल्कैः कषायैर्विधिना प्रयुक्तैस्तैलं पचेत्तोयचतुर्गुणञ्च ।
अम्लारणालं दधिदुग्धयुक्तं दत्त्वा समांसं विधिवद्विधिज्ञः ॥२७८॥
तन्नावनाभ्यञ्जननस्यपानैर्निहन्ति घोरानचिरेण रोगान् ।
कल्याणकं नाम महच्च तैलं स्वभ्यं जयेत्कार्मुकनामधेयम् ॥२७९

दण्डापतानार्दितवेपमानाः सुपिण्डिताः पिण्डितकुञ्जखञ्जाः।
पुनर्युवानोऽतिमनोऽभिरामा भवन्ति ते तैलवरेण सर्वे ॥२८०॥
अश्वोऽपि भग्नः सकृदेव दन्ती भग्नो भवेन्मारुतविक्रमश्च।
वन्ध्यापि पुत्रं लभते वराभं दीर्घायुषं सर्वगुणैरुपेतम् ॥ २८१ ॥
अम्बुप्रवाताहतचञ्चलोर्मिर्महोदधिर्लङ्घयतीह वेलाम्।
सवातजा एव हि तैलराजं रोगा न वै लङ्घयितुं समर्थाः॥२८२॥

इति महाकल्याणकं तैलम्।

शतावरी चांशुमती पृश्निपर्णी शटी बला।
एरण्डस्य च मूलानि वृहत्याः पूतिकस्य च ॥ २८३ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ २८४ ॥
पादावशेषे पूते च गर्भं चैनं समाचरेत्।
पुनर्नवा वचा दारुशताह्वाचन्दनागुरु ॥ २८५ ॥
शैलेयं तगरं कुष्ठमेलामांसीस्थिराबला।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥ २८६ ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वावत्र प्रदापयेत्।
शतावर्य्या रसप्रस्थं तैलप्रस्थं विपाचयेत् ॥ २८७ ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतः फलम्।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥ २८८ ॥
तैलमेतत्प्रयोक्तव्यं सर्ववातविकारनुत्।
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ॥ २८९ ॥
गर्भमश्वतरी विन्देत् किं पुनर्मानुषी तथा।
हृच्छुलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥ २९० ॥
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम्।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥ २९१ ॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम्।

नारायणमितिख्यातं वातान्तकरणं तथा ॥ २९२ ॥

इति स्वल्पनारायणं तैलम् ।

विल्वोऽग्निमन्थः श्योनाकः पाटला पारिभद्रकः ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ २९३ ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ २९४ ॥
पादशेषं परिस्राव्य तैलप्रस्थं पचेच्छनैः ।
शतपुष्पी देवदारु मांसी शैलेयकं वचा ।
चन्दनं तगरं कुष्ठमेला पर्णी चतुष्टयम् ॥ २९५ ॥
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ।
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ॥२९६॥
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ।
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ॥ २९७ ॥
पाने वस्तौ तथाभ्यङ्गे भोज्ये नस्ये प्रदापयेत् ।
अश्वो वा वातसम्भग्नो गजो वा यदि वा नरः ॥ १९८ ॥
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ।
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ॥ २९९ ॥
मन्यास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे ।
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ॥ ३०० ॥
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ।
वधिरा लल्लजिह्वाश्च मन्दमेधस एव वा ॥ ३०१ ॥
मन्दप्रजा च या नारी या च गर्भं न विन्दति ।
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥ ३०२ ॥

इति मध्यमनारायणं तैलम्

विल्वाश्वगन्धा बृहती श्वदंष्ट्रा श्योनाकवाट्यालकपारिभद्राः।
क्षुद्राकटिल्लातिबलाग्निमन्थं प्रत्येकमेकं प्रवदन्ति तज्ज्ञाः॥२०३॥
सपादप्रस्थं विधिनोद्धृतानां चित्वा सुयत्नात्सरणीयुतानाम्।
मूलं विदध्यादथ पाटलीनां द्रोणैरपामष्टभिरेव पक्वा॥२०४॥
पादावशेषेण रसेन तेन तैलाढ़काभ्यां सममेव दुग्धम्।
आजं विदध्यादथवापि गव्यं दद्याद्रसं वापि शतावरीणाम्॥२०५
तैलेन तुल्यं पुनरेव तत्र रास्नाश्वगन्धामरदारुकुष्ठम्।
पर्णीचतुष्कागुरुकेसराणि सिन्धूत्थमांसीरजनीद्वयञ्च॥ २०६॥
शैलेयकं चन्दनपुष्कराणि एला सयष्टीतगराब्दपत्रम्।
भृङ्गाष्टवर्गाम्बु वचा पलाशं पृथ्वी च थौणेयक चोरकाख्यम् २०७
एतैः समस्तैः द्विपलप्रमाणैः कर्पूरकाश्मीरमृगाण्डजानाम्।
दद्यात् सुगन्धाय वदन्ति केचित् प्रस्वेददौर्गन्ध्यविनाशाय॥२०८
चूर्णीकृतान् द्विपलप्रमाणैरालोड्य सर्वं विधिना विपक्वम्।
नारायणं नाम महच्च तैलं सर्वैः प्रकारैर्विधिवत्प्रयोज्यम्॥२०९॥
अश्वेभपुंसां पवनार्दितानां ये पङ्गवः पीठविसर्पिणश्च।
एकाङ्गशुष्कार्दितवेपमाना वाधिर्य्यशुक्रक्षयपीड़िताश्च॥ २१०॥
मन्याहनुस्तम्भगलग्रहार्त्ताः त्यक्तामयास्ते बलवर्णयुक्ताः।
संसेव्य तैलं सहसा भवन्ति बन्ध्यापि नारी लभते सुपुत्रम्।
देवोपमं सर्वगुणोपपन्नं सुमेधसं श्रीविजयान्वितञ्च॥ २११॥
शाखाश्रिते कोष्ठगते च वाते वृद्धौ विधेयं पवनार्दितानाम्।
जिह्वानिले दन्तगते च शूले वातापहं तैलवरं प्रसिद्धम्॥२१२॥
उन्मादकुब्जज्वरकर्षितानां नातःपरं तैलवरं प्रदिष्टं
वातामये वैद्यवरेणयोज्यं वायुः प्रकर्षं प्रमदाप्रियत्वम्॥२१३॥
प्राप्नोति लक्ष्मीर्विजयञ्च नित्यं रक्षांसि दुष्टानि निहन्ति नूनम्।
तैलोपजीवी जरया विमुक्तो जीवेन्नरो वर्षशतानि पञ्च॥२१४॥
देवासुरे युद्धवरे समीक्ष्य स्नायूस्त्रिभग्नानसुरैः सुरांश्च।

नारायणोक्तं सुरबृंहणार्थं नारायणं तेन वदन्ति तज्ज्ञाः ॥३१५॥

इति महानारायणं तैलम् ।

माषप्रस्थं समादाय पचेत् सम्यक् जलाढ़के ।
पादशेषे रसे तस्मिन् चीरं दत्त्वा चतुर्गुणम् ॥ ३१६ ॥
जीवनीयानि यान्यष्टौ शतपुष्पा ससैन्धवा ॥ ३५१ ॥
रास्नात्मगुप्ता कटुका मधुकं कुष्ठमेव च ।
पक्षाघातार्दिते वाते कर्णशूले च दारुणे ॥ ३१८ ॥
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे विश्वाच्यामपबाहुके ॥ ३१९ ॥
कलायखञ्जे शस्तं स्यात् पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्ठमूर्ध्वजत्रुगदापहम् ॥ ३२० ॥
यवमाषतिलानाञ्च प्रस्थः षोड़शभिः पलैः ।

इति माषतैलम् ।

माषक्काथे बलाक्काथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥ ३२१ ॥
प्रस्थे तैलस्य च प्रस्थं चीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्ता सिन्धूत्थ शताह्वैरण्डमुस्तकैः ॥ ३२२ ॥
जीवनीय बलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽपबाहुके ॥ ३२३ ॥
वाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्या मर्दिते कुब्जे गृध्रस्यामपतानके ॥ ३२४ ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु प्रयोजयेत् ।
माषतैलमिदं श्रेष्ठमूर्ध्वजत्रुगदापहम् ॥ ३२५ ॥

इति महामाषतैलम् ।

माषस्यार्द्धाढ़कं दत्त्वा तुलार्द्धं दशमूलतः ।
छागमांसपलं त्रिंशज्जलद्रोणे विपाचयेत् ॥ ३२६ ॥

चतुर्भागावशेषन्तु कषायमवतारयेत् ।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम् ॥ ३२७ ॥
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम् ।
सव्योषं पिप्पलीमूलं रास्नामलकगोक्षुरम् ॥ ३२८ ॥
आत्मगुप्ता तथैरण्डः शताह्वा लवणत्रयम् ।
अश्वगन्धामृताभीरु यवानी सवचा शटी ॥ ३२९ ॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना ।
पक्षाघातादिभिः सर्वैरर्दिते च हनुग्रहे ॥ ३३० ॥
कर्णशूले च बाधिर्य्ये तिमिरे च त्रिदोषजे ।
पाणिपादशिरो ग्रीवा श्रवणे मन्द एव च ॥ ३३१ ॥
कलायखञ्जे पङ्गौ च गृध्रस्यामपबाहुके
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे ॥ ३३२ ॥
एतत्तैलं प्रशंसन्ति सर्व्ववातविकारनुत् ।

इति वृहन्माषादि तैलम् ।

माषद्रोणं समावाप्य चाश्वगन्धां शतावरीम् ।
प्रसारणीं सातिबलां तथा गन्धर्व्वहस्तकम् ॥ ३३३ ॥
सहचरस्य मूलन्तु केतकीनां तथैव च ।
आत्मगुप्ता च वाट्यालं दशमूलमथापि वा ॥ ३३४ ॥
एषां दशपलान् भागान् कौक्कटं मांसमेव च ।
चतुःषष्टिपलं दत्त्वा जलसूर्पे विपाचयेत् ॥ ३३५ ॥
तेन पादावशेषेण शास्त्रवन्मृदुनाग्निना ।
क्षीरद्रोणसमायुक्तं तैलप्रस्थं विपाचयेत् ॥ ३३६ ॥
अतः कल्कानिमान् दद्यात् पलिकान् श्लक्ष्णपेषितान् ।
जीवनीयानि यान्यष्टौ यष्टीचन्दनसैन्धवम् ॥ ३३७ ॥
देवदारुबलाकुष्ठं रास्नैलाशुकशिम्बिका ।
शतपुष्पा वचा मांसी विदारी च प्रसारिणी ॥ ३३८ ॥

वृश्चदारुकमूलञ्च विड़ङ्गं सरलं तथा।
शतावर्य्यश्वगन्धा च शटी त्र्यूषणमेव च ॥ ३३९ ॥
अम्लवेतसदार्वी च शाणं देयं पृथक् पृथक् ॥ ३४० ॥
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे।
अर्दिते कर्णशूले च शिरोरोगे हनुग्रहे।
मुखरोगेषु सर्वेषु मन्यास्तम्भेऽपबाहुके ॥ ३४१ ॥
कर्णस्रावे च वाधिर्य्ये तिमिरे च त्रिदोषजे।
हृद्रोगे चैव गृध्रस्यामामवाते कटिग्रहे ॥ ३२४ ॥
कलायखञ्जे विश्वाच्यां हितमेतद्विशेषतः।
जङ्घोरुपादपृष्ठे च पार्श्वे शूलमतीव च ॥ ३४३ ॥
अन्त्रवृद्ध्याण्डवृद्धिञ्च वातरक्तं सुदारुणम्।
पीनसं कुब्जपङ्गू वा चाशीतिं वातजान् गदान् ॥ ३३४ ॥
बलिपलितखालित्यान् केशानां पतनं हरेत्।
बलमांसप्रदञ्चैव शुक्रवृद्धिकरं परम् ॥ ३४५ ॥
अपत्यजननं श्रेष्ठं गर्भिण्याः परमं हितम्।
हस्त्यश्वोष्ट्रादिव्यायामैर्भ्रष्टसन्धिप्रसादकम् ॥ ३४६ ॥
तैलमात्रोपयोगेन व्याधिर्निर्मूलतां नयेत्।
सर्ववातविनाशाय वृत्रमिन्द्राशनिर्यथा।
महामाषमिदं तैलं कृष्णात्रेयेण पूजितम् ॥ ३४७ ॥

इति सामिषमहामाषतैलम्।

क्षीराढ़कं शतावर्य्या रसप्रस्थद्वयं पृथक्।
शृङ्गवेरस्य तैलस्य प्रस्थं साध्यञ्च कार्षिकैः ॥ ३८४ ॥
शताह्वा दारुशैलेय मांसी चन्दनबालकैः।
त्वगेलांशुमती रास्ना तगरैरण्डसैन्धवैः ॥ ३४८ ॥
अश्वगन्धा समङ्गोग्रा मूर्वामरिचनागरैः।
तन्मास पीतं विधिवत्तैलं सिद्धार्थकं जयेत् ॥ ३५० ॥

कुब्जवामनपङ्गुत्ववातभग्नावकुञ्चनम्।
सर्वाङ्गैकाङ्गरोगांश्च हनुमन्या गला मयान्॥ ३५१॥
वातरक्तञ्च कुष्ठानि कण्डूपामाविचर्चिकाः।
गण्डमालापचिवक्त्रपाकोदरभगन्दरान्॥ ३५२॥
कुष्ठव्रणान् सविषमानारम्भान् विविधान् ज्वरान्।
सन्निपातांश्च शूलानि विषमूर्द्धभ्रमामयान्॥ ३३५॥
वातगुल्मं बहून् मेहानन्त्रवृद्धिञ्च शर्कराम्।
कामलां पाण्डुरोगञ्च शूलं नेत्रगदोद्भवम्॥ ३५४॥
मूढ़गर्भांश्च भग्नांश्च योनेर्बन्ध्यामयान् बहून्।
वृद्धानामल्पशुक्राट्टक् स्मृतीनां चयरेतसाम्॥ ३५५॥
रसायनं बलारोग्यवर्ण्णाग्न्यायुर्विवर्द्धनम्॥ ३५६॥

ओं नारायणाय स्वाहा उत्तराभिमुखः स्थित्वा खदिर-कीलकेन खन्यते। शतावरी औषधी च सर्वासां साधनाय उत्पाटनाय अयं मन्त्रः।

ओं कुमारवीजनाय स्वाहा। इत्युत्पाटनमन्त्रः। इति शतावरीतैलम्।

माषस्यार्द्धाढ़कं देयं दशमूलं तुलार्द्धतः।
बलामूलन्तु तस्यार्द्धं केतकीनां तथैव च॥ ३५७॥
दत्तमांसं पलं त्रिंशच्छण्टिका पञ्चविंशतिः।
जलद्रोणद्वये पक्वा पादशेषेऽवतारिते॥ ३५८॥
तिलतैलस्य च प्रस्थं पयो दत्वा चतुर्गुणम्।
जीवनीयानि यान्यष्टौ मञ्जिष्ठा चव्यकट्फलम्॥ ३५९॥
व्योषं रास्ना कणामूलं मधुकं पुष्करं तथा।
माषात्मगुप्तकैरण्ड शताह्वा लवणत्रयम्॥ ३६०॥
कुष्ठाश्वगन्धा ह्यमृता यवानी सवचा शटी।
नागरं मागधी मुस्तं वर्षाभू रजनीद्वयम्॥ ३६१॥

शतावरी बृहत्यौ च एतैरक्षसमन्वितैः ।
मन्दश्रुतौ च श्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे गात्रकम्पे शिरोग्रहे ॥ ३६३ ॥
शस्तं कलायखञ्जे च गृध्रस्यामपबाहुके ।
वाधिर्य्ये कर्णनादे च सर्ववातविकारनुत् ॥ ३६४ ॥
दण्डापतानके चैव मन्यास्तम्भे विशेषतः ।
हनुस्तम्भे प्रशस्तं स्यात् सूतिकावातनाशनम् ॥ ३६५ ॥
त्वच्यं मांसप्रदञ्चैव शुक्राग्निबलवर्द्धनम् ।
अण्डवृद्धिमन्त्रवृद्धिं वातरक्तञ्च नाशयेत् ॥ ३६६ ॥

इति महामाषतैलम् ।

माषप्रस्थं बलाप्रस्थं दशमूल्यास्तथा परम् ।
प्रस्थं सहचरस्यैकमश्वाह्वा प्रस्थमेव च ॥ ३६७ ॥
जलद्रोणद्वये पक्का चतुर्भागावशेषिते ।
तैलप्रस्थं पचेच्छाग क्षीरं दत्त्वा चतुर्गुणम् ॥ ३६८ ॥
कल्कैः सिन्धूत्थयष्ट्याह्व रास्ना व्योषाश्वगन्धकैः ।
शतपुष्पा समायुक्तैस्तत्सिद्धं सर्ववातनुत् ॥ ३६९ ॥

इति माषतैलम् ।

शतत्रयं प्रसारिण्या द्वे च पीतसहाचरात् ।
अश्वगन्धैरण्डबला वरीरास्ना पुनर्नवा ॥ ३७० ॥
केतकी दशमूलञ्च पृथक् त्वक् पारिभद्रतः ।
प्रत्येकमेषान्तु तुला तुलार्द्धं किटिभं तथा ॥ ३७१ ॥
तुलार्द्धं स्याच्छिरीषस्य लाक्षायाः पञ्चविंशतिः ।
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत् ॥ ३७२ ॥
द्रोणद्वयं काञ्जिकञ्च षड्विंशत्याढ़कान्वितम् ।
क्षीरदध्नोः पृथक् प्रस्था दशमस्त्वाढ़कं तथा ॥ ३७३ ॥
इक्षोरसाढ़के चैव छागमांसतुलां नयेत् ।

जलं पञ्चचत्वारिंशत्प्रस्थे पक्के तु शेषयेत् ॥ ३७४ ॥
सप्तदशरसप्रस्थान् मञ्जिष्ठाक्काथ एव च ।
कुड़वानाढ़कोन्माने द्रवैरेभिस्तु साधयेत् ॥ ३७५ ॥
सुशुद्धतिलतैलस्य द्रोणप्रस्थेन संयुतम् ।
आद्य एभिर्द्रवैः पाकः कल्कैर्भल्लातकं कणा ॥ ३७६ ॥
नागरं मरिचं चैव प्रत्येकं षट्पलोन्मितम् ।
भल्लातकासहित्वे तु रक्तचन्दनमिष्यते ॥ ३७७ ॥
पथ्याक्षधात्र्यः सरलं शताह्वा कर्कटी वचा ।
चोरपुष्पी शटी मुस्तं द्वयं पद्मञ्च सोत्पलम् ॥ ३७८ ॥
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा ।
दशमूलं समुद्दिष्टं चक्रमर्दो रसाञ्जनम् ॥ ३७९ ॥
गन्धतृणं हरिद्रा च जीवनीयगणस्तथा ।
एतेषां पलिकैर्भागैराद्यः पाको विधीयते ॥ ३८० ॥
देवपुष्पीव्योलपत्रे शल्लकीरसशैलजे ।
प्रियङ्गुशीरमधुरी मांसीदारुवलावचा ॥ ३८१ ॥
श्रीवासो नलिकाख्येति सूक्ष्मैला कुन्दुरुर्मुरा ।
नखीद्वयञ्च त्वक्पत्रौ सुमना पूतिचम्पकम् ॥ ३८२ ॥
मदनं रेणुकापृक्का मातुलुङ्गं पलत्रयम् ।
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥ ३८३ ॥
गन्धोदकी च त्वक्पत्री पत्रकोशीरमुस्तकम् ।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः ॥ ३८४ ॥
तुल्यार्द्धभागोऽत्र जले प्रस्थास्तु पञ्चविंशतिः ।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्मणि ॥ ३८५ ॥
गन्धाम्बुचन्दनाम्बुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्ठं त्वक्कालीयककुङ्कुमम् ॥ ३८६ ॥
भद्रश्रियं ग्रन्थिपर्णं लता कस्तूरिका तथा ।

लवङ्गागुरुकङ्कोल जातीकोषफलानि च ॥ ३८७ ॥
एलालवङ्गछल्ली च प्रत्येकं त्रिपलोन्मिता ।
कस्तूरीषट्पला चन्द्रात्पलं सार्धञ्च गृह्यते ॥ ३८८ ॥
वेधार्थञ्च पुनश्चन्द्रं मेदौ देयौ तथोन्मितौ ।
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता ॥ ३८९ ॥
गुणान् प्रसारणीनान्तु वहत्येषा वलोत्तमान् ॥ ३९० ॥
अत्र शुक्तिविधिर्मण्ड: प्रस्थपञ्चाढ़कोन्मितम् ।
काञ्जिकं कुड़वं दध्नो गुड़प्रस्थोऽम्बुमूलकात् ॥ ३९१ ॥
पलान्यष्टौ शोधितार्द्रात्पलषोड़शकं तथा ।
कणाजीरकसिन्धूत्थ हरिद्रामरिचं पृथक् ॥ ३९२ ॥
द्विपलं भाविते भाण्डे घृतञ्चाष्टदिनस्थितम् ।
सिद्धं भवति तच्छुक्तं यदावतार्य्य गृह्यते ।
तदा देयं चतुर्जातं पृथक्कर्षत्रयोन्मितम् ॥ ३९३ ॥

इति शुक्तविधि: ।

पञ्चपल्लवतोयेन गन्धानां चालनं तथा ।
शोधनं चात्र संस्कारो विशेषश्चात्र वक्ष्यते ॥ ३९४ ॥
आम्रजम्बूकपित्थानां बीजपूरकविल्वयो: ।
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ ३९५ ॥
चण्डीगोमयतोयेन यदि वा तिन्तिड़ीजलै: ।
नखं संक्षाययेदेभिर्भाण्डेन मृण्मयेन तु ॥ ३९६ ॥
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत् ।
गुड़पथ्याम्बुना ह्येवं शुद्ध्यते नात्र संशय: ॥ ३९७ ॥

इति नखशुद्धि: ।

गोमूत्रे चालम्बुषके पक्वा पञ्चदलोदके ।
पुन: सुरभितोयेन वाष्पस्वेदेन स्वेदयेत् ॥ ३९८ ॥

गन्धोग्रा शुध्यते ह्येवं रजनी च विशेषतः ॥ ३९९ ॥

इति हरिद्रावचाशुद्धिः।

मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितम्।
पञ्चपल्लवपानीये स्विन्नमातपशोषितम् ॥ ४०० ॥
गुडाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत्ततः।
आजशौभाञ्जनजलैर्भावयेच्चेति शुद्ध्यति ॥ ४०१ ॥

इति मुस्तकशुद्धिः।

काञ्जिके क्वथितं शैलं भृष्ट्वा पथ्यागुडाम्बुना।
सिञ्चेदेवं ततः पुष्पैर्विविधैरधिवासयेत् ॥ ४०२ ॥

इति शैलजशुद्धिः।

यथालाभमपामार्गं स्नुह्यादिक्षारलेपितम्।
वाष्पस्वेदेन संस्वेद्य पूतिं निर्लोमतां नयेत् ॥ ४०३ ॥
दोलापक्कं पचेत्पश्चात्पञ्चपल्लववारिणि।
खलः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत् ॥ ४०४ ॥
आजशौभाञ्जनजलैर्भावयेच्च पुनः पुनः।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम्।
पचेदेवं विशुद्धश्च मृगनाभिसमो भवेत् ॥ ४०५ ॥

इति खाटासीशुद्धिः।

तुरुष्कं मधुना भाव्यं काश्मीरञ्चापि सर्पिषा।
रुधिरेणायसं प्राज्यैर्गोमूत्रैर्ग्रन्थिपर्णिकम् ॥ ४०६ ॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना।
ईषत्क्षारानुगन्धा तु दग्धा याति न भस्मताम् ॥ ४०७ ॥
पीता केतकीगन्धा च लघुस्निग्धा मृगोत्तमा ॥ ४०८ ॥
पक्कात् कर्पूरतः प्राहुरपक्कं गुणवत्तरम्।
तत्रापि स्याद्यदक्षुद्रं स्फटिकाभं तदुत्तमम् ॥ ४०९ ॥

पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तमम्।
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ॥ ४१० ॥
मृगशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम्।
काकतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरुः ॥ ४११ ॥
स्निग्धाल्पकेशरं त्वक्षं शैलजो वृत्तमांसलः।
मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः ॥ ४१२ ॥
रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम्।
जातीफलं सशब्दञ्च स्निग्धं गुरु च शस्यते ॥ ४१३ ॥
एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डुरा।
नखमश्वखुरं हस्तिकर्णञ्चैवात्र शस्यते।
एतेषामपरेषाञ्च नवताप्रवरो गुणः ॥ ४१४ ॥

इति चतुर्विंशतिकाप्रसारणीतैलम्।

माषद्रोणं समादाय अश्वगन्धाप्रसारणी।
द्विपञ्चमूल्यात्मगुप्ता बलागन्धर्वहस्तकः ॥ ४१५ ॥
एषां दशपलान् भागान् वारिद्रोणे चतुष्टये।
क्वाथमेभिः प्रकुर्वीत चतुर्भागावशेषितम् ॥ ४१६ ॥
यष्ट्याह्वदारुकुष्ठैला रास्ना मांसी बला वचा।
शताह्वा चात्मगुप्ता च अश्वगन्धा च चन्दनम् ॥ ४१७ ॥
शठ्युरुवुकत्वचाम्ल तूशणागुरुवृश्चिकम्।
सिन्धूद्भवं विदारी च प्रसारणी शतावरी ॥ ४१८ ॥
देवदारुकातिबला विड़ङ्गसरलानि च।
कल्कैरेतैः पलैर्भागैस्तैलाढ़कसमायुतैः ॥ ४१९ ॥
क्षीरतुल्यसमायुक्तं शनैर्मृदग्निना पचेत्।
पाने वस्तौ तथाभ्यङ्गे नस्ये भोज्ये च पूजितम् ॥ ४२० ॥
अर्दिते कर्णशूले च शिरोरोगे हनुग्रहे।
मुखरोगेषु सर्वेषु मन्यास्तम्भेऽपबाहुके ॥ ४२१ ॥

मन्दश्रवणबाधिर्य्यं कर्णरोगातिपीनसे ।
हृद्रोगं गृध्रसीञ्चैव आमवातकटिग्रहम् ॥ ४२२ ॥
जङ्घोरुपादपृष्ठेषु पार्श्वशूलमतीव च ।
मन्यावृद्ध्यण्डवृद्धिञ्च वातरक्तं सुदारुणम् ॥ ४२३ ॥
विश्वाचीखञ्जपङ्गूर्वा वातजान् अशीतिं हरेत् ॥ ४२४ ॥
बलीपलितखालित्यं केशानां पतनं परम् ।
बलमांसकरञ्चैव शुक्रवृद्धिकरं परम् ॥ ४२५ ॥
अपत्यजननं श्रेष्ठं गर्भिणीनां परं हितम् ।
हस्त्यश्वोष्ट्रादिव्यायामैर्भग्नसन्धिप्रसाधनम् ॥ ४२६ ॥
तैलमात्रोपयोगेन व्याधिं निर्मूलतां नयेत् ।
सर्वातङ्कविनाशाय वृक्षमिन्द्राशनिर्यथा ।
महामाषमिदं तैलं कृष्णात्रेयेण पूजितम् ॥ ४२७ ॥

इति महामाषतैलम् ।

प्रसारणीशतक्वाथे तैलप्रस्थं पयः समम् ।
जीवकर्षभकौ मेदे काकोल्यौ कुष्ठचन्दने ॥ ४२८ ॥
शताह्वा दारुमञ्जिष्ठा रास्ना पिष्ट्वा विपाचयेत् ।
वस्तिपानादिभिर्युक्त मेतन्मारुतरोगनुत् ॥ ४२९ ॥

इति शतप्रसारणीतैलम् ।

प्रसारण्यास्तुलामश्वगन्धाया दशमूलतः ।
तुलां तुलां पृथग्वारि द्रोणे पादांशशेषिते ।
तैलाढ़कं चतुःक्षीरं दधितुल्यं द्विकाञ्जिकम् ॥ ४३० ॥
द्विपलैर्ग्रन्थिकक्षार प्रसारिण्यब्दसैन्धवैः ।
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ॥ ४३१ ॥
शुण्ठ्याः पञ्चपलान् दत्त्वा त्रिंशद्भल्लातकानि च ।
पचेद्धस्त्यादिना वातं हन्ति सन्धिशिरास्थिगम् ॥ ४३२ ॥

पुंस्त्वोत्साहस्मृतिप्रज्ञा बलवर्णाग्निवृद्धये ।
प्रसारिणीयं त्रिशतीत्वचं सौवर्चलन्विह ॥ ४३३ ॥

इति त्रिशतीप्रसारणीतैलम् ।

प्रसारणीशतं क्षुणं पचेत्तोयाऽर्मणे शुभे ।
पादशिष्टे समं तैलं दधि दद्यात् सकाञ्जिकम् ॥ ४३४ ॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा ।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥ ४३५ ॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम् ।
प्रसारिण्याश्च मूलानि मांसी भल्लातकं तथा ॥ ४३६ ॥
पचेन्मृदग्निना तैलं वातश्लेष्मामयान् जयेत् ।
अशीतिं नरनारीस्थान् वातरोगान् व्यपोहति ॥ ४३७ ॥
कुब्जस्तिमितपङ्गुत्वं गृध्रसीखञ्जकार्दितम् ।
हनुपृष्ठशिरोग्रीवास्तम्भञ्चाशु नियच्छति ॥ ४३८ ॥

इति कुब्जप्रसारणीतैलम् ।

समूलपत्रासुत्पाद्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचराच्छतवर्य्याः शतं तथा ॥ ४३९ ॥
बलात्मगुप्ताश्वगन्धा केतकीनां शतं शतम् ।
चतुर्गुणेन तोयेन द्रवैस्तैलाढकं पचेत् ॥ ४४० ॥
मस्तुमांसरसं चुक्रं पयश्चाढकमाढकम् ।
दध्याढकसमायुक्तं पाचयेन्मृदुनाग्निना ॥ ४४१ ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलात्मिका ।
तगरं चन्दनं कुष्ठं केशरं मुस्तकं त्वचम् ॥ ४४२ ॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका ।
जीवकर्षभकौ मेदा महामेदा तथा पुनः ॥ ४४३ ॥
शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च ।
काकोली चीरकाकोली वचा भल्लातकं तथा ॥ ४४४ ॥

पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्कं नातिहीनं सिद्धपूतं निधापयेत् ॥ ४४५ ॥
यत्र यत्र प्रदातव्यं तन्मे निगदतः शृणु।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥ ४४६ ॥
येषां शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ॥ ४४७ ॥
वातशोणितदुष्टानां वातोपहतचेतसाम्।
स्त्रीपदक्षीणशुक्राणां वाजीकरणमुत्तमम् ॥ ४४८ ॥
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत्।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥ ४४९ ॥

इति सप्तशतिका महाप्रसारणीतैलम्।

प्रसारणीपलशतं गुडूचीसहचरं बला।
एरण्डमश्वगन्धा च दशमूलीशतावरी ॥ ४५० ॥
कुट्टयित्वा पलशतं साधयेत् सलिलार्मणे।
चतुर्भागावशेषञ्च कषायमवतारयेत् ॥ ४५१ ॥
तैलं मांसरसं क्षीरं दधिशुक्तं तथैव च।
एतानि समभागानि द्विगुणं चाम्लकाञ्जिकम् ॥ ४५२ ॥
कल्के पेष्याणि भागानि तत्रेमानि प्रदापयेत्।
नागरातिविषा मुस्तं शठी चैलाम्बुपत्रकम् ॥ ४५३ ॥
चन्दनं तगरं कुष्ठं पुष्कराह्वं ससैन्धवम्।
त्र्यूषणं कटुकं क्षारं मञ्जिष्ठा कटुका गुरु ॥ ४५४ ॥
शताह्वा पिप्पलीमूलं मांसीचन्दनमेव च।
प्रसारणीमूलमपि जीवनीयानि यानि च ॥ ४५५ ॥
एतैस्तु पलिकैर्भागै स्तैलपात्रे विपाचयेत्।
अश्वं वा वातसम्भग्नं गजं वा जर्जरीकृतम् ॥ ४५६ ॥
एकाङ्गं क्षवथुं कम्पमपतानकमेव च।
हन्यादेतान् गदान् सर्वान् महत्येषा प्रसारणी ॥

बलवर्णकरी ह्येषा नित्यमात्रेयपूजिता ॥ ४५७ ॥

इति महाप्रसारणीतैलम् ।

समूलपत्रशाखायाः प्रसारण्याः शतत्रयम् ।
सहचरस्य शतं द्वे च शतावर्य्यश्वगन्धयोः ॥ ४५८ ॥
गुडूच्यैरण्डमूलानां वानरीक्षुरकस्य च ।
पुनर्नवायाः केतक्याः पञ्चमूलद्वयस्य च ॥ ४५९ ॥
त्रिफलाचित्रकं विल्वं बलातिबलयोरपि ।
शिरीषमूलं पञ्चाश द्राक्षादारु तदंशिके ॥ ४६० ॥
सर्वमेतत् सुसंचुद्य कटाहे समधिक्षिपेत् ।
वारिद्रोणे शते क्वाथ्यं दशभागस्थितेन वै ॥ ४६१ ॥
व्यक्ताम्लेनारणालेन द्रोणद्वययुतेन च ।
मस्तुक्षीरेक्षुनिर्य्यास छागमांसरसैस्तथा ॥ ४६२ ॥
आढ़काढ़कसंयुक्ते तथा शुक्त्याढ़केन च ।
तेन द्रोणसमायुक्तं दृढ़े भाण्डे निधापयेत् ॥ ४६३ ॥
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः शृणु ।
भल्लातकं नतं शुण्ठी कृष्णा शठ्यभया वचा ॥ ४६४ ॥
बलाप्रसारिणी चैव कणामूलन्तु चोरकम् ।
लवङ्गं शतपुष्पा च सूक्ष्मैलात्वक् च बालकम् ॥ ४६५ ॥
कुष्ठं व्याघ्रनखं मांसी सैन्धवं मदनं वचा ।
कस्तूर्य्यगुरुमञ्जिष्ठा तुरुष्कनखकुङ्कुमम् ॥ ५६६ ॥
तुम्बुरं चन्दनं पूति कङ्कोलं त्रिसुगन्धिकम् ।
पद्मकोत्पलकालीय दार्व्यम्रिसितचन्दनम् ॥ ४६७ ॥
शठी रेणुकशैलेयं श्रीवासं कण्डुरं नलम् ।
जातीकोषं वरा भीरु सरलं पद्मकेसरम् ॥ ४६८ ॥
प्रियङ्गुशीरतगरं नलिकाजीवनं गणम् ।
लवङ्गं नागपुष्पञ्च तथा कर्पूरमञ्जनम् ॥ ४६९ ॥

कटुकापूगजातीनां फलानि ताड़िकीफलम्।
भागांस्त्रिपलिकान् कृत्वा शनैर्मृद्वग्निना पचेत्॥ ४७०॥
इष्टवर्णरसस्पर्शं गन्धेनापि समन्वितम्।
स्वभागशेषं तत्सिद्धं तत्तु गुप्तं निधापयेत्॥ ४७१॥
पानाभ्यङ्गे तथा नस्ये निरूहे चानुवासने।
एतद्धि वड़वाश्वानां किशोराणां यथामृतम्॥ ४७२॥
एतदेव कुमाराणां कुमारीणां गवामपि।
वृद्धोऽप्येतन्नरः पीत्वा पुनश्च तरुणो भवेत्॥ ४७३॥
एतेनैव च तैलेन शुष्यमाणा महाद्रुमाः।
मूले सिक्ताः प्ररोहन्ति सनालकृदपल्लवाः॥ ४७४॥
अप्रसूता च या नारी सम्यक् पीत्वा प्रसूयते।
अप्रजः पुरुषो यश्च सोऽपि पीत्वा सुतं लभेत्॥ ४७५॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चापि संसृष्टान् सान्निपातिकान्॥४७६॥
क्षिप्रं विनाशयत्येव तैलमेतत् प्रयोजितम्।
पूर्वस्माद्विशिष्टतरं गन्धहस्तीति लक्षणम्॥ ४७७॥

इति गन्धहस्तीप्रसारिणीतैलम्।

समूलपत्रशाखायाः प्रसारण्याः शतत्रयम्।
शतमेकं शतावर्य्या अश्वगन्धाशतं तथा॥ ४७८॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम्।
शतं वाट्यालकस्यापि शतं सहचरस्य च॥ ४७९॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम्।
ततस्तेन कषायेण कषायद्विगुणेन च॥ ४८०॥
सुव्यक्तेनारणालेन दधिमस्त्वाढ़केन च।
क्षीरशुक्तेक्षुनिर्य्यास छागमांसरसेन च॥ ४८१॥
तैलं द्रोणसमायुक्तं दृढ़े भाण्डे निधापयेत्।

द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः शृणु ॥ ४८२ ॥
भल्लातकं नतं शुण्ठी चित्रकं पिप्पली शटी ।
वचापृक्काप्रसारिण्यः पिप्पलीमूलमेव च ॥ ४८३ ॥
देवदारुशताह्वा च सूक्ष्मैलात्वक् च वालकम् ।
कुष्ठं व्याघ्रनखं मांसी वीरचन्दनशारिवाः ॥ ४८४ ॥
कस्तूर्य्यगुरुमञ्जिष्ठा तुरुष्कनखकुङ्कुमम् ।
कर्पूरकन्दुरुनिशालवङ्गध्यामसैन्धवम् ॥ ४८५ ॥
कङ्कोलनलिका मुस्तं कालीयोत्पलपत्रकम् ।
शटीहरेणुशैलेय श्रीवासञ्च कशेरुकम् ॥ ४८६ ॥
त्रिफलाकच्छुराभीरु सरलापद्मकेसरम् ।
प्रियङ्गुशीरजलदं जीवकाद्यं पुनर्नवा ॥ ४८७ ॥
दशमूलाश्वगन्धा च नागपुष्पं रसाञ्जनम् ।
भागांस्त्रिपलिकान् दत्त्वा शनैर्मृद्वग्निना पचेत् ।
आयसे वाथ ताम्रे वा सुदृढ़े मृण्मयेऽपि वा ॥ ४८८ ॥
प्रयोगः षड्विधश्चापि रोगार्त्तानां विधीयते ।
अभ्यङ्गात् त्वग्गतं हन्ति पानात् कोष्ठगतं तथा ॥ ४९० ॥
भोजनात् सूक्ष्मनाड़ीस्थान्नस्यादूर्द्ध्वगतांस्तथा ।
आमाशयगते वस्तिर्निरूहः सर्वकायिके ॥ ४९१ ॥
एतद्धि वड़वाश्वानां किशोराणां यथामृतम् ।
एतदेव मनुष्याणां कुञ्जराणां गवामपि ॥ ४९२ ॥
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ।
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ॥ ४९३ ॥
वृद्धोऽप्यनेन पीतेन पुनश्च तरुणो भवेत् ।
अप्रसूता च या नारी सा पीत्वापि प्रसूयते ॥ ४९४ ॥
अप्रजः पुरुषो यश्च सोऽपि पीत्वा लभेत् सुतम् ।
अशीतिं वातजान् रोगान् पैत्तिकान् श्लैष्मिकानपि ॥४९५॥

सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव च।
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत्॥
पुष्टिवर्णबलञ्चाशु तैलमेतत् प्रदापयेत्॥ ४९६॥

इति अष्टादशशतकं प्रसारणीतैलम्।

परत्नुसम्पक्वसुजातसारप्रसारणीमूलशतं विशुद्धम्।
दशैव मूलानि बलाश्वगन्धा शतावरीसाहचरं श्वदंष्ट्रा॥ ४९७॥

रास्नात्मगुप्तामृतवृश्चिकानां
शतं शतञ्चापि सुकुट्टितञ्च।
पृथक् पृथक् त्वाढ़कसम्मितानां
कुलत्थकोलांश्च यवांश्च दद्यात्॥ ४९८॥

द्रोणैस्तु षड्भिर्विपचेज्जलस्य द्रोणावशेषेषु पचेद्धि तत्र।
तैलाढ़कं मांसरसाढ़कञ्च दध्याढ़कं क्षीरचतुर्गुणञ्च॥ ४९९॥
शुक्ताढ़कं मूलरसाढ़कञ्च मस्त्वाढ़कञ्चाढ़ककाञ्जिकञ्च।
द्रव्यैः समैरर्द्धपलांशिकैश्च सुसूक्ष्मपिष्टैर्ह्यदि प्रयत्नात्॥५००॥
रास्नाशताह्वाऽगुरुदारुयुक्तं मञ्जिष्ठयष्टीमधुकं नताब्दम्।
मांसीवचासैन्धवचित्रकञ्च क्षारं यवानां सरलं कृमिघ्नम्॥५०१॥
आरुष्करं पुष्करमूलकुष्ठं सपिप्पली पिप्पलीमूलचव्यम्।
मेदायुगञ्चार्षभका वृभी च काकोलियुग्मं मरिचं त्वगैलम्॥५०२
शृङ्गीशटी व्याघ्रनखं सचोचं पृक्कागजाह्वा मदनं सशुण्ठी।
सकेशरं चन्दनपत्र चोरं त्रिकण्टशृङ्गाटककोलकञ्च॥ ५०३॥

ऋद्धिं सवृद्धिं रजनीमृणालं
यवान्यजाजीत्वजमोदकञ्च।
पञ्चाशतन्तानधिकांश्चतुर्भिः
क्षिप्त्वा विपाच्यं मृदुनाग्निना च॥ ५०४॥
सम्पूज्य विप्रान् भिषजोऽवतार्य्य
शान्तिं तथा स्वस्त्यवधार्य्य कुम्भे।

क्षिप्त्वा च सम्पूज्य गृहे सुगुप्ते
तत् स्थापयेत्तैलवरं प्रयत्नात् ॥ ५०५ ॥
यान्यान्विकारान्विनिहन्ति युक्तं
नियुज्यते यत्र तथा निबोध मे ।
ये पङ्गवः पीठविसर्पिणश्च
सङ्कोचितस्नायुशिराश्च कुब्जाः ॥ ५०६ ॥
गतिप्रनष्टा विनताश्च खञ्जाः
सन्ध्यस्थिसम्पीड़ितभग्नगात्राः ।
मन्यासु पृष्ठे भुजकण्ठकट्यां
स्तम्भं नृणां मारुतजं निहन्ति ॥ ५०७ ॥
एकाङ्गसर्वाङ्गजमप्यशेषं
वातं जयेदर्दितशोथकण्डूः ।
स्तम्भं जयेच्चापतन्त्रकताभिधानं
वाह्यान्तरायामहनुग्रहञ्च ॥ ५०८ ॥
ये वातसंग्राह्यतिजर्जिताङ्गा-
विश्लिष्टजान्वस्थिकटीकपालाः ।
सन्धिच्युताः स्तब्धतमः शिराश्च
भवन्ति सर्वेऽपि पुनर्नवास्ते ॥ ५०९ ॥
स्नायुस्थिसन्ध्यूरुगवातशूलं
शिरोभवं गात्रभवं निहन्ति ।
कर्मायथार्थप्रभवञ्च शूलं
सर्वाङ्गमेकाङ्गगमाशु हन्ति ॥ ५१० ॥
स्त्रीणाञ्च योन्युद्भववस्तिशूलं
क्रुद्धेन वातेन च रक्तजञ्च ।
पुंसाञ्च शुक्रक्षयमागते च
शूलं तथा मेढ्रगतं निहन्ति ॥ ५११ ॥

क्षीणेन्द्रिया ये विकलाश्च गद्गदाः
स्मृत्या विहीनाः पुनरुक्तवाचः ।
निरुद्धवाचस्त्वथ कश्मला ये
स्त्रियश्च याः स्युः प्रजया विहीनाः ॥ ५१२ ॥
दुष्टेन्द्रिया ये पुरुषाश्च तेषां
प्रसारणी चैव हिता क्रियासु ।
विशोधयेदार्त्तवशुक्रदोषान्
प्रजाकरी स्यात् स्मृतिदा प्रदिष्टा ॥ ५१३ ॥
प्रत्याध्मानाध्मानमाहार्त्तिकोष्ठं
जृम्भोद्गारं कर्णनादं क्षतञ्च ।
वातोन्मादं वातजापस्मृतिञ्च
शाखावातं गृध्रसीं चापि हन्ति ॥ ५१४ ॥
रोगान् जयेद्वातभवानशीतिं
मिश्रांस्तथा वातकफोद्भवांश्च ।
सेवन्ति ये शूलजितां प्रसारणीम्
अभ्यङ्गपानाशननस्यवस्तिभिः ॥ ५१५ ॥
भवन्ति ते चाप्यजिताः सदामयैः
विष्णुर्यथाभूदजितः सुरारिभिः ॥ ५१६ ॥
अजिता नामतः ख्याता वातरोगैर्न जीयते ।
क्षीणजर्जरिताङ्गानां वातसङ्कोचितात्मनाम् ॥ ५१७ ॥
प्रसारयति चाङ्गानि तेन प्रोक्ता प्रसारणी ।
अभ्यङ्गैस्त्वग्गतं हन्ति पाने नाड़ीगतं तथा ॥ ५१८ ॥
भोजनेन तु कोष्ठस्थान्नस्येनोर्द्ध्वगतान् गदान् ।
अधोगान्वस्तिदानेन सर्वान् हन्ति प्रसारणी ॥ ५१९ ॥
सकलभुवनरोगानुग्रवीर्य्यान्निहन्ति
प्रतिहतविषमाग्नीरूपसम्पत्स्वभावः ।

उपचितसमगात्रः कान्तिलावण्ययुक्तो
भवति च बलवान् वा जाठरेऽग्नौ प्रदीप्ते ॥५२०॥
तुरगजवसमं स्याद् गृध्रदृष्टिर्वपुष्मान् ।
श्रुतिमयूरसमं स्याद्धारयेत् विश्रुतञ्च ॥
स्मृतिमतिधृतियुक्तः स्पष्टवाक् हृष्टचित्तः ।
स्फुटपटुगुणयुक्तः शुद्धशुक्रः प्रजावान् ॥ ५२१ ॥
विषगदविनिहन्ता यद्वदेवादरः स्यात् ।
पवनगदनिहन्ता तद्वदेवाशु दृष्टिः ॥
अमृतमिव सुराणां नागराजं सुधेव ।
भवति च पुरुषाणां तद्वदेतद्धि तैलम् ॥ ५२२ ॥
प्रसारण्यश्वगन्धा च नागराख्या बला तथा ।
नित्यमार्द्रा प्रयोक्तव्या भागतो द्विगुणा मता ॥ ५२३ ॥

इति अजितप्रसारणीतैलम् ।

रसोनकल्कस्वरसेन सिद्धं तैलं पचेद्यस्त्वनिलामयार्त्तः ।
तस्याशु नश्यन्ति च वातरोगा ग्रन्थौ विशाला इव दुर्गृहीताः५२४

इति रसोनतैलम् ।

बालमूलकमापोड्य तैलं दध्यम्लकाञ्जिकम् ।
चोरञ्चैवाढ़कं दद्यात्पचेत्कल्कैः पलोन्मितैः ॥ ५२५ ॥
रास्नाभल्लातकं शिग्रु सैन्धवं गजपिप्पली ।
बला चातिबला शुण्ठी पिप्पली चित्रकं वचा ॥ ५२६ ॥
श्वदंष्ट्रा चेति तत्पक्कं वातश्लेषामयापहम् ।
ब्रध्नगृध्रसिपङ्गुत्वं खञ्जं वै सापतानकम् ॥ ५२७ ॥
कट्यूरुस्तम्भनं शोषं पर्वस्तम्भप्रकम्पनम् ।
हन्याद् गुल्मञ्च वातोत्थं बलवर्णाग्निवर्धनम् ॥
बन्ध्यानां पुत्रदञ्चैव तैलमूलकसाह्वयम् ॥ ५२८ ॥

इति मूलकाद्यं तैलम् ।

दशमूलं बला रास्ना चाश्वगन्धा पुनर्नवा।
गुडूच्येरण्डपूतीकभार्गीवृषकरोहिषम्॥ ५२९॥
शतावरी सहचरा काकनासा पलोन्मिता।
यवमाषातसीकोल कुलत्थाः प्रसृतोन्मिताः॥ ५३०॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन तु।
तैलाढ़कं समक्षीरं जीवनीयैः पचेच्छनैः॥ ५३१॥
अनुवासनमेतद्धि सर्ववातविकारनुत्।

इति दशमूलाद्यं तैलम्।

शतं पक्त्वाऽश्वगन्धाया जलद्रोणेऽंशशेषितम्।
विस्राव्य विपचेत्तैलं क्षीरं दत्त्वा चतुर्गुणम्॥ ५३१॥
कल्कैर्मृणालशालूक विसकिञ्जल्कमालती।
पुष्पैर्ह्रीवेरमधुक शारिवा पद्मकेसरैः॥ ५३३॥
मेदा पुनर्नवा द्राक्षा मञ्जिष्ठावृहतीद्वयैः।
एलैलवालुत्रिफला मुस्तचन्दनपद्मकैः॥ ५३४॥
पक्वं रक्ताश्रयं वातरक्तपित्तमसृग्दरम्।
हन्यात्पुष्टिबलं कुर्यात् कृशानां मांसवर्धनम्॥ ५३५॥
रेतो योनिविकारघ्नं व्रणशोथापकर्षणम्।
खण्डानपि वृषान् कुर्यात् पानाभ्यङ्गानुवासनैः॥ ५३६॥

इति अश्वगन्धाद्यं तैलम्।

शतावरीरसप्रस्थं क्षीरप्रस्थसमन्वितम्।
तैलप्रस्थं पचेदेभिः समस्तैर्गोमयाग्निना॥ ५३७॥
शतावरी सांशुमती पृश्निपर्णीबलाद्वयम्।
अश्वगन्धा च विल्वञ्च श्वदंष्ट्रा पौण्ड्रकं तथा॥ ५३८॥
निष्क्वाथ्य मूलमेतेषां तस्मिंस्तैले विनिक्षिपेत्।
शतपुष्पादेवदारुमांसी शैलेयकं बला॥ ५३९॥
चन्दनं तगरं कुष्ठ मेलाचांशुमती वचा।

वृद्धिजीवककाकोलि मेदामधुकमुत्पलम् ॥ ५४० ॥
सर्वमेतत्समाहृत्य कल्कैरचसमन्वितैः ।
पाने वस्तौ तथाभ्यङ्गे नस्ये चैव प्रदापयेत् ॥ ५४१ ॥
अङ्गशूलं शिरःशूलं मेहदण्डापतानकम् ।
वातरक्तं सदाहञ्च वातपित्तार्दितं गदम् ॥ ५४२ ॥
शोथपाण्डामयप्लीह कामलागरगण्डध्वंसी ।
योनिशूलमसृग्दोष माध्मानं विनिहन्ति च ॥ ५४३ ॥
क्षीणशुक्रौजसां पुंसां शस्तं बन्ध्यासुतप्रदम् ।
शतावरीतैलमिदं कृष्णात्रेयेण पूजितम् ॥ ५४४ ॥

इति शतावरीतैलम् ।

सर्पिस्तैलवसामज्जा पानाभ्यञ्जनवस्तयः ।
स्वेदोऽग्निना निवातञ्च स्थानं प्रावरणानि च ॥ ५४५ ॥
रसः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
वृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥ ५४६ ॥
हनुस्तम्भार्दिताक्षेप पक्षघातापतानकाः ।
कालेन महता वाता यत्नात्सिद्ध्यन्ति वा न वा ॥ ५४७ ॥
नवान् बलवतश्चैतान् साधयेन्निरुपद्रवान् ॥ ५४८ ॥
विसर्पदाहरुक्सङ्ग मूर्च्छारुच्यग्निमार्दवैः ।
क्षीणमांसबलं वाता हन्युः पक्षवधादयः ॥ ५४९ ॥
क्षीणं सुप्तत्वचं भग्नं कम्पाध्माननिपीड़ितम् ।
रुजार्त्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ॥ ५५० ॥
अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ।
वायुः स्यात्सोऽधिकं जीवेद्वीनरोगः समाः शतम् ॥ ५५१ ॥

अथ अर्दितनिदानमाह ।

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ।

हसतो जृम्भतो भारा द्विषमाच्छयनासनात् ॥ ५५२ ॥
शिरोनासौष्ठचिवुकललाटेचणसन्धिग:।
अर्दयत्यनिलो वक्तमर्दितं जनयत्यत: ॥ ५५३ ॥
वक्रं भवति वक्ताईं ग्रीवा चाप्यपवर्त्तते।
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥ ५५४ ॥
ग्रीवाचिवुकदन्तानां तस्मिन् पार्श्वे च वेदना।
तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदा: ॥ ५५५ ॥
वातात्पित्तात्कफाच्च स्याच्चिविधं तत् समासत:।
लालास्रावो व्यथा कम्प: स्फुरणं हनुवाग्ग्रह:।
ओष्ठयो: श्वयथु: शूलमर्दिते वातजे भवेत् ॥ ५५६ ॥
पीतमास्यं ज्वरस्तृष्णा पित्तजे मोहधूपने।
गण्डे शिरसि मन्यायां शोथ: स्तम्भ: कफात्मके ॥ ५५७ ॥
भाविनो लच्चणं तस्य वेपथुर्नेत्रमाविलम् ॥ ५५८ ॥
चीणस्यानिमिषाच्चस्य प्रसक्ताव्यक्तभाषिण:।
न सिध्यत्यर्दितं गाढ़ं त्रिवर्षं वेपनस्य च ॥ ५५९ ॥

अथ चिकित्सामाह।

स्नेहपानानि नस्यञ्च भोज्यान्यनिलवस्ति च।
उपनाहाश्च शस्यन्ते नावनं वस्तयोऽर्दिते ॥ ५६० ॥
दशमूलीकषायेण मातुलुङ्गरसेन च।
बलया पञ्चमूलं वा चीरं वातात्मके हितम् ॥ ५६१ ॥
मांसपिष्टकृतं जग्ध्वा नवनीतेन सोऽर्दिती।
चीरं मांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥ ५६२ ॥
वस्तावभ्यङ्गनस्ये च स्वेदयेत्तत्पर: पुमान्।
पिबेदुपरि भुक्त्वाज्य मर्दितं स व्यपोहति ॥ ५६३ ॥
अर्दिते पित्तजे शीतान् स्नेहांश्चैव विनिर्दिशेत्।
घृतवस्तिप्रसेकञ्च चीरसेकस्तथैव च ॥ ५६४ ॥

जिह्मीभूताननो मूको दाहवान्योऽर्दिती भवेत् ।
कुर्य्यात्प्रतिक्रियां तस्य वातपित्तविनाशिनीम् ॥ ५६५ ॥
शिरसो रेचनं कार्य्यं द्रव्यैः पित्तहरैस्तथा ।
सतीक्ष्णनस्यपानेन पुराणस्यैव सर्पिषः ॥ ५६६ ॥
श्लेष्मभागे क्षयं नीते बृंहणैः समुपाचरेत् ।
अर्दिते शोथसंयुक्ते वमनं सम्प्रशस्यते ॥ ५६७ ॥
दाहेन च समायुक्ते शिरसा रक्तमोक्षणम् ॥ ५६८ ॥
रसोनकल्कं तिलतैलमिश्रं खादेन्नरो योऽर्दितरोगयुक्तः ।
तस्यार्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुवेगात्५६९
दशमूलीरसक्षीर जीवनीयविपाचितम् ।
तैलं हन्त्यर्दितं तस्य पानाभ्यङ्गानुवासनैः ॥ ५७० ॥

इति दशमूलाद्यं तैलम् ।

सतृणमहापञ्चमूलमाहृत्य, द्विगुणोदके क्षीरे निष्क्वाथ्य, क्षीरावशिष्टमवतार्य्य, विस्राव्य, तैलप्रस्थेन सहोन्मिश्र्य, पुनरग्नावधिश्रृत्य, विपाचयेत्, ततस्तैलानुगतमवतार्य्य, शीतीभूतमश्नीयात्, तदेतत् क्षीरतैलम् अर्दितानां पानादिषु प्रयोज्यम् । इति क्षीरतैलम् ।

वातव्याधिविधान मिहकुर्य्याद्विचक्षणः ।

अथ गृध्रसीनिदानम् ।

स्फिक्पायूरुकटीपृष्ठ जानुजङ्घापदं क्रमात् ।
गृध्रसीस्तम्भरुक् तोदैर्गृह्णाति स्पन्दते मुहुः ।
वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः ॥ ५७१ ॥
वातजायां भवेत् तोदो देहस्यातीव वक्रता ।
जानुजङ्घोरुसन्धीनां स्फुरणं स्तब्धता भृशम् ॥ ५७२ ॥
वातश्लेष्मोद्भवायान्तु स्तैमित्यं वह्निमार्दवम् ।
तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ४७३ ॥

अथ चिकित्सामाह।

सर्वत्राकर्षणं कुर्य्यात् हृद्यदीपनपाचनम्।
तप्ततैलेष्टकास्वेदमर्दनं चोपनाहनम्॥ ५७४॥
गृध्रस्यानन्तरं सम्यक् रेकेण वमनेन वा।
ज्ञात्वा निरामदीप्ताग्निं वस्तिभिः समुपाचरेत्॥ ५७५॥
आदौ वस्तिविधिं कुर्य्याद्यावद्दूर्द्धं न शुद्ध्यति।
स्नेहो निरर्थकस्तस्य भस्मन्येव हुतं यथा॥ ५७६॥
दशमूलीबलारास्ना गुड़ूचीविश्वभेषजम्।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु॥ ५७७॥

इति रास्नादशमूलम्।

पञ्चमूलीकषायन्तु सुखोष्णं त्रिवृतायुतम्।
गृध्रसीं गुल्मशूलञ्च सद्यः पीतं नियच्छति॥ ५७८॥
द्वित्रिस्थानेषु गृध्रस्यां शिरां प्रच्छन्नवेधिताम्।
गुञ्जाकल्केन लिप्त्वा च सद्यस्त्यजति वेदनाम्॥ ५७९॥
यद्येवं तथापि ग्रन्थान्तरमवलोकनीयम्।
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः॥ ५८०॥
तैलं घृतं सार्द्रकमातुलुङ्गं रसं सचुक्रं सगुड़ं पिबेद्वा।
कट्यूरुपृष्ठत्रिकगुल्मशूलं गृध्रस्युदावर्त्तहरः प्रयोगः॥५८१॥
विशोध्यैरण्डवीजानि पिष्ट्वा क्षीरे विपाचयेत्।
तत्पायसं कटीशूले गृध्रस्यां परमौषधम्॥ ५८२॥
पञ्चमूलीकषायन्तूरुवुतैलत्रिवृद्युतम्।
गृध्रसीगुल्मशूलञ्च पीतं सद्यो नियच्छति॥ ५८३॥
मेषशृङ्गीविड़ङ्गानि श्वदंष्ट्रा चाश्वगन्धजम्।
एरण्डमूलविल्वञ्च बृहतीकण्टकारिका॥ ५८४॥

कषायोरुबुकोपेतः पीतो वङ्क्षणवस्तिजम् ।
शूलं गृध्रसीजं हन्ति चिरकालानुबन्धि वा ॥ ५८५ ॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ५८६ ॥
सिंहास्यशुण्ठीकृतमालकानां पिबेत्कषायं रुबुतैलमिश्रम् ।
यो गृध्रसीनष्टगतिश्च सुप्तः स वीतरुक् स्यात्तु किमत्र चित्रम्५८७
अश्नाति यो नरः सिद्धामेरण्डफलमिश्रिताम् ।
यवागूं गृध्रसीखिन्नः शीघ्रमाप्नोत्यसौ गतिम् ॥ ५८८ ॥
वृहन्निम्बतरोर्मूलं वारिणा परिपेषितम् ।
पीतं तन्नाशयेत् क्षिप्रमसाध्यामपि गृध्रसीम् ॥ ५८९ ॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिपाचितः ।
दुर्वारं गृध्रसीरोगं पीतमात्रश्च संहरेत् ॥ ५९० ॥
तगरस्य शिफां सार्द्धं पिष्ट्वा तक्रेण यः पिबेत् ।
रिङ्गणानिलरोगस्तु तत्क्षणादेव नश्यति ॥ ५९१ ॥
शुण्ठीगन्धर्ववीजाभ्यां पिष्टाभ्यां पायसं पचेत् ।
भक्षितं तत्कटीशूलं गृध्रसीं हन्त्यसंशयम् ॥ ५९२ ॥
वापनादिक्रियायोगैर्यदि शान्तिं न याति सा ।
तदा कर्त्तव्यमिवन्तु व्यधनादि चिकित्सकैः ॥ ५९३ ॥
गृध्रस्यार्त्तस्य जङ्घायां स्नेहस्वेदे कृते भिषक् ।
पद्भ्यां समर्दितायाञ्च सूक्ष्ममार्गेण गृध्रसीम् ॥ ५९४ ॥
अवतार्य्याङ्गुली सम्यक् कनिष्ठायां शनैः शनैः ।
ज्ञात्वा समुन्नतां ग्रन्थिं कण्डरायां व्यधेच्छिराम् ॥ ५९५ ॥
तां शस्त्रेण विदार्य्याशु सवालाङ्कुरसन्निभाम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद्यष्ट्याह्वचन्दनैः ॥ ५९६ ॥
बिध्याच्छिरामिव वस्तेरधस्ताच्चतुरङ्गुले ।
यदि नोपशमं गच्छेद्दहेत्पादकनिष्ठिकाम् ॥ ५९७ ॥

रास्नायास्तु पलञ्चैकं पञ्चकर्षाणि गुग्गुलोः।
सर्पिषा वटिकां कृत्वा खादेद्वा गृध्रसीहराम्॥ ५९८॥

इति रास्नादिगुग्गुलुः।

पथ्याविभीतामलकी फलानां शतं क्रमेण द्विगुणाभिवृद्धम्।
प्रस्थेन युक्तञ्च पलं कषाणां द्रोणे जले संस्थितमेकरात्रम्॥५९९॥
अर्द्धावशेषं क्वथितं कषायं भाण्डे पचेत्तत्पुनरेव लौहे।
अमूनि पश्चादवतार्य्य दद्यात् द्रव्याणि सञ्चूर्ण्य पलार्द्धकानि॥६००
विड़ङ्गदन्तीत्रिफलागुडूचीकृष्णात्रिवृन्नागरकोषणानि।
यथेष्टचेष्टस्य नरस्य शीघ्रं हिमाम्बुपानानि च भोजनानि॥६०१॥

निषेव्यमाणो विनिहन्ति रोगां-
स्तद्व्याधितान् गृध्रसिखञ्जितांश्च।
प्लीहानमुग्रं जठराणि गुल्मं
पाण्डुत्वकण्डूमपि वातरक्तम्॥ ६०२॥
पथ्याह्वयो गुग्गुलुरेष नाम्ना
ख्यातः क्षितौ चाप्रमितप्रभावः।
बलेन नागेन्द्रबलं मनुष्यं
जवेन कुर्य्याद्धयतुल्यवेगम्॥ ६०३॥
आयुः प्रकर्षं विदधाति सद्यः
चक्षुर्बलं पुष्टिकरो विषघ्नः।
क्षतस्य सन्धानकरो विशेषात्
रोगेषु शस्तः सकलेषु चैव॥ ६०४॥

इति पथ्याद्यो गुग्गुलुः।

पचेद्दृताढ़कं क्वाथे लशुनस्याढ़कोद्भवे।
कर्षं चव्याग्निकृष्णानां पलिके विश्वहिङ्गुनी॥ ६०५॥
लवणांश्च पृथक् पिष्ट्वा पलार्द्धं चाम्लवेतसम्।

गृध्रसीवातरुग्गुल्म पक्षाघातनिवारणम् ॥ ६०६ ॥

इति लशुनाद्यं घृतम् ।

वाजिगन्धाबलाविल्व दशमूलाम्बुसाधितम् ।
गृध्रस्यां तैलमैरण्डं परं वस्तौ प्रयोजयेत् ॥ ६०७ ॥

इति अश्वगन्धाद्यं तैलम् ।

शिंशपात्वक् तुलां क्षुण्णां जलद्रोणद्वये पचेत् ।
अष्टभागावशिष्टञ्च पूतं लेहञ्च कारयेत् ॥ ६०८ ॥
पायसं सहविष्यान्नं तत्कर्षेण च मिश्रितम् ।
भक्षयेदेकविंशाहं गृध्रसीनाशनं परम् ॥ ६०९ ॥
द्वे पले सैन्धवात्पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढ़के ॥ ६१० ॥
आरणालात्पचेत्प्रस्थं तैलस्यैरण्डजस्य च ।
गृध्रस्यूरुग्रहांश्चापि सर्ववातविकारनुत् ॥ ६११ ॥

इति सैन्धवाद्यं तैलम् ।

श्वदंष्ट्रा स्वरसं तैलं क्षीराढ़कसमन्वितम् ।
शृङ्गवेरपलान् पञ्च विंशद्गुड़पलानि च ॥ ६१२ ॥
सिद्धमेकत्र तत्तैलं गृध्रस्यां पादकम्पने ।
कटीपृष्ठग्रहे शोथे शस्तं वातविकारिणाम् ॥ ६१३ ॥
वन्ध्यानां गर्भजननं रेतोदोषापकर्षणम् ।
वस्तौ पाने हितञ्चैव विशेषात् मूत्रकृच्छ्रिणाम् ॥ ६१४ ॥

इति वङ्गसेनसङ्कलितः वातव्याधिनिदानचिकित्साधिकारः समाप्तः ।

---

# अथ वातरक्तनिदानमाह ।

लवणाम्लमधुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ १ ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारणालसौवीर शुक्ततक्रसुरासवैः ॥ २ ॥
विरुद्धाध्यशनक्रोध दिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां दुःखितानाञ्च कुप्यते वातशोणितम् ॥ ३ ॥
हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं सविदाहाशनस्य ।
कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रस्तं पादयोश्चीयते तु ॥४॥
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥ ५ ॥
स्वेदोऽत्यर्थं नवा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽति रुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिड़कोद्गमः ॥ ६ ॥
जानुजङ्घोरुकट्यंस हस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ ७ ॥
कण्डूः सन्धिषु रुग्दाहो भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक् पूर्वलक्षणम् ॥ ८ ॥
वाताधिकेऽधिकं तत्र शूलं स्फुरणं तोदनम् ।
शोथस्य रूक्षकृष्णत्वं श्यावतावृद्धिहानयः ॥ ९ ॥
धमन्यङ्गुलीसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १० ॥
रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ ११ ॥
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदस्तृषा ।

स्पर्शाक्षमत्वं रुग्दाहः शोफः पाको भृशोष्णता ॥ १२ ॥
कफे स्तैमित्यगुरुता सुप्तिः स्निग्धत्व शीतता ।
कण्डूर्मन्दा च रुग्द्वन्द्वे सर्वलिङ्गञ्च सङ्करे ॥ १३ ॥
उपद्रवैर्यच्च जुष्टं प्राणमांसक्षयादिभिः ।
प्राक् स्थित्वा पाणिपादेषु कृत्स्नदेहं विसर्पति ॥ १४ ॥
पादयोर्मूलमास्थाय कदाचित् हस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ १५ ॥
आजानुस्फुटितं यच्च भिन्नं प्रस्रुतञ्च यत् ।
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥ १६ ॥
अस्वप्नारोचकश्वास मांसकोथशिरोग्रहाः ।
सम्मूर्च्छा मन्दरुक् तृष्णा ज्वरमोहप्रलेपकाः ॥ १७ ॥
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः ।
अङ्गुलीवक्रतास्फोट दाहमर्मग्रहार्वुदाः ॥ १८ ॥
एतैरुपद्रवैर्युक्तो मोहेनैकेन चापि यत् ।
तमसाध्यमिति प्राहुर्वातरक्तं विचक्षणाः ॥ १९ ॥
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ।
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ॥
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ २० ॥
वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं रक्षयेद्वायुं यथादोषं यथा बलम् ॥ २१ ॥
उग्राङ्गदाहतोदेषु जलौकाभिर्विनिर्हरेत् ।
तुम्बीशृङ्गैश्चिमिचिमा कण्डूरुग्वेदनान्वितम् ॥ २२ ॥
प्रच्छन्नेन शिराभिर्वा देशदेशान्तरं व्रजेत् ॥ २३ ॥
अङ्गे म्लाने तु न स्राव्यं रूक्षं वातोत्तरञ्च यत् ।
गम्भीरं श्वयथुं स्तम्भं कम्पग्लानि शिरामयान् ॥ २४ ॥
ग्लानिमन्यांश्च वातोत्थान् कुर्य्याद्वायुरसृक् क्षयात् ।

खञ्जादीन् वातरोगांश्च मृत्युं वात्यवशेषितम्॥ २५॥
कुर्य्यात्तस्मात्प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत्।
विरेचयेच्च पित्तादौ स्नेहयुक्तैर्विरेचनैः॥ २६॥
रूक्षैर्वा मृदुभिः शस्तमसकृद्बस्तिकर्म च॥
न हि वस्तिसमं किञ्चित् वातरक्तचिकित्सितम्॥ २७॥
वाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः।
विरेकाऽस्थापनस्नेहपानैर्गम्भीरमाचरेत्॥ २८॥
दिवास्वप्नं श्रमं तापं व्यायामं मैथुनं तथा।
कटूष्णं गुर्वभिष्यन्दि लवणाम्लं विवर्जयेत्॥ २९॥
पुराणयवगोधूमा नीवाराः शालिषष्टिकाः।
भोजनार्थे रसार्थे तु विष्किराः प्रतुदा हिताः॥ ३०॥
आढ़क्य चणका मुद्गा मसूराश्च मकुष्ठकाः।
सूपार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते॥ ३१॥
सुनिषण्णकवेत्राग्रं काकमाची शतावरी।
वास्तूकोपोदकीशाकं शाकं सौवर्चलं तथा॥ ३२॥
घृतमांसरसैर्भृष्टं शाकसात्म्याय दापयेत्॥ ३३॥
सर्पिस्तैलवसामज्जापानाभ्यञ्जनवस्तिभिः।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत्॥ ३४॥
हितं गोधूमचूर्णैर्वा छागक्षीरघृतप्लुतैः।
लेपाः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः॥ ३५॥
क्षीरपिष्टातसीलेपाद्वर्द्धमानफलेन वा॥ ३६॥
उभे शताह्वे मधुकं बला च प्रियालकञ्चापि कशेरुकञ्च।
घृतं विदारी च सितोत्पलञ्च युञ्ज्यात्प्रदेहं पवने सरक्ते॥३७॥
रास्नागुडूचीमधुकं पले द्वे सजीरकं सार्षपकं पयश्च।
घृतं सुसिद्धं मधुशेषयुक्तं रक्तानिलार्त्तं प्रणुदेत् प्रदेहम्॥ ३८॥
वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत्कषायम्।

क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥ ३९ ॥
त्रिवृद्विदारीक्षुरकः क्वाथो वातास्रनाशनः ॥ ४० ॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ।
प्रभूतकालमासेवी मुच्यते वातशोणितात् ॥ ४१ ॥
अमृतानागरधान्यक कर्षत्रितयेन पाचनं सिद्धम् ।
जयति सरक्तवातं सामं कुष्ठान्यशेषेण ॥ ४२ ॥
वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुमिश्रितः ।
समीरणसमायुक्तं शोणितं सम्प्रणाशयेत् ॥ ४३ ॥
तिस्रोऽथवा पञ्चगुडेन पथ्या जग्ध्वा पिवेच्छिन्नरुहाकषायम् ।
तद्वातरक्तं शमयत्युदीर्णमाजानुभिन्नं च्युतमप्यवश्यम् ॥ ४४ ॥
गुग्गुल्वमृतवल्लीभिर्द्राक्षालुङ्गरसेन वा ।
त्रिफलाया रसैर्युक्ता गुटिका कोलसम्मिता ॥ ४५ ॥
भक्षयेन्मधुनाऽलोड्य शृणु कुर्वन्ति यत् फलम् ।
पादस्फोटं महाघोरं स्फोटं सर्वाङ्गजञ्च यत् ॥
तत्सर्वं नाशयत्याशु ह्यसाध्यं वातशोणितम् ॥ ४६ ॥

इति गुग्गुलुवटिका ।

माहिषं नवनीतन्तु फलिनीपरिमिश्रितम् ।
गोमूत्रमिश्रितं कृत्वा क्षीरेण लवणेन च ॥ ४७ ॥
तदेकत्र समालोड्य वह्निना तापयेच्छनैः ।
गात्रमुद्वर्त्तयेत्तेन देहस्फुटनशान्तये ॥ ४८ ॥
घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफञ्च ।
वातास्रमुग्रं रुवुतैलमिश्रा शुण्ठ्यामवातं शमयेद् गुडूची ॥४९॥
सिंहास्य पञ्चमूल छिन्नरुहैरण्डगोक्षुरक्काथः ।
एरण्डतैलरामठ सैन्धवचूर्णान्वितः पीतः ॥ ५० ॥
शमयति वातरक्तं तथामवातं कटीशूलम् ।
मूत्रपुरीषविबन्ध व्रध्नविकारं सुदुर्वारम् ॥ ५१ ॥

गन्धर्वहस्तवृषगोक्षुरकामृतानां
मूलं बलेक्षुरकयोश्च पचेत्तु धीमान्।
वातासृगाशु विनिहन्ति चिरप्ररूढ़-
माजानुगस्फुटितमूर्ध्निगतं तु धीमान्॥ ५२॥
पिप्पलीवर्धमानं वा सेव्या पथ्या गुड़ेन वा।
कोकिलाक्षामृता क्वाथे पिबेत् कृष्णां यथाबलम्॥ ५३॥
मधुकाद्दिगुणं तैलं तैलादाजं पयो भवेत्।
तद्यथाग्निबलं पेयं वातरक्तरुजापहम्॥ ५४॥
त्रिफला निम्बमञ्जिष्ठा वचा कटुकरोहिणी।
वत्सादनी दारुनिशा कषायं नवकार्षिकम्॥ ५५॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम्।
कुष्ठं कपालिकाकुष्ठं पानादेवापकर्षति॥ ५६॥
पञ्चरक्तिकमाषेण कार्य्योऽयं नवकार्षिकः॥

इति नवकार्षिकक्वाथः।

कर्षादौ तु पलं यावद्दद्याद्दशगुणं जलम्।
ततस्तु कुड़वं यावत्तोयमष्टगुणं भवेत्॥ ५७॥
विरेचनैर्घृतक्षीरपानैः सेकैः सबस्तिभिः।
शीतैर्निर्वापणैश्चापि रक्तपित्तोत्तरं जयेत्॥ ५८॥
रक्तोत्तरं क्षीरघृतमधुकोशीरवारिभिः।
लेपनं शाल्मलीकल्कमाविक्षीरेण संयुतम्॥ ५९॥
सेचनं वा प्रकर्त्तव्यमाविक्षीरैः क्षणं क्षणम्।
सहस्रशतधौतेन घृतेन रुधिरोत्तरे॥ ६०॥
लेपनं शुष्कशीतेन घृतसर्जरसेन वा।
सरागे सरुजे दाहे रक्तं विस्राव्य लेपयेत्॥ ६१॥
तिलाः प्रियालं मधुकं विषं मूलञ्च वेतसाम्।

सघृत: पयसा पिष्ट: प्रलेपो रागदाहनुत् ॥ ५२ ॥
पित्तोत्तरे तु काश्मर्य्यद्राक्षारग्वधचन्दनैः ।
मधुकक्षीरकाकोली युक्तैः क्वाथं सुशीतलम् ॥
शर्करामधुसंयुक्तं वातरक्ते पिबेन्नर: ॥ ६३ ॥
पटोलत्रिफलाभीरु गुडूची कटुरोहिणी ।
क्वाथ: पित्ताधिके शस्त: शर्करामधुसंयुत: ॥ ६४ ॥
वमनं मृदुनात्यर्थं स्नेहसेकैर्विलङ्घनम् ।
कोष्णाः सेकाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥ ६५ ॥
तैलमूत्रसुरायुक्तैः परिषेक: सदा हिता ।
गौरसर्षपकल्केन प्रदेहो वातरक्तहा ॥ ६६ ॥
शिग्रुवरुणस्य कल्को धान्याम्लेनानिलार्त्तिजिल्लेपात् ।
भवति नवेति च कल्को न विधेय: सिद्धियोगेऽस्मिन् ॥ ६७ ॥
कल्क: श्लेष्मोत्तरे लेप्यो वाजिगन्धातिलोद्भव: ।
लेप: सर्षपनिम्बार्क हिंस्राक्षारतिलैर्हित: ॥ ६८ ॥
गृहधूमवचाकुष्ठ शताह्वा रजनीद्वयम् ।
प्रलेप: शूलनुद्वातरक्ते चाथ कफोत्तरे ॥ ६९ ॥
अमृतं कटुकायष्टी शुण्ठीकल्कं समाक्षिकम् ।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ ७० ॥
धात्रीहरिद्रामुस्तानां कषायं वा समाक्षिकम् ।
संसर्गे सन्निपाते च क्रियामन्यविमिश्रिताम् ॥ ७१ ॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम् ।
काकोलीं क्षीरकाकोलीं रास्नां गृहीत्व पेषयेत् ॥ ७२ ॥
घृतं चतुर्गुणं क्षीरं तैः सिद्धं वातरक्तनुत् ।
हृत्पाण्डुरोगवीसर्पकामला दाहनाशनम् ॥ ७३ ॥

इति बलाघृतम् ।

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे ।

क्षीरतुल्यं घृतं सिद्धं वातशोणितनाशनम् ॥ ७४ ॥

इति शतावरीघृतम् ।

गुडूचीक्काथकल्काभ्यां सपयस्कं घृतं शृतम् ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥ ७५ ॥

इति गुडूचीघृतम् ।

अमृतायाः कषायेण कल्केन च महौषधम् ।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ॥ ७६ ॥
आमवाताढ्यवातादीन् क्रिमिकुष्ठव्रणानपि ।
अर्शांसि गुल्मांश्च तथा नाशयेदाशु योजितम् ॥ ७७ ॥

इति अमृतादिघृतम् ।

अमृतास्वरसविपक्वं सर्पिस्तत्कल्कसाधितं पीतम् ।
अपहरति वातरक्तमुत्तानं चावगाढ़ञ्च ॥ ७८ ॥

इति द्वितीयममृतादिघृतम् ।

अमृतायाः पलशतं जलद्रोणेऽभिशोषितम् ।
घृतप्रस्थं विपक्तव्यं कल्कानष्टौ पलानि च ॥ ७९ ॥
चतुर्गुणेन पयसा वातासृक्कुष्ठनाशनम् ।
कामलापाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ८० ॥

इति गुडूचीघृतम् ।

अमृतामधुकं द्राक्षा त्रिफलानागरं बला ।
वासारग्वधवृश्चीर देवदारुत्रिकण्टकम् ॥ ८१ ॥
कटुकासवरीकृष्णाकाश्मर्यस्य फलानि च ।
रास्नाक्षुरकगन्धर्ववृद्धदारुघनोत्पलैः ॥ ८२ ॥
कल्कैरेभिः समैः कृत्वा सर्पिः प्रस्थं विपाचयेत् ।
धात्रीरससमो देयो वारित्रिगुणसंयुतः ॥ ८३ ॥
सम्यक् सिद्धन्तु विज्ञातं भोज्ये पाने च शस्यते ।
बहुदोषोत्थितं वातं रक्तेन सह मूर्च्छितम् ॥ ८४ ॥

उत्तानं चापि गम्भीरं त्रिकजङ्घोरुजानुजम्।
क्रोष्टुशीर्षे महाशूले आमवाते सुदारुणे॥ ८५॥
दाहरोगोपसृष्टस्य वेदनां चातिदुस्तराम्।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम्॥ ८६॥
एतान् सर्वान्निहन्त्याशु वातपित्तकफोत्थितान्।
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम्॥ ८७॥
अश्विभ्यां निर्मितं श्रेष्ठं घृतमेतदनुत्तमम्॥

इति अमृताद्यं घृतम्।

अमृतायाः शतं प्राप्य जलद्रोणे विपाचयेत्।
चतुर्भागावशिष्टन्तु घृतप्रस्थं विपाचयेत्॥ ८८॥
क्षीरं चतुर्गुणं तत्र दापयेन्मतिमान् भिषक्।
कल्कं चात्र प्रवक्ष्यामि यथावदनुपूर्वशः॥ ८९॥
काकोलीक्षीरकाकोली जीवकर्षभकौ च यत्।
शतावरीवयस्था च मधुकं नीलमुत्पलम्॥ ९०॥
अश्वगन्धा च मूलानि स्थिरा कटुकरोहिणी।
ऋद्धिर्वृद्धिस्तथा मेदे श्वदंष्ट्रा बृहतीद्वयम्॥ ९१॥
गुडूचीफलिनीरास्ना वासकं चापि संहरेत्।
तदेकत्र समैर्भागैः पाचयेन्मृदुनाग्निना॥ ९२॥
पानाभ्यञ्जननस्येषु परिषेके च दापयेत्।
वातरक्तं सशोथाढ्यं सदाहं क्रोष्टुशीर्षकम्॥ ९३॥
खञ्जोरुस्तम्भवातञ्च रक्तपित्तं सुदारुणम्।
वातकृच्छ्रं बहुविधं गृध्रसीं वातकण्टकम्॥
नाशयेद्योजितं सर्पिर्धन्वन्तरिवचो यथा॥ ९४॥

इति महागुडूचीघृतम्।

शारिवासर्जमञ्जिष्ठा यष्टीसिक्थैः पयोन्वितैः।
तैलं पक्वा प्रयोक्तव्यं पिण्डाख्यं वातरक्तनुत्॥ ९५॥

शारिवासर्जयष्ट्याह्व मधूच्छिष्टैः पयोन्वितैः ।
सिद्धमैरण्डतैलं वा वातरक्तरुजापहम् ॥ ९६ ॥
अपूतमथितस्यास्य पिण्डतैलस्य योगतः ॥ ९७ ॥

इति पिण्डतैलम् ।

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम् ।
चीरद्रोणन्तु ताभ्याञ्च पचेत्तैलाढ़कं शनैः ॥ ९८ ॥
कल्कैर्मधुकमञ्जिष्ठा जीवनीयगणैस्तथा ।
कुष्ठैलागुरुमृद्वीका मांसीव्याघ्रनखं नखी ।
हरेणुश्चावणीव्योषं शताह्वा शृङ्गिशारिवा ॥ ९९ ॥
त्वक्पत्रा गुरुविक्रान्ता स्थिरा तामलकी तथा ।
नतं केसरह्रीवेरं पद्मकोत्पलचन्दनम् ॥ १०० ॥
सिद्धं कर्षसमैर्भागैः पानाभ्यङ्गानुवासनैः ।
सेव्यं वातास्रजान् हन्ति सर्वधात्वन्तराश्रितान् ॥१०१॥
धन्यं पुंसवने स्त्रीणां गर्भदं वातपित्तनुत् ।
खेदकण्डुरुजायास शिरःकम्पामयार्दितान् ॥ १०२ ॥
हन्याद् व्रणक्षतान् दोषान् गुडूचीतैलमुत्तमम् ॥

इति गुडूचीतैलम् ।

गुडूचीमधुकं ह्रस्वपञ्चमूली पुनर्नवा ।
रास्नामैरण्डमूलञ्च जीवनीयानि लाभतः ॥ १०३ ॥
पलानां शतकैर्भागैर्बलापञ्चशतं भवेत् ।
कोलान्विल्वयवान्माषान् कुलत्थांश्चाढ़कोन्मितान् ॥१०४॥
काश्मर्याणाञ्च शुष्काणां षोड़शद्रोणवारिणि ।
साधयेज्जर्जरं पूतं चतुर्द्रोणञ्च शेषयेत् ॥ १०५ ॥
तैलद्रोणं पचेत्तेन दत्त्वा पञ्चगुणं पयः ।
पिष्ट्वा त्रिपलिकांश्चैव चन्दनोशीरकेशरम् ॥ १०६ ॥
पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिका ।

मञ्जिष्ठार्द्धपलञ्चैव तत्सिद्धं सर्वयौगिकम् ॥ १०७ ॥
वातरक्ते क्षते क्षीणे भारार्त्ते क्षीणरेतसि ।
वेपथौ छिन्नभग्नानां शस्तमेकाङ्गरोगिणाम् ॥ १०८ ॥
योनिदोषमपस्मारमुन्मादं विषमज्वरम् ।
हन्यात् पुंसवनञ्चैव तैलाग्र्यममृताह्वयम् ॥ १०९ ॥

इति अमृताह्वयं तैलम् ।

शुद्धां पचेन्नागबलां तुलान्तु जलार्मणे पादकषायसिद्धम् ।
पाच्यन्तु तैलाढ़कमत्र देयमजापयस्तैलविमिश्रितन्तु ॥ ११० ॥
नतं सयष्टीमधुकं सकल्कं दत्त्वा पृथक् पञ्चपलं विपक्वम् ।
तद्वातरक्तं शमयत्युदीर्णं वस्तिप्रदानेन हि सप्तरात्रात् ॥१११॥
दशाहयोगेन करोत्यरोगं पीतञ्च तैलोत्तममश्विजुष्टम् ॥

इति नागबलातैलम् ।

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेत्तेन वातासृग्वातपित्तनुत् ॥ ११२ ॥
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्न मेतद्वातविकारनुत् ॥ ११३ ॥

इति दशपाकबलातैलम् ।

बलाकषायकल्काभ्यां तैलं क्षीरं समं पचेत् ।
सहस्रशतपाके वा वातासृग्वातपित्तनुत् ॥ ११४ ॥
रसायनमिदं श्रेष्ठमिन्द्रियाणां प्रबोधनम् ।
जीवनं वृंहणं स्वर्य्यं शुक्रासृग्दोषनाशनम् ॥ ११५ ॥
बलातैलसहस्रेण तथा पाकसहस्रकम् ॥ ११६ ॥

पुनर्नवामूलशतं विशुद्धं रुवूकमूलञ्च तथा प्रगृह्य ।
दत्त्वा पलं षोड़शकञ्च शुण्ठ्याः सङ्कुट्य सम्यग्विपचेद्घटेऽपाम्११७
पलानि चाष्टावथ कौशिकस्य तेनाष्टशेषेण पुनः पचेत्तु ।
एरण्डतैलं कुड़वं च दद्यात्तथा त्रिवृच्चूर्णपलानि पञ्च ॥११८॥

निकुम्भचूर्णस्य पलं गुडूच्याः पलद्वयं चार्धपलं पलं वा।
पलत्रयं त्र्यूषणचित्रकाणि सिन्धूत्थभल्लातविड़ङ्गकानि॥११९॥
कर्षं तथा माक्षिकधातुचूर्णं पुनर्नवायाः पलमेव चूर्णम्।
चूर्णानि दत्त्वा ह्यवतार्य्य शीते खादेन्नरः कर्षसमप्रमाणम्॥१२०
वातास्रजं वृद्धिगदञ्च सर्वं जयत्यवश्यं त्वथ गृध्रसीञ्च।
जङ्घोरुपृष्ठत्रिकवस्तिजञ्च तथामवातं प्रबलं जयेत्तु॥ १२१ ॥

इति पुनर्नवागुग्गुलुः।

चत्वारो माषका हीने मध्यमेऽष्टौ च माषकाः।
श्रेष्ठे द्वादशकाः प्रोक्ताः वैद्यैर्विज्ञायते त्रिधा॥
संसरत्वाद्गुरुत्वाद्वा गुग्गुलोः करणक्रमः॥ १२२ ॥
प्रस्थमेकं गुडूच्याश्च ह्यर्धप्रस्थन्तु गुग्गुलोः।
प्रत्येकं त्रिफलायास्तु तत्प्रमाणं विनिर्दिशेत्॥ १२३ ॥
सर्वमेकत्र सङ्कुट्य क्वाथयेत्त्वर्मणेऽम्भसि।
पादशेषं परिस्राव्य कषायं ग्राहयेद्भिषक्॥ १२४ ॥
पुनः पचेत्कषायन्तु यावत्सान्द्रत्वमागतम्।
दन्तीव्योषविड़ङ्गानि गुड़ूचीत्रिफलात्वचः॥ १२५ ॥
ततश्चार्द्धपलं चूर्णं गृह्णीयाद्वा प्रति प्रति।
कर्षन्तु त्रिवृतायाश्च सर्वमेकत्र चूर्णयेत्॥ १२६ ॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद्बुधः।
ततश्चाग्निबलं ज्ञात्वा खादेत्कर्षप्रमाणतः॥ १२७ ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम्।
दुष्टव्रणं प्रमेहांश्च सामवातं भगन्दरम्॥ १२८ ॥
आढ्यवातञ्च श्वयथुं सर्वानेतान् व्यपोहति।
अश्विभ्यां निर्मितः पूर्वममृताख्यो हि गुग्गुलुः॥ १२९ ॥

इति अमृतागुग्गुलुः।

द्विप्रस्थममृतायाश्च प्रस्थमेकन्तु गुग्गुलोः।

प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥ १३० ॥
सर्वमेकत्र सङ्कुट्य साधयेत्त्वर्मणेऽम्भसि ।
पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतम् ॥ १३१ ॥
दन्ती चित्रकमूलानां कणा विश्वाफलत्रिकम् ।
गुडचीत्वग्विड़ङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥ १३२ ॥
त्रिवृता कर्षमेकन्तु सर्वमेकत्र चूर्णयेत् ।
सिद्धे चोष्णे क्षिपेत्तत्र त्वमृतां गुग्गुलुं परम् ॥ १३३ ॥
ततो यथाबलं खादेदम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥ १३४ ॥
कुष्ठव्रणं प्रमेहांश्च सामवातं भगन्दरम् ।
नाड्याढ्यवातं श्वयथुं हन्यात्सर्वामयांस्तथा ॥ १३५ ॥
अश्विभ्यां निर्मितो ह्येष ह्यमृताद्यस्तु गुग्गुलुः ॥

इति अमृताद्यो गुग्गुलुः ।

चित्रकं त्रिफलानिम्ब पटोलमधुयष्टिका ।
वराङ्गं केसरञ्चैव जीवन्ती चाम्लवेतसम् ॥ १३६ ॥
रामसेनकदार्व्येला मुस्ता पर्पटकं तथा ।
तुत्थकं कटुका भार्गी चव्यं पद्मकदीप्यकौ ॥ १३७ ॥
पिप्पलीमरिचं दन्ती शटी शुण्ठी सपुष्करम् ।
विड़ङ्गं पिप्पलीमूलं जीरकं देवदारु च ॥ १३८ ॥
पद्मकं कटुकं रास्ना दुरालभामृता त्रिवृत् ।
लतातुरुष्कतालीशौ वचाम्ललवणत्रयम् ॥ १३९ ॥
धान्यकं वाजमोदा च कारवी धातुमाक्षिका ।
जातीफलं तुगाक्षीरी वाजिगन्धा च दाड़िमम् ॥ १४० ॥
कङ्कोलकमुशीरञ्च द्विक्षारामलकं तथा ।
एतानि पलमात्राणि सूक्ष्मचूर्णानि कारयेत् ॥ १४१ ॥
गिरिजस्य पलान्यष्टौ द्विपलञ्चैव गुग्गुलोः ।

प्रस्थमेकं सितायाश्च घृतस्य कुडवं तथा ॥ १४२ ॥
गिरिजेन समं लोहं प्रस्थार्धं माक्षिकस्य च।
सर्वमेकत्र सम्मिश्र्य स्निग्धे भाण्डे निधापयेत् ॥ १४३ ॥
वातव्याधिमूरुस्तम्भमर्दितं गृध्रसीं तथा।
विद्रधिं श्लीपदं गुल्मं पाण्डुरोगं हलीकमम् ॥ १४४ ॥
चतचयमपस्मारं मन्दवह्निञ्च नाशयेत्।
अरोचकं पार्श्वशूलमुदरञ्च भगन्दरम् ॥ १४५ ॥
हृद्रोगशूलनुत्कम्पविषमज्वरनाशनम्।
वर्षोपयोगात् कुरुते बलीपलितनाशनम् ॥ ॥ १४६ ॥
उरः चतञ्च यान्रोगान् मुखरोगांश्च दारुणान्।
नाशयेद् गुटिकाञ्चापि चूर्णं पाणितलोन्मितम् ॥ १४७ ॥
विविधान्नानि भुञ्जीत यथेष्टञ्च यथासुखम्।
रसैर्मांसैश्च यूषैश्च चीरैर्द्राचां शुभां पिबेत् ॥ १४८ ॥
मेधां सञ्जनयेद्दीप्तिं जीवेद्वर्षशतत्रयम्।
बन्ध्यानां पुत्रदा श्रेष्ठा शुक्रवृद्धिकरा परा ॥ १४९ ॥
गुटिका भास्करी नाम्ना प्रोक्ता देवेन शम्भुना।
प्रमेहं रक्तपित्तञ्च सामवातमहाचयम् ॥ १५० ॥
नाड़ीव्रणांश्च घोरांश्च ह्यपचीञ्च प्रणाशयेत्।
श्वयथुञ्च शिरोरोगं कामलाञ्च नियच्छति ॥ १५१ ॥
धात्विन्द्रियबलचीणो हतभो हतपौरुषः।
भवेदनेन युक्तो ना बलधातुपराक्रमैः ॥
दृष्टिपुष्ट्या स युक्तश्च निर्विकारो निरामयः ॥ १५२ ॥
अग्निदीप्तियुतो हृष्टो दीर्घायुः पुरुषो भवेत्।
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥
कफरोगाश्च ये केचिद् द्वन्द्वजं सन्निपातजम् ॥ १५३ ॥
ते सर्वे प्रशमं यान्ति भास्करेण तमो यथा।

रोगविद्राविणी प्रोक्ता गुटी सूर्य्यप्रभा मता ॥ १५४ ॥

इति सूर्य्यप्रभागुटिका ।

वरमहिषलोचनोदर सन्निभवर्णस्य गुग्गुलोः प्रस्थम् ।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम् ॥ १५५ ॥
द्वात्रिंशच्छिन्नरुहा पलानि देयानि यत्नेन ।
विपचेदप्रमत्तो दर्व्या सङ्घट्टयन्मुहुर्यावत् ॥ १५६ ॥
अर्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात् ।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पादयेदयःपात्रे ॥ १५७ ॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये ।
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड़क्षपरिमाणम् ॥१५८॥
कृमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः ।
पलमेकन्तु गुडूच्या दत्त्वा सञ्चूर्ण्य यत्नेन ॥ १५९ ॥
उपयुज्य चानुपानं यूषं क्षीरं सुगन्धिसलिलञ्च ।
इच्छाहारविहारी भैषज्यमुपयुज्य सर्वकालमिदम् ॥१६०॥
तनुरोधि वातशोणित मेकजमथ द्वन्द्वजं चिरोत्थितञ्च ।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजीर्णं वा जानुजं वापि ॥१६१॥
व्रणकासकुष्ठगुल्म श्वयथूदरपाण्डुमेहांश्च ।
मन्दाग्निञ्च विबद्धं प्रमेहपीड़कांश्च नाशयत्याशु ॥ १६२ ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ॥
अभिभूय जरादोषं करोति कैशोरकं रूपम् ॥ १६३ ॥
प्रत्येकं त्रिफलाप्रस्थं जलं तत्र षड़ाढ़कम् ।
गुड़वद् गुग्गुलोः पाकः सन्धेयस्तु विशेषतः ॥ १६४ ॥

इति कैशोरगुग्गुलुः ।

अष्टौ पलान्यत्र पलङ्कषायाः प्रस्थं पृथक् शुद्धफलत्रयस्य ।
दत्त्वा पचेत् द्रोणयुगे जलस्य पादावशेषे पुनरेव वैद्यः ॥१६५॥

दन्ती त्रिवृत् त्र्यूषण वानरीणां
विड़ङ्गमुस्ता त्रिफलामृतानाम्।
कन्दोग्रगन्धालुकमाणकानां
सपारदानाञ्च सगन्धकानाम्॥ १६६॥
पलार्द्धमानप्रमितं सचूर्णं
दद्याद्विपक्वे पुनरेव तत्र।
फलानि संचूर्ण्य च कातकानि
सहस्रसंख्याकलितानि पश्चात्॥ १६७॥
खादेत्तु माषद्वितयं प्रतप्त
तोयादिकं देयमतोऽनुपाने।
आमानिलं सन्धिगतं सशूलं
शिरोगतं जानुकटिस्थितञ्च॥ १६८॥
शोषातिवृत्तिं विषमज्वरार्त्तिं
प्रमेहकुष्ठानि भगन्दरञ्च।
हन्यान्नराणामिति सिंहनादो
मेदो महच्छ्लेष्मगदान् पुरोऽयम्॥ १६९॥

दाहोऽत्यन्तप्रवृत्तिर्वा विकारोऽन्योऽपि चेद्भवेत्।
तत्कृतस्तु तदा तत्र तक्रभक्तं हितं पिबेत्॥
उद्वर्त्तनं शीतजलस्नानञ्च शयनं तथा।
विरेकातिशयं कुर्य्यात् सिंहनादे यतः सुधीः॥ १७०॥
ज्ञात्वा बलं शरीरे तु दद्यादेवं न वा भिषक्।
तोयारणालगोचीरैः क्रमात्पक्वं विशुद्ध्यति॥
फलं कतकसंज्ञन्तु कृत्वा चूर्णं ततः क्षिपेत्॥ १७१॥

इति सिंहनादगुग्गुलुः।

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम्।
सौगन्धिकपलञ्चैकं कौशिकस्य पलत्रयम्॥ १७२॥

कुडवं चित्रतैलस्य सर्वमादाय यत्नतः।
पाचयेत्पाकविद्वैद्यः पात्रे लोहमये दृढे॥ १७३॥
हन्ति वातं तथा पित्तं श्लेष्मिणं खञ्जपङ्गुताम्।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा॥ १७४॥
कुष्ठानि वातरक्तञ्च गुल्मशूलोदराणि च।
आमवातं जयेदेतदपि वैद्यविवर्जितम्॥ १७५॥
मासादस्योपयोगेन जरापलितनाशनम्।
सर्पिस्तैलरसोपेत मश्नीयाच्छालियष्टिकम्॥ १७६॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा।
वह्नेर्दीप्तिकरं पुंसां भाषितं दण्डपाणिना॥ १७७॥
अत्राहुस्त्रिफलाक्वाथं पृथक् त्रिपलसम्मितम्।
किञ्चिन्निर्य्याति चैरण्डस्नेहपाकेऽधिके खरे॥ १७८॥

इति सिंहनादगुग्गुलुः।

धान्यतुम्बरुशुण्ठीनां मांसकूष्माण्डमाषयोः।
गुडूच्या गुग्गुलोश्चैव प्रस्थं षोड़शभिः पलैः॥ १७९॥

अथ चन्द्रप्रभागुटिकामाह।

कृमिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बाः।
मागधिमूलं मुस्तं शटीवचाधातुमाक्षिकञ्चैव॥ १८०॥
लवणक्षारनिशायुगकुस्तुम्बुरुगजकणातिविषाः॥ १८१॥
कर्षांशिकान्येव समानि कुर्य्यात्पलाष्टकं चाश्मजतु प्रदद्यात्।
निष्पत्रशुद्धस्य पुरस्य धीमान् पलद्वयं लोहरजस्तथैव॥ १८२॥
सिताचतुष्कं पलमत्र वा स्यात् निकुम्भकुम्भं त्रिसुगन्धियुक्तम्।
पृथक् पलं चूर्णमथावपेच्च चन्द्रप्रभेयं गुटिका विधेया॥१८३॥
ज्वरातिसारग्रहणीविकारांश्चार्शांसि निर्नाशयते षडेव।
भगन्दरान् कामलपाण्डुरोगान् नष्टस्य वह्नेः कुरुते प्रदीप्तिम्१८४

हन्त्यामयान् पित्तकफानिलोत्थान् नाड़ीगते मर्मगते व्रणे च।
क्षतक्षये श्वश्वसियक्ष्मणोश्च मेहे गजाख्ये प्रदरे प्रयोज्या ॥१८५॥
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहेऽप्युदरामये च।
शम्भुं समभ्यर्च्य कृतप्रसादं प्राप्ता गुटी चन्द्रमसः प्रसादात्॥१८६
न पानभोज्ये परिहारमस्ति न शीतवातातपमैथुने वा।
भक्तस्य पूर्वं सततं प्रयोज्या तक्रानुपानाप्यथ मस्तुना वा ॥१८७॥
अजारसो जाङ्गलजो रसो वा पयोऽथवा शीतजलानुपानम्॥१८८
शुक्रदोषान्निहन्त्यष्टौ प्रमेहांश्चैव विंशतिः।
बलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते ॥ १८९ ॥

इति चन्द्रप्रभागुटिका।

काले रवितापाढ्ये चायःपात्रे शिलाजतु प्रवरम्।
त्रिफलारससंयुक्तं त्र्यहं विशुद्धं पुनः शुष्कम् ॥ १९० ॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य।
मधुकरसे गोमूत्रे त्र्यहं भावयेत् क्रमशः ॥ १९१ ॥
एकाहं क्षीरेण तु ततःपरं भावयेत्पुनः शुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथेनैषां यथा लाभम् ॥ १९२ ॥
काकोल्यौ द्वे मेदे विदारियुग्मं शतावरी द्राक्षा।
वृद्धियुगर्षभवीरामुण्डितकाजीवांशुमत्यश्च ॥ १९३ ॥
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्ग चव्याश्च।
कटुकाशृङ्गीपाठा चैतानि पलांशकानि कार्य्याणि ॥१९४॥
अष्टगुणसाधितानां रसेन पादांशकेन भाव्यं स्यात्।
गिरिजस्यैवं भावितः शुद्धस्य पलानि दशषड् वा ॥ १९५ ॥
द्विपलञ्च विश्वधात्रीमागधिका कर्कटाख्यमरिचानाम्।
तुगाक्षीरीत्वङ्नागदलैलानां मन्त्रयित्वा तु ॥ १९६ ॥
गिरिजस्य षोड़शपलैर्गुटिकाः कार्य्यास्ततोऽक्षसमाः ॥१९७॥
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थातव्याः।

तासामेका काले पेया भक्ष्यापि वा सततम् ॥ १९८ ॥
क्षीररसदाड़िमरसाः सुरासवञ्च मधुकशिशिरतोयानि ।
आलोक्य गुणं तासामनुपाने वा प्रशस्यन्ते ॥ १९९ ॥
सुजीर्णलघ्वन्नपयोजाङ्गलनिर्यूहयूषभोजी स्यात् ।
सप्ताहं यावदतःपरं भवेत्सर्वसामान्यः ॥ २०० ॥
भुक्त्वापि भक्षतेऽग्रं यदृच्छया नोद्वहेद्भयं किञ्चित् ।
निरुपद्रवा प्रयुक्ता सुकुमारैः कामिभिश्चैव ॥ २०१ ॥
संवत्सरं प्रयुक्ता हन्त्येषा वातशोणित् प्रबलम् ।
बहुवार्षिकमपि गाढ़ं यक्ष्माणं चाढ्यवातञ्च ॥ २०२ ॥
ज्वरयोनिशुक्रदोषप्लीहार्शः पाण्डुरोगहृद्ग्रहणी ।
अश्मवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥ २०३ ॥
जठरं श्वित्रं कुष्ठं जाड्यं क्लैव्यं मदक्षयं शोषम् ।
उन्मादमपस्मारौ वदनाक्षिशिरोगदान् सर्वान् ॥ २०४ ॥
आनाहमतीसारं सासृग्दरकामलां प्रमेहांश्च ।
यकृदर्बुदानि विद्रधिं भगन्दरं रक्तपित्तञ्च २०५ ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीहगदञ्च निहन्ति ।
दंष्ट्राविषमपि चोग्रं गराणि चैषां बहुप्रकाराणि ॥२०६॥
मन्त्रौषधप्रयोगानरिप्रयुक्तांस्तान्त्रिकास्तथा बाधाः ।
पाप्मा लक्ष्मीं चेयं शमयति गुटिका शिवा नाम्नी ॥२०७॥
बल्या वृष्या धन्या कान्तिवर्णयशः श्रीकरी चेयम् ।
दद्यात् नृपसदृशतां जयति वादं सुखस्था सर्वम् ॥ २०८ ॥
प्रकृतिमेधासुस्मृति बुद्धिबलयुक्तस्तथा दृढ़शरीरः ।
पुष्ट्योजोवर्णेन्द्रिय तेजोबलसम्पदोपेतः ॥ २०९ ॥
वलिपलितरोगरहितो जीवेद्वै शरदां शतं स पुरुषः ।
संवत्सरप्रयोगात् द्वाभ्यां तु शतानि चत्वारि ॥ २१० ॥
सर्वामयजिद्विहितं सुनिभिर्भक्त्या रसायनं रहस्यम् ।

शिवगुटिकेति रसायनमुक्तं गिरिशेन गणपतये ॥ २११ ॥

इति शिवसिद्धान्तात् वृहच्छिवगुटिका।

तेषु यत्कृष्णमलघु स्निग्धं निःशर्करञ्च यत्।
गोमूत्रगन्धि यच्चापि तत्प्रधानं शिलाजतु ॥ २१२ ॥
शिलाजतुसमं द्रव्यं क्वाथ्यमष्टगुणे जले।
पादावशिष्टं तत्पूतं तस्मिन् कोष्णे विनिक्षिपेत् ॥ २१३ ॥
समगिरिजमष्टगुणिते निःक्वाथ्य तन्मानौषधं तोये।
तन्निर्य्युहेऽष्टांशे भूयोष्णे प्रक्षिपेद्गिरिजम् ॥ २१४ ॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः।
स्वैः स्वैरेव क्वाथैर्भाव्यं वारान् भवेत्सप्त ॥ २१५ ॥

इति शिलाजतुशुद्धिप्रकारः।

शतावरी नागबला वृद्धदारकसुच्चटा।
पुनर्नवामृताकृष्णा वाजिगन्धात्रिकण्टकम् ॥ २१६ ॥
पृथग् दशपलान्येषां सूक्ष्मचूर्णानि कारयेत्।
तदर्द्धशर्करायुक्तं चूर्णं सम्मर्दयेद्बुधः ॥ २१७ ॥
स्थापयेत् सुदृढ़े भाण्डे मध्वर्द्धाढ़कसंयुतम्।
घृतप्रस्थेन चालोड्य त्रिसुगन्धिपलेन च ॥ २१८ ॥
खादेद्यथेष्टचेष्टान्नो यथा वह्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम् ॥ २१९ ॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
हत्वा करोति पुरुषं बलीपलितवर्जितम् ॥ २२० ॥
योगसारामृतो नाम्ना लक्ष्मीकीर्त्तिविवर्द्धनः।

इति योगसारामृतः।

व्यायामं मैथुनं कोपमुष्णाम्बु लवणं रसम्।
दिवास्वप्नमभिस्यन्दि गुरुधान्यं विवर्जयेत् ॥ २२१ ॥

इति वङ्गसेनसङ्कलितः वातरक्तनिदानचिकित्साधिकारः समाप्तः।

## अथ ऊरुस्तम्भनिदानमाह ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः ॥ १ ॥
सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ २ ॥
सक्थ्यस्थीनि प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन च ।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यं तन्द्राच्छर्द्यरुचिज्वरैः ॥ ४ ॥
संयुक्तौ पादसदन कृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथाऽपरे ॥ ५ ॥
प्राग्रूपं तस्य निद्रातिध्यानस्तिमितता ज्वरः ।
लोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ ६ ॥
वातशङ्किभिरज्ञानात्तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जङ्घोरुग्लानिरत्यर्थं शश्वत् वा दाहवेदने ।
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने पीड़ने गत्यां चालने वाप्यनीश्वरः ।
अन्यनेयौ हि सम्भग्ना वूरू पादौ च मन्यते ॥ ९ ॥
यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥ १० ॥

### अथ चिकित्सामाह ।

स्नेहासृक् स्राववमनं वस्तिकर्म विरेचनम् ।
वर्जयेदाढ्यवाते तु यतस्तै स्तस्य कोपनम् ॥ ११ ॥
तस्मादत्र सदा कार्य्यं स्वेदलङ्घनरूक्षणम् ।

आममेदः कफाधिक्यात् मारुतं परिरक्षता ॥ १२ ॥
यत्स्यात्कफप्रशमनं न च मारुतकोपनम् ।
तत्सर्वं सर्वदा कार्य्यं मूरुस्तम्भस्य भिषजम् ॥ १३ ॥
सर्वो रूक्षः क्रमः कार्य्यं स्तत्रादौ कफनाशनः ।
पश्चाद्वातविनाशाय विधातव्याखिलाः क्रिया ॥ १४ ॥
भोज्याः पुराणाः श्यामाककोद्रवोद्दालशालयः ।
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥ १५ ॥
वायसीवास्तुकारिष्ट सुनिषण्णकमूलकैः ।
शाकैरलवणैर्युक्तं जीर्णशाल्योदनं भिषक् ॥ १६ ॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशार्त्तिसूचकः ।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥ १७ ॥
प्रतारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ १८ ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ।
शरीरबलमग्निञ्च कार्य्यैषा रक्षता क्रिया ॥ १९ ॥
सक्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ।
कुर्य्यादिह च मूत्राढ्यैः करञ्जसर्षपैः ॥ २० ॥
मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक् ।
पिचुमर्दस्य वा मूलैरथवा देवदारुणः ॥ २१ ॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक् ।
गाढ़मुत्सादनं कुर्य्या दूरुस्तम्भे सवेदने ॥ २२ ॥
दन्ती द्रवन्तीस्वरस सर्षपैश्चापि बुद्धिमान् ।
तर्कारीसुरसा शिग्रु वचावत्सकनिम्बकैः ॥
पत्रमूलफलैस्तोयैस्तृणमुस्तेन सेचनम् ॥ २३ ॥
भल्लातकामृताशुण्ठी दारुपथ्यापुनर्नवा ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणा ॥ २४ ॥

पिप्पली पिप्पलीमूलं भल्लातकफलानि च ।
कल्कं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते ॥ २५ ॥
रास्नाश्यामाकपथ्या मरिचमिसिशिवा वेल्लकञ्चाश्वगन्धा ।
यासच्छिन्नाजमोदासुमुखमतिविषा वृद्धदारीवृहत्यौ ।
शुण्ठीतिक्तायवानी सहचरचविकैरण्डदार्व्याजकर्णा
ऊरुस्तम्भामवातं जठररुजकटिपृष्ठशूलान्त्रवृद्धिम् ॥
वातामश्वासशोथान् कफपवनरुजं दण्डकांश्चाशु हन्यात् ॥२६॥
ग्रन्थिकारुष्करकणानां क्वाथं चौद्रान्वितं पिबेत् ।
चव्ययासाग्निदारूणां कल्कं वा मधुसंयुतम् ॥ २७ ॥
त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहन् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ २८ ॥
लिह्याद्वा त्रिफलाचूर्णं चौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वापि चूर्णं कट्वरणं नरः ॥ २९ ॥
पिप्पलीवर्द्धमानं वा माचिकेण गुड़ेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ३० ॥
शिलाजतु गुग्गुलु वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥ ३१ ॥
त्रिफलापिप्पलीमुस्तं चव्यं कटुकरोहिणी ।
लिह्याद्वा मधुना चूर्णमूरुस्तम्भार्दितो नरः ॥ ३२ ॥
घृतं सौरेश्वरं दद्यादूरुस्तम्भे कफोत्तरे ।
दद्याच्छुण्ठीघृतं वापि वैश्वानरमथापि वा ॥
सैन्धवाद्यं हितं तैलममृताख्योऽपि गुग्गुलुः ॥ ३३ ॥
कुष्ठं श्रीवेष्टकोदीच्यं सरलं दारुकेसरम् ।
अजगन्धाश्वगन्धे च तैलं तैः सार्षपं पचेत् ।
सचौद्रं मात्रया तद्वदूरुस्तम्भार्दितः पिबेत् ॥ ३४ ॥

इति कुष्ठाद्यं तैलम् ।

पलाभ्यां पिप्पलीमूला नागरादष्टकट्वरम्।
तैलप्रस्थं समं दध्ना गृध्रस्यूरुग्रहापहम्॥ ३५॥
सस्नेहं दधिसम्भूतं तक्रं कट्वरमुच्यते।
अष्टकट्वरतैलेऽत्र तैलं सार्षपमिष्यते॥
पिप्पलीमूलशुण्ठ्योश्च प्रत्येकं द्विपलं स्मृतम्॥ ३६॥

इति अष्टकट्वरं तैलम्।

इति वङ्गसेनसङ्कलितः ऊरुस्तम्भनिदानचिकित्साधिकारः समाप्तः।

---

## अथ आमवातनिदानमाह।

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामञ्चाथ कुर्वतः॥ १॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति।
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते॥ २॥
वातपित्तकफैर्भूयो दूषितो ह्यन्नजो रसः।
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः॥ ३॥
जनयत्यग्निदौर्बल्यं हृदयस्य च गौरवम्।
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः॥ ४॥
अजीर्णात् यो रसोजातः सञ्चितः संक्रमेण वै।
आमसंज्ञां स लभते शिरोगात्ररुजाकरः॥ ५॥
युगपत् कुपितावेतौ त्रिकसन्धिप्रवेशकौ।
स्तब्धञ्च कुरुते गात्रमामवातः स उच्यते॥ ६॥
अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः।
अपाकः शूनताङ्गाना मामवातस्य लक्षणम्॥ ७॥
स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत्।

हस्तपादशिरोगुल्फ त्रिकजानूरुसन्धिषु ॥ ८ ॥
करोति सरुजं शोथं यत्र दोषः प्रपद्यते ।
सदोषो रुजतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ॥ ९ ॥
जनयेत् सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ।
उत्साहहानिं वैरस्यं दाहञ्च बहुमूत्रताम् ॥ १० ॥
कुक्षौ कठिनतां शूलं तथा निद्राविपर्य्ययम् ।
तृट्छर्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्‌विबन्धनम् ॥ ११ ॥
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ १२ ॥
पित्तात्सदाहरोगञ्च सशूलं पवनानुगम् ।
स्तिमितं गुरुकण्डूकं कफजुष्टं तमादिशेत् ॥ १३ ॥
एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचरैः शोथैः स कृच्छ्रः सान्निपातिकः ॥ १४ ॥

अथ चिकित्सामाह ।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ।
विरेचनं स्नेहनञ्च वस्तयश्चाममारुते ॥ १५ ॥
रूक्षः स्वेदो विधातव्यो वालुकापुटकैस्तथा ।
उपनाहाश्च कर्त्तव्यास्तेऽपि स्नेहविवर्जिताः ॥ १६ ॥
आमवाताभिभूताय पीड़िताय पिपासया ।
पञ्चकोलेन संसिद्धं पानीयं हितमुच्यते ॥ १७ ॥
शुष्कमूलकयूषस्तु यूषं वा पाञ्चमौलिकम् ।
रसकं काञ्जिकं वापि शुण्ठीचूर्णावचूर्णितम् ॥ १८ ॥
सौवीरं स्विन्नवार्त्ताकं तथा तिक्तफलानि च ॥ १९ ॥
वास्तूकशाकं सारिष्टं शाकं पौनर्नवं हितम् ।
पटोलं गोक्षुरञ्चैव वरुणं कारवेल्लकम् ॥ २० ॥
यवान्नं कोरदूषान्नं पुराणं शालिषष्टिकम् ।
लावकानां तथा मांसं हितं तक्रेण संस्कृतम् ॥ २१ ॥

हितं च यूषं कौलुत्थं कालायश्वणकस्य च।
रुच्यं दद्याद्यथा सात्म्य मामवातहितं च यत्॥ २२॥
शतपुष्पा वचा विश्व श्वदंष्ट्रावरुणत्वचः।
पुनर्नवा सदेवाह्व शटीमुण्डितिकाः समाः॥ २३॥
प्रसारणी च तर्कारी फलञ्च मदनस्य च।
शुक्तकाञ्जिकपिष्टाश्च सुखोष्णा लेपने हिताः॥ २४॥
अहिंस्राकेमुकामूलं शिग्रुवल्मीकमृत्तिका।
मूत्रपिष्टैश्च कर्त्तव्यमुपनाहप्रलेपनम्॥ २५॥
चित्रकं कटुका पाठा कलिङ्गातिविषामृताः।
देवदारुवचामुस्ता नागरातिविषाभयाः॥
पिबेदुष्णाम्बुना नित्यमामवातस्य भेषजम्॥ २६॥
शटीशुण्ठ्यभया चोग्रा देवाह्वातिविषामृता।
कषायमामवातस्य पाचनं रूक्षभोजनम्॥ २७॥
रास्नां गुडूचीमैरण्डं देवदारुमहौषधम्।
पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे॥ २८॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
क्वथितं वारि तत्पेय मामवातनिवर्हणम्॥ २९॥
शटी विश्वौषधी कल्कं वर्षाभूक्वाथसंयुतम्।
सप्तरात्रं पिबेज्जन्तु रामवातविनाशनम्॥ ३०॥
रास्नामृतारग्वधदेवदारु त्रिकण्टकैरण्डपुनर्नवानाम्।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपार्श्वत्रिकपृष्ठशूले॥ ३१॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत्।
खादेद्वाप्यभया विश्वं गुडूचीं नागरेण वा॥ ३२॥
चित्रकेन्द्रयवापाठा कटुकातिविषाभया।
आमाशयोत्थवातघ्नं चूर्णं पेयं सुखाम्बुना॥ ३३॥
पुनर्नवामृताशुण्ठी शताह्वाह्वदारुकम्।

शटीमुण्डतिकाचूर्णमारणालेन पाययेत् ॥
आमवातं निहन्त्याशु गृध्रसीमुद्धतामपि ॥ ३४ ॥

इति पुनर्नवादि चूर्णम् ।

कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा ।
आमवातप्रशमनं कफवातहरं परम् ॥ ३५ ॥
पञ्चकोलकचूर्णन्तु पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्मञ्च कफारोचकनाशनम् ॥ ३६ ॥
आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एक एव निहन्त्याशु ह्येरण्डस्नेहकेसरी ॥ ३७ ॥
एरण्डतैलयुक्तां हरतकीं भक्षयेन्नरो विधिवत् ।
आमानिलार्त्तियुक्तो गृध्रसी वृद्ध्यर्दितो नियतम् ॥ ३८ ॥
शागग्वधस्य पत्राणि भृष्टानि कटुतैलतः ।
आमघ्नानि नरः कुर्य्यात् सायं भक्तावृतानि च ॥ ३९ ॥

अथ कटिग्रहलक्षणमाह ।

वायुः कट्याश्रितः शुद्धः सामो वा जनयेद्रुजम् ।
कटिग्रहः स एवोक्तः पङ्गुः सक्थिद्वयाश्रितः ॥ ४० ॥

तस्य चिकित्साञ्चाह ।

शुण्ठीगोक्षुरकः क्वाथः प्रातः प्रातर्निषेवितः ।
सामे वाते कटीशूले पाचनो रुक्प्रणाशनः ॥ ४१ ॥
यवक्षारसमायुक्तो मूत्रकृच्छ्रविनाशनः ॥ ४२ ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा ।
कुक्षिवस्तिकटीशूले तैलमैरण्डसम्भवम् ॥ ४३ ॥
महौषधगुडूच्योस्तु क्वाथं पिप्पलीसंयुतम् ।
पिबेदामे सरुक्कोष्ठे कटीशूले विशेषतः ॥ ४४ ॥
विशोध्यैरण्डवीजानि पिष्ट्वा क्षीरे विपाचयेत् ।
तत्पायसं कटीशूले गृध्रस्यां परमौषधम् ॥ ४५ ॥

शुष्कतरुवल्कलसहितं गोमूत्रं स्थापितं तु सप्ताहम्।
हिङ्गुवचाशतपुष्पासैन्धवयुक्तेन तेनाथ ॥ ४६ ॥
तत्पुटपक्वं हन्यात् कटीरुजं दारुणं पुंसाम्।
आममेदोवृद्धिभवान् विकारांश्चानिलोद्भवान् ॥ ४७ ॥
अमृतानागरगोक्षुरमुण्डतिकावरुणकैः कृतं चूर्णम्।
मस्त्वारनालपीतं सामानिलनाशनं ख्यातम् ॥ ४८ ॥

इति अमृताद्यं चूर्णम्।

रास्नैरण्डशतावरीसहचरादुःस्पर्शवासामृता-
देवाह्वातिविषाभयाघनशटीशुण्ठीकषायः कृतः।
पीतः सोरुवुतैल एष विहितः सामे सशूलेऽनिले
कट्यूरुत्रिकपार्श्वपृष्ठजठरे कोष्ठे च वातार्त्तिजित् ॥ ४९ ॥

इति लघुरास्नादिः।

रास्नावातारिमूलञ्च वासकः सदुरालभः।
शटी दारुवला मुस्तं नागरातिविषाभया ॥ ५० ॥
श्वदंष्ट्राव्याधिघातश्च मिसिधान्यं पुनर्नवा।
अश्वगन्धामृताकृष्णा वृद्धदारुशतावरी ॥ ५१ ॥
वचासहचरा चैव चविकावृहतीद्वयम्।
समभागान्वितैरेतैः रास्नाद्विगुणभागिकैः ॥ ५२ ॥
कषायं पाययेत् सिद्धमष्टभागावशेषितम्।
शुण्ठीचूर्णसमायुक्तमाभाद्येन युतं तथा ॥ ५३ ॥
अलम्बुषादिसंयुक्तमजमोदादिना तथा।
यथादोषं यथाव्याधि प्रक्षेपं कारयेद्भिषक् ॥ ५४ ॥
सर्वेषु वातरोगेषु सन्धिमज्जगतेषु च।
कुब्जके वामने चैव पक्षाघाते तथार्दिते ॥ ५५ ॥
जानुजङ्घास्थिपीड़ासु गृध्रस्याञ्च हनुग्रहे।
प्रशस्तं वातरक्ते स्यादूरुस्तम्भे तथाऽर्शसि ॥ ५६ ॥

विश्वाचीगुल्महृद्रोगविसूचीक्रोष्टुशीर्षके।
अन्त्रवृद्धौ श्लीपदे च योनिशुक्रामये तथा ॥ ५७ ॥
पुंसां मेढ्रगते रोगे स्त्रीणां वन्ध्यामयेऽपि च।
योषितां गर्भदं मुख्यं नास्ति किञ्चित् अतःपरम् ॥ ५८ ॥
सर्वेषां पाचनानान्तु श्रेष्ठमेतद्धि पाचनम्।
महारास्नादिको नाम्ना प्रजापतिविनिर्मितः ॥ ५९ ॥

इति महारास्नादिः।

रास्नाविश्वविड़ङ्गानि रुवुकं त्रिफला तथा।
दशमूलं पृथक् श्यामाक्काथो वातामयापहः ॥ ६० ॥
अर्द्धावभेदके चाढ्ये चार्दिते वातखञ्जके।
नेत्ररोगे शिरःशूले ज्वरापस्मारयोस्तथा ॥
मनोभ्रंशे च विविधे कथितञ्च सुखप्रदम् ॥ ६१ ॥

इति रास्नादशमूलक्काथः।

अलम्बुषा गोक्षुरकं त्रिफलानागरामृता।
यथोत्तरं भागवृद्ध्या श्यामाचूर्णञ्च तत्समम् ॥ ६२ ॥
पिबेन्मस्तु सुरां तत्र काञ्जिकोष्णोदकेन वा।
आमवातं जयत्याशु रक्तपित्तं सशोणितम् ॥ ६३ ॥
त्रिकजानूरुसन्ध्यस्थिज्वरारोचकनाशनम्।
अलम्बुषादिकं चूर्णं रोगानीकविनाशनम् ॥ ६४ ॥
हरीतक्यक्षधात्रीभिः प्रसिद्धा त्रिफला क्रमात्।
प्रत्येकं तेन वा युञ्ज्यात् भागवृद्धिं यथोत्तरम् ॥ ६५ ॥

इति अलम्बुषाद्यं चूर्णम्।

आभा रास्ना गुडूची च शतावरी महौषधम्।
शतपुष्याश्वगन्धा च हपुषा वृद्धदारुकम् ॥ ६६ ॥
यवानी चाजमोदा च समभागानि कारयेत्।
सूक्ष्मचूर्णमिदं कृत्वा विड़ालपदकं पिबेत् ॥ ६७ ॥

कटिग्रहं गृध्रसीञ्च मन्यास्तम्भं हनुग्रहम्।
ये च कायगता रोगा सर्वांस्तांश्च प्रणाशयेत्॥ ६८॥
चूर्णमाभादिनामेदं सर्ववातविकारनुत्।

इति आभादिचूर्णम्।

अलम्बुषा गोक्षुरकं गुडूची वृद्धदारुकम्।
पिप्पली त्रिवृता मुस्ता वरुणं सपुनर्नवम्॥ ६९॥
त्रिफला नागरञ्चैव सूक्ष्मचूर्णानि कारयेत्।
मस्त्वारनालतक्रेण पयोमांसरसेन वा।
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम्॥ ७०॥

इति अलम्बुषाद्यं चूर्णम्।

माणिमन्थस्य भागौ द्वौ यवान्यास्तावदेव तु।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम्॥ ७१॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृतं शुभम्।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा॥ ७२॥
पीतं जयत्यामवातं गुल्महृद्वस्तिजान् गदान्।
प्लीहानं हन्ति शूलादीनानाहं गुदजानि च॥ ७३॥
विबन्धं जाठरान् रोगान् तथा वै हस्तपादजान्।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम्॥ ७४॥

इति वैश्वानरं चूर्णम्।

पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसंग्रहे।
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम्॥ ७५॥
सर्पिर्नागरकल्केन सौवीरं तच्चतुर्गुणम्।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम्॥ ७६॥

इति शुण्ठीघृतम्।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेन जलेन वा॥ ७७॥

वातश्लेष्मप्रशमन मग्निसन्दीपनं परम् ।
नागरं घृतमित्युक्तं कटीशूलामनाशनम् ॥ ७८ ॥

इति द्वितीयशुण्ठीघृतम् ।

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा पृथक् सर्वान् घृतप्रस्थं विपाचयेत् ॥ ७९ ॥
आरनालाढ़कं दत्त्वा तत्सर्पिर्जाठरापहम् ।
शूलं विबन्धमानाह मामवातं कटिग्रहम् ॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ ८० ॥

इति हिङ्ग्वाद्यं घृतम् ।

शृङ्गवेरं यवक्षारं पिप्पलीमूलपिप्पली: ।
सचव्यं चित्रकं हिङ्गु माणिमन्थं तथैव च ॥ ८१ ॥
कल्कं कृत्वा तु मतिमान् घृतप्रस्थं विपाचयेत् ।
आरनालाढ़कं दत्त्वा तत्सर्पिर्जाठरापहम् ॥ ८२ ॥
शूलं विबन्धमानाहमामवातं कटिग्रहम् ।
नाशयेद् ग्रहणीरोगमग्निसन्दीपनं परम् ॥ ८३ ॥

इति शृङ्गवेराद्यं घृतम् ।

पिबेद्विन्दुघृतं वापि धान्वन्तरमथापि वा ।
महाशुण्ठीघृतं चैव सामवाते पुनः पुनः ॥ ८४ ॥
यत्किञ्चिल्लेखनं सर्पिर्दीपनं पाचनञ्च यत् ।
तत्सर्वमामवातेषु योज्यं वा मस्तुना घृतम् ॥ ८५ ॥

अजमोदमरिचपिप्पलीविड़ङ्ग सुरदारुचित्रकशताह्वा ।
सैन्धवं पिप्पलीमूलं भागा नवकस्य पलिकाः स्युः ॥ ८६ ॥
शुण्ठीदशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य ।
अभयापलानि पञ्च तच्चूर्णं कारयेच्छ्लक्ष्णम् ॥ ८७ ॥
समगुड़वटकानदतश्चूर्णं वा कोष्णवारिणा पिवतः ।
नश्यन्त्यामानिलजाः सर्वे रोगाः सुदारुणाः शीघ्रम् ॥ ८८ ॥

विसूचिका प्रतितूनी तूनी हृद्रोगाः गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥ ८९ ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्ये चामवातसम्भूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्य्यांशुविध्वस्तम् ॥ ९० ॥
क्षुद्बोधनमारोग्यं स्थिरतरुणं बलीपलितनाशनञ्च।
कुरुते सतताभ्यासाद् गुणानन्यांस्तथा सुबहून् ॥ ९१ ॥

इति आभादिवटकः।

चित्रकं पिप्पलीमूलं यवानी कारवी तथा।
विड़ङ्गमजमोदा च जीरकं सुरदारु च ॥ ९२ ॥
चव्यैला सैन्धवं कुष्ठं रास्ना गोक्षुरधान्यकम्।
त्रिफला मुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥ ९३ ॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि तावन्मात्रञ्च गुग्गुलुम् ॥ ९४ ॥
सम्मर्द्य सर्पिषा गाढ़ं स्निग्धे भाण्डे निधापयेत्।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥ ९५ ॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानि च ॥ ९६ ॥
प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत्।
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ॥
वातरोगान् जयत्येष सन्धिमज्जागतानपि ॥ ९७ ॥

इति योगराजगुग्गुलुः।

नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः।
क्षीराढ़कसमायुक्तं खण्डस्यार्द्धशतं पलम् ॥ ९८ ॥
व्योषत्रिजातकद्रव्यात् प्रत्येकञ्च पलं पलम्।
निदध्याच्चूर्णितं तत्र खादेदग्निबलं प्रति ॥ ९९ ॥
आमवातप्रशमनं बलपुष्टिविवर्द्धनम्।

बल्यमायुष्यमोजस्यं बलीपलितनाशनम् ॥ १०० ॥

इति शुण्ठीखण्डः ।

पलं शतं रसोनस्य तिलस्य कुड़वं तथा ।
हिङ्गु त्रिकटुकं चारौ द्वौ पञ्चलवणानि च ॥ १०१ ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यवानी च धान्यकञ्चापि बुद्धिमान् ॥ १०२ ॥
प्रत्येकञ्च पलञ्चैषां श्लक्ष्णचूर्णानि कारयेत् ।
घृतं भाण्डे दृढ़े चैव स्थापयेद्दिनषोड़शम् ॥ १०३ ॥
प्रक्षिपेत्तैलमानीय प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत्कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु ॥ १०४ ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंस्थिते ।
अपस्मारेऽनले मन्दे श्वासे कासे गरेषु च ॥ १०५ ॥
सोन्मादे वातभग्ने च शूले जन्तुषु शस्यते ।

इति रसोनपिण्डः ।

प्रसारिण्या रसे सिद्धं तैलमैरण्डजं पिबेत् ।
सर्वदोषहरञ्चैव कफरोगहरं परम् ॥ १०६ ॥

इति प्रसारिणीतैलम् ।

द्विपञ्चमूलीनिर्य्यास फलदध्याम्लकाञ्जिकैः ।
तैलं कव्यूरुपार्श्वार्त्तिकफवातामयान् गदान् ॥ १०७ ॥
हन्ति वस्तिप्रदानेन करोत्यग्निबलं महत् ॥ १०८ ॥

इति द्विपञ्चमूलाद्यं तैलम् ।

सैन्धवं श्रेयसी रास्ना शतपुष्पा यवानिका ।
स्वर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म् ॥ १०९ ॥
वचाजमोदा सरणी पौष्करं मधुकं कणा ।
एतान्यर्द्धपलांशानि सूक्ष्मपिष्टानि कारयेत् ॥ ११० ॥

प्रस्थमेरण्डतैलस्य प्रस्थं तु शतपुष्पजम्।
काञ्जिकं द्विगुणं दत्त्वा मस्तु च द्विगुणं तथा॥ १११॥
एतत्सम्भृत्य सम्भारं शनैर्मृद्वग्निना पचेत्।
सिद्धमेतत्प्रयोक्तव्य मामवातहरं परम्॥ ११२॥
पानाभ्यञ्जनवस्तौ च कुरुतेऽग्निबलं भृशम्।
वातार्त्तिवङ्क्षणे शस्तं कटीजानूरुसन्धिजे॥ ११३॥
शूले हृत्पार्श्वजे चैव वातश्लेष्मनिपीड़िते।
वाह्यायामार्दितानाङ्गेष्वऽन्त्रवृद्धिनिपीड़िते॥
अन्यांश्चानिलजान् रोगान्नाशयत्याशु देहजान्॥ ११४॥

इति वृहत्सैन्धवादितैलम्।

स्वल्पप्रसारणीतैलं तैलं वा सैन्धवादिकम्।
दशमूलाद्यतैलेन वस्तिदानं प्रशस्यते॥ ११५॥
तैलस्य द्विपलं दद्यात् काञ्जिकस्य चतुष्पलम्।
दशमूलरसं मूत्रं पृथक् पञ्चपलानि च॥ ११६॥
वचा मदनयष्ट्याह्वा शताह्वा कुष्ठसैन्धवैः।
पिप्पल्यतिविषा मुस्ता रास्नाकट्फलपौष्करैः॥ ११७॥
अक्षांशिकैश्च तत्सर्वं मन्थयीत विचक्षणः।
प्रस्थार्द्धं प्रथमं देयो वस्तिभिरविशङ्कितः॥ ११८॥
द्वितीये च तृतीये च वर्जयेत्प्रसृतद्वयम्।
सर्ववातविकारेषु मोहेषु वृषणामये॥ ११९॥
कुक्षौ हृत्पार्श्वपृष्ठेषु जानुजङ्घाकटीग्रहे।
विबन्धानाह रोगेषु शर्कराश्मरीपीड़िते॥ १२०॥
भग्नास्थिपृष्ठगात्रेषु पिच्चितेषु क्षतेषु च।
एतन्निरूहवत्प्राज्ञो निरायासो महागुणः॥ १२१॥

इति निरूहः।

दधि मत्स्य गुड़क्षीरं पोतकीमाषपिष्टकम्।

वर्जयेदामवातार्त्तो मांसमानूपजञ्च यत् ॥ १२२ ॥
अभिष्यन्दिकरा ये च ये चान्ये गुरुपिच्छिलाः ।
वर्जनीयाः प्रयत्नेन आमपीड़ार्दितैर्नरैः ॥ १२३ ॥
शोकाक्षेपकसङ्कोच स्तम्भश्वयथुकम्पनम् ।
हनुग्रहार्दितं खञ्जं पाङ्गुल्यं सुप्तवातता ॥ १२४ ॥
सन्धिच्युतिः पर्व्वभेदो मेदो मज्जास्थिजा गदाः ।
एते स्थानस्य गाम्भीर्य्यात् सिध्येयुर्यत्नतो नवाः ।
तस्माज्जयेन्नवान्येव सुभिषक् निरुपद्रवान् ॥ १२५ ॥

इति वङ्गसेनसङ्कलितः आमवातनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ शूलनिदानमाह ।

दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्व्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥
व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ।
कलायमुद्गाढ़किकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥
कषायतिक्तातिविरूढ़जान्न विरुद्धवल्लूरकशुष्कशाकात् ।
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिभाष्यहास्यात् ॥ ३ ॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकवस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढ़म् ॥ ४ ॥
मुहुर्मुहुश्चोपशमप्रकोपौ विड्वातसंस्तम्भनतोदभेदैः ।
संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धान्नभोज्यैश्च समं प्रयाति ॥ ५ ॥

अथ चिकित्सामाह ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारचूर्णानि गुटिकाः शस्यन्ते शूलशान्तये ॥ ६ ॥

विज्ञाय वातशूलन्तु स्नेहस्वेदैरुपाचरेत्।
पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितोत्कटैः॥ ७॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत्।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः॥ ८॥
बिल्वैरण्डतिलैः कृत्वा गुडिकामम्लपेषिताम्।
वातशूलोपशान्त्यर्थं प्रमृज्यादुष्णया तया॥ ९॥
तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि।
गुटिका शमयत्याशु शूलञ्चैव सुदुस्तरम्॥ १०॥
नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलहा॥ ११॥
वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाड़िमाढ्यः॥१२॥
बलापुनर्नवैरण्ड बृहतीद्वयगोक्षुरम्।
सहिङ्गु लवणोपेतं सद्यो वातरुजापहम्॥ १३॥

इति बलादिचूर्णम्।

तुम्बुरूण्यभयाहिङ्गु पौष्करं लवणत्रयम्।
पिबेद्यवाम्बुना वातशूलगुल्मापतन्त्रकी॥ १४॥

इति तुम्बुरादिचूर्णम्।

हिङ्गुत्वक्कृष्णामलकं यवानी चौराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणिमण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय॥१५॥
विश्वमैरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्चलोपेतं सद्यः शूलनिवारणम्॥ १६॥
विश्वैरण्डयवैः क्वाथः सद्यः शूलनिवारणः।
तद्वदिन्द्रयवक्वाथो हिङ्गुसौवर्चलान्वितः॥ १७॥
यवानीहिङ्गुसिन्धूत्थ क्षारसौवर्चलाभया:।
सुरामण्डेन पातव्या वातशूलनिषूदनाः॥ १८॥

शूले निरन्नकोष्ठे हि कोष्णाद्भिश्चूर्णिताः पिबेत्।
हिङ्गुप्रतिविषाव्योष वचासौवर्चलाभयाः ॥ १९ ॥

इति वातशूलम्।

अथ पित्तशूलमाह।

क्षारातितीक्ष्णोष्णविदाहितैल निष्पावपिण्याककुलत्थयूषैः।
कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ॥ २० ॥
ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम्।
तृण्मोहदाहार्त्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमदोषयुक्तम् ॥ २१
मध्यन्दिने कुप्यति चार्द्धरात्रे विदाहकाले जलदात्यये च।
शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च॥२२॥

अथ चिकित्सामाह।

गुड़शालियवाः क्षीरं सर्पिष्पानं विरेचनम्।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनः ॥ २३ ॥
वामयेत्पित्तशूलार्त्तं पटोलेक्षुरसादिभिः।
पश्चाद्विरेचयेत् सम्यक् पित्तगुल्मविरेचनैः ॥ २४ ॥
शीतावगाहाः पुलिनाः सवाता भाण्डानि कांस्यानि जलप्लुतानि।
अन्यानि शस्तानि च शीतलानि सचन्दनार्द्रश्च करः सुशीतः ॥२५॥
मणिराजतताम्राणि भाजनानि च सर्वशः।
परिपूर्णानि तोयेन शूलस्योपरि निक्षिपेत् ॥ २६ ॥
विरेचनं पित्तहरं च शस्तं रसश्च शस्तः शशलावकानाम्।
सतर्पणं लाजमधूपपन्नं योगाः सुशीता मधुसम्प्रयुक्ताः ॥ २७ ॥
शतावरी सयष्ट्याह्वा वाट्यालकुशगोक्षुरैः।
शृतशीतं पिबेत् तोयं सक्षौद्रगुड़शर्करम्।
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥ २८ ॥
धात्र्या रसं विदार्य्या वा त्रायन्ती गोस्तनाम्बु वा।
पिबेत् सशर्करं सद्यः पित्तशूलनिषूदनम् ॥ २९ ॥

त्रिफलारग्वधक्काथं सक्षौद्रं शर्करान्वितम्।
पाययेद्रक्तपित्तार्त्तं दाहशूलनिवारणम्॥ ३०॥
छर्द्यां ज्वरे पित्तभवे च शूले घोरे विदाहे तृषितेऽतिमात्रम्।
यवस्य पेयां मधुना विमिश्रां पिबेत् सुशीतां मनुजः सुखार्थी॥ ३१॥
शतावरीरसं क्षौद्रयुक्तं प्रातः पिबेन्नरः।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम्॥ ३२॥
बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुबालिकाः।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम्॥ ३३॥
प्रलिह्यात्पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम्।
सगुड़ा घृतमिश्रा वा शूलं हन्याद्धरीतकी॥ ३४॥
कुशादिमूलयष्ट्याह्वैः क्षीरमर्द्धोदके शृतम्।
रक्तपित्तोपशमनं वेदना चोपशाम्यति॥ ३५॥
कुशादिमूलारुणपञ्चवल्कलं शतावरीकोमलकाम्बुसाधितम्।
घृतं पयस्यूल्वणपित्तशूलजित् सितामधूकारुणकल्कसाधितम्॥ ३६॥

कुशाद्यं घृतम्। इति पित्तशूलम्।

अथ श्लेष्मशूलमाह।

आनूपवारिजकिलाटपयोविकारैः
मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम्॥ ३७॥
हृल्लासकाससदनारुचिसम्प्रसेकैः
आमाशये स्तिमितकोष्ठशिरोगुरुत्वैः।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रम्
सूर्य्योदये च शिशिरे कुसुमागमे च॥ ३८॥

अथ चिकित्सामाह।

संस्वेद्य कोष्णसक्षार सक्तुतक्रैस्तथापरैः।

प्रवाप्य कफशूलार्त्तमवश्यमुपवासयेत् ॥ ३९ ॥
शाल्यन्नं जाङ्गलं मांसं सारिष्टं कटुकं रसम्।
मद्यानि जीर्णगोधूमं कफशूले प्रयोजयेत् ॥ ४० ॥
लवणत्रयसंयुक्तं पञ्चकोलकरामठम्।
सुखोष्णेनाम्बुना पानं कफशूले प्रदापयेत् ॥ ४१ ॥
श्लेष्मशूलहरा पेया पञ्चकोलेन साधिता ॥ ४२ ॥
व्याघ्री ससिंहीफलविल्वमूलं शिलोद्भवं गोक्षुरकञ्च तुल्यम्।
एरण्डमूलं द्विगुणं च पक्का पिबेद्यवक्षारयुतं कषायम् ॥ ४३ ॥
हृत्कुक्षिपार्श्वानुगतं निहन्याच्छूलं नराणां कफजं प्रवृद्धम्।

इति श्लेष्मशूलम्।

अथ द्वन्द्वजं त्रिदोषजञ्च शूलमाह।

द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् ॥ ४४ ॥
सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवञ्च शूलम्।
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥ ४५ ॥

अथ चिकित्सामाह।

शङ्खचूर्णं सलवणं सहिङ्गुव्योषसंयुतम्।
उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम् ॥ ४६ ॥
गोमूत्रसिद्धं मण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ४७ ॥
विदारीदाड़िमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु त्रिदोषप्रभवां रुजम् ॥ ४८ ॥
एरण्डफलमूलानि वृहतीद्वयगोक्षुरम्।
पर्ण्यः सहदेवी च सिंहपुच्छीक्षुवालिका ॥ ४९ ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत्।
पृथग्दोषभवं शूलं हन्यात्सर्वभवं तथा ॥ ५० ॥

इति एरण्डद्वादशकः क्वाथः। इति त्रिदोषशूलम्।

अथ आमशूलमाह।

आटोपहृल्लासवमीगुरुत्वं स्तैमित्यमानाहकफप्रसेकैः।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति॥ ५१॥

अथ चिकित्सामाह।

आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यद्यदग्निविवर्द्धनम्॥ ५२॥
चित्रकग्रन्थिकैरण्ड शुण्ठीधान्यजलैः शृतम्।
शूलानाहविबन्धेषु सहिङ्गुविड़सैन्धवम्॥ ५३॥

एरण्डविल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटूमूलकृतः कषायः।
सक्षारहिङ्गुलवणोरुवुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः॥ ५४॥

इति एरण्डसप्तकः कषायः।

अथ शूलस्थानमाह।

वातात्मकं वस्तिगतं वदन्ति पित्तात्मकं चापि वदन्ति नाभ्याम्।
हृन्नाभिकुक्षौ कफसन्निकृष्टं सर्वेषु देशेषु च सन्निपातात्॥५५॥

वस्तौ हृत्कण्ठपार्श्वेषु सशूलः कफवातिकः।
कुक्षौ हृन्नाभिमध्येषु सशूलः कफपैत्तिकः॥
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः॥ ५६॥
एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः।
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्य्युपद्रवः॥ ५७॥
निगृह्य मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः।
साध्मानाटोपसंरुद्धः सूचीभिरिव निस्तुदन्॥ ५८॥
उच्छ्वसित्येव वक्त्रेण नवान्नमभिनन्दति।
न च निद्रामुपैत्येष पार्श्वशूलः प्रकीर्त्तितः॥ ५९॥
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः।

तदास्य भोजनं भुक्तं वातस्तब्धं न पच्यते ॥ ६० ॥
उच्छ्वसन्नतिमात्रेण शूलेनाऽहन्यते मुहुः ।
शयनेनासनेनैव तिष्ठन्तो लभते सुखम् ॥
कुक्षिशूल इति ख्यातो वातादामसमुद्भवात् ॥ ६१ ॥
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ।
हृदिस्थं कुरुते शूल मुच्छ्वासारोधनं परम् ॥ ६२ ॥
हृच्छूल इति स ख्यातो रसमारुतकोपतः ॥ ६३ ॥
संरोधात् कुपितो वायुर्वस्तिं संवृत्य तिष्ठति ।
वस्तिवङ्क्षणनाड़ीषु ततः शूलोऽस्य जायते ॥
विण्मूत्रवातसंरोधो वस्तिशूलः स संज्ञितः ॥ ६४ ॥
नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रानुबन्धकः ।
मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात् ॥ ६५ ॥
वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ।
वातान् रुणद्धि कोष्ठस्थः मन्दीकृत्य तु पावकम् ॥ ६६ ॥
शूलं सञ्जनयन् शीघ्रं स्रोत आवृत्य मारुतः ।
दक्षिणं यदि वा वामं कुक्षिमादाय जीर्य्यते ॥ ६७ ॥
सर्वत्र वर्द्धते क्षिप्रं भ्रमन्निःश्वासघोषवत् ।
पिपासा वर्द्धतेऽतीव भ्रमो मूर्च्छा च जायते ॥ ६८ ॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ।
विट्शूलमेतज्जानीयाद्भिषक् परमदारुणम् ॥ ६९ ॥

अथ चिकित्सामाह ।

रसोनं मद्यसम्मिश्रं पिबेत्प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मकृतं शूलं निहन्याद्वह्निदीपनम् ॥ ७० ॥
क्षीरोदकं पिबेत्तत्र पिप्पल्या सगुड़ान्वितम् ।
कुक्षिशूलं जयत्युग्रं यच्च वातकफोद्भवम् ॥ ७१ ॥
पटोलत्रिफलारिष्टैः शृतं क्षौद्रयुतं पिबेत् ।

पित्तश्लेष्मज्वरच्छर्दि दाहशूलोपशान्तये ॥ ७२ ॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक्।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ७३ ॥
निदग्धिकाबृहत्यौ च कुशकाशेक्षुबालिका।
श्वदंष्ट्रैरण्डमूलानि वारिणा सह पाचयेत् ॥
पिबेत्सशर्कराक्षौद्रं शूले पित्तानिलात्मके ॥ ७४ ॥

इति द्वन्द्वजं शूलम्।

हिंगुसौवर्चलं पथ्या विड़सैन्धवतुम्बुरु।
पौष्करञ्च पिबेच्चूर्णं दशमूलीयवाम्भसा ॥ ७५ ॥
पार्श्वहृत्कटिपृष्ठानां शूले तन्द्रापतानके।
श्लेष्मणोत्थे प्रसेके च गलरोगे च शस्यते ॥ ७६ ॥

इति हिङ्ग्वादिचूर्णम्।

तुम्बुरुण्यभयाहिङ्गु पौष्करं लवणत्रयम्।
यवानी च यवक्षारं विड़ङ्गं नागरं वचा ॥ ७७ ॥
त्रिवृत्त्रिगुणितं चूर्णं रुबुतैलसमन्वितम्।
उष्णाम्बुना च तत्पेयं गुल्मे वातकफात्मके ॥ ७८ ॥
उदरेषु विबन्धे च वातविण्मूत्ररेतसाम् ॥ ७९ ॥

इति बृहत्तुम्बुर्य्यादिचूर्णम्।

तुम्बुरुण्यभयाहिङ्गु पौष्करं लवणत्रयम्।
पिबेद्यवाम्बुना वातगुल्मशूलापतन्त्रकी ॥ ८० ॥

विश्वोरुबूकदशमूलयवाम्भसा च
द्विक्षारहिङ्गुलवणत्रयपुष्कराणाम्।
चूर्णं पिबेद्धृदयपृष्ठकटिग्रहाम-
पक्वाशयार्त्तिभग्नरुग्ज्वरगुल्मशूली ॥ ८१ ॥

इति विश्वादिचूर्णम्।

चूर्णं समं रुचकहिङ्गुमहौषधानां

शुण्ठ्यम्बुना कफसमीरणसम्भवासु।
हृत्पार्श्वपृष्ठजठरार्त्तिविषूचिकासु
पेयं तथा यवरसेन च विड्विबन्धे ॥ ८२ ॥

क्वाथेन चूर्णपानञ्च यत्र क्वाथप्रधानता।
प्रवर्त्तते न तेनायं चूर्णापेक्षाच्चतुर्गुणः ॥ ८३ ॥
हिङ्गुलः स्वल्पमानोक्ते समशब्दे सहार्थता ॥ ८४ ॥

इति रुचकादिचूर्णम्।

त्रिफलाक्वाथगोमूत्र चौद्रचीररसैः पृथक्।
एरण्डतैलैर्द्विगुणैर्हितं शान्त्यै विरेचनम् ॥ ८५ ॥
हिङ्गुतैलं सलवणं गोमूत्रेण विपाचितम्।
नाभिस्थाने प्रदातव्यं यस्य शूलं सवेदनम् ॥ ८६ ॥
दारुहैमवतीकुष्ठ शताह्वा हिङ्गुसैन्धवैः।
अम्लपिष्टैः सुखोष्णैश्च शूलार्त्तमुदरं दिहेत् ॥ ८७ ॥

इति दारुषट्कलेपः।

पुनर्नवैरण्डयवातसीभिः
कर्पासजैरस्थिभिरारनालैः।
स्विन्नैरसीभिर्भिषजा च कार्य्यः
स्वेदः समीरार्त्तिहरो नराणाम् ॥ ८८ ॥

इति पुनर्नवादिस्वेदः।

तैलमैरण्डजं वापि दशमूलस्य वारिणा।
पीतं निहन्ति साटोपं हिङ्गु सौवर्चलान्वितम् ॥ ८९ ॥
पथ्यां सशक्रयवपुष्करमूलयुक्तां
निष्क्वाथ्य हिङ्गुजटिलातिविषासुयुक्ताम्।
पीत्वा सुखोष्णमथ वातकृतञ्च शूल-
मामोद्भवं कफकृतञ्च निहन्ति तूर्णम् ॥ ९० ॥
मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः।

सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ ९१ ॥
मातुलुङ्गरसः सर्पिः सहिङ्गु लवणान्वितम्।
सुखोष्णं पाययेदेतद्विड्विबन्धानुलोमनम् ॥ ९२ ॥
कुक्षिहृत्पार्श्वशूलेषु वेदना चोपशाम्यति ॥ ९३ ॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ ९४ ॥
सहिङ्गुतुम्बुरुव्योष यवानीचित्रकाभयाः।
सक्षारलवणैश्चूर्णं पिबेत्प्रातः सुखाम्बुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ९५ ॥
विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम्।
हिङ्गुसैन्धवसंयुक्तं सद्यःशूलनिवारणम् ॥ ९६ ॥
मूत्राम्लः पाचितां शुष्कां लोहचूर्णसमन्विताम्।
सगुड़ामभयामद्यात् सर्वशूलप्रशान्तये ॥ ९७ ॥
त्रिफलायास्तथा चूर्णं चूर्णं वा काललोहजम्।
शर्कराचूर्णसंयुक्तं सर्वशूलनिवारणम् ॥ ९८ ॥
कम्बलावृतदेहस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तशक्तूनां धूपं शूलनिवारणम् ॥ ९९ ॥
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥ १०० ॥
वाते निरूहाः सविरेचनाश्च क्षीरप्रयोगा मधुराश्च पित्ते।
तिक्तः कषायः कटुकस्तथैव कफेन शूले खलु सन्निविष्टे ॥ १०१
हिङ्गुसौवर्चलं पाठा द्वौ क्षारौ लवणत्रयम्।
चुर्णीकृत्य विधातव्यं भिषजा लशुने रसे ॥ १०२ ॥
हृच्छूले पार्श्वशूले च मन्यास्तम्भे सुदारुणे।
प्रयोज्यं कुक्षिशूले च भिषजा सिद्धिमिच्छता ॥ १०३ ॥

इति हिङ्ग्वाद्यो वटकः।

एरण्डमूलं बृहती श्वदंष्ट्रा पुनर्नवागोक्षुरकस्य मूलम् ।
शतावरी हंसपदी बला च महासहा क्षुद्रसहा विदारी॥१०४॥
विल्वस्य मूलं समृणालचित्रं निदिग्धिकाजीवकसर्षपौ च ।
कुशे कुशाख्या सह देवदेवे पचेत्कषायं जलपादशेषम् ॥
क्वाथेन कल्केन पचेत्तु धीमान्रसेन तुल्यं फलपूरकस्य ॥ १०५ ॥

उत्कृष्टदोषो यस्य स्याद्यस्य शूलो न शाम्यति ।
तत्र सर्पिरिदं दद्यात् प्रसह्यविनिवारणम् ॥ १०६ ॥
सर्वस्थानगतं शूलमेतद्धन्ति चतुर्विधम् ।
एरण्डाद्यमिदं सर्पिः कृष्णात्रेयेण पूजितम् ॥ १०७ ॥

इति एरण्डाद्यं घृतम् ।

वीजपूरकमेरण्ड रास्नागोक्षुरकं बला ।
पृथक् पञ्चपलान् भागान् यवप्रस्थसमायुतान् ॥ १०८ ॥
वारिद्रोणेन साध्यं स्यात् यावत्पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन कल्कं दत्त्वाक्षसम्मितम् ॥ १०९ ॥
तुम्बुरुण्यभयाहिङ्गुव्योषं सौवर्चलं विड़म् ।
सैन्धवं यावशूकञ्च स्वर्जिका साम्लवेतसम् ॥ ११० ॥
मस्तुप्रस्थद्वयं दद्यात् सिद्धं मृद्वग्निना भिषक् ।
पानमेतत् प्रशंसन्ति शूलं हन्ति त्रिदोषजम् ॥ १११ ॥
वातशूलं यकृच्छूलं गुल्मप्लीहापहं परम् ।
हृच्छूलं पार्श्वशूलञ्च अन्त्रशूलञ्च यद्भवेत् ॥ ११२ ॥
वलवर्णकरं हृद्य मग्निसन्दीपनं परम् ।
याज्ञवल्क्येन मुनिना भाषितं तत्त्वदर्शिना ॥ ११३ ॥

इति बीजपूराद्यं घृतम् ।

घृताच्चतुर्गुणो देयो मातुलुङ्गरसस्तथा ।
शुष्कमूलककोलाम्ल कषायो दाड़िमाद्रसः ॥ ११४ ॥
विड़ङ्गलवणक्षारं पञ्चकोलयवानीभिः ।

पाठामूलककल्कैश्च सिद्धं शूले मतं घृतम् ॥ ११५ ॥
हृत्पार्श्वशूलं वा श्वासं कासं हिक्कां तथैव च।
व्रध्नगुल्मप्रमेहार्शो वातव्याधिं विनाशयेत् ॥ ११६ ॥

इति शूलघृतम्।

यस्य नैवं प्रशाम्येत तस्य वस्तिविधिर्मतः।
नारायणेन तैलेन प्रसारण्या तथैव च ॥ ११७ ॥
वेदना च तृषा मूर्च्छा आनाहो गौरवारुचौः।
कासश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः ॥ ११८ ॥
व्यायामं मैथुनं मद्यं लवणं कटुकानि च।
वेगरोधं शुचं क्रोधं विदलं शूलवान् त्यजेत् ॥ ११९ ॥

इति वङ्गसेनसङ्कलितः शूलनिदानचिकित्साधिकारः समाप्तः।

---

## अथ परिणामशूलनिदानमाह।

स्वैर्निदानैः प्रकुपितो वायुः सन्निहितो यदा।
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥ १ ॥
भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्।
तस्य लक्षणमप्येतत्समासेनाभिधीयते ॥ २ ॥
आध्मानाटोपविण्मूत्र विबन्धारतिवेपनैः।
स्निग्धोष्णैः प्रशमं याति वातिकं तद्वदेद्भिषक् ॥ ३ ॥
तृष्णादाहारतिस्वेदं कट्वम्ललवणोत्तरम्।
शूलं शीतशमप्रायं पैत्तिकं तद्वदेद्भिषक् ॥ ४ ॥
छर्दिहृल्लाससम्मोह स्वल्परुग्दीर्घसन्ततिः।
कटुतिक्तोपशान्तौ च तद्विज्ञेयं कफात्मकम् ॥ ५ ॥
संसृष्टलक्षणं बुध्वा द्विदोषं परिकल्पयेत्।
त्रिदोषजमसाध्यं स्यात् क्षीणमांसबलानलम् ॥ ६ ॥

अथ चिकित्सामाह ।

लङ्घनं प्रथमं कुर्य्याद्वमनं सविरेचनम् ।
वस्तिकर्म्मपरं चात्र पक्तिशूलोपशान्तये ॥ ७ ॥
निरूहो वाजिगन्धा च मधुतैलिकवस्तयः ।
निम्बक्काथेन वमनं कटुतुम्बीरसेन वा ॥ ८ ॥
पटोलपत्रक्काथेन कारवेल्लोदकेन वा ।
प्रियङ्गुपत्रक्काथेन हितं मोचरसेन वा ॥ ९ ॥
यष्ट्याह्वादिकयोगेन वमनं परिशस्यते ।
पीत्वा च क्षीरमाकण्ठं मदनक्काथसंयुतम् ॥ १० ॥
कान्तारकस्य पौण्ड्रस्य कोशकारस्य वा रसम् ।
परिणामशूलशान्त्यर्थं वमनाय प्रयोजयेत् ॥ ११ ॥
दन्ती च त्रिवृता श्यामा कर्णिका कटुकाह्वया ।
नीलिकानागरं चूर्णं तैलेनैरण्डजेन वा ॥
युक्तं विरेचनं सद्यः पक्तिशूलनिवारणम् ॥ १२ ॥
विड़ङ्गं तण्डुलं व्योषं वृहद्दन्ती सचित्रकम् ।
सर्वाण्येतानि चाहृत्य स्लक्ष्णचूर्णानि कारयेत् ॥ १३ ॥
गुड़ेन मोदकं कृत्वा भक्षयेत्प्रातरुत्थितः ।
उष्णोदकानुपानं च दद्यादग्निविवर्द्धनम् ॥ १४ ॥
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ १५ ॥

इति विड़ङ्गाद्यो मोदकः ।

नागरगुड़तिलकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्य नश्यति त्रिरात्रेण ॥ १५ ॥
एरण्डवक्लिशम्बूक वर्षाभूगोक्षुरं समम् ।
अन्तर्दग्ध्वा पिबेदद्भि रुष्णाभिः शूलशान्तये ॥ १६ ॥
पीतं शम्बूकजं भस्म जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ १७ ॥

शम्बूकं त्र्यूषणञ्चैव पञ्च वै लवणानि च।
समांशैर्गुटिकां कृत्वा कलम्बुकरसेन वा ॥ १८ ॥
प्रातर्भोजनकाले वा भक्षयेच्च यथा बलम्।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ १९ ॥
विष्णुक्रान्तामूलकल्कः पीतः सघृतशर्करः।
पयसा शमयत्याशु शूलं पक्तिसमुद्भवम् ॥ २० ॥
यः पिबति सप्तरात्रं शक्तूनेकान् कलाययूषेण।
जयति परिणामशूलं शमयेत्तज्जलं वा प्रयोजितम् ॥ २१ ॥
पलानि त्रीणि शम्बूकाल्लोहचूर्णात्पलद्वयम्।
रसाञ्जनात्पलञ्चैकं लोहसिङ्घातकात्पलम् ॥ २२ ॥
सर्वैः समं शर्करा च मधुना च परिप्लुतम्।
सर्वमेतत्समाहृत्य मोदकान् कारयेद्भिषक् ॥ २३ ॥
तान् भक्षयेच्च यत्नेन शूले गुल्मे हृदामये।
विशेषतः पक्तिशूले शोथे पाण्डुगदे भ्रमे ॥ २४ ॥
दुर्नाम्नि कासे कृच्छ्रे च प्रमेहाश्मरिवृद्धिषु।
अग्निमान्द्ये स्मृतिभ्रंशे पीनसेऽर्धावभेदके ॥ २५ ॥

इति शम्बूकाद्यो मोदकः।

कृष्णाभया लोहचूर्णं विलिहन्मधुसर्पिषा।
परिणामोद्भवं शूलं सद्यो हन्ति सुदुस्तरम् ॥ २६ ॥

इति कृष्णाद्यं लोहम्।

पथ्या लोहरजः शुण्ठी तच्चूर्णं मधुसर्पिषा।
परिणामभवं हन्ति वातपित्तकफात्मकम् ॥ २७ ॥

इति पथ्यालोहम्।

त्रिफलां लोहचूर्णन्तु यष्टीमधुकमेव च।
मधुसर्पियुतं लिह्याच्छूलं हन्ति त्रिदोषजम् ॥ २८ ॥

इति त्रिफलाद्यं लोहम्।

अभ्रन्ताम्रं रसं लोहं प्रत्येकं संस्कृतं पलम्।
सर्वमेतत्समाहृत्य गृह्णीयात्कुशली भिषक्॥ २९॥
आज्ये पलद्वादशके दुग्धे वत्सरसंख्यके।
क्षिप्त्वा तत्र पचेच्चूर्णं सुपूतं घनतन्तुना॥ ३०॥
विड़ङ्गं त्रिफलावह्नीन् त्रिकटून्वा तथैव च।
पिष्ट्वा पलोन्मितानेतान्यथा संमिश्रितान्नयेत्॥ ३१॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेत्तु विचक्षणः।
आत्मनः शोभने वह्निं पूजयित्वा रविं गुरुम्॥ ३२॥
घृतेन मधुना मांसं भक्षयेन्माषकादिकम्।
अष्टौ माषान् क्रमेणैव वर्द्धयेत्तु समाहितः॥ ३३॥
अनुपानञ्च दुग्धेन नारिकेलोदकेन च।
जीर्णशर्करशाल्यन्नं मुहुर्मांसरसादयः॥ ३४॥
रसायनान्यविरुद्धान्यन्यान्यपि कारयेत्॥ ३५॥
हृच्छूलं पार्श्वशूलञ्च आमवातं कटिग्रहम्।
गुल्मशूलं प्लीहशूलं यकृच्छूलं विशेषतः॥ ३६॥
अग्निमान्द्यं क्षयं कुष्ठं कासं श्वासं विचर्चिकाम्।
अश्मरीं मूत्रकृच्छ्रञ्च योगेनानेन नश्यति॥ ३७॥

इति चतुःसमो लौहः।

त्रिवृता चित्रकं मुस्तं त्रिफला त्र्यूषणं तथा।
एकैकस्य समोभागस्तदर्द्धो रसगन्धयोः॥ ३८॥
लोहाच्चिकं विभागानां भङ्गस्तद्द्विगुणो भवेत्।
एतत्सकलचूर्णन्तु चूर्णयित्वा विचक्षणः॥ ३९॥
त्रिफलायाः कषायेण गुटिकां कारयेद्भिषक्।
तत्रैकं भक्षयेत्प्रातर्भक्तवारि पिबेदनु॥ ४०॥
पक्तिशूलं त्रिदोषोत्थमम्लपित्तं वमिं ज्वरम्।
हृच्छूलं पार्श्वशूलञ्च वस्तिकुक्षिगुदे रुजम्॥ ४१॥

कासं श्वासं तथा कुष्ठं ग्रहणीदोषनाशनम्।
यकृत्प्लीहोदरञ्चैव राजयक्ष्मज्वरापहम्॥ ४२॥

इति भक्तवारिगुटिका।

अक्षामलकशिवानां स्वरसैः पक्वं सुलोहजञ्च रजः।
सगुड़ं यद्युपभुंक्ते मुञ्चति त्रिदोषजं शूलम्॥ ४३॥

इति त्रिफलाद्यं लौहम्।

सामुद्रं सैन्धवं क्षारोरुवूकं रौमकं विड़म्।
दन्ती लोहरजः किट्टं त्रिवृच्छूरणकं समम्॥ ४४॥
दधिगोमूत्रपयसा मन्दपावकपाचितम्।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा॥ ४५॥
जीर्णेऽजीर्णे तु भुञ्जीत मांसादिघृतसाधितम्।
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत्॥ ४६॥
विद्रध्यष्ठीलजं हन्ति कफवातोद्भवं तथा।
अन्नद्रवं जरयितुमजीर्णं ग्रहणीगदम्॥ ४७॥
शूलानामपि सर्वेषामौषधं नास्त्यतःपरम्।
परिणामसमुत्थस्य विशेषेणान्तकं स्मृतम्॥ ४८॥

इति सामुद्राद्यं चूर्णम्।

सपिप्पलीगुड़ं सर्पिः पचेत् क्षीरचतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्॥ ४९॥

इति गुड़पिप्पलीघृतम्।

क्वाथेन कल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसम्प्रयुक्तम्।
क्षीरानुपानं विनिहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसञ्ज्ञम्॥ ५०॥

इति पिप्पलीघृतम्।

लोहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा।

गुड़स्याष्टौ तथा भागा गुड़ान्मूत्रं चतुर्गुणम् ॥ ५१ ॥
एतत्सर्वन्तु विपचेद् गुड़पाकविधानवत् ।
लिहेच्चैतद्यथाशक्ति चये शूले च पाकजे ॥ ५२ ॥

इति लौहादिलेहः ।

कोलग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितम् ।
मण्डूरं सुरभीजलेऽष्टगुणिते पक्काथ सान्द्रीकृतम् ।
तत् खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुक् ।
जेतुं वातकफामयान् परिणतीशूलं हि शूलानि च ॥ ५३ ॥

इति कोलादिमण्डूरम् ।

यवक्षारं कणा शुण्ठी कोलं ग्रन्थिकचित्रके ।
पलप्रमाणमादाय प्रस्थं लोहस्य किट्टकम् ॥ ५४ ॥
शनैः पचेद्दार्विलेपं गोमूत्राष्टगुणेन च ।
ततोऽक्षमात्रान्वटकान्योजयेत्सप्तरात्रकम् ॥ ५५ ॥
भक्षयेद्भोजनस्याग्रे मध्ये भुक्तवतस्तथा ।
सर्पिः क्षीररसोपेतैरसैर्जाङ्गलजैः शुभैः ॥ ५६ ॥
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ।
सर्वशूलगदांश्चांशु नाशयत्येष वीर्य्यवान् ॥
सभीमवटको ह्येष योगराजः प्रकीर्त्तितः ॥ ५७ ॥

इति भीमवटकमण्डूरम् ।

लोहकिट्टपलान्यष्टौ गोमूत्रस्याढ़के पचेत् ।
क्षीरप्रस्थेन तत्सिद्धं पक्तिशूलहरं नृणाम् ॥ ५८ ॥

इति क्षीरमण्डूरम् ।

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नश्च पयसस्तथा ॥ ५९ ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः ।
विपचेत् सर्वमेकत्र यावत्पिण्डत्वमागतम् ॥ ६० ॥

स्निग्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम्॥
विनिहन्त्येष योगोऽयं मण्डूरस्य न संशयः॥ ६१॥

इति शतावरीमण्डूरम्।

विड़ङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च।
नवभागानि सर्वाणि लोहकिट्टसमानि च॥ ६२॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रात् द्विगुणितं गुड़म्।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम्॥ ६३॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः॥ ६४॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलापाण्डुरोगञ्च शोथं मन्दाग्निनामपि॥ ६५॥
अर्शांसि ग्रहणीरोगं कृमिगुल्मोदराणि च।
नाशयेदम्लपित्तं च स्थौल्यं चाप्यपकर्षति॥ ६६॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुड़ो मण्डूरसंज्ञकः।
शूलार्त्तानां कृपाहेतो स्तारया परिकीर्त्तितः॥ ६७॥

इति तारामण्डूरगुड़ः।

वर्षाभूर्वरुणोमान लोहकिट्टन्तु पूतकम्।
भार्गी च समभागानि मूत्रे दशगुणे पचेत्॥ ६८॥
अन्तर्धूमविपक्वेन मधुसर्पिर्युतं लिहन्।
वाताधिकं तथा पित्तं द्वन्द्वजं श्लेष्मजं तथा।
एतत् त्रिदोषजं हन्ति शूलं हि परिणामजम्॥ ६९॥

इति पुनर्नवादिमण्डूरम्।

त्र्यूषणं त्रिफला चव्यं विड़ङ्गानलजीरकम्।
शृङ्गी मुस्तं देवकाष्ठं कारवीधान्यतुम्बुरु॥ ७०॥

दन्ती त्रिवृत्तयोर्मूलं ग्रन्थिकं गजपिप्पली ।
त्वगेलापत्रकं चूर्णं सर्वमर्द्धपलं पृथक् ॥ ७१ ॥
गृह्णीयाद्गन्धपाषाणं केशरं चाक्षसम्मितम् ।
मण्डूरस्य विशुद्धस्य पलानां पञ्चविंशतिम् ॥ ७२ ॥
कृत्वा चूर्णं ततः सूक्ष्मं स्वरसैर्भावयेत्तु तम् ।
कर्कोटककेशराज बन्ध्यातालसमुद्भवैः ॥ ७३ ॥
धात्रीफलरसप्रस्थं मूत्रमष्टगुणं तथा ।
दत्त्वा विपाचयेत्तावद्यावत्पाकञ्च गच्छति ॥ ७४ ॥
खादेदग्निबलं मत्वा परिहारविवर्जितः ।
वातश्लेष्मोद्भवं शूलमम्लपित्तं सुदारुणम् ॥ ७५ ॥
प्लीहानमुदरं गुल्मं ग्रहणीपाण्डुकामलाम् ।
कृमीनर्शांसि कुष्ठानि शोथस्थौल्यमरोचकम् ॥ ७६ ॥
ये वातप्रभवा रोगा ये च पित्तकफोद्भवाः ।
तान् सर्वान्नाशयत्याशु भास्करस्तिमिरं यथा ॥ ७७ ॥
त्र्यूषणं नाम विख्यातं वह्नेर्दीप्तिकरं परम् ॥ ७८ ॥

इति वृहत्त्र्यूषणाद्यं मण्डूरम् ।

नारिकेलस्य तोयञ्च लवणेन प्रपूरितम् ।
विपक्वमग्निना सम्यक् परिणामजशूलनुत् ॥ ७९ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ ८० ॥

इति नारिकेललवणम् ।

त्रिफला मुस्तकं व्योषं विड़ङ्गं पुष्करं वचा ।
चित्रकं मधुकं चैव पलांशं श्लक्ष्णचूर्णितम् ॥ ८१ ॥
अयश्चूर्णं पलान्यष्टौ गुग्गुलोस्तावदेव तु ।
प्रातर्विलिह्य भुञ्जानोऽजीर्णेऽस्मिंस्तु जयेद्रुजम् ॥ ८२ ॥
जीर्णान्नसम्भवं शूलं पाण्डुरोगं हलीमकम् ।

आमवातं तथा गुल्मं श्वयथुं विषमज्वरम् ॥ ८३ ॥

इति अयोगुग्गुलुः।

स्विन्नपीड़ितकूष्माण्डात्तुलार्द्धं भृष्टमाज्यतः।
प्रस्थार्द्धं तुल्यखण्डञ्च पचेदामलकीरसात् ॥ ८४ ॥
प्रस्थे सुस्विन्नकूष्माण्डरसप्रस्थं विघट्टयन्।
दर्व्या पक्वं गते तस्मिंश्चूर्णीकृत्य निधापयेत् ॥ ८५ ॥
द्वे द्वे पले कणाजाजी शुण्ठीनां मरिचस्य च।
पलं तालीशधन्याकं चातुर्जातकमुस्तकम् ॥ ८६ ॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च।
पक्तिशूलं निहन्त्येव दोषत्रयकृतञ्च यत् ॥ ८७ ॥
छर्द्यम्लपित्तमूर्च्छाश्च कासश्वासावरोचकम्।
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत् ॥ ८८ ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञकम् ॥

इति आमलकखण्डः।

अर्शोविकारनिर्दिष्टो लेहो लोहामृताह्वयः।
परिणामशूलशान्त्यर्थं कर्त्तव्यः सम्प्रजानता ॥ ८९ ॥

अथ अन्नद्रवशूलनिदानमाह।

जीर्णेऽजीर्य्यति चाप्यन्ने यच्छूलमुपजायते।
पथ्याऽपथ्यप्रयोगेण भोजनाभोजनेन वा ॥
न शमं याति नियमात् सोऽन्नद्रव उदाहृतः ॥ ९० ॥

अथ चिकित्सामाह।

अन्नद्रवाख्ये शूले तु न तावत् स्वास्थ्यमश्नुते।
यावत्कटुकपित्ताम्लमन्नं न छर्दयेद्द्रवम् ॥ ९१ ॥
वान्तमात्रे जरत्पित्ते शूलमाशु प्रशाम्यति।
पित्तार्त्ते वमनं कार्य्यं कफार्त्ते च विरेचनम् ॥ ९२ ॥
अन्नद्रवे च तत्कार्य्यं जरत्पित्ते यदीरितम्।

आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ॥ ९३ ॥
माषेण्डरीं समधुकां सुस्विन्नां तैलपाचिताम् ।
तादृशीं सर्पिषा खादेदन्नद्रवनिपीड़ितः ॥ ९४ ॥
धात्रीफलभवं चूर्णमयश्चूर्णसमायुतम् ।
यष्टीचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्रदे ॥ ९५ ॥
श्यामाकतण्डुलैः सिद्धं सिद्धं कोद्रवतण्डुलैः ।
प्रियङ्गुतण्डुलैः सिद्धं पायसं शार्करं हितम् ॥ ९६ ॥
गौड़िकं सौरणं कन्दं कूष्माण्डं वापि भक्षयेत् ।
कलाययवशक्तून्वा शक्तून्वा लाजसम्भवान् ॥ ९७ ॥
कुलत्थशक्तूनथवा दध्नाऽद्याद्विस्तरेण तु ।
चणकानामथवा शक्तून् कोद्रवस्यौदनं तथा ॥ ९८ ॥
गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम् ।
ससितं शीतदुग्धेन मर्दितं वा हितं मतम् ॥ ९९ ॥
पटोलपत्रयूषेण खादेच्चणकशक्तुकान् ।
भृष्ट्वा वा चणकान् खादेद्रुजावानथ निस्तुषान् ॥ १०० ॥
कलायान्वा निराहारस्तृषितः क्षीरपो भवेत् ॥ १०१ ॥
अन्नद्रवो दुश्चिकित्स्यो दुर्विज्ञेयो महागदः ।
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ॥ १०२ ॥
अन्नद्रवे जरपित्ते वह्निर्मन्दो भवेद्यतः ।
तस्मादन्नानि पानानि दीपनीयानि कारयेत् ॥ १०३ ॥
कलाययवगोधूमश्यामाकाः कोरदूषकाः ।
राजमाषाः स्थूलमाषाः कुलत्थाः कङ्गुणी यवाः ॥ १०४ ॥
भोजनार्थे प्रशस्ताश्च पुराणाः सप्रियङ्गवः ।
दधि लुप्तरसं क्षीरं गव्यमाजं समाहिषम् ।
घृतं पुराणं शाकार्थं वास्तुको निम्बपल्लवाः ॥ १०५ ॥
कर्कोटकारवेल्लानां पत्राणि स्वरसस्य वा ।

यानि कानि प्रयोज्यानि कासमर्दफलानि च ॥ १०६ ॥
वर्हिणो हरिणा मत्स्या रोहिताः सकपिञ्जलाः।
एतस्मिन्नामये शस्ता मता मुनिचिकित्सकैः ॥ १०७ ॥
गुड़ामलकपथ्यानां चूर्णं प्रत्येकशः पलम्।
त्रिपलं लोहकिट्टस्य तत्सर्वं मधुसर्पिषा ॥ १०८ ॥
समालोड्य ततः खादे दक्षमात्रं प्रमाणतः।
आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥ १०९ ॥
अन्नद्रवं जरत्पित्त मम्लपित्तं सुदारुणम्।
परिणामसमुत्थञ्च शूलं संवत्सरोत्थितम् ॥ ११० ॥

इति गुड़मण्डूरः।

कलायचूर्णौ भागौ द्वौ लोहकिट्टस्य चापरः।
कारवेल्लपलाशानां रसेनैव विमर्दयेत् ॥ १११ ॥
कर्षमात्रां ततश्चैकां भक्षयेद्गुटिकां नरः।
मण्डानुपानात्सा हन्ति जरत्पित्तं सुदुर्जयम् ॥ ११२ ॥

इति कलायचूर्णगुटिका।

एरण्डसप्तकं पेयं हपुषाद्यं सदा हितम्।
धान्वन्तरं सकौमारं घृतं रसायनञ्च यत्।
इति संक्षेपतः प्रोक्त मन्नद्रवचिकित्सितम्।
अन्नद्रवेऽपि यत्प्रोक्तं जरत्पित्तेऽपि तद्धितम्।

इति वङ्गसेनसङ्कलितः परिणामशूलान्नद्रवजरत्पित्तनिदानचिकित्साधिकारः समाप्तः ॥

## अथ उदावर्त्तनिदानमाह ।

वातविण्मूत्रजृम्भाश्रु क्षवोद्गारवमीन्द्रियैः ।
क्षुत्तृष्णाश्वासनिद्राणां धृत्योदावर्त्तसम्भवः ॥ १ ॥
वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजः ।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ २ ॥
आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजः ।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मका स्युः ।
तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥५॥
आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि ।
शिरो गुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥६॥
मन्यास्तम्भः शिरः शूल मर्दितार्द्धावभेदकौ ।
इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ७ ॥
कण्ठास्य पूर्णत्वमतीव तोदः कूजश्च वायोरथवा प्रवृत्तिः ।
उद्गारवेगेऽभिहिते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ॥८॥
कण्डूकोठारुचिव्यङ्ग शोफपाण्ड्वामयज्वराः ।
कुष्ठविसर्पहृल्लासाः छर्दिनिग्रहजा गदाः ॥ ९ ॥
मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरीतत्स्रवणं भवेच्च ते ते विकारा विहते तु शुक्रे ॥१०॥
तन्द्राङ्गमर्दारुचिविभ्रमाश्च क्षुधाभिघातात् कृशता च दृष्टेः ।
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद्धृदये व्यथाच ॥११॥
श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ।
जृम्भाङ्गमर्दाक्षि शिरोऽतिजाड्यं निद्राविघातादथवापि तन्द्रा१२

तृष्णार्दितं परिक्लिष्टं चीणं शूलैरुपद्रुतम् ।
शक्तद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥ १३ ॥

अथ चिकित्सामाह ।

सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः ।
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥ १४ ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिकश्च यः ।
चारवैतरणौ वस्ती युञ्ज्यादत्र चिकित्सकः ॥ १५ ॥
सौवर्चलाढ्यां मदिरां मूत्रेत्वभिहते पिबेत् ।
एलां वाप्यथ मद्येन चीरं वारि तथा पिबेत् ॥ १६ ॥
दुस्पर्शा स्वरसं वापि कषायककुभस्य च ।
एर्वारुवीजं तोयेन पिबेद्वा लवणीकृतम् ॥ १७ ॥
शर्करेचुरसं चीरं द्राचारसमथापि वा ।
सर्वत्रैव प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १८ ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत् ।
अश्रुमोचोऽश्रुजे कार्य्यः स्निग्धस्विन्नस्य देहिनः ॥ १९ ॥
चवजे चवपत्रेण घ्राणस्थेनानयेत् चवम् ।
तथोर्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः समाहृतः ॥ २० ॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ।
वम्याघातं यथादोषं सम्यक् स्नेहादिभिर्जयेत् ॥ २१ ॥
सचारलवणोपेत मभ्यङ्गं वात्र दापयेत् ।
वस्तिशुद्धिकरं सिद्धं चतुर्गुणजलं पयः ॥ २२ ॥
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः ।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥ २३ ॥
अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।
शालिःपयो निरूहाश्च हितं मैथुनमेव च ॥ २४ ॥
चुद्विघाते हितं स्निग्ध मुष्णमल्पाम्बुभोजनम् ।

तृष्णाघाते पिबेन्मन्थं यवागूं वा सुशीतलाम् ॥ २५ ॥
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ।
निद्राघाते पिबेत् क्षीरं सुप्याच्चेष्टकथारतः ॥ २६ ॥

अथ कुपित वातजनिदानमाह ।

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्त्तं करोति च ॥ २७ ॥
वातमूत्रपुरीषाणि कफमेदोवहानि च ।
स्रोतमूत्रपुरीषाणि कफमेदोवहानि च ।
स्रोतांस्युदावर्त्तयति पुरीषं च प्रवर्त्तयेत् ॥ २८ ॥
ततो हृद्बस्तिशूलार्त्तो हृल्लासाऽरतिपीड़ितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ २९ ॥
श्वासकासप्रतिश्याय दाहमोहतृषाज्वरान् ।
वमिहिक्काशिरोरोग मनः श्रवणविभ्रमान् ॥
बहूनन्यांश्च लभते विकारान् वातकोपजान् ॥ ३० ॥

अथ चिकित्सामाह ।

उदावर्त्तिनमभ्यक्तं स्विन्नगात्रमुपाचरेत् ।
वर्त्तिकास्थापनस्वेदवस्तिरेचनकर्मभिः ॥ ३१ ॥
त्रिवृत्सुधापत्रतिलादिशाक ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात्प्रसन्नागुड़सीधुपायी ॥३२॥
क्षारचित्रकहिंग्वाम्ल वेतसैर्भेदनैर्मता ।
यवागूः साधिता वापि त्रिवृतारग्वधकैः पलैः ॥ ३३ ॥
श्यामा दन्ती द्रवन्ती त्वक् महाश्यामाऽमृतात्रिवृत् ।
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः ॥
काम्पिल्लकं करञ्जश्च हेमक्षीरीत्ययं गणः ॥ ३४ ॥
सर्पिस्तैलरजः क्वाथ कल्केष्वन्यतमेषु च ।
उदावर्त्तोदरानाह विषगुल्मविनाशनः ॥ ३५ ॥

वल्मीकमृत्तिकामूलं करञ्जस्य फलत्वचम्।
पिष्ट्वा मूत्रेण सिद्धार्थं मुदावर्त्तप्रलेपनम्॥ ३६॥
हरीतकीयवक्षार पीलूनि त्रिवृता तथा।
घृतैश्चूर्णमिदं पेय मुदावर्त्तविनाशनम्॥ ३७॥
हिङ्गुकुष्ठवचास्वर्जि विड़ञ्चेति द्विरुत्तरम्।
मद्येन चाथ पिप्पल्या मूलकानां रसेन वा।
भुक्त्वा स्निग्धमुदावर्त्ता द्वातगुल्मादिमुच्यते॥ ३८॥
हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्मिताम्।
घृताभ्यक्तां गुदे दद्या दुदावर्त्तविनाशिनीम्॥ ३९॥

इति हिंग्वाद्या वर्त्तिः।

मदनं पिप्पली कुष्ठं वचागौराश्च सर्षपाः।
गुड़क्षीर समायुक्ता फलवर्त्तिः प्रशस्यते॥ ४०॥

इति फलवर्त्तिः।

आगारधूमसिन्धूत्थ तैलयुक्ताम्लमूलकम्।
स्नुक्षं निर्गुण्डिपत्रं वा स्विन्ने पायौ क्षिपेद्बुधः॥ ४१॥
खण्डं पलं त्रिवृतासमसुपकुल्या कर्षचूर्णितं सूक्ष्मम्।
प्राग्भोजने समधु विड़ालपदकं लिहेत्प्राज्ञः॥ ४२॥
एतद्गाढ़पुरीषे पित्तकफार्त्ते च विनियोज्यम्।
स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना॥ ४३॥

इति नाराचचूर्णम्।

सव्योषं पिप्पलीमूलं त्रिवृद्दन्ती सचित्रकम्।
तच्चूर्णं गुड़संमिश्रं भक्षयेत् प्रातरुत्थितः॥ ४४॥
एतद् गुड़ाष्टकं नाम बलवर्णाग्निवर्द्धनम्।
शोथोदावर्त्तगुल्मघ्नं प्लीहपाण्ड्वामयापहम्॥ ४५॥

इति गुड़ाष्टकम्।

मूलकं शुष्कमार्द्रञ्च वर्षाभू पञ्चमूलकम्।
आरेवतफलञ्चाशु पक्वा तेन घृतं पचेत्॥
तत्पीयमानं शमयेदुदावर्त्तमसंशयम्॥ ४६॥

इति मूलकाद्यं घृतम्।

स्थिरादिवर्गस्य पुनर्नवायाः सम्याकपूतीककरञ्जयोश्च।
सिद्धः कषाये द्विपलांशिकानां प्रस्थो घृतात् स्यात्प्रतिबद्धवाते॥४७

इति स्थिराद्यं घृतम्।

यन्महावज्रकं सर्पिर्गुल्मिनां विहितं च यत्।
उदरिणामशेषेण तदुदावर्त्तिने हितम्॥ ४८॥
उदावर्त्तोदरगदे पक्वं सर्पिर्यदीरितम्।
एतद् द्वित्रिचतुर्मासान् दद्यादुष्णाम्बुना भिषक्॥ ४९॥
वाय्वक्षीररसैः सेव्यं यच्च वातानुलोमनम्।
वातघ्नैर्लवणाद्यैश्च रसाद्यैरन्नमाचरेत्॥ ५०॥

इति वङ्गसेनसङ्कलितः उदावर्त्तनिदानचिकित्साधिकारः समाप्तः।

---

## अथ आनाहनिदानमाह।

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन।
प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति॥ १॥
तस्मिन् भवत्यामसमुद्भवे च तृष्णाप्रतिश्याय शिरोविदाहाः।
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भमुद्गारविघातनञ्च॥ २॥
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः।
श्वासश्च पक्वाशयजे भवन्ति तथालसोक्तानि च लक्षणानि॥३॥

अथ चिकित्सामाह।

आमोद्भवे वातमुपक्रमेत संसर्गभक्तक्रमदीपनीयैः।

विषुचिकायामभिकीर्त्तितानि द्रव्याणि वैरेचनिकानि चापि॥५

त्रिवृद्धरीतकी श्यामा स्नुहीक्षीरेण पेषयेत्।
वटिका मूत्रपीतास्ता श्रेष्ठाश्चानाहभेदिकाः॥ ६॥

इति त्रिवृताद्या वटिकाः।

मदनं पिप्पलीकुष्ठं वचागौराश्च सर्षपाः।
गुड़क्षीरसमायुक्ताः फलवर्त्तिः प्रशस्यते॥ ७॥
आनाहं च गुदे शूलं कुक्षिशूलकमेव च।
तस्य वातमुदावर्त्तं योगेनानेन शाम्यति॥ ८॥

इति फलवर्त्तिः।

रामठधूमविड़्व्योष गुड़मूत्रविपाचिता।
गुदेऽङ्गुष्ठ वर्त्तिर्विधेयानाहशूलनुत्॥ ९॥

इति रामठाद्या वर्त्तिः।

त्रिवृत् कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः।
गुटिका गुड़तुल्यास्तु विड्विबन्धगदापहाः॥ १०॥

इति त्रिवृदाद्या गुटी।

वर्त्तिस्त्रिकटुकसैन्धव सर्षपगृहधूममदनकुष्ठफलैः।
मधुनि गुड़े वा पक्के विदधीताङ्गुष्ठपरिमाणा॥ ११॥
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृताभ्यक्ता।
आनाहोदावर्त्तशमनी जठरगुल्मनिवारणी॥ १२॥

इति त्रिकटुकाद्या वर्त्तिः।

द्विरुत्तराहिङ्गुवचा सकुष्ठं सुवर्चिका चैव विड़ङ्गचूर्णम्।
सुखाम्बुनानाहविषूचिकार्त्ति हृद्रोगगुल्मोर्ध्वसमीरणेषु॥१३॥

इति द्विरुत्तराहिंग्वाद्यं चूर्णम्।

हिङ्गूग्रगन्धाविड़शुण्ठ्यजाजी हरीतकीपुष्करमूलकुष्ठम्।
यथोत्तरं भागविवृद्धमेतत् प्लीहोदरानाहविषूचिकासु॥ १४॥

इति हिंग्वाद्यं चूर्णम्।

वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान्।
उष्णाम्बुनानाहविमूढ़वातान् पीत्वा जयेदाशु रसौदनाशी॥१५

इति वचाद्यं चूर्णम्।

आनाहेऽपि प्रयुञ्जीत उदावर्त्तहरीं क्रियाम्॥

इति वङ्गसेनसङ्कलित आनाहनिदानचिकित्साधिकारः समाप्तः॥

---

## अथ गुल्मनिदानमाह।

दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः।
कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम्॥ १॥
तस्य पञ्चविधं स्थानं पार्श्वहृद्बस्तिनाभयः॥ २॥
हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः।
वृत्तश्चयोपचयवान् सगुल्म इति कीर्त्तितः॥ ३॥
स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः।
पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः॥ ४॥
उद्गारबाहुल्यपुरीषबन्धस्तृप्त्यक्षमत्वान्त्रविकूजनानि।
आटोपमाध्मानमपाकशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम्॥ ५॥
अरुचिः कृच्छ्रविण्मूत्रं वातश्चान्त्रविकूजनम्।
आनाहश्चोर्द्ध्ववातत्वं सर्वगुल्मेषु लक्षणम्॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च॥६॥
शोकाभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः।
यत् स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम्॥७॥
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजञ्च।
करोति जीर्णेऽत्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च॥८॥
वातात्सगुल्मो नच तत्र रूक्षं कषायतिक्तं कटु चोपसेवेत्॥ ९॥

अथ चिकित्सामाह।

प्रागेव वातिके गुल्मे सुस्निग्धं स्वेदितं नरम्।
रेचितं स्नेहरेकैश्च निरूहैः सानुवासनैः॥
उपाचरेद्भिषक् प्राज्ञो मात्राकालविवेकतः॥ १०॥
मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम्।
सुरामण्डेन दातव्यं वातगुल्मरुजापहम्॥ ११॥
नागरार्द्धपलं पिष्टं द्वे पले चित्रकस्य च।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाययेत्॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्॥ १२॥
हिङ्गुसौवर्चलं शुण्ठी दाड़िमं साम्लवेतसम्।
श्वासहृद्रोगशमनमिदं स्याद्धिङ्गुपञ्चकम्॥ १३॥

इति हिङ्गुपञ्चकम्।

स्वर्जिका कुष्ठसहिता क्षारः केतकिजोऽपि वा।
पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम्॥ १४॥
पिबेदैरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः॥ १५॥
पञ्चमूलकषायेण सक्षारेण शिलाजतु।
पिबेत्तस्य प्रयोगेण वातगुल्माद्विमुच्यते॥ १६॥
वातगुल्मप्रतिकारे प्रकुप्यति यदा कफः।
शस्तमुल्लेखनं तत्र चूर्णाद्याश्च कफापहाः॥ १७॥
यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम्।
दोषघ्नैरप्यशान्तौ च गुल्मे शोणितमोक्षणम्॥ १८॥
त्र्यूषणं त्रिफला धात्री विड़ङ्गचव्यचित्रकैः।
कल्कैरेतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत्॥ १९॥

इति त्र्यूषणाद्यं घृतम्।

हपुषा व्योषपृथ्वीका चव्यचित्रकसैन्धवैः।

साजाजी पिप्पलीमूलं दीप्यकैर्विपचेद् घृतम् ॥ २० ॥
सकोलमूलकरसं सक्षारं दधिदाड़िमम् ।
तत्परं वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥ २१ ॥
योन्यर्शो ग्रहणीदोषश्वासकासारुचिज्वरान् ।
पार्श्वहृद्वस्तिशूलञ्च घृतमेतद्व्यपोहति ॥ २२ ॥
पञ्चादीनि च यत्र स्युर्द्रव्याणि स्नेहसंविधौ ।
तत्र स्नेह समान्याहुरर्वाक् स्याच्च चतुर्गुणम् ॥ २३ ॥

इति हपुषाद्यं घृतम् ।

चित्रकव्योषसिन्धूत्थ पृथ्वीका चव्यदाड़िमैः ।
दीप्यकग्रन्थिकाजाजी हपुषा धान्यकैः समैः ॥ २४ ॥
दध्यारनालबदरमूलकस्वरसैर्घृतम् ।
तत्पिबेद्वातगुल्माग्निदौर्बल्याटोपशूलनुत् ॥ २५ ॥

इति चित्रकाद्यं घृतम् ।

हिङ्गुसौवर्चलव्योष विड़दाड़िममाषकैः ।
पुष्कराजाजीधान्याम्लवेतसक्षारचित्रकैः ॥ २६ ॥
शटीवचाजगन्धैला स्वरसैश्च विपाचितम् ।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ २७ ॥

इति हिंग्वाद्यं घृतम् ।

तित्तिरांश्च मयूरांश्च कुक्कुटांश्चैव वर्तिकान् ।
सर्पिः शालिप्रसन्नांश्च वातगुल्मे प्रयोजयेत् ॥ २८ ॥

इति वातगुल्मचिकित्सा ।

अथ पित्तगुल्मनिदानमाह ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरं प्रदुष्टं पैत्तस्य गुल्मस्य निदानमुक्तम् ॥२९॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्य्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहं पैत्तिकगुल्मरूपम् ॥३०॥

अथ चिकित्सामाह।

काकोल्यादि महातिक्तवासाद्यैः पित्तगुल्मिनम्।
स्नेहितं स्रंसयेत् पश्चात् योजयेद्वस्तिकर्मणा ॥ ३१ ॥
विरेकाय सिताक्तं वा कम्पिल्लं वा समाक्षिकम्।
द्राक्षाभयारसं गुल्मे पैत्तिके सगुड़ं पिबेत् ॥ ३२ ॥
मधुकं चन्दनं द्राक्षा पयसा मधुकं मधु।
पिबेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ॥ ३३ ॥

अथ पक्वगुल्मलक्षणमाह।

गुरुः कठिनसंस्थानो गूढ़मांसोत्तराश्रयः।
अविवर्णः स्थिरश्चैव स पक्वो गुल्म इष्यते ॥ ३४ ॥
दाहशूलादिसंक्षोभ स्वप्ननाशारुचिज्वरैः।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥ ३५ ॥
पक्वे तु व्रणवत्कार्य्यं व्यधशोधनरोपणम्।
स्वयमूर्द्ध्वमधो वापि स चेद्दोषः प्रपद्यते ॥ ३६ ॥
द्वादशाहमुपेक्षेत रक्षन् वैद्यैरुपद्रवान्।
परञ्च शोधनं सर्पिः शुद्धे समधुतिक्तकम् ॥ ३७ ॥
जले दशगुणे साध्यं त्रायमाणा चतुष्पलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥ ३८ ॥
रोहिणी कटुकामुस्त त्रायमाणा दुरालभा।
द्राक्षा तामलकी वीरा जीवन्ती चन्दनोत्पलैः ॥ ३९ ॥
रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च।
एतानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥ ४० ॥
पित्तगुल्मं रक्तगुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतत् घृतोत्तमम् ॥ ४१ ॥

इति त्रायमाणाद्यं घृतम्।

द्राक्षां मधुकखर्ज्जूरं विदारीं सशतावरीम्।

परूषकाणि त्रिफलां साधयेत्पलसंमिताम् ॥ ४२ ॥
जलाढ़के पादशेषे रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभया कल्कपादिकम् ॥ ४३ ॥
साधयेत्तु घृतं सिद्धं शर्करा क्षौद्रपादिकम्।
प्रयोगाद्दातगुल्मघ्नं सर्वपित्तविकारनुत् ॥ ४४ ॥

इति द्राक्षाद्यं घृतम्।

शालिगोच्छागदुग्धञ्च पटोलं मिश्रितं घृतम्।
द्राक्षापरूषकं धात्री खर्जूरं दाड़िमं सिता ॥
पथ्यार्थं पैत्तिके गुल्मे बलातैलञ्च योजयेत् ॥ ४५ ॥

इति पित्तगुल्मचिकित्सा।

अथ कफगुल्मनिदानमाह।

शीतं गुरुस्निग्धमचेष्टनञ्च संपूरणं प्रस्वपनं दिवा च।
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दृष्टो निचयात्मकस्य ॥ ४६ ॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥४७॥

अथ चिकित्सामाह।

स्नेहोपनाहनस्वेद तीक्ष्णस्रंसनवस्तिभिः।
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ ४८ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ ४९ ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम्।
कफगुल्मे पिबेत्काले जीर्णं माध्वीकमेव च ॥ ५० ॥
यवानीचूर्णितं तक्रं विड़ेन लवणीकृतम्।
पिबेत्सन्दीपनं वातमूत्रवर्चोऽनुलोमनम् ॥ ५१ ॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥ ५२ ॥

क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणी पाण्डुरोगघ्नं प्लीहकासज्वरापहम्॥ ५३॥

इति क्षीरषट्पलं घृतम्।

सव्योषक्षारलवणं दशमूलश्रृतं घृतम्।
कफगुल्मं जयत्याशु सहिङ्गुविड़दाड़िमम्॥ ५४॥

इति व्योषाद्यं घृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारिगन्धाद्यमापोथ्य सलिलाढ़के॥ ५५॥
पादावशेषे पूते च पिप्पली नागरं वचा।
विड़ङ्गं सैन्धवं हिङ्गु यावशूकं विड़ं शटी॥ ५६॥
चित्रकं मधुकं रास्ना पिष्टा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत्॥ ५७॥
एतद्भल्लातकं सर्पिः कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वास ग्रहणी कासरोगनुत्॥ ५८॥

इति भल्लातकघृतम्।

त्रिवृता त्रिफला दन्ती दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्का चतुर्भागे स्थिते रसे॥ ५९॥
सर्पिरैरण्डजं तैलं क्षीरं तत्र प्रयोजयेत्।
सस्निग्धो मिश्रकः स्नेहः सक्षौद्रः कफगुल्मनुत्॥ ६०॥
कफवातविकारेषु कुष्ठप्लीहोदरेषु च।
प्रयोज्यो मिश्रकः स्नेहो योनिशूले तथाधिके॥ ६१॥

इति मिश्रकः स्नेहः।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च॥ ६२॥
अष्टभागावशेषं तं रसं पूतमधिश्रयेत्।

दन्ती समं गुड़ं पूतं दद्यात् तत्राभयाश्च ताः ॥ ६३ ॥
तैलार्द्धकुड़वं चैव त्रिवृतायाश्चतुष्पलम् ।
चूर्णितं चार्द्धपलिकं पिप्पली विश्वभेषजम् ॥ ६४ ॥
तत्साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
क्षिपेच्चूर्णं पलञ्चैकं त्वगेला पत्रकेसरात् ॥ ६५ ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ६६ ॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीदोषान् कामलां विषमज्वरान् ॥ ६७ ॥
गुल्मं प्लीहानमानाहमेतान् हन्त्युपसेविता ॥

इति दन्तीहरीतक्यावलेहः ।

कुलत्थान् जीर्णशालींश्च षष्टिकान्नवजाङ्गलान् ।
मध्यतैलघृतं तक्रं कफगुल्मे प्रयोजयेत् ॥ ६८ ॥

इति कफगुल्मचिकित्सा ।

अथ संसर्गजानाह ।

निमित्तलिङ्गानुपलभ्य गुल्मे संसर्गजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानुपलभ्य गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥६९॥
हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिड़ी चाम्लवेतसम् ॥ ७० ॥
दाड़िमं पौष्करं धान्यमजाजीचित्रकं वचाम् ।
द्वौ क्षारौ पञ्चलवणं चव्यं चैकत्र योजयेत् ॥ ७१ ॥
चूर्णमेतत्प्रयोक्तव्यमन्नपानेष्वनव्ययम् ।
प्रागभुक्तमथवा पेयं मद्येनोष्णोदकेन च ॥ ७२ ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे ॥ ७३ ॥
ग्रहण्यर्शो विकारेषु प्लीहपाण्ड्वामयेऽरुचौ ।

उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥ ७४ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिका कार्य्याः कार्षिकाः स्युस्ततोऽधिकम् ॥७५॥

इति हिङ्ग्वादिचूर्णम् ।

हिङ्गुग्रन्थिकधान्यजीरकवचा चव्याग्निपाठा शटी ।
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाड़िमम् ॥
पथ्या पौष्करवेतसाम्लहपुषाजाज्यस्तदेभिः कृतम् ।
चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः ॥ ७६ ॥
गुल्माध्मानगुदाङ्कुरग्रहणिकोदावर्त्तसंज्ञान् गदान्
प्रत्याध्मानगदोदराश्मरियुतांस्तूनीद्वयारोचकान् ।
ऊरुस्तम्भमतिभ्रमञ्च मनसो वाधिर्य्यमष्ठीलिकां
प्रत्यष्ठीलिकया सहापहरते प्राक् पीतमुष्णाम्बुना ॥ ७७ ॥
हृत्कुक्षिवङ्क्षणकटीजठरान्तरेषु
वस्तिस्तनांसफलकेषु च पार्श्वयोश्च ।
शूलानि नाशयति वातबलासजानि
हिङ्ग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम् ॥ ७८ ॥

इति द्वितीयहिङ्ग्वाद्यं चूर्णम् ।

गुल्मवान्मदिरामण्डैस्तैलमैरण्डजं पिबेत् ।
बलासे प्रबले वाते पित्ते तु क्षीरसंयुतम् ॥ ७९ ॥

इति संसृष्टगुल्मचिकित्सा ।

अथ त्रिदोषगुल्मनिदानम् ।

महारुजं दाहपरीतमश्मवत्
घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनः शरीराग्निबलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ ८० ॥

अथ चिकित्सामाह ।

धीमानुपाचरेद्गुल्मं प्रत्याख्याय त्रिदोषजम् ।
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥ ८१ ॥
धात्रीफलानां स्वरसे षड़ङ्गं विपचेद्घृतम् ।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ८२ ॥

इति धात्रीफलकं घृतम् । इति त्रिदोषगुल्मचिकित्सा ।

लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
वृंहणञ्च भवेदन्नं तद्धितं सर्वगुल्मिनाम् ॥ ८३ ॥
गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या ।
मारुते तु विजिते समुदीर्णं दोषमल्पमपि कर्म निहन्यात् ॥८४॥
सुखोष्णजाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः ।
कटुत्रिकसमायुक्ताः हिताः पानेषु गुल्मिनाम् ॥ ८५ ॥
कुम्भीपक्वेष्टका स्वेदान् कारयेत् कुशलो भिषक् ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः साल्वणादयः ॥ ८६ ॥
स्थानावसिक्तो रक्तस्य बाहुमध्ये शिराव्यधः ।
स्वेदानुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ८७ ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्वा विबन्धं गुल्मस्य स्वेदो गुल्ममपोहति ॥ ८८ ॥
वल्लूरं मूलकं मत्स्यान् शुष्कशाकांश्च वैदलम् ।
न खादेदालुकं गुल्मी मधुराणि फलानि च ॥ ८९ ॥
ऊर्द्धवातञ्च मनुजं गुल्मिनञ्च निरूहयेत् ॥ ९० ॥
वचाविड़ाभया शुण्ठी हिङ्गुकृष्णाग्निदीप्यकाः ।
द्वित्रिषट् चतुरेकाष्ट सप्तपञ्चांशिकाः क्रमात् ॥ ९१ ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।
शूलार्शः श्वासकासघ्नं ग्रहणीदीपनं परम् ॥ ९२ ॥

इति वचाद्यं चूर्णम् ।

पाठा निकुम्भरजनी त्रिकटुत्रिफलाग्निकम्।
लवणं वृक्षबीजञ्च चूर्णं गोमूत्रसाधितम्॥ ९३॥
घनीभूते तु वटिकां कृत्वा खादेत्तु गुल्मवान्।
गुल्मप्लीहाग्निसादांश्च नाशयेयुरशेषतः॥ ९४॥
हिङ्गु पुष्करमूलानि तुम्बुरूणि हरीतकीम्।
श्यामां विडं सैन्धवञ्च यवक्षारं महौषधम्॥ ९५॥
यवक्वाथोदकेनैव घृतभृष्टन्तु पाययेत्।
तेनास्य भिद्यते गुल्मः समूलः सपरिग्रहः॥ ९६॥
वचा हरीतकी हिङ्गु सैन्धवं साम्लवेतसम्।
यवक्षारं यवानीञ्च पिबेदुष्णेन वारिणा॥ ९७॥
एतद्धि गुल्मनिचयं समूलं सपरिग्रहम्।
भिद्यते सप्तरात्रेण वह्नेर्वृद्धिं करोति च॥ ९८॥
वातवर्चोनिरोधे वा सामुद्रार्द्रार्कसर्षपैः।
कृत्वा पायौ विधातव्या वर्त्तयो मरिचोत्तरैः॥ ९९॥
खादेद्वाप्यङ्कुरान् भृष्ट्वा पूतीकन्टपवृक्षयोः।
पिबेच्चित्रकनागरं वा सगुड़ां वा हरीतकीम्॥ १००॥
गुग्गुलुं त्रिवृतां दन्तीं द्रवन्तीं सैन्धवं वचाम्।
मूत्रमद्यपयो द्राक्षा रसैर्वीक्ष्य यथा बलम्॥ १०१॥
क्षारद्वयानलव्योष नीलीलवणपञ्चकम्।
चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम्॥ १०२॥

षड्भिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावककल्कपक्कम्।
प्रस्थं घृतस्य दशमूलवृकभार्गी-
क्वाथेन वा पयसि दध्नि च षट्पलाख्यम्॥ १०३॥
गुल्मोदरारुचिभगन्दरवह्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान्।

सद्यः शमं नयति ये च कफानिलोत्था-
स्तानाशु नाशयति दुर्जयमग्निमान्द्यम् ॥ १०४ ॥

इति भार्गीषट्पलकं घृतम् ।

दन्त्याः चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः ।
पचेत्प्रस्थं घृताद्गुल्मप्लीहपाण्ड्वर्त्तिशूलनुत् ॥ १०५ ॥
त्रिवृदर्कस्नुहीक्षीरकम्पिल्लैश्च पलांशकैः ।
सैन्धवद्विपलोपेतैः हविः कुड़वमम्भसि ॥ १०१ ॥
पक्वमस्मात् पिबेत्कर्षमुष्णवार्य्यनुपानकम् ।
सर्वगुल्मोदरध्वंसि स्रंसनं विन्दुसंज्ञकम् ॥ १०७ ॥

इति विन्दुघृतम् ।

विड़दाड़िमसिन्धूत्थ हुतभुग् व्योषजीरकैः ।
हिङ्गु सौवर्चलक्षार चुक्रवृक्षाम्लवेतसैः ॥ १०८ ॥
बीजपूररसोपेतैः सर्पिर्दधि चतुर्गुणम् ।
साधितं दधिकं नाम्ना गुल्महृत्पार्श्वशूलनुत् ॥ १०९ ॥

इति दधिकघृतम् ।

नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विड़ङ्गं व्याघ्रीञ्च पलिकानि जलाढ़के ॥ ११० ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ १११ ॥
ततो घृतपलं दद्याद् यवागूमण्डमिश्रितम् ।
जीर्णे सम्यग्विरिक्तञ्च भोजयेद्रसभोजनम् ॥ ११२ ॥
गुल्मकुष्ठोदरव्यङ्ग शोफपाण्ड्वामयज्वरान् ।
श्वित्रं प्लीहानमानाहं घृतमेतद्व्यपोहति ॥ ११३ ॥

इति नीलिनीघृतम्

वचापुष्करकुष्ठैला मदनामरसिन्धुजैः ।
काकोलीद्वययष्ट्याह्व मेदायुग्मकुटन्नटैः ॥ ११४ ॥

पाठाजीरकजीवन्ती भार्गी चन्दनकट्फलैः।
सरलागुरुविल्वाम्र वाजिगन्धाग्निवृद्धिभिः॥ ११५॥
विड़ङ्गारग्वधश्यामा त्रिवृन्मागधिकादिभिः।
पिष्टैस्तैलं पचेत् चीरे पञ्चमूलीरसान्विते॥ ११६॥
गुल्मानाहाग्निमान्द्यार्शो ग्रहणीमूत्रसङ्गिनाम्।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिषु॥ ११७॥

इति वचाद्यं तैलम्।

शटीपुष्करमूलञ्च दन्तीचित्रकमाढ़की।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत्॥ ११८॥
त्रिवृतायाः पलं कुर्य्यात् त्रीन् कर्षांश्चैव हिङ्गुनः।
पलं हि लवणानाञ्च यवक्षारपलं तथा॥ ११९॥
सद्यः पुष्करमूलस्य दन्तीचित्रकयोरपि।
द्वे द्वे पले तथा शुण्ठ्या द्वे पले चाम्लवेतसात्॥ १२०॥
यवान्यजाजीमरिचं धान्यकं गिरिकर्णिका।
उपकुञ्चिकाजमोदा च कुर्य्यादर्द्धपलोन्मितान्॥ १२१॥
हरीतकीपले द्वे च विड़ङ्गं दाड़िमं तथा।
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक्॥ १२२॥
एकान्तासाञ्च द्वे तिस्रो गुटिकास्ताः सुखाम्बुना।
अम्लैर्मद्यैश्च पातव्या घृतेन पयसाथवा॥ १२३॥
एताः काङ्कायनेनोक्ताः गुटिका गुल्मभेदिकाः।
अर्शो हृद्ग्रहणीरोग क्रमिणाञ्च विनाशिकाः॥ १२४॥
गोमूत्रेण निहन्त्युग्र श्लेष्मगुल्मं चिरोत्थितम्।
क्षीरेण पित्तगुल्मन्तु मद्येन श्लेष्मवातिकम्॥ १२५॥
त्रिफलारसमूत्राभ्यां निचयं सान्निपातिकम्।
रक्तगुल्मञ्च नारीणां पयसा कारभेण तु॥ १२६॥

इति काङ्कायनगुटिका।

हिङ्गुत्रिकटुकवचाजमोदा धान्याजगन्धा दाड़िमतिन्तिड़ीका पाठाचित्रकचव्यसैन्धवविड़सौवर्चलयवक्षारस्वर्जिका पिप्पलीमूलाम्लवेतसशटीपुष्करहपुषाजाजीपथ्याः। संचूर्ण्य मातुलुङ्गाम्लेन बहुशः परिभाव्य गुटिकाः कारयेत्। ततः प्रातरेकैकां वातरोगी च भक्षयेत्। एवं खलु योगो गुल्मश्वासकासारोचकहृद्रोगान् हरति अयं जन्तून् प्रति प्रयोगस्यात्यर्थमुपयुज्यत इति। इति हिंग्वादिवटिकाप्रकारः संस्कृतेनोक्तः।

अपामार्गपलांशानां तथैवेक्षुरसस्य च।
स्नुह्यर्कयोर्मातुलुङ्ग कुटजस्याग्निकस्य च ॥ १२७ ॥
तिलसर्षपमूलानि दग्ध्वा भस्मानि कारयेत्।
गोजाविरमूत्रसहितं सर्पिस्तैलसमन्वितम् ॥ १२८ ॥
त्र्यूषणं पिप्पलीमूलं चित्रकं शुष्कमूलकम्।
मूर्वामतिविषां पाठां कुष्ठं भल्लातकानि च ॥ १२९ ॥
चव्यं पूतिकरञ्जञ्च विल्वं कटुकरोहिणीम्।
द्वौ क्षारौ पञ्चलवणं समभागानि कारयेत् ॥ १३० ॥
सन्नीय चूर्णलवणैः शनैर्मृद्वग्निना पचेत्।
तदग्निचूर्णं निर्धूमं कृत्वा चूर्णं सुशीतलम् ॥ १३१ ॥
अङ्गुलीग्रहमालोड्य सुरामण्डेन पाययेत्।
मस्त्वारणालमूत्रैस्तु युक्तः स्याद्वातगुल्मनुत् ॥ १३२ ॥
शूलवातोदरप्लीहपाण्डूामय किलासकम्।
हन्यादारोग्यलवणं प्रशस्तं कफवातनुत् ॥ १३३ ॥

इति आरोग्यलवणम्।

नादेयी कुटजार्कशिग्रु बृहती स्नुग्बिल्वभल्लातक-
व्याघ्री किंशुकपारिभद्रकजटापामार्गनीपाग्निकान्।
वासामुष्ककपाटलां सलवणां दग्ध्वा जले पाचितम्

हिङ्ग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ १३४ ॥

इति नादेयीचारः ।

कोऽसौ हिङ्ग्वादिर्यस्य प्रतिवापः क्रियते ?

हिङ्ग्ग्रगन्धाविड़शुण्ठ्यजाजी हरीतकीपुष्करमूलकुष्ठम् ।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविषूचिकासु ॥ १३५ ॥

इति सामान्यविधिः ।

अथ रक्तगुल्मनिदानमाह ।

नवप्रसूता हितभोजना या या चामगर्भं विसृजेदृतौ वा ।
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम्॥१३६
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध ।
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः ॥
सरौधिरः स्त्रीभव एव गुल्मो मासि व्यतीते दशमे चिकित्स्यः१३७

अथ चिकित्सामाह ।

रौधिरस्य तु गुल्मस्य गर्भकालक्रमेण च ।
सुस्निग्धस्विन्नकायायै योज्यं स्नेहविरेचनम् ॥ १३८ ॥
शताह्वा चिरविल्वत्वक् दारुभार्गी कणाभवः ।
कल्कः पीतो जयेद्गुल्मं तिलक्वाथेन रक्तजम् ॥ १३९ ॥
तिलक्वाथो गुड़व्योष घृतभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ १४० ॥
पीतः सुरारसो युक्त्या मदिरा वाशु गुल्मनुत् ॥ १४१ ॥
सुण्डिरेचनिकाचूर्णं शर्करामाक्षिकान्वितम् ।
विदधीतास्रगुल्मिन्यां मलसंरेचनाय च ॥ १४२ ॥
विशेषमपरञ्चास्याः शृणु रक्तप्रभेदनम् ।
पलाशक्षारतोयेन सर्पिः सिद्धं पिबेच्च सा ॥ १४३ ॥
यस्मिन्नवसरे क्षारतोयसाध्यघृतादिषु ।
फेनोद्गमस्य निष्पत्तिर्नष्टदुग्धसमाकृतिः ॥ १४४ ॥

स एव तस्य पाकस्य कालो नेतरलक्षणः ॥

इति पलाशक्षारघृतम् ।

कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका ।
पक्वाम्बुनाथ तत् क्वाथं जीवनीयोपकल्पितम् ॥ १४५ ॥
घृतं पक्वा नवं पीतं रक्तपित्तास्रगुल्मनुत् ।
दाहतृष्णाज्वरच्छर्दि योनिदोषहरं परम् ॥ १४६ ॥

इति कह्लारकं घृतम् ।

उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरी हितः ।
अतिप्रवृत्तमस्रन्तु भिन्ने गुल्मे निवारयेत् ॥ १४७ ॥
रक्तपित्तहरैर्योगै र्वातघ्नैश्च मरुद्गदान् ।
गुर्वभिष्यन्दि कुर्य्याद्वै रक्षन्नग्निबलं सदा ॥ १४८ ॥
गुल्मवदन्नपानानि यथावस्थं प्रयोजयेत् ॥ १४९ ॥

इति रक्तगुल्मचिकित्सा ।

असाध्यलक्षणान्याह ।

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः शिरानद्धो यदा कूर्म्म इवोन्नतः ॥ १५० ॥
दौर्बल्यारुचिहृल्लास कासच्छर्द्यरुचिज्वरैः ।
तृष्णातन्द्रा प्रतिश्यायै र्युज्यते न स सिध्यति ॥ १५१ ॥
गृहीत्वा सरुजं श्वासं छर्द्यतीसारपीड़ितम् ।
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ १५२ ॥
श्वासः शूलं पिपासान्नविद्वेषो ग्रन्थिमूढ़ता ।
जायते दुर्बलत्वञ्च गुल्मिनो मरणाय वै ॥ १५३ ॥

इति वङ्गसेनसङ्कलितः गुल्मनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ हृद्रोगनिदानमाह ।

अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः ।
सञ्चिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥

जठरानलदौर्बल्यादविपक्वस्तु यो रसः ।
स आमसंज्ञको देहे सर्वदोषप्रकोपजः ॥ २ ॥
अन्यदोषेभ्य एवादौ विरुद्धेभ्योऽन्यमूर्च्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ ३ ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ ४ ॥
आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ॥ ५ ॥

### अथ चिकित्सामाह ।

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥ ६ ॥
पिप्पल्येलावचाहिङ्गु यवक्षारोऽथ सैन्धवम् ।
सौवर्चलमथो शुण्ठी ह्यजमोदा च चूर्णितम् ॥ ७ ॥
फलधान्याम्लकौलत्थदधिमद्यवसादिभिः ।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन च ॥ ८ ॥

सपुष्कराह्वं फलपूरमूलं महौषधं शट्यभया च कल्कः ।
क्षाराम्लसर्पिर्लवणैर्विमिश्रः स्युर्वातहृद्रोगविकर्त्तिकाघ्नः ॥ ९ ॥
क्वाथः कृतः पौष्करमातुलुङ्गपलाशपूतीकशटीसुराह्वैः ।
सनागराजाजिवचायवानी सक्षार उष्णो लवणेन पेयः ॥ १० ॥
हरीतकीपुष्करनागराह्वयैर्यवैर्वयस्थालवणैश्च कल्कैः ।
सहिङ्गुभिः साधितमेभिः सर्पिः हितञ्च हृत्पार्श्वगदेऽनिलोत्थे॥ ११

इति हरीतक्याद्यं घृतम् ।

पुनर्नवां दारु सपञ्चमूलं रास्नां यवान् कोलकपित्थविल्वम्।
पक्वा जले तेन पचेत्तु तैलमभ्यङ्गपानेऽनिलहृद्गदघ्नम्॥ १२॥

इति पुनर्नवाद्यं तैलम्।

बल्यमांसरसक्षीर घृतशालिञ्च भोजयेत्।
वातघ्नसिद्धं तैलञ्च वस्तिं दद्याद्विचक्षणः॥ १३॥

इति वातहृद्रोगचिकित्सा।

अथ पैत्तिकहृद्रोगनिदानम्।

तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदयक्लमः।
धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च॥ १४॥

अथ चिकित्सामाह।

श्रीपर्णीमधुकक्षौद्र सितागुड़जलैर्वमेत्।
पित्तोपसृष्टे हृदये सेवेत मधुरैः सृतम्।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्॥ १५॥
शीताः प्रदेहाः परिशोधनञ्च तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरुषकैः स्याच्छुद्धे च पित्तापहमन्नपानम्॥१६॥
पिष्ट्वा पिबेद्वापि सिताजलेन यष्ट्याह्वयं तिक्तकरोहिणीं च॥१७॥
अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा बलया मधुकेन वा॥ १८॥

इति अर्जुनादिक्षीरपाकम्।

घृतेन दुग्धेन गुड़ाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते॥ १९॥

इति ककुभादिचूर्णम्।

कशेरुकाशैवलशृङ्गवेरप्रपौण्डरीकं मधुकं विसञ्च।
ग्रन्थिञ्च सर्पिः पयसा पचेत्तैः क्षौद्रान्वितं पित्तगदामयघ्नम्॥२०॥

इति कसेरुकाद्यं घृतम्।

श्रेयसी शर्करा द्राक्षा जीवकर्षभकोत्पलैः।

बलाखर्जूरकाकोली मेदायुग्मैश्च साधितम् ॥ २१ ॥
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ॥

इति श्रेयस्याद्यं घृतम्।

स्थिरादिकल्कवत्सर्पिः क्षीरेणेक्षुरसेन वा।
द्राक्षारसेन पक्वं वा पित्तरोगविनाशनम् ॥ २२ ॥

इति स्थिराद्यं घृतम्।

सक्षौद्रं वितरेद्दस्ति तैलं मधुकसंयुतम् ॥ २३ ॥

इति पित्तहृद्रोगचिकित्सा।

अथ कफहृद्रोगनिदानमाह।

गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम्।
माधुर्य्यमपि चास्यस्य बलासावतते हृदि ॥ २४ ॥

अथ चिकित्सामाह।

हृद्रोगे कफजे खिन्नं वमितं लङ्घितं नरम्।
कफघ्नैर्भेषजैर्युञ्ज्यात् ज्ञात्वा दोषबलाबलम् ॥ २५ ॥
वचानिम्बकषायाभ्यां वाम्यं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत् ॥ २६ ॥
कुम्भी शटी बला रास्ना शुण्ठी पथ्या सपौष्कराः।
चूर्णिता वा सृता मूत्रे पातव्याः कफहृद्ग्रहे ॥ २७ ॥
सूक्ष्मैला मागधीमूलं प्रलीढ़ं सर्पिषा सह।
नाशयत्याशु हृद्रोगं गुल्मानपि विशेषतः ॥ २८ ॥
मुस्तैलाचन्दनोशीर जीवनी व्योषचित्रकाः।
विल्वत्वक् कटुकादारु दार्वीत्वक् पर्पटत्वचः ॥ २९ ॥
पटोलं निम्बषड्ग्रन्था ऋद्धिभूनिम्बशिग्रुकाः।
चूर्णं त्रायन्ती सौराष्ट्री केशरातिविषाः समाः ॥ ३० ॥
तिक्ताख्यं हन्ति हृद्रोगं शूलहृत् सन्निपातजित्।

इति तिक्तकं चूर्णम्।

फलतैलं विदध्याच्च वस्तौ वस्तिविशारदः ॥ ३२ ॥
कौलत्थधान्यैश्च रसैर्यवान्नपानानि तीक्ष्णानि सशर्कराणि ॥३२॥

इति कफहृद्रोगचिकित्सा ।

अथ निदानमाह ।

विद्यात्त्रिदोषन्त्वपि सर्वलिङ्गं तीव्रार्त्तितोदं कृमिजं सकण्डूम् ॥३३
उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ।
अरुचिः श्यावनेत्रत्वं शोथश्च कृमिजे भवेत् ॥ ३४ ॥
क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः ।
कृमिजे कृमिजातीनां श्लैष्मिकाणाञ्च ये मताः ॥ ३५ ॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम् ।
हीनाधिकं मध्यमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म्म शस्तम् ॥३६॥
हृद्रोगे कृमिजे पूर्वं कुर्य्याल्लङ्घनपाचनम् ।
पश्चात् कृमिहरं कर्म्म कृमिरोगोक्तमाचरेत् ॥ ३७ ॥
कृमिजे च पिबेन्मूत्रं विड़ङ्गं गोमयसंयुतम् ।
हृदि स्थिताः पतन्त्येव ह्यधस्तात् कृमयो नृणाम् ॥ ३८ ॥
कृमिहृद्रोगिणां स्निग्धं भोजयेत् पिशितौदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥ ३९ ॥
सुगन्धिभिः सलवणैः योगैः साजाजिशर्करैः ।
विड़ङ्गगाढ़ैर्धान्याम्लं पाययेत् सिद्धमुत्तमम् ॥ ४० ॥
यवान्नं वितरेच्चास्मै सविड़ङ्गमतःपरम् ॥ ४१ ॥

इति त्रिदोषकृमिहृद्रोगौ ।

चूर्णं पुष्करजं लिह्यात् माक्षिकेण समायुतम् ।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ ४२ ॥
हिङ्गु सौवर्चलं विश्वं दाड़िमं साम्लवेतसम् ।
चूर्णमुष्णाम्बुना पेयं श्वासहृद्रोगशान्तये ॥ ४३ ॥

इति हिङ्गुपञ्चकम् ।

हिङ्गूग्रगन्धाविड़विश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम्।
पिबेत् ससौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥४४॥
दशमूलकषायन्तु लवणक्षारयोजितम्।
कासं श्वासञ्च हृद्रोगं गुल्मशूलञ्च नाशयेत् ॥ ४५ ॥
घृतेन दुग्धेन गुड़ाम्भसा वा पिबन्ति चूर्णं ककुभस्त्वचोत्थम्।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ ४६ ॥
हरीतकी वचा रास्ना पिप्पल्यो विश्वभेषजम्।
शटीपुष्करमूलञ्च चूर्णं हृद्रोगनाशनम् ॥ ४७ ॥
पुटदग्धं हरिणशृङ्गं पिष्टं गव्येन सर्पिषा पिबतः।
हृत्पृष्ठशूलमचिरादुपैति शान्तिं सुकष्टमपि ॥ ४८ ॥
तैलाज्यगुड़विपक्वं चूर्णं गोधूमपार्थजं वापि।
पिबति पयसा यः स भवेज्जितसकलहृदामयः पुरुषः ॥४९॥
गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा पक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ ५० ॥
मुख्यं शतार्द्धन्तु हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च।
सिद्धं घृतं वल्लभकं हि नाम्ना हृत्कासगुल्मोदरमारुतघ्नम् ॥५१॥

इति वल्लभघृतम्।

शतार्द्धमभयानान्तु सौवर्चलपलद्वयम्।
पचेत्कल्कैर्घृतप्रस्थं दत्त्वा क्षीरं चतुर्गुणम् ॥ ५२ ॥
घृतं वल्लभकं नाम्ना श्रेष्ठं स्यादपतन्त्रके ॥

इति क्षीरवल्लभघृतम्।

पार्थस्य कल्कं स्वरसेन सिद्धं शस्तं घृतं सर्वहृदामयघ्नम् ॥५३॥

इति अर्जुनघृतम्।

घृतं बला नागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलं क्षतरक्तपित्तकासानिलासृक् शमयत्युदीर्णम् ॥ ५४ ॥

इति बलाद्यं घृतम्।

इति वङ्गसेनसङ्कलितः हृद्रोगनिदानचिकित्साधिकारः समाप्तः।

## अथ उरोग्रहनिदानमाह ।

अत्यभिष्यन्दि गुर्वन्नशुष्कपूत्यामिषाशनात् ।
सास्रं सामं यकृत्प्लीह सद्यो वृद्धिं यथा गतम् ॥ १ ॥
उरोग्रहं तदा कुक्षौ कुरुतः कफमारुतौ ।
सस्तम्भं सरुजं घोरं रूक्षं स्पर्शासहं गुरुम् ॥ २ ॥
आध्मानकुक्षिहृच्छोथ वातविण्मूत्ररोधता ।
तन्द्रारोचकशूलानि तत्र लिङ्गानि निर्दिशेत् ॥ ३ ॥

अथ चिकित्सामाह ।

अत्राशु स्वेदनं युक्त्या दहनं रक्तमोक्षणम् ।
तीक्ष्णैर्निरूहणं चैकं क्रमात्तत्क्षणमादरात् ॥ ४ ॥
पुत्रजीवकशिग्रूत्थाः सूर्य्यावर्त्तबलोद्भवाः ।
रसा एकैकशः कोष्णाद्विशो वा रामठान्विताः ॥ ५ ॥
सपञ्चलवणाः पेयाः त्रिवृद्गुडसुकल्पिताः ।
तं प्रवृत्तं यथालाभं मूत्रतैलसुरासवैः ॥ ६ ॥
दध्यम्लवेतसक्षारान् सरामठान् सचित्रकान् ।
पिबेत्तैलारनालाभ्यामुरोग्रहनिवृत्तये ॥ ७ ॥
यथातुरेणात्र कृतस्य कर्मणो विधेर्विरोधो न भवेन्मनागपि ।
यथा बलं वीक्ष्य च शुद्धविग्रहं तथाविधं पथ्यमिति प्रयोजयेत्॥८

इति वङ्गसेनसङ्कलितः उरोग्रहनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ मूत्रकृच्छ्रनिदानमाह ।

व्यायाम तीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात् ।
आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥१
पृथग्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ ।

मूत्रस्य मार्गं परिपीड़यन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥२॥
तीव्रा हि रुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ३ ॥
वस्तेः सलिङ्गस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्वाणि रूपाणि तु सन्निपाताद्भवन्ति तत् कृच्छ्रतमञ्च कृच्छ्रम्॥४

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च।
मूत्रकृच्छ्रं तदाघाताज्जायते भृशदारुणम्।
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ॥ ५ ॥
शकृतस्तु प्रतिघाताद्वायुर्विगुणतां गतः।
आध्मानं वातशूलञ्च मूत्रसङ्गं करोति च ॥ ६ ॥
अश्मरीहेतुतत्पूर्वं मूत्रकृच्छ्रमुदाहरेत् ॥ ७ ॥
शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते।
सशुक्रं मूत्रयेत् कृच्छ्राद्वस्तिमेहनशूलवान् ॥ ८ ॥
अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे।
विशेषणं शर्करायाः शृणु कीर्त्तयतो मम ॥ ९ ॥
पच्यमानाश्मरीपित्ताच्छोष्यमाणा च वायुना।
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥ १० ॥
हृत्पीड़ा वेपथुः शूलं कुक्षावग्निस्तु दुर्बलः।
तथा भवति मूर्च्छा च मूत्रकृच्छ्रञ्च दारुणम् ॥ ११ ॥

अथ चिकित्सामाह।

अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान्।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१२॥

अमृता नागरा धात्री वाजिगन्धा त्रिकण्टकम्।
प्रपिबेद्वातरोगार्त्तः शूलवान् मूत्रकृच्छ्रवान् ॥ १३ ॥

पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीवबलाश्मभिद्भिः।
द्विपञ्चमूलेन कुलत्थकेन यवैश्च तोयोत्क्वथिते कषाये ॥१४॥

तैलं वराहर्त्तवसाघृतञ्च तैरेव कल्केर्लवणैश्च सिद्धम्।
तस्मात्त्रयाच्च प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥१५

पुनर्नवाद्यो मिश्रकः। इति वातकृच्छ्रम्।

सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोविकाराः।
द्राक्षा विदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥१६॥

कुशः काशः शरो दर्भः क्षुद्रश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्च शूलं वस्ति विशोधनम् ॥ १७ ॥
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ १८ ॥

शतावरीकासकुशाश्वदंष्ट्रा विदारि शालीक्षुकशेरुकाणाम्।
क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिबेत्पैत्तिकमूत्रकृच्छ्रे ॥१९॥
एर्वारुबीजं मधुकं सदार्वीं पैत्ते पिबेत्तण्डुलधावनेन।
दार्वीं तुषैलामलकीरसेन समाक्षिकं पित्तकृते च कृच्छ्रे ॥२०॥
हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम्।
क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ २१ ॥
शतावरीकासकुशश्वदंष्ट्रा विदारिकेक्ष्वामलकैश्च सिद्धम्।
सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥२२

इति शतावरीघृतम्।

त्रिकण्टकैरण्डकुशाद्यभीरु कर्कारुकेक्षुस्वरसेन सिद्धम्।
सर्पिर्गुड़ार्द्धांशयुतं प्रयोज्यं कृच्छ्राश्मरी मूत्रविघातदोषे ॥२३॥
अयं विशेषेण पुरा विधेयः सर्वाश्मरीणां प्रवरः प्रयोगः।

इति त्रिकण्टकाद्यं घृतम्। इति पित्तकृच्छ्रम्।

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः।
तक्रञ्च तिक्तोषणसिद्धतैलान्यभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ २४ ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय सूक्ष्मं पिष्टा त्रुटिं पिबेत् ॥ २५ ॥

तक्रेण युक्तं शितिवारकस्य बीजं पिबेन्मूत्रविघातहेतोः।

पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ २६ ॥
सर्वं त्रिदोषप्रभवे च कृच्छ्रे स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने च वस्तिः॥२७

बृहती धावनी पाठा यष्टीमधुकलिङ्गकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ २८ ॥
गुड़ेन मिश्रितं चीरं कदूष्णं कामतः पिबेत् ।
मूत्रकृच्छ्रेषु सर्वेषु शर्करा वातरोगनुत् ॥ २९ ॥

इति त्रिदोषकृच्छ्रम् ।

मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्र क्रिया मता ।
पञ्चवल्कलकल्केपः कवोष्णोऽत्र प्रशस्यते ॥ ३० ॥
मद्यं पिबेद्वा ससितं ससर्पिः शृतं पयश्चापि सिताज्ययुक्तम् ।
धात्रीरसं चेन्नुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् ॥३१॥

इति अभिघातकृच्छ्रम् ।

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ ३२ ॥

इति शुक्रजं मूत्रकृच्छ्रम् ।

एलाहिङ्गुयुतं चीरं सर्पिर्मिश्रं पिबेन्नरः ।
मूत्रहृद्रोगशुद्ध्यर्थं शुक्रदोषहरं परम् ॥ ३३ ॥
स्वेदचूर्णक्रियाभ्यङ्गवस्तयः स्युः पुरीषजे ।
कृच्छ्रे तत्र विधिः कार्य्यो सर्वशुक्रविबन्धजित् ॥ ३४ ॥
क्वाथो गोचुरबीजस्य यवक्षारयुतः सदा ।
मूत्रकृच्छ्रं शकृज्जन्म पीतः शीघ्रं नियच्छति ॥ ३५ ॥

इति शकृज्जं कृच्छ्रम् ।

[श]तच्छदारग्वधकेतकैलाः निम्बः करञ्जः कुटजो गडूची ।
[स]ाध्या जले तेन पचेद्यवागूं सिद्धं कषायं मधुसंयुतं वा ॥३६॥
एर्वारुबीजकल्कश्च श्लक्ष्णं पिष्टाक्षसंमितः ।

धान्याम्ललवणैः पेयो मूत्रकृच्छ्रविनाशनः ॥ ३७ ॥
त्रिकण्टकारग्वधदर्भकाशदुरालभा पर्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाश्मरीन्तु सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ३८
निदग्धिकायाः स्वरसं कुड़वं मधुसंयुतम् ।
मूत्रदोषहरं पीत्वा नरः सम्पद्यते सुखम् ॥ ३९ ॥
कषायोऽतिबलामूल साधितोऽशेषकृच्छ्रजित् ।
पीतञ्च त्रपुसीबीजं सतिलाज्यं पयोन्वितम् ॥ ४० ॥
त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम् ।
वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ ४१ ॥
यवोरुवूकैस्तृणपञ्चमूलपाषाणभेदैः सशतावरीभिः ।
कृच्छ्रेषु गुग्गुल्वभयाविमिश्रैः कृतः कषायो गुड़सम्प्रयुक्तः ॥४२॥
मूलानि कुशकाशेक्षु शराणां चेक्षुबालिकाः ।
मूत्राघातेऽश्मरीकृच्छ्रे पञ्चमूली तृणात्मिका ॥ ४३ ॥
गुड़मामलकं पिष्टं श्रमघ्नं तर्पणं प्रियम् ।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ ४४ ॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रप्रणाशनः ।
द्राक्षासितो पलाकल्कं कृच्छ्रघ्नं मस्तुना युतम् ॥ ४५ ॥
विदारी शारिवा छागशृङ्गी वत्सादिनी निशा ।
कृच्छ्रं पित्तानिलं हन्ति वल्लिजं पञ्चमूलकम् ॥ ४६ ॥
एलाश्मभेदकशिलाजतुपिप्पलीनाम्
एर्वारुवीजलवणोत्तमकुङ्कुमानाम् ।
चूर्णानि तण्डुलजले लुलितानि पीत्वा
प्रत्यग्रमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ४७ ॥
अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ ४८ ॥
पुनर्नवामूलतुला दर्भमूलं शतावरी ।

बलातुरङ्गगन्धा च तृणमूलं त्रिकण्टकम् ॥ ४९ ॥
विदारीगन्धानागाह्व गुडूच्यतिबला तथा।
पृथग्दशपलान् भागानपां द्रोणे विपाचयेत् ॥ ५० ॥
तेन पादावशेषेण घृतस्यार्द्धाढ़कं पचेत्।
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पलीः ॥ ५१ ॥
द्विपलानि पृथग्दत्त्वा यवान्याः कुड़वं तथा।
त्रिंशद्गुड़पलान्यत्र तैलस्यैरण्डजस्य च ॥ ५२ ॥
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम्।
राज्ञां राजसमानानां बहुस्त्रीपतयश्च ये ॥ ५३ ॥
मूत्रकृच्छ्रे कटीशूले तथा गाढ़पुरीषिणाम्।
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते ॥ ५४ ॥
यथोक्तानाञ्च गुल्मानां वातशोणितजाश्च ये।
बल्यं रसायनं शीतं सुकुमारकुमारकम् ॥ ५५ ॥
पुनर्नवाशते द्रोणे देयोऽन्येष्वपि चापरः।

इति सुकुमारकुमारकः पुनर्नवादिश्चैव।

मूत्राघातविधानमप्यत्र कार्य्यम्।

इति वङ्गसेनसङ्कलितः मूत्रकृच्छ्रनिदानचिकित्साधिकारः समाप्तः।

---

## अथ मूत्राघातनिदानमाह।

जायन्ते कुपितैर्दोषैः मूत्रघातास्त्रयोदश।
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥ १ ॥
रौक्ष्याद्वेगाभिघाताद्वा वायुर्वस्तौ सवेदनः।
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ २ ॥
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्त्तते।
वातकुण्डलिकान्तान्तु व्याधिं विद्यात् सुदारुणम् ॥ ३ ॥

आध्मापयन् वस्तिगुदं रुध्वा वायुश्चलोन्नताम् ।
कुर्य्यातीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥ ४ ॥
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ ५ ॥
मूत्रसङ्गो भवेत् तेन वस्तिकुक्षिनिपीड़ितः ।
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥
चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥
मूत्रस्य वेगेऽभिहिते तदुदावर्त्तहेतुकः ।
अपानः कुपितो वायु रुदरं पूरयेद् भृशम् ॥ ८ ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ।
तन्मूत्रजठरं विद्या दधोवस्तिनिरोधनम् ॥ ९ ॥
वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः ।
मूत्रं प्रवृत्तं सज्येत सरक्तं वा प्रवाहतः ॥ १० ॥
स्रवेच्छनैरल्पमल्पं सरुजं वाप्यनीरुजम् ।
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥ ११ ॥
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ १२ ॥
अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।
अश्मरीतुल्यरुग् ग्रन्थिः मूत्रग्रन्थिः स उच्यते ॥ १३ ॥
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम् ।
स्थानात् च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते ।
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ १४ ॥
व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतम् ।
वस्तिं मेढ्रं गुदञ्चैव प्रदहन् स्रावयेदधः ॥ १५ ॥
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव च ।

कृच्छ्रात्पुनः पुनर्जन्तो रुष्णवातं वदन्ति तम् ॥ १६ ॥
पित्तं कफो वा द्वौ वापि संहन्येतेऽनिलेन चेत्।
कृच्छ्रान् मूत्रं तथा पीतं रक्तं श्वेतं घनं स्रवेत् ॥ १७ ॥
सदाहं रोचनाशङ्खचूर्णवर्णञ्च तद्भवेत्।
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ १८ ॥
रूक्षदुर्बलयो र्वातेनोदावर्त्तं शकृद्यथा।
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥ १९ ॥
विड्गन्धं मूत्रयेत् कृच्छ्रात् विड्विघातं विनिर्दिशेत् ॥ २० ॥
द्रुताध्वलङ्घनायासै रभिघातात्प्रपीड़नात्।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ २१ ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि।
पीड़ितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान् ॥ २२ ॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम्।
पवनप्रबलं प्रायो दुर्निवार मबुद्धिभिः ॥ २३ ॥
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता।
श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ॥ २४ ॥
श्लेष्मरुद्धविलो वस्तिः पित्तोदीर्णो न सिध्यति।
अविभ्रान्तविलः साध्यो नच यः कुण्डलीकृतः।
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ २५ ॥

अथ चिकित्सामाह।

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम्।
दद्यादुत्तरवस्तिञ्च मूत्राघाते सवेदने ॥ २६ ॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिबतो नश्यति नियतं मूत्रग्रह इत्युवाच कविः ॥ २७ ॥
गोधापद्या मूलं क्वथितं घृततैलगोरसोन्मिश्रम्।
पीतं निरुद्धमचिरात् भिनत्ति मूत्रसङ्घातम् ॥ २८ ॥

पिबेच्छिलाजतुक्काथे युक्ते वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा ॥ २९ ॥
क्काथं सपत्रमूलस्य गोक्षुरोः सफलस्य च।
पिबेन्मधुसितायुक्तं मूत्रकृच्छ्ररुजापहम् ॥ ३० ॥
घनसारस्य चूर्णेन वस्त्रवर्त्तिः कृताम्बुना।
गुण्डयित्वा ध्वजे क्षिप्ता मूत्ररोधं जहाति तम् ॥ ३१ ॥
सदा भद्राश्मभिन्मूलं शतावर्य्याश्च चित्रकम्।
रोहिणीकोकिलाक्षौ च क्रौञ्चं स्थूलत्रिकण्टकम् ॥
श्लक्ष्णपिष्टः सुरापीतोमूत्राघातप्रबाधनः ॥ ३२ ॥
पिबेद्बर्हिशिखामूलं दुग्धभुक् तण्डुलाम्बुना।
वस्तिमुत्तरवस्तिं वा सर्वेषामेव दापयेत् ॥ ३३ ॥
निदिग्धिकायाः स्वरसं पिबेद्वा तक्रसंयुतम्।
जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि ॥ ३४ ॥
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्।
सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः ॥ ३५ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ३६ ॥
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना।
पिबेत् सशर्करं श्रेष्ठ मुष्णवाते सशोणिते ॥ ३७ ॥
शिलोद्भवैरण्डकुशाश्विरादिपुनर्नवाभीरुरसेषु सिद्धम्।
तैलं शृतं क्षीरमथानुपानं कालेषु कृच्छ्रादिषु संप्रयोज्यम् ॥ ३८

इति शिलोद्भिदादि तैलम्।

धान्यगोक्षुरकक्काथ कल्कसिद्धं घृतं हितम्।
मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषे च दारुणे ॥ ३९ ॥

इति धान्यगोक्षुरकं घृतम्।

अम्बष्ठा पाटला चैव वर्षाभूद्वयमेव च।

विदारीकन्दकाशश्च कुशमोरटगोक्षुराः॥ ४०॥
पाषाणभेदो वाराही शालिमूलं शरस्तथा।
भल्लातकं शिरीषस्य मूलमेषामथाहरेत्॥ ४१॥
समभागानि सर्वाणि क्वाथयित्वा विचक्षणः।
पादशेषे कषाये तु घृतप्रस्थं विपाचयेत्॥ ४२॥
कल्कं दत्त्वा च मतिमान् गिरिजं मधुकं तथा।
नीलोत्पलन्तु काकोली वीजं त्रापुसमेव च॥ ४३॥
कूष्माण्डजं तथैर्वारुसम्भवञ्च समं भवेत्।
उष्णवातं निहन्त्येतद् घृतं भद्रावहं स्मृतम्॥ ४४॥

इति भद्रावहं घृतम्।

विदारी वृषको यूथी मातुलुङ्गी च भूस्तृणम्।
पाषाणभेदः कस्तूरी वसुको वशिरोऽनलः॥ ४५॥
पुनर्नवा वचा रास्ना बला चातिबला तथा।
कशेरुविसशृङ्गाट तामलक्यः स्थिरादयः॥ ४६॥
शरेक्षुदर्भमूलञ्च कुशः काशस्तथैव च।
पलद्वयन्तु संगृह्य जलद्रोणे विपाचयेत्॥ ४७॥
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत्।
शतावर्य्यास्तथा धात्र्याः स्वरसो घृतसम्मितः॥ ४८॥
षट्पलं शर्करायाश्च कार्षिकाण्यपराणि च।
यष्ट्याह्वं पिप्पली द्राक्षा काश्मर्य्यं सपरूषकम्॥ ४९॥
एला दुरालभा कौन्ती कुङ्कुमं नागकेशरम्।
जीवनीयानि चाष्टौ च दत्त्वा च द्विगुणं पयः॥ ५०॥
एतत्सर्पिर्विपक्वाव्यं शनैर्मृद्वग्निना भिषक्।
मूत्राघातेषु सर्वेषु विशेषात् पित्तजेषु च॥ ५१॥
शर्क्करेश्मरिशूलेषु शोणितप्रभवेषु च।
हृद्रोगे पित्तगुल्मे च वातासृक् पित्तजेषु च॥ ५२॥

कासश्वासक्षतोरस्क धनुस्त्रीभारकर्षिते।
तृष्णाछर्दिमनःकम्प शोणितच्छर्दिते तथा।
रक्ते यक्ष्मण्यपस्मारे तथोन्मादशिरोग्रहे॥ ५३॥
योनिदोषे रजोदोषे शुक्रदोषे स्वरामये।
एतत् स्मृतिकरं वृष्यं वाजीकरणमुत्तमम्।
पुत्रदं बलवर्णाढ्यं विशेषाद्वातनाशनम्॥ ५४॥
पानभोजननस्येषु न क्वचित्प्रतिहन्यते।
विदारीघृतमित्युक्तं रसायनमनुत्तमम्॥ ५५॥

इति विदारीघृतम्॥

पिष्ट्वाखुमलमुष्णेन चारनालेन पेषयेत्।
बद्धमूत्रं निहन्त्याशु तथैव करभीभवम्॥ ५६॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य रिच्यते।
मैथुनोपरमश्चास्य बृंहणीयो विधिर्हितः॥ ५७॥
ताम्रचूड़वसातैलं हितञ्चोत्तरवस्तिषु।
स्वगुप्ताफलमृद्वीका कृष्णेक्षुरसितारजः॥ ५८॥
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च।
सर्वं सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत्॥ ५९॥
हन्ति शुक्रक्षयोत्थांश्च दोषान् बन्ध्यासुतप्रदम्॥ ६०॥

इति स्वगुप्तादि मन्थः॥

क्षौद्रार्द्धभागः कर्त्तव्यो भागः स्यात् क्षीरसर्पिषोः।
शर्करायाश्च चूर्णञ्च द्राक्षाचूर्णञ्च तत्समम्॥ ६१॥
स्वयंगुप्ताफलञ्चैव तथा चेक्षुरसस्य च।
पिप्पलीनां तथा चूर्णं समभागं प्रदापयेत्॥ ६२॥
तदैकध्यं समानीय खजेनाथ विमथ्य च।
तस्य पाणितलं चूर्णं लिहन् क्षीरं ततः पिबेत्॥ ६३॥
एतत्सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा।

शुक्रदोषान् जयेत्सर्वान् ये चापि भृशदुर्जयाः ॥ ६४ ॥
जयेच्छोणितरोगांश्च बन्ध्या गर्भं लभेत च।
सर्पिरेतत्प्रयुञ्जानात् योनिदोषात् प्रमुच्यते ॥ ६५ ॥

इति चौद्रार्द्धभागं घृतम्।

अश्मरीमूत्रकृच्छ्रेषु भोजनं यत् प्रकीर्त्तितम्।
मूत्राघातेषु तत्कुर्य्याद्देशकालविधानवित् ॥ ६६ ॥

इति वङ्गसेनसङ्कलितः मूत्राघातनिदानचिकित्साधिकारः समाप्तः ॥

---

## अथाश्मरीनिदानमाह।

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजा मता।
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्य्यः स्युर्यमोपमाः ॥ १ ॥
विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा।
यदा तदाश्मर्य्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ २ ॥
नैकदोषाश्रयाः सर्वा अथासां पूर्वलक्षणम्।
वस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ॥
मूत्रे वस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ३ ॥
सामान्यलिङ्गं रुग्नाभिसेवनीवस्तिमूर्द्धसु।
विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधनम् ॥ ४ ॥
तद्व्यपायात् सुखं मेहेदच्छं गोमेदकोपमम्।
तत्सङ्क्षोभात् क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ ५ ॥
तत्र वाताद् भृशं चार्त्तो दन्तान् खादति वेपते।
गृह्णाति मेहनं नाभिं पीड़यत्यनिशं क्वणन् ॥ ६ ॥
सानिलं मुञ्चति शकृत् मुहुर्मेहति विन्दुशः।
श्यावा रूक्षाश्मरी चास्य स्याच्चिता कण्टकैरिव ॥ ७ ॥

अथ चिकित्सामाह ।

तस्याः पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ ८ ॥
शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ।
अभयारग्वधकल्कैः क्वाथं कृत्वा विचक्षणः ॥ ९ ॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीमूत्रकृच्छ्रघ्नं दीपनं पाचनं परम् ॥
हन्यात्कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रजम् ॥ १० ॥

इति शुण्ठ्यादिः ।

एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः ।
शृतं पिबेदश्मजतुप्रगाढं सशर्करं चाश्मरीमूत्रकृच्छ्रे ॥ ११ ॥

इति एलादिक्वाथः ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धितम् ॥ १२ ॥
अश्मरीं वातजां हन्याच्चिरकालानुबन्धिनीम् ॥ १३ ॥
पाषाणभेदोवसुकोवशिरोऽश्मन्तकस्तथा ।
शतावरीश्वदंष्ट्रा च वृहती कण्टकारिका ॥ १४ ॥
कपोतवङ्कामलकी काञ्चनोशीरगुन्द्रकाः ।
वृक्षादनी भल्लूकश्च वरुणः शाकजं फलम् ॥ १५ ॥
यवाः कुलत्थकोलानि कतकस्य फलानि च ।
उषकादिप्रतिवापमेषां क्वाथैः शृतं घृतम् ॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ॥ १६ ॥

इति पाषाणभेदाद्यं घृतम् ।

क्षारान् यवागूः पेयांश्च कषायांश्च पयांसि च ।
भोजनानि प्रकुर्वीत वर्गैरश्मरिनाशनैः ॥ १७ ॥
वीरवृक्षोऽग्निमन्थश्च काशवृक्षादनीकुशाः ।
सोरटेन्दीवरो सूर्य्यभक्ता गोक्षुरटुण्टुकाः ॥ १८ ॥

वसुकोवशिरो दर्भ शैरीयावश्मभेदकः ।
गुन्द्रोऽनल कुरण्टश्च गणो वीरतरादिकः ॥ १९ ॥
अश्मरीशर्कराकृच्छ्र मारुतार्त्तिहरो गणः ।
वृहद्वाते वीरतर स्तदभावे मतः शरः ॥ २० ॥

इति वीरतरादिगणः । इति वाताश्मरी ।

अथ पित्ताश्मरीनिदानमाह ।

पित्तेन दह्यते वस्तिः पच्यमान इवोष्मणा ।
भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरी ॥ २१ ॥

अथ चिकित्सामाह ।

कुशः काशः शरो गुन्द्रः उत्कटो मोरटाश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकम् ॥ २२ ॥
भल्लूक पाटला पाठा पत्तूरोऽथ कुरण्टिका ॥ २३ ॥
पुनर्नवा शिरीषश्च कथितास्तेषु साधितम् ।
घृतं शिलाह्वमधुकैर्बीजैरिन्दीवरस्य च ॥ २४ ॥
त्रपुषेर्वारुकादीनां बीजैश्चावापितं शुभम् ।
भिनत्ति पित्तसंभूता मश्मरीं क्षिप्रमेव तु ॥ २५ ॥

इति कुशाद्यं घृतम् ।

क्षारान् यवागूः पेयांश्च कषायाणि पयांसि च ।
भोजनादि प्रकुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ २६ ॥
शिलाजतु शिलाह्वं स्यात्पटीरोगुत्थगुन्द्रकौ ।
मधुकः कृत ह्रस्वत्वाद् बीजैर्बीजकमुच्यते ॥ २७ ॥
कुर्य्यात् क्षारादिकं क्वाथे तस्मिन् क्षयमवापकैः ।
वर्गत्वेन यथालाभं परिभाषा प्रवर्त्तते ॥ २८ ॥

इति पित्ताश्मरी ।

अथ कफाश्मरीनिदानमाह ।

वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।

अश्मरी महती श्लक्ष्णा मधुवर्णा सिताथवा ॥ २९ ॥
एता भवन्ति बालानां तेषामेव च भूयसा ।
आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः ॥ ३० ॥

अथ चिकित्सामाह ।

गणे वरुणकादौ तु गुग्गुल्वेलाहरेणुभिः ।
कुष्ठभद्राह्वमरिचचित्रकैः ससुराह्वयैः ॥ ३१ ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन वा ।
भिनत्ति कफसंभूता मश्मरीं क्षिप्रमेव च ॥ ३२ ॥
भद्रादिस्तेन चात्रेष्टो गणः श्यामादिको बुधैः ॥ ३३ ॥

इति वरुणादि घृतम् ।

क्षारान् यवागूः पेयांश्च कषायाणि पयांसि च ।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् कफनाशने ॥ ३४ ॥

इति कफाश्मरी ।

अथ शुक्राश्मरीनिदानमाह ।

शुक्राश्मरी तु महतां जायते शुक्रधारणात् ।
स्थानात् च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥
शोषयत्युपसंहृत्य शुक्रं तच्छुक्रजाश्मरी ॥ ३५ ॥
वस्तिरुक्कृच्छ्रत्वं मुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ ३६ ॥
पीड़िते त्ववकाशेऽस्मिन्नश्मर्य्येव च शर्करा ।
अणुशो वायुना भिन्ना स्यात्तस्मिन्ननुलोमगे ॥ ३७ ॥
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ।
मूत्रस्रोतः प्रविश्यैताः सिक्ताः कुर्य्युरुपद्रवान् ॥ ३८ ॥

अथ उपद्रवानाह ।

दौर्बल्यं सदनं कार्श्यं कुक्षिरोगमथारुचिम् ।

पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीड़नं वमिम् ॥ ३९ ॥
प्रसूननाभिवृषणं बद्धमूत्रं रुजातुरम्।
अश्मरी च्चपयत्याशु सिकता शर्करान्विताः ॥ ४० ॥

अथ चिकित्सामाह।

शुक्राश्मर्य्यान्तु सामान्यो विधिरश्मरिनाशनः।
यवक्षारगुड़ोन्मिश्रं रसं पुष्पफलोद्भवम् ॥
पिबेन्मूत्रविबन्धघ्नं शर्करांश्मरीनाशनम् ॥ ४१ ॥
तिलापामार्गकदली पलाशयवविल्वजः।
क्वाथः पेयोऽविमूत्रेण शर्कराश्मरिनाशनः ॥ ४२ ॥
कम्बुकाङ्कोलकनक शाकेन्दीवरजैः फलैः।
पीतमुष्णाम्बु सगुड़ं शर्करां पातयत्यधः ॥ ४३ ॥
पाषाणभिन्नोक्षुरकोरुबूको द्वे कण्टकार्य्यौ क्षुरकाह्वमूलम्।
दध्ना पिबेत्क्षीरसुपिष्टमेतत् स्याद्भेदनार्थं सिकताश्मरीणाम् ॥४४
यः पिबेद्रजनीं सम्यक् सगुड़ां तुषवारिणा।
तस्याशु चिररूढ़ापि यात्यस्तं मेढ्रशर्करा ॥ ४५ ॥
पिबतः कुटजं दध्ना पथ्यमन्नं च खादतः।
निपतत्यचिरात्तस्य नियतं मेढ्रशर्करा ॥ ४६ ॥
त्रापुसवीजं दध्ना पीतं वा नारिकेलजं कुसुमम्।
विण्मूत्रशर्कराया भवति सुखी कतिपयैर्दिवसैः ॥ ४७ ॥
श्वदंष्ट्रा वारुणीशुण्ठी क्वाथं क्षौद्रयुतं पिबेत्।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ४८ ॥
कूष्माण्डकरसो हिङ्गुयवक्षारसमायुतः।
वस्तौ मेढ्रे सशूले च शर्कराश्मरिनाशनः ॥ ४९ ॥
पुनर्नवायो रजनीश्वदंष्ट्रा फल्गुप्रवालाश्च सदर्भपुष्पाः।
क्षीराम्लमद्येक्षुरसप्रपिष्टः पेयो भवेदश्मरिशर्करासु ॥ ५० ॥
वरुणत्वक्छिलाभेद शुण्ठीगोक्षुरकैः कृतः।

कषायः चारसंयुक्तः शर्कराञ्च भिनत्त्यपि ॥ ५१ ॥
पञ्चमूल्यास्तृणाख्याया स्तथा गोचुरकस्य च ।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ ५२ ॥
चतुर्भागावशिष्टेन घृतप्रस्थं विपाचयेत् ।
गुड़गोचुरवीजञ्च कल्कं तत्र प्रदापयेत् ॥ ५३ ॥
तत्सिद्धं मूत्रदोषेषु शर्करास्वश्मरीषु च ।
स्नेहेन भोजने चैव प्रयोज्यं सर्पिरुत्तमम् ॥ ५४ ॥

इति तृणपञ्चमूलाद्यं घृतम् ।

त्वक् पत्रफलमूलस्य वरुणात् सत्रिकण्टकात् ।
कषायेण पचेत्तैलं वस्तिना स्थापनेन च ॥ ५५ ॥
शर्कराश्मरीशूलघ्नं मूत्रकृच्छ्र निवारणम् ।

इति वरुणतैलम् ।

कुशाग्निमन्थशैरेय नलदर्भेचुगोचुराः ।
कपोतवङ्कावसुकवशिरेन्दीवरीशराः ॥ ५६ ॥
धातक्यरलुबन्दाक कर्णिकाराश्मभेदकाः ।
एषां कल्ककषायाभ्यां सिद्धं तैलं प्रयोजयेत् ॥ ५७ ॥
पानाभ्यञ्जनयोगेन वस्तिनोत्तरवस्तिना ।
शर्कराश्मरिरोगेषु मूत्रकृच्छ्रे च दारुणे ॥ ५८ ॥
प्रदरे योनिशूले च शुक्रदोषे तथैव च ।
बन्ध्यागर्भप्रदं प्रोक्तं तैलमेतत् कुशादिकम् ॥ ५९ ॥

इति कुशाद्यं तैलम् । इति शर्कराश्मरी ।

नागरवरुणगोचुरपाषाणभित् कपोतवङ्कजः क्वाथः ।
गुड़यावशूकविमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ ६० ॥
त्रिकण्टकस्य वीजानां चूर्णं माचिकसंयुतम् ।
अविचीरेण सप्ताहं पेयमश्मरिनाशनम् ॥ ६१ ॥
पिबेद्वरुणजं मूलं क्वाथं तत्कल्कसंयुतम् ।

क्वाथश्च शिग्रुमूलोत्थः कदूष्णोऽश्मरिनाशनः ॥ ६२ ॥
शृङ्गवेरयवक्षार पथ्याकालीयकान्वितः।
दधिमण्डो भिनत्त्यश्मामश्मरीमाशु पानतः ॥ ६३ ॥
पाषाणभेदवरुणगोक्षुरकपोतवङ्कजः क्वाथः।
गिरिजतु गुड़प्रगाढ़ः कर्कटिका त्रपुसबीजयुतः ॥ ६४ ॥
पेयोऽश्मरीमवश्यं दुर्भेदामपि भिनत्ति योगवरः।
शिखरिणमिव शतकोटिः शतमन्योर्हस्तनिर्मुक्तः ॥ ६५ ॥
श्रीपर्णीफलबीजं मथितेन यः पुमानद्यात्।
शाकमशित्वावश्यं तद्वन्ति रोगाश्मरीपीड़ाम् ॥ ६६ ॥
श्वदंष्ट्रैरण्डबीजानि नागरं वरुणत्वचः।
एतत् क्वाथवरं प्रातः पिबेदश्मरिनाशनम् ॥ ६७ ॥
रक्तोद्भवे तूत्पलनालतालकाशेक्षुबालीक्षुकुशोदकानि।
पिबेत्सिताक्षौद्रयुतानि खादेद्विदारिमिक्षुत्रपुसानि चैव ॥६८॥
पलान्यष्टौ तु कुर्वीत क्षाराणां वरुणत्वचः।
तदर्द्धं यावशूकात्तु ततोऽप्यर्द्धं गुड़ात् स्मृतम् ॥ ६९ ॥
एकीकृत्य विमृद्यैतत् खादेत् कर्षप्रमाणतः।
घर्माम्बुना सहावश्यं कृच्छ्राश्मरिविनाशनम् ॥ ७० ॥

इति वरुणादिचूर्णम्।

वरुणकभस्मपरिस्रुतसलिलं तच्चूर्णं यावशूकयुतम्।
क्वथनीयं तत्तावद्यावच्चूर्णत्वमायाति ॥ ७१ ॥
तद्गुड़युक्तं हन्यात्तदुदारामश्मरीं घोराम्।
वङ्क्षिसदनं सुकष्टमश्ममयीमश्मरीं चाशु ॥ ७२ ॥

इति वरुणादिचूर्णस्यैवायमन्यः प्रकारः।

नो जग्धं कृमिभिर्घनं सुतरुणं स्निग्धं शुचिस्थानजम्
घस्रे पुष्यनिरीक्षिते वरुणकं छित्वा तुलां ग्राहयेत्।
संगृह्याप्सु चतुर्गुणासु विपचेत्पादावशेषं जलम्

तत्तुल्येन गुड़ेन वै दृढ़तरे भाण्डे पचेत्तत् पुनः ॥ ७३ ॥
ज्ञात्वैवं घनतां गुडे परिणते प्रत्येकमेषां पलम्
शुण्ठेर्वारुकवीजगोक्षुरकणा पाषाणभिच्छीतला: ।
कूष्माण्डत्रपुसाक्षवीजकुनटी वास्तूकशोभाञ्जनैः
द्राक्षैलागिरिजाभया क्रमिहृतां चूर्णीकृतानां क्षिपेत् ॥ ७४ ॥
पथ्याशी प्रतिवासरं गुड़ममुं योग्यप्रमाणं नरः ।
खादेत्तस्य समस्तदोषजनिताश्मर्थ्यः पतन्ति द्रुतम् ॥ ७५ ॥

इति वरुणकगुड़ः ।

कुलत्थसिन्धूत्थविड़ङ्गसारं सशर्करं शीतलियावशूकम् ।
वीजानि कूष्माण्डकगोक्षुराभ्यां घृतं पचेत्तद्वरुणस्य तोये ॥७६॥
दुःसाध्य सर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम् ।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढ़वृक्षानिव वज्रपातः ॥७७॥

इति कुलत्थाद्यं घृतम् ।

शरादिपञ्चमूल्या वा कषायेण पचेद् घृतम् ।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम् ।
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥ ७८ ॥

इति शरादिपञ्चमूलघृतम् ।

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥ ७९ ॥
वरुणं कदलीविल्वं तृणजं पञ्चमूलकम् ।
अमृता चाश्मभेदञ्च वीजञ्च त्रपुसस्य च ॥ ८० ॥
शतपर्वा तिलक्षारं पलाशक्षार एव च ।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥ ८१ ॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ।
जीर्णे चास्मिन् पिबेत्पूर्वं गुड़ं जीर्णन्तु मस्तुना ॥ ८२ ॥

अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ ८३ ॥

इति वरुणघृतम् ।

सैन्धवाद्यन्तु यत्तैलमृषिभिः परिकीर्त्तितम् ।
तत्तैलं द्विगुणं क्षीरं पचेद्वीरतरादिना ॥ ८४ ॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः ।
एतत्तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥ ८५ ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्छिते मथिते तथा ।
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते ॥ ८६ ॥

इति वीरतराद्यं तैलम् ।

वीरवृक्षाश्मभेदाग्निमन्थश्योणाकपाटलाः ।
वृक्षादनी सह्वैरण्ड भल्लूकोशीरपद्मकम् ॥ ८७ ॥
कुशकाशशरेक्षूणामास्फोता कोकिलाक्षयोः ।
शतावरी श्वदंष्ट्रा च सोत्कटा इयवञ्जुलाः ॥ ८८ ॥
कपोतवङ्का श्रीपर्णी काश्मरीमूलसंयुता ।
एतैः कषायैः कल्कैश्च तैलं धीरो विपाचयेत् ॥ ८९ ॥
वातपित्तविकारेषु वस्तिं दद्याद्विचक्षणः ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ९० ॥

इति द्वितीयं वीरतराद्यं तैलम् ।

पुनर्नवा मृताभीरु सक्षारलवणत्रयैः ।
शटी कुष्ठवचा मुस्तरास्ना कट्फलपौष्करैः ॥ ९१ ॥
यवानी हपुषा हिङ्गु शताह्वा साजमोदकैः ।
विड़ङ्गातिविषा यष्टी पञ्चकोलकसंयुतैः ॥ ९२ ॥
एतैरक्षसमैः कल्कैस्तैलप्रस्थं विपाचयेत् ।
गोमूत्रं द्विगुणं देयं काञ्जिकं तद्वदेव तु ॥ ९३ ॥
पुनर्नवाद्यमित्येतत्तैलं पानेन वस्तिना ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रप्रमोचनम् ॥ ९४ ॥

कट्यूरुवस्तिमेढ्रस्थं कुक्षिशूलविनाशनम् ।
कफवातामशूलघ्नं मन्त्रवृद्धेश्च नाशनम् ॥ ९५ ॥

इति पुनर्नवाद्यं तैलम् ।

व्रध्नाधिकारनिर्दिष्टं सैन्धवाद्यमिहेष्यते ।
सर्वथैवोपयोज्यस्तु गणो वीरतरादिकः ॥ ९६ ॥
घृतैः क्षीरैः कषायैश्च क्षारैश्चोत्तरवस्तिभिः ।
शल्यवतीमशाम्यन्तीं प्रत्याख्याय समुद्धरेत् ॥ ९७ ॥

इति वङ्गसेनसङ्कलितः अश्मरीनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ प्रमेहनिदानमाह ।

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुड़वैकृतञ्च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥
मेदश्च मांसञ्च शरीरजं च क्लेदं कफो वस्तिगतं प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ॥
क्षीणेषु दोषेष्ववकृष्य धातून् सन्दूष्य मेहान् कुरुतेऽनिलश्च ॥ २ ॥

साध्याः कफोत्था दशपित्तजाः षड्-
याप्या न साध्याः पवनाच्चतुष्काः ।
समक्रियत्वाद्विषमक्रियत्वात्
महात्ययत्वाच्च यथाक्रमं ते ॥ ३ ॥

कफः सपित्तः पवनश्च दोषा मेदोस्र शुक्राम्बुवसालसीकाः ।
मज्जारसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥४॥

दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ।
दाहश्चिक्कणता देहे तृट्स्वाद्वास्यञ्च जायते ॥ ५ ॥
सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥

मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ ७ ॥

अथ कफमेहानाह।

अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम्।
मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम् ॥ ८ ॥
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः।
सान्द्री भवेत्पर्य्युषितं सान्द्रमेहेन मेहति ॥ ९ ॥
सुरामेही सुरातुल्यमुपर्य्यच्छमधो घनम्।
संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥ १० ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति।
मूत्राणून् सिकतामेही सिकतारूपिणो मलान् ॥ ११ ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम्।
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥ १२ ॥
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम्।

अथ पित्तमेहानाह।

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥ १३ ॥
नीलमेहेन नीलाभं कालमेही मषीनिभम्।
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥ १४ ॥
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठा सलिलोपमम्।
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः ॥ १५ ॥

अथ वातमेहानाह।

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः।
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ॥ १६ ॥
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम्।
सालसीकं विबद्धञ्च हस्तीमेही प्रमेहति ॥ १७ ॥

अथ उपद्रवानाह ।

अविपाकोऽरुचिश्छर्दिस्तन्द्राकासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १८ ॥
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहतृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १९ ॥
वातजानामुदावर्त्त कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रता शोषः श्वासः कासश्च जायते ॥ २० ॥
यथोक्तोपद्रवारिष्टमतिप्रस्रुतमेव च ।
पिड़िकापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम् ॥ २१ ॥
मूर्च्छाछर्दिज्वरश्वासकासवीसर्पगौरवैः ।
उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः ॥ २२ ॥

अथ स्त्रीणां प्रमेहाभावे कारणमाह ।

रजः प्रसेकान्नारीणां मासि मासि विशुद्ध्यति ।
कृत्स्नं शरीरं दोषांश्च न प्रमेहन्त्यतः स्त्रियः ॥ २३ ॥
जातः प्रमेही मधुमेहिनो वा न साध्यरोगः स हि वीजदोषात् ।
ये चापि केचित्कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान्२४
सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः ।
मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि ॥ २५ ॥
मधुमेहो मधुसमो जायते स किल द्विधा ।
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥ २६ ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।
क्षणात् क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ॥२७॥
मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ।
सर्वेऽपि मधुमेहाख्या माधुर्य्याच्च तनो रतः ॥ २८ ॥
शराविका कच्छपिका जालिनी विनतालजी ।
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २९ ॥

विद्रधिश्चापि पिड़का प्रमेहोपेक्षया दश।
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ ३० ॥
अन्तोन्नता च तद्रूपा निम्नमध्या शराविका।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ ३१ ॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः।
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ ३२ ॥
अवगाढ़रुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा।
महती पिड़का नीला सा बुधैर्विनता स्मृता ॥ ३३ ॥
महत्यल्पचिता ज्ञेया पिड़का चापि पुत्रिणी।
मसूरसंस्थानसमा विज्ञेया तु मसूरिका ॥ ३४ ॥
रक्ता सिता स्फोटचिता विज्ञेया त्वलजी भवेत्।
विदारी कन्दवद्वृत्ता कठिना च विदारिका ॥ ३५ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका च सा ॥ ३६ ॥
ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः।
विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ३७ ॥
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मसु चोत्थिता।
सोपद्रवा दुर्बलाग्नेः पिड़काः परिवर्जयेत् ॥ ३८ ॥
तृट्श्वासमांससङ्कोच मोहहिक्कामदज्वराः।
विसर्पमर्म्मसंरोधा पिड़कानामुपद्रवाः ॥ ३९ ॥

अथ चिकित्सामाह।

श्यामाककोद्रवोद्दालगोधूमचणकाढ़की।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥ ४० ॥
मेहिनां तिक्तशाकानि जाङ्गला हरिणाण्डजाः।
यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥ ४१ ॥
सौवीरञ्च सुरा तक्रं तैलं क्षीरं घृतं गुड़म्।

अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ४२ ॥

तत्रादित एव प्रमेहिणमुपस्निग्धमन्यतमेन प्रियङ्ग्वादिसिद्धेन तैलेन वामयेत्प्रगाढ़ं विरेचयेच्च विरेचनादनन्तरं सुरसादिकषायेणास्थापयेत्। महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन दह्यमानं वा न्यग्रोधादिकषायेण निस्तैलेनेति।

वातोत्कटेषु मेहेषु स्नेहपानं विशेषतः।

पारिजातजयानिम्ब वह्निगायत्रिणा पृथक्।

पाठायाः सागुरोः पीता ह्यस्य शारदस्य च ॥ ४३ ॥

जलेक्षुमद्यसिकताः शनैर्लवणपिष्टकान्।

सान्द्रमेहान् कफान् घ्नन्ति क्वाथाश्चाष्टौ समाक्षिकाः ॥४४॥

हरीतकीकट्फलमुस्तलोध्राः पाठा विड़ङ्गार्ज्जुनधन्वयासाः।
उभे हरिद्रे तगरं विड़ङ्गं कदम्बशालार्ज्जुनदीप्यकाश्च ॥ ४५ ॥
दार्वीविड़ङ्गं खदिरो धवश्च सुराह्व कुष्ठागुरुचन्दनानि।
दार्व्यग्निमन्थौ त्रिफला च पाठा मूर्वाभया चैव तथा श्वदंष्ट्रा॥४६
यवान्युशीराण्यभया गुड़ूची जम्बूशिवाचित्रकसप्तपर्णाः।
पादैः कषायाः कफमेहविघ्नैर्दशोपदिष्टा मधुसम्प्रयुक्ताः ॥ ४७ ॥
उशीरलोध्रार्ज्जुनचन्दनानामुशीरमुस्ता मधुकाभयानाम्।
पटोलनिम्बामलकामृतानां मुस्ताभया मुष्ककवृक्षकाणाम् ॥४८॥
लोध्राम्बकालीयकधातकीनां विम्बार्ज्जुनानां मिशिसोत्पलानाम्।
शिरीषधान्यार्ज्जुनकेशराणां प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥४९॥
अश्वत्थपाठासनवेतसानां कटङ्कटेर्य्युत्पलमुस्तकानाम्।
पैत्तेषु मेहेषु सदोपदिष्टाः कषाययोगा मधुसम्प्रयुक्ताः ॥ ५० ॥

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम्।

पित्तमेहघ्ननिर्य्यूह सिद्धं पित्तहरं घृतम् ॥ ५१ ॥

कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि।
पटोलकालीयगदागुरूणि क्षौद्रेण लिह्यात्कफपित्तमेही ॥५२॥

दूर्वा कसेरुपूतीक कुम्भीकप्लवशैवलम्।
जलेन क्वथितं पीतं शुक्रमेहहरं परम्॥ ५३॥
त्रिफलारग्वधद्राक्षा कषायो मधुसंयुतः।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम्॥ ५४॥
छिन्ना वह्निकषायं वा पाठा कुटजरामठम्।
तिक्ता कुष्ठञ्च संचूर्ण्य सर्पिर्मेही पिबेन्नरः॥ ५५॥
पाठा शिरीषदुस्पर्शमूर्वातिन्दुककिंशुकम्।
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत्॥ ५६॥
त्रिफला दारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा।
कुटजासनदार्व्यब्दफलत्रयभवोऽथवा॥ ५७॥
गुडूच्या स्वरसः पेयो मधुना सह मेहजित्।
निशाकल्कयुतो धात्रीरसो वा माक्षिकान्वितः॥ ५८॥
मधुना त्रिफलाचूर्णमथवाश्मजतूद्भवम्।
लोहजं वाभयोत्थं वा लिह्यान्मेहनिवृत्तये॥ ५९॥
कटंकटेरी मधुकत्रिफलाचित्रकैः समैः।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः॥ ६०॥
फलत्रिकं दारुनिशां विशालां मुस्ताञ्च निःक्वाथ्य निशांशकल्कम्।
पिबेत्कषायं मधुसंप्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु॥ ६१॥

इति फलत्रिकादिः क्वाथः।

गोभक्षितान्यवान्मूत्रभावितान् केवलानपि।
चित्रकोदश्विता खादेन्निम्बमुद्गरसेन वा।
भक्षयेन्मधुना मासं प्रमेही यवपिष्टकम्॥ ६२॥
मेदोघ्ना बहुमूत्राश्च समाः सर्वेषु धातुषु।
यवास्तस्माद्विशिष्यन्ते प्रमेहेषु विशेषतः॥ ६३॥
न्यग्रोधोदुम्बराश्वत्थ श्योणाकारग्वधासनम्।
आम्रं कपित्थं जम्बूश्च प्रियालं ककुभं धवम्॥ ६४॥

मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम्।
पटोलं मेषशृङ्गी च दन्तीचित्रकमाढ़कम्॥ ६५॥
करञ्जत्रिफलाशक्र भल्लातकफलानि च।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥ ६६॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह योजयेत्।
फलत्रयञ्चानुपिबेत्तेन मूत्रं विशुद्ध्यति॥ ६७॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च।
प्रशमं यान्ति योगेन पिड़का न च जायते॥ ६८॥

इति न्यग्रोधाद्यं चूर्णम्।

त्रिकटु त्रिफलातुल्यं गुग्गुलुञ्च समांशिकम्।
गोक्षुरक्वाथसंयुक्तां गुटिकां कारयेद्बुधः॥ ६९॥
देशकालबलापेक्षी भक्षयेच्चानुलोमिकाम्।
न चात्र परिहारोऽस्ति कर्म कुर्य्याद् यथेप्सितम्॥ ७०॥
प्रमेहान् वातरोगांश्च वातशोणितमेव वा।
मूत्राघातं मूत्रदोषं प्रदरञ्चाशु नाशयेत्॥ ७१॥

इति त्रिकट्वाद्या गुटिका।

दाड़िमस्य च वीजानि क्रिमिघ्नस्य च तण्डुलाः।
रजनी चविकाजाजी नागरं त्रिफला कणा॥ ७२॥
त्रिकण्टकस्य च फलं यवानी धान्यकं तथा।
वृक्षाम्ल चविकाकोल सिन्धूद्भव समाहितैः॥ ७३॥
कल्कैरक्षसमैरेभिर्घृतप्रस्थं विपाचयेत्।
भोज्ये पाने प्रदातव्यं सर्वर्त्तुषु च मात्रया॥ ७४॥
प्रमेहान् विंशतिं चैव मूत्राघातं तथाश्मरीम्।
कृच्छ्रं सुदारुणञ्चैव हन्यादेव न संशयः॥ ७५॥
विबन्धानाहशूलघ्नं कामला ज्वरनाशनम्।

दाड़िमाद्यं घृतञ्चैतदश्विभ्यां परिकीर्त्तितम् ॥ ७६ ॥

इति दाड़िमाद्यं घृतम्।

श्वदंष्ट्रा सकणा मुस्ता गुडूची फल्गुपल्लवाः।
दर्भाङ्कुराश्च गण्डीरौ रोहिषस्य च पल्लवाः ॥ ७७ ॥
काला पुनर्नवा श्यामा शारिवा देवदारु च।
पिप्पली शृङ्गवेरञ्च विड़ङ्गं मरिचानि च ॥ ७८ ॥
पाठा कम्पिल्लकं भार्गी द्वे हरिद्रे निदिग्धिका।
एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ॥ ७९ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
यावन्त्येतानि चूर्णानि द्विस्तावत् स्यादयोरजः ॥ ८० ॥
ततो विड़ालपदकं पिबेदुष्णेन वारिणा।
अलाभे चापि मद्यानां मेहान् जयति विंशतिम् ॥ ८१ ॥
श्वयथुञ्च तथार्शांसि पाण्डुरोगं हलीमकम्।
उदराण्यथ शूलानि प्लीहानञ्चापि कर्षति ॥ ८२ ॥
एभिर्गोमूत्रपिष्टैस्तु गुटिकां कारयेद्भिषक्।
रोगिष्वेतेषु मुख्याः स्युर्बलमांसविवर्द्धनाः ॥ ८३ ॥

इति गोक्षुरादिचूर्णगुटिकाः।

कण्टकार्य्या गुडूच्याश्च संहरेच्च शतं शतम्।
सङ्कुट्योलूखले विद्वांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ ८४ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
त्रिकटु त्रिफला रास्ना विड़ङ्गान्यथ चित्रकम् ॥ ८५ ॥
काश्मर्य्यः पञ्चमूलानि पूतिकस्य त्वगेव च।
कलिङ्ग इति सर्वाणि सूक्ष्मपिष्टानि कारयेत् ॥ ८६ ॥
अक्षमात्रं पिबेत् प्रातः शालिभिः पयसा हितैः।
प्रमेहं मधुमेहञ्च मूत्रकृच्छ्रं भगन्दरम् ॥ ८७ ॥
आलस्यञ्चान्त्रवृद्धिञ्च कुष्ठरोगं विशेषतः।

क्षयं चैव निहन्त्येतन्नाम्ना सिंहास्मृतं घृतम् ॥ ८८ ॥

इति सिंहामृतं घृतम् ।

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी ।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥ ८९ ॥
सुधानीपकदम्बाश्च बिल्वभल्लातकानि च ।
शटी पुष्करमूलञ्च पिप्पलीमूलमेव च ॥ ९० ॥
पृथग्दशपलान् भागानेतांस्तोयार्मणे पचेत् ।
यवकोलकुलत्थानां प्रस्थं प्रस्थं विपाचयेत् ॥ ९१ ॥
तेन पादावशेषेण घृतप्रस्थं पचेद्भिषक् ।
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली ॥ ९२ ॥
शृङ्गवेरं विड़ङ्गानि वचा कम्पिल्लकं तथा ।
वर्गेणानेन तत्सिद्धं पाययेत्तु यथा बलम् ॥ ९३ ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ।
कुष्ठप्रमेहगुल्मांश्च श्वयथुं वातशोणितम् ॥ ९४ ॥
प्लीहोदराणि चार्शांसि विद्रधिं पिड़काश्च याः ।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥ ९५ ॥
पृथक्तोयार्मणे तत्र पचेद्द्रव्याच्छतं शतम् ।
शतत्रयाधिके तोय मुत्सर्गक्रमतो भवेत् ॥ ९६ ॥

इति धान्वन्तरं घृतम् ।

अर्जुनपटोलनिम्बैः सवचा दीप्यकरसा समञ्जिष्ठैः ।
भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः ॥ ९७ ॥
गोक्षुरकसोमवल्कैर्निम्बपटोलैर्हरिद्रया वरया ।
अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण ॥ ९८ ॥
मञ्जिष्ठातिविषाभ्यां कल्कैर्वा कषायैः पचेत्तैलम् ।
कफवातोत्थे मेहे पित्तक्षते साधयेत्सर्पिः ॥ ९९ ॥

इति अर्जुनाद्यं घृतं तैलं वा ।

गोकण्टकं सदलमूलफलं गृहीत्वा
सङ्कुट्टितं पलशतं क्वथितन्तु तोये ।
पादस्थितेन च जलेन पलानि दत्त्वा
पञ्चाशतञ्च विपचेदथ शर्करायाः ॥ १०० ॥
तस्मिन् घनत्वमुपगच्छति चूर्णितानि
दद्यात्पलद्वयमितानि सुभेषजानि ।
शुण्ठीकणामरिचनागदलत्वगैला-
जातीयकोशककुभत्रपुसीफलानि ॥ १०१ ॥
वांसीपलाष्टकमिह प्रणिधाय नित्यं
लेह्यं सुसिद्धममृतं पलसंमितन्तु ।
हन्त्याशु मूत्रपरिदाहविबन्धशुक्रान्
कृच्छ्राश्मरीरुधिरमेहमधुप्रमेहान् ॥ १०२ ॥

इति गोक्षुराद्यवलेहः ।

सारवर्गकषायं चतुर्थांशावशिष्टमवतार्य्य परिस्राव्य पुनरपनीय साधयेत् । सिध्यति चामलकलोध्रप्रियङ्गुदन्तीकृष्णायसताम्रचूर्णानि आवपेत् । तदेतदनुपदग्धं लेहीभूतमवतार्य्याऽनुगुप्तं निदध्यात् ततो यथा योगमुपयुञ्जीत एषः लेहः सर्वमधुमेहानपहन्ति ।

इति सारलेहः ।

असनञ्च प्रियालञ्च सालञ्च खादिरं तथा ।
शालवर्गं तथा ग्राह्यं भवेच्चैतद्विचक्षणैः ॥ १०३ ॥
मधुमेहत्वमापन्नं भिषग्भिः परिवर्जितम् ।
योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥ १०४ ॥
मासि शुक्रे शुचौ वापि शैलाः सूर्य्यांशु तापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥ १०५ ॥
शिलाजत्विति विख्यातं महाव्याधिनिवारणम् ।

त्रप्वादीनाञ्च लोहानां षण्णामन्यतमञ्च यत् ॥ १०६ ॥
ज्ञेयं तद्गन्धतश्चापि षड्योनि प्रथितं क्षितौ ।
लोहाद्भवति यद्यस्मा च्छिलाजतु जतुप्रभम् ॥ १०७ ॥
अस्य लोहस्य तद्वीर्य्यं रसं वापि विभर्त्ति तत् ।
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥ १०८ ॥
यथा तथा प्रयोगोऽपि श्रेष्ठः श्रेष्ठगुणः स्मृतः ।
तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥ १०९ ॥
कट्पाक्युष्णवीर्य्यञ्च शोषणं छेदनं तथा ।
तत्र यल्लघु कृष्णाभं स्निग्धं निःशर्करञ्च यत् ॥ ११० ॥
गोमूत्रगन्धि नीलं वा तत्प्रधानं प्रचक्षते ।
तद्भावितं सारगणै र्हृतदोषं दिनादितः ॥ १११ ॥
पिबेत्सारोदकेनैव श्लक्ष्णपिष्टं यथा बलम् ।
जाङ्गलेन रसेनाद्यात्तस्मिन् जीर्णे तु भोजनम् ॥ ११२ ॥
उपयुज्य तुलामेकाममृतस्यैवाश्मजन्मनः ।
विजित्य मधुमेहाख्य मातङ्कं रोगशङ्करम् ॥ ११३ ॥
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ।
शतं शतं तुलायान्तु सहस्र दशतौलिकम् ॥ ११४ ॥
भल्लातकविधानेन परिहारविधिः स्मृतः ।
मेहं कुष्ठमपस्मार मुन्मादं श्लीपदं तथा ॥ ११५ ॥
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम् ।
व्यपोहत्यचिरात्काला च्छिलाजतु निषेवितम् ॥ ११६ ॥
न सोऽस्ति रोगो यं वापि न हन्यात्तच्छिलाजतु ।
शर्करां चिरसंभूतां भिनत्ति च तथाश्मरीम् ॥ ११७ ॥
भावनालोड़ने चास्य कर्त्तव्ये भिषजैर्हितैः ।
एवं च माक्षिकं धातु तापीजममृतोपमम् ॥ ११८ ॥
मधुरं काञ्चनाभास मम्लं वा रजतप्रभम् ।

व्यपोहति ज्वरान् कुष्ठमेहपाण्डामयचयान् ॥ ११९ ॥
तद्भावितान् कुलत्थांश्च कपोतांश्च विवर्जयेत् ॥ १२० ॥

इति शिलाजतुमाचिकयोः प्रयोगः ।

प्रमेहपिड़कानां प्राक्कार्य्यं रक्तावसेचनम् ।
पाटनञ्च विपक्कानां तासां पानं प्रशस्यते ॥ १२१ ॥
क्वाथो वनस्पतेर्वस्तमूत्रं तीक्ष्णञ्च शोधनम् ।
एलादिकेन कल्केन तैलं व्रणविशोधनम् ॥ १२२ ॥
क्वाथमारग्वधादीनां कुर्य्यादुद्वर्त्तनानि च ।
सालसारादिना सेकं भोज्यादींश्चणकादिना ॥
प्रमेहिणो यदामूत्र मनाविलमपिच्छिलम् ।
विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ १२३ ॥

इति वङ्गसेनसङ्कलितः प्रमेहनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ मेदोनिदानमाह ।

अव्यायामदिवास्वप्न श्लेष्मलाहारसेविनः ।
मधुराम्लरसप्रायः स्नेहान्मेदो विवर्द्धते ॥ १ ॥
मेदसावृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।
मेदस्तु चीयते तस्मा दशक्तः सर्वकर्मसु ॥ २ ॥
क्षुद्रश्वासतृषामोह स्वप्नक्रथनसादनैः ।
युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥
मेदस्तु सर्वभूताना मुदरे वस्तिषु स्थितम् ।
अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥
मेदसावृतमार्गत्वा द्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्नि माहारं शोषयत्यपि ॥ ५ ॥
तस्मात्स शीघ्रं जरयत्याहारञ्चापि काङ्क्षते ।

विकारांश्चाश्नुते घोरान् कांश्चित्कालविपर्ययात् ॥ ६ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ ।
एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥ ७ ॥
मेदस्यतीव संवृद्धे सहसैवानिलादयः ।
विकारान्दारुणान् कृत्वा नाशयत्याशु जीवितम् ॥ ८ ॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥
स्थूले स्युर्दुस्तराः कुष्ठाः विसर्पाः सभगन्दराः ।
ज्वरातीसारमेहार्शः श्लीपदापचिकामलाः ॥ १० ॥
मेदसः स्वेददौर्गन्ध्या ज्जायते जन्तवोऽणवः ॥

अथ चिकित्सामाह ।

पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः ।
लवणा वस्तयश्चैव सेव्या मेदस्विना सदा ॥ ११ ॥
अस्वप्नञ्च व्यवायञ्च व्यायामश्चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तं क्रमेणाति विवर्द्धयेत् ॥ १२ ॥
श्रमचिन्ता व्यवायाध्व क्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनम् ॥ १३ ॥
सचव्यजीरकव्योष हिङ्गुसौवर्चलानलाः ।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ १४ ॥
फलत्रयं त्रिकटुकं सतैलं लवणान्वितम् ।
षण्मासादुपयोगेन कफमेदोऽनिलापहम् ॥ १५ ॥
विड़ङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णन्तु प्रयोगः श्रेष्ठ उच्यते ॥ १६ ॥
मूत्रं वा त्रिफलाचूर्णं मधुयुक्तं मधूदकम् ।
विल्वादि पञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः ॥
अतिस्थौल्यहरः प्रोक्तो मण्डश्च सेवितो ध्रुवम् ॥ १७ ॥

कर्कशदलाङ्घ्रिसलिलं शतपुष्पाहिङ्गुसंयुक्तम्।
पुटकेन हन्ति नियतं सर्वभवां मेदसां वृद्धिम्॥ १८॥
क्षारं वातारिपत्रस्य हिङ्गुयुक्तं पिबेन्नरः।
मेदोवृद्धिविनाशाय भक्तमण्डसमन्वितम्॥ १९॥
गवेधुकानां पिष्टानां यवानाञ्चाथ शक्तवः।
सक्षौद्रत्रिफलाक्काथः पीतो मेदोहरो मतः॥ २०॥
गुडूचीत्रिफलाक्काथ स्तथा लोहरजो युतः।
अश्मजं महिषाक्षं वा तेनैव विधिना पचेत्॥ २१॥
अतिमुक्ताद्बीजमध्यं मधुलीढं हन्त्युदरवृद्धिम्।
मधुना चित्रकमूलं तथैव हितभोजनो भुङ्क्ते॥ २२॥
यद्वोरुबूकमूलं मधुदिग्धं स्थाप्यते निशां सकलाम्।
तस्य सलिलस्य पानाज्जठरवृद्धिं शमं नयति॥ २३॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत्॥ २४॥
वदरीपत्रकल्केन पेया काञ्जिकसाधिता।
स्थौल्यं नश्येदग्निमन्थ रसं वापि शिलाजतु॥ २५॥
शैलेय कुष्ठागुरुदेवदारु कौन्ती समुस्तान्यथ पञ्चपत्रैः।
श्रीवासपृक्काखरपुष्पदेव पुष्पं तथा सर्वमिदं प्रपिष्य॥ २६॥
धत्तूरपत्रस्य रसेन गाढ़ मुद्वर्त्तनं स्थौल्यहरं प्रदिष्टम्॥ २७॥
अमृतात्रुटिविल्ववत्सकं कलिपथ्यामलकानि गुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पिडकास्थौल्यभगन्दरान् जयेत्॥ २८॥

इति अमृतादिगुग्गुलुः।

व्योषाग्निस्त्रिफलामुस्त विड़ङ्गैर्गुग्गुलुं समम्।
खादन् सर्वान् जयेद्व्याधीन्मेदः श्लेष्मामवातजान्॥ २९॥

इति दशाङ्गी गुग्गुलुः।

गुग्गुलुस्तालमूली च त्रिफलाखदिरं वृषम्।
त्रिवृतालम्बुषा शुण्ठी निर्गुण्डीचित्रकस्तथा ॥ ३० ॥
एषां दशपलान् भागां स्तोये पञ्चाढ़के पचेत्।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥ ३१ ॥
पलद्वादशकं देयं रुक्मलोहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलान्वितम् ॥ ३२ ॥
पचेत्ताम्रमये पात्रे सुशीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतु पलद्वयम् ॥ ३३ ॥
एलात्वचः पलार्द्धञ्च विड़ङ्गानि पलत्रयम्।
मरिचाञ्जनकृष्णे द्वे द्विपलं त्रिफलान्वितम् ॥ ३४ ॥
पलद्वयन्तु कासीसं सूक्ष्मचूर्णीकृतं बुधैः।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥ ३५ ॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम्।
अनुपानं क्षिपेत् क्षीरं जाङ्गलानां रसं तथा ॥ ३६ ॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेदोहरं परम्।
कामलापाण्डुरोगघ्नं श्वयथुं सभगन्दरम् ॥ ३७ ॥
मूर्च्छामोहविषोन्मादं गराणि विषमाणि च।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥ ३८ ॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम्।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥ ३९ ॥
श्रीकरं पुत्रजननं बलीपलितनाशनम्।
नाश्नीयात्कदलीकन्दं काञ्जिकं करमर्दकम्।
करीरं कारवेल्लञ्च षट्ककाराणि वर्जयेत् ॥ ४० ॥

इति लोहरसायनम्।

सालसारादिनिर्यूहं चतुर्थांशावशेषितम्।
परिस्रुतं ततः शीतं मधुना मधुरीकृतम् ॥ ४१ ॥

फाणितीभाव मापन्नं गुड़ं शोधितमेव वा ।
श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादेर्गणस्य च ॥ ४२ ॥
एकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ।
पिप्पलीचूर्णमधुभिः प्रलिप्ते चान्तरे शुचौ ॥ ४३ ॥
सूक्ष्माणि तीक्ष्णलोहस्य तनुपत्राणि बुद्धिमान् ।
खादिराङ्गारतप्तानि बहुशः प्रक्षिपेद्बुधः ॥ ४४ ॥
सुपिधानं ततः कृत्वा यवपल्वे निधापयेत् ।
मासांस्त्रींश्चतुरो वापि यावदालोहसंक्षयात् ॥ ४५ ॥
ततो जातरसं जन्तुः प्रातः प्रातर्यथा बलम् ।
उपयुञ्ज्याद्यथा योगमाहारं चास्य कल्पयेत् ॥ ४६ ॥
एष स्थूलं कृशेन्नूनं नष्टस्याग्नेः प्रसाधनम् ।
शोथघ्नः कुष्ठमेहघ्नो गुल्मपाण्ड्वामयापहः ॥ ४७ ॥
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनम् ।
अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥ ४८ ॥

इति लोहारिष्टः ।

व्योषचित्रकशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥ ४९ ॥
हिङ्गुकेवूकमूलानि यवानी धान्यचित्रकम् ।
सौवर्चलमजाजी च हपुषा चेति चूर्णयेत् ॥ ५० ॥
चूर्णं तैलघृतक्षौद्र भागा स्युर्मानतः समाः ।
शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥ ५१ ॥
प्रयोगात् त्वस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ॥ ५२ ॥
पाण्डुः प्लीहामयः शोथो मूत्रकृच्छ्रमरोचकम् ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥ ५३ ॥

क्रमयो ग्रहणीदोषः श्वैत्रं स्थौल्यमतीव च।
नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ५४ ॥

इति व्योषाद्यः शक्तुप्रयोगः।

त्रिफलातिविषामूर्वा त्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्था सप्तपर्णनिशाह्वयैः ॥ ५५ ॥
गुडूचीन्द्रासुरी कृष्णा कुष्ठसर्षपनागरैः।
तैलमेभिः समैः पक्वं सुरसादिरसप्लुतम् ॥ ५६ ॥
पानाभ्यञ्जनगण्डूष नस्यवस्तिषु योजितम्।
स्थूलतालस्य पाण्ड्वादीन् जयेत् कफकृतान् गदान् ॥५७॥

इति त्रिफलाद्यं तैलम्।

चन्दनं कुङ्कुमोशीर प्रियङ्गुत्रुटिरोचनाः।
तुरुष्कागुरुकस्तूरी कर्पूरो जातिपत्रिका ॥ ५८ ॥
जातीकक्कोलपूगानां लवङ्गस्य फलानि च।
नलिका नलदं कुष्ठं हरेणु तगरं प्लवम् ॥ ५९ ॥
नखं व्याघ्रनखं स्पृक्का वोलोदमनकं तथा।
स्थौणेयकं चोरकञ्च शैलेयं शैलवालुकम् ॥ ६० ॥
सरलं सप्तपर्णञ्च लाक्षा तामलकी तथा।
लामज्जकं पद्मकञ्च धातक्याः कुसुमानि च ॥ ६१ ॥
प्रपौण्डरीकं कर्चूरं समांशैः शाणमात्रकैः।
महासुगन्धिमित्येतत्तैलप्रस्थेन साधयेत् ॥ ६२ ॥
प्रस्वेदमलदौर्गन्ध्य कण्डूकुष्ठहरं परम्।
अनेनाभ्यक्तगात्रस्तु वृद्धः सप्ततिकोऽपि वा ॥ ६३ ॥
युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः।
सुभगो दर्शनीयश्च गच्छेच्च प्रमदा शतम् ॥ ६४ ॥
वन्ध्यापि लभते गर्भं षण्ढोऽपि पुरुषायते।

अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ६५ ॥

इति महासुगन्धितैलम्।

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः।
विल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ ६६ ॥
अलम्बुषाभवं चूर्णं पीतं काञ्जिकसंयुतम्।
दौर्गन्ध्यं नाशयत्याशु दुष्टं मेदो भवं नृणाम् ॥ ६७ ॥
विल्वशिवा समभागा लेपाङ्गजमूलगन्धमपहरति।
परिणत तिन्तिड़िकान्वितपूतिकरञ्जोत्थवीजं वा ॥ ६८ ॥
चिञ्चापत्रस्वरसं म्रक्षितं कक्षादि योजितं जयति।
दग्धहरिद्रोद्वर्त्तनमचिराच्चिरदेहदौर्गन्ध्यम् ॥ ६९ ॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥७०॥
हिलमोचिरसो युक्तश्चूर्णैरुदधिफेनजैः।
प्रलेपेन हरत्याशु देहदौर्गन्ध्यमुत्कटम् ॥ ७१ ॥
हरीतकीन्तु संपिष्य गात्रमुद्वर्त्तयेन्नरः।
पश्चात् स्नानं प्रकुर्वीत देहप्रस्वेदशान्तये ॥ ७२ ॥
वव्वूलस्य दलैः सम्यग्वारिणा परिपेषितैः।
गात्रमुद्वर्त्तयेत् पश्चाद्धरितक्या सुपिष्टया ॥ ७३ ॥
भूय उद्वर्त्तनं कृत्वा पश्चात् स्नानं समाचरेत्।
प्रस्वेदान्मुच्यते शीघ्रं ततस्त्वेवं समाचरेत् ॥ ७४ ॥
चन्द्रांशु सलिलं लोध्रं शिरीषोशीरकेसरैः।
उद्वर्त्तनं भवेद्ग्रीष्मे स्वेदकर्मनिवारणम् ॥ ७५ ॥
सुरया सममभयाफल चूर्णं मधुना विलिह्य प्रत्यूषे।
स्वेदान् हत्वा लभते पुरुषोऽप्यत्यन्तसौरभ्यम् ॥ ७६ ॥
मल्लीकुसुमाभयकरिलेपो घर्मं विनिहन्ति सदाहम्।
विचकिलपत्रहरिद्रे कर्कटिपत्रं सदूर्वया सहितम्।

सम्पिष्य गात्रलेपात् घर्मं विविधं शमं याति ॥ ७७ ॥
हस्तपादस्रुतौ योज्यं गुग्गुलुपञ्चतिक्तकम् ।
अशक्तौ पञ्चतिक्तं वा पक्त्वा खादेदतन्द्रितः ॥ ७८ ॥

इति वङ्गसेनसङ्कलितः मेदोनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ उदररोगनिदानमाह ।

रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ १ ॥
रुध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः ।
प्राणानपानान् सन्दूष्य जनयन्त्युदरं नृणाम् ॥ २ ॥
तत्पूर्वरूपं बलवर्णकाङ्क्षा बलीविनाशो जठरे निरोधः ।
जीर्णापरिज्ञानविदाहयुक्तो वस्तौ रुजः पादगतश्च शोथः ॥३॥
आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ।
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ॥ ४ ॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ ५ ॥
तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु ।
कुक्षिपार्श्वोदरकटी पृष्ठरुक् पर्वभेदनम् ॥ ६ ॥
शुष्ककासाङ्गमर्दश्च गुरुता मलसंग्रहः ।
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ॥ ७ ॥
सतोदभेदमुदरं तनु कृष्णशिराततम् ।
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥ ८ ॥
वायुश्चात्र सरुक् शब्दो विचरेत् सर्वतो गतिः ।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।

बलिनस्तदजाताम्बुयत्नसाध्यं नवोत्थितम् ॥ ९ ॥
अजातशब्दमरुजं सशब्दं नातिभारिकम्।
सदा गुड़गुड़ायन्तं शिलाजालगवाक्षितम् ॥ १० ॥
नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रशाम्यति।
हृद्वङ्क्षणकटिनाभिगुदं प्रत्येकशूलिनः ॥ ११ ॥
कर्कशं सृजतेऽपानं नातिमन्दे च पावके।
लोलस्याचिरमेवास्ये मूत्रेऽल्पे संहृते वह्निः।
अजातोदकमित्येतैर्युक्तं विज्ञाय लक्षणैः ॥ १२ ॥

अथ चिकित्सामाह।

उपक्रमेद्भिषग्दोष बलकालविशेषवित्।
स्थिरादिसर्पिषः पानं स्नेहस्वेदविरेचनम् ॥ १३ ॥
वेष्टनं वाससा नाभौ सान्त्वनञ्चोपनाहनम्।
चित्रतैलं स्थिराद्यन्तु निरूहः सानुवासनः।
पयोयूषरसान्नञ्च योज्यं वातोदरे क्रमात् ॥ १४ ॥
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ॥१५॥
कुष्ठं दन्ती यवक्षारं व्योषं त्रिलवणं वचा।
अजाजी दीप्यकं हिङ्गु स्वर्जिका चव्यचित्रकम् ॥ १६ ॥
शुण्ठी चोष्णाम्बुना पीता वातोदररुजापहा ॥ १७ ॥
दशमूलीकषायेण क्षीरवृत्ति शिलाजतु।
सद्यो वातोदरी क्षीरं मौष्ट्रं वाश्नातु केवलम् ॥ १८ ॥
सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गुविड़ञ्चेति समानि कुर्यात् ॥१९॥
एतानि चूर्णानि घृतप्लुतानि युञ्जीत पूर्वं कवले प्रशस्तम्।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम् ॥२०॥

अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः ॥२१॥

इति सामुद्राद्यं चूर्णम् ।

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ।
सक्षौद्रैरर्द्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ॥ २२ ॥
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्य रसेन तु ।
दधिमण्डाढ़कं दत्त्वा तत्सर्पिर्जठरापहम् ॥ २३ ॥
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ।
अनया मात्रया वारद्वयं पाच्यमिदं हविः ॥ २४ ॥

इति दशमूलषट्पलं घृतम् ।

दशमूलीकषायेण रास्नानागरदारुभिः ।
पुनर्नवाभ्याञ्च घृतं सिद्धं वातोदरापहम् ॥ २५ ॥

इति दशमूलाद्यं घृतम् ।

लशुनस्य तुलामेकां जलद्रोणे विपाचयेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥ २६ ॥
तत्क्वाथञ्च परिस्राव्य विशाले ताम्रभाजने ।
चित्रतैलाढ़कं दद्यात् भेषजानि प्रदापयेत् ॥ २७ ॥
त्रिकटुत्रिफलादन्ती हिङ्गुसैन्धवचित्रकम् ।
देवदारुवचाकुष्ठं मधुशिग्रुपुनर्नवम् ॥ २८ ॥
सौवर्चलविड़ङ्गानि दीप्यकं हस्तिपिप्पली ।
एतेषां पलिकान् भागां स्त्रिवृतार्द्धपलानि च ॥ २९ ॥
पिष्ट्वा कषायेणानेन शनैर्मृद्वग्निना पचेत् ।
तत्पिबेत्प्रातरुत्थाय यथाग्निबलमात्रया ॥ ३० ॥
निहन्ति सर्वरोगाणि जठराणि विशेषतः ।
मूत्रकृच्छ्रमुदावर्त्तं मन्त्रवृद्धिं गुदक्रमीन् ॥ ३१ ॥
पार्श्वकुक्षिभवं शूल मामशूलमरोचकम् ।
यकृदष्ठीलिकानाहान् प्लीहानञ्चाङ्गवेदनाम् ॥ ३२ ॥

मासमात्रेण नश्यन्ति चाशीतिर्वातजा गदाः।

इति लशुनतैलम्। इति वातोदरम्।

अथ पित्तोदरनिदानमाह।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता।
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित्॥ ३३॥
पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते।
धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते॥ ३४॥

अथ चिकित्सामाह।

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
दुर्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना॥ ३५॥
सञ्जातबलकायाग्निं जातस्निग्धं विरेचयेत्।
त्रिवृत्कल्केन पयसा रुवुकस्य शृतेन वा।
शातलात्रायमाणाभ्यां कृतेनारग्वधेन च॥ ३६॥
घृतं पित्तोदरे देयं मधुरौषधसाधितम्।
स्यात्त्रिवृत्त्रिफलासिद्धं पश्चात्सर्पिर्विशोधनम्॥ ३७॥
न्यग्रोधादिकषायेण सर्पिः क्षौद्रसितायुतम्।
आस्थापनं प्रयोक्तव्यं स्नेहवस्तिसमन्वितम्॥ ३८॥
सान्द्रपायससिद्धेन कर्त्तव्यमुपनाशनम्।
स्थिरादिसाधितं तैलं क्षीरञ्च प्राशने हितम्।
पञ्चमूलीशृतं क्षीरं पित्तोदरविनाशनम्॥ ३९॥
पृश्निपर्णी बला व्याघ्री लाक्षानागरसाधितम्।
क्षीरं पित्तोदरं हन्ति इति पित्तोदरे क्रिया॥ ४०॥

इति पित्तोदरम्।

अथ श्लेष्मोदरनिदानम्।

श्लेष्मोदरेऽङ्गसदनं श्वयथुर्गौरवं तथा।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शौक्ल्यं त्वगादिषु॥४१॥

उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्।
चिराभिवृद्धिकठिनं शीतस्पर्शं गुरु स्थिरम्॥ ४२॥

अथ चिकित्सामाह।

श्लेष्मोदरिणन्तु पिप्पल्यादिसिद्धेन सर्पिषा: स्नेहयित्वा, स्नुहीक्षीरविपक्केनानुलोम्य च, त्रिकटुकमूत्रतैलप्रगाढ़ेन मुस्तकादिक्काथेनास्थापयेदनुवासयेच्च। किट्टसर्षपामलक-वीजैश्चोपनाहयेत् उदरिणं भोजयेच्चैनं त्रिकटुप्रगाढ़ेन कुलत्थयूषेण पयसा स्वेदयेच्चाभीक्ष्णम्।

व्योषयुक्तं कुलत्थाम्बु पयो वा भोजने हितम्।
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा।
सक्षीरतैलपानैश्च शमयेत्तु कफोदरम्॥ ४३॥

इति कफोदरम्।

अथ सन्निपातोदरनिदानमाह।

स्त्रियोऽन्नपानं नखरोममूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा॥ ४४॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्य्युः सुघोरं जठरं त्रिलिङ्गम्॥४५॥
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च।
सचातुरो मूर्च्छति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च।
दूष्योदरं कीर्त्तितमेतदेव प्लीहोदरं कीर्त्तयतो निबोध॥ ४६॥

अथ चिकित्सामाह।

सन्निपातोदरे कार्य्य एष एव क्रियाक्रमः।
रोहीतकाभयाकल्कं गोमूत्रेण विभावितम्।
पीतं सर्वोदरप्लीहमेहार्शः कृमिगुल्मनुत्॥ ४७॥
सप्तलाशङ्खिनीसिद्धं घृतं चात्र विशोधनम्।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे पिबेत्॥ ४८॥
नागरं त्रिफलाप्रस्थं घृततैलं तथाढ़कम्।

मस्तुना साधयित्वा तु पिबेत्सर्वोदरापहम् ॥ ४९ ॥
कफमारुतसम्भूते गुल्मे चैव प्रशस्यते ॥ ५० ॥

इति नागराद्यं यमकम्। इति त्रिदोषदरम्।

अत ऊर्द्ध्वं निगद्यन्ते सामान्या योगसम्मताः।
दोषैः कुक्षौ हि सम्पूर्णे वह्निर्मन्दत्व मिच्छति ॥ ५१ ॥
तस्माद्भोज्यानि पेयानि दीपनानि लघूनि च।
शालिषष्टिकगोधूम यवनीवारभोजनम् ॥ ५२ ॥
विरेकास्थापनं श्रेष्ठं सर्वेषु जठरेषु च।
उदकानूपजं मांसं शाकं पिष्टकृतं तिलान् ॥ ५३ ॥
व्यायामाध्व दिवास्वप्नस्नेहपानानि वर्जयेत्।
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ॥ ५४ ॥
नाद्यादन्नानि जठरे तोयपानं विवर्जयेत्।
उदरिणां मलाढ्यत्वा द्बहुशः शोधनं हितम् ॥ ५५ ॥
क्षीरेणैरण्डजं तैलं पिबेन्मूत्रेण वा शकृत्।
ज्योतिष्मत्या पिबेत्तैलं पयसा वा दिनाष्टकम् ॥ ५६ ॥
कङ्कुष्ठचूर्णं मुस्ताम्बुपीतं संसेव्य मानवः।
अष्टाभ्योऽप्युदरेभ्यश्च द्रुतं कुर्य्यान्निवृत्तिकाम् ॥ ५७ ॥
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशनः।
सहस्रमुपयुञ्जीत शक्तितो जठरामयी ॥ ५८ ॥
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ५९ ॥
यवानीहपुषाजाजी व्योषयुक्तं कफोदरी।
सन्निपातोदरी क्षिप्रं त्रिकटुक्षारसैन्धवैः ॥ ६० ॥
बद्धोदरी च हपुषा दीप्यकाजाजीसैन्धवैः।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ ६१ ॥

शिलाजतूनां मूत्राणां गुग्गुलोस्त्रिफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ ६२ ॥
पूतीकरञ्जवीजं मूलकवीजं गवादनीमूलम् ।
शङ्खभस्म च काञ्जिकपीतं शमयेज्जलोदरमपि ॥ ६३ ॥
कलिङ्गवीजशाणश्च शाणः टङ्कणहिङ्गुनोः ।
शङ्खशाणसमायुक्तं षड्वा पिप्पलीमाषकाः ॥ ६४ ॥
गोमूत्रेण तु सपिष्य पीतं शमयति द्रुतम् ।
उदराणि च सर्वाणि चिरजातोदकान्यपि ॥ ६५ ॥
सप्ताहं माहिषं मूत्रं पयसाऽन्नाम्बुवर्जितम् ।
पीतमौष्ट्रमजामूत्रं श्वयथूदरनाशनम् ॥ ६६ ॥
यः पिबेत्प्रातरुत्थाय चव्यचित्रकमिश्रितम् ।
क्षिप्रं तस्य जयेदौष्ट्र मसाध्यमपि चोदरम् ॥ ६७ ॥
विशाला शङ्खिनीदन्ती त्रिवृन्नीलीफलत्रयम् ।
निशाविड़ङ्गकम्पिल्लं मूत्रेणोदरवान् पिबेत् ॥ ६८ ॥
पेयं वा चव्यदन्त्यग्निविड़ङ्गं व्योषकल्कितम् ।
पेयो वा शृङ्गवेराम्बु कषायो दारुवह्निजः ॥
चव्यविश्वसमुत्थो वा पेयो जठरशान्तये ॥ ६९ ॥
क्षारद्वयानलव्योष नीलीलवणपञ्चकम् ।
चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम् ॥ ७० ॥
विड़ङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तत् पयः ।
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ७१ ॥
गवाक्षीशङ्खिनीदन्ती नीलिनीकल्कसंयुतम् ।
सर्वोदरविनाशाय गोमूत्रपानमाचरेत् ॥ ७२ ॥
देवद्रुमं शिग्रु च पूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम् ।
पीत्वाशु हन्याज्जठरं प्रवृद्धं क्रमीन् सशोथानुदरञ्च दूष्यम् ॥७३॥
पिप्पलीवर्द्धमानं वा कल्पोद्दिष्टं प्रयोजयेत् ।

जठराणां विनाशाय नास्ति तेन समं भुवि ॥ ७४ ॥
स्नुक्पयसा परिभावित तण्डुलचूर्णैर्निर्मितः पूपः।
उदरमुदारं हन्या द्योगोऽयं सप्तरात्रेण ॥ ७५ ॥
वव्वूलस्य त्वचं श्रेष्ठां क्वाथयेत्सलिलेन तु।
पुनः पचेत्कषायन्तु यावत्सान्द्रत्वमागतम् ॥ ७६ ॥
तत्पिबेत्तक्रसंयुक्त' तक्रभोजी मिताशनः।
निहन्यादाशु योगोऽयं जलोदरमपि ध्रुवम् ॥ ७७ ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत्।
पिप्पलीवर्द्धमानं वा पयसैव प्रयोजयेत् ॥ ७८ ॥
देवदारुपलाशार्क हस्तिपिप्पलिशिग्रुभिः।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥ ७९ ॥
पटोलपत्र' रजनी विडङ्ग' त्रिफलात्वचम्।
कम्पिल्लकं नीलिनी च त्रिवृतं चेति चूर्णयेत् ॥ ८० ॥
षड़ाद्यान् कार्षिकानन्त्यां स्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वा पिबेत् ॥ ८१ ॥
विरिक्तो जाङ्गलरसै रोदनं मृदु भोजयेत्।
मण्ड' पेयाञ्च पीत्वा वा सव्योषं षड़हं पयः ॥ ८२ ॥
शृतं पिबेत्ततश्चूर्णं पिबेदेवं ततः पुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकानि च ॥ ८३ ॥
कामलां पाण्डुरोगञ्च श्वयथुं वापि कर्षति ॥ ८४ ॥

अत्र पटोलादीनां भागाः कार्षिका अन्येषां द्वित्रिचतुर्गुणाः भागा ग्रहणीयाः। इति पटोलाद्यं चूर्णम्।

यवानी हपुषा धान्य' त्रिफला सोपकुञ्चिका।
कारवी पिप्पलीमूल मजगन्धा शटी वचा ॥ ८५ ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रकम्।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ ८६ ॥

विड़ङ्गञ्च समांशानि दन्तिभागत्रयं भवेत्।
त्रिवृद्विशाले द्विगुणे शातला स्याच्चतुर्गुणा ॥ ८७ ॥
एष नारायणो नाम्ना चूर्णो रोगगणापहः।
एनं प्राप्य निवर्त्तन्ते रोगा विष्णुमिवासुराः ॥ ८८ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्वदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥ ८९ ॥
दधिमण्डेन विड्भेदे दाड़िमाम्बुभिरर्शसि।
परिकर्त्तिषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ ९० ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीरोगे कुष्ठे मन्दानले ज्वरे ॥ ९१ ॥
दंष्ट्राविषे मूलविषे सङ्गरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ ९२ ॥

इति नारायणचूर्णम्।

तिलसर्षपनालानि यवनालं सुधामपि।
दशमूलमपामार्गं दन्तीं चित्रकमाढ़कीम् ॥ ९३ ॥
मधूकमैन्द्रीं त्रिफलां त्रिवृतां करवीरकम्।
पुनर्नवां वृश्चिकालीमर्कम्पिल्लनिम्बकम् ॥ ९४ ॥
एतान् दशपलान् भागान् युक्त्या दग्ध्वा समावपेत्।
गोमूत्रे द्रोणसंयुक्ते सप्तकृत्वस्तु पाचयेत् ॥ ९५ ॥
वचामतिविषां पाठां द्वे हरिद्रे महौषधम्।
त्रिवृत्कम्पिल्लकं क्षारं तथैव लवणानि च ॥ ९६ ॥
महौषधं शिग्रुफलं कुष्ठं भल्लातकानि च।
पिप्पलीं च विड़ङ्गानि त्रिफलां देवदारु च ॥ ९७ ॥
कटुकां रोहिणीं मुस्तं दन्तीं हिङ्गुम्लवेतसम्।
दधिशुक्तारनालाना.माढ़काढ़कमाचरेत् ॥ ९८ ॥
समांशकेन भागेन सर्पिस्तैलं विपाचयेत्।

विगतार्चिर्यथाशान्तमथैतदवतारयेत् ॥ ९९ ॥
ततो विडालपदकं पिबेदुष्णेन वारिणा।
रुच्यैरम्लैश्च पानैश्च क्षीरैर्मूत्रेण वा पुनः ॥ १०० ॥
महाक्षार इति ख्यातो जठराणां विनाशनः।
प्लीहान्यर्शांसि गुल्मानि सशूलं हृदयग्रहम् ॥ १०१ ॥
यक्ष्माणञ्च प्रमेहञ्च पाण्डुरोगं भगन्दरम्।
सक्रमिग्रहणीदोषान् व्रणोदावर्त्तकुण्डलम् ॥
मूत्रकृच्छ्रमपस्मारं क्षारोऽयं विनिवर्त्तते ॥ १०२ ॥

इति महाक्षारः।

स्नुक्क्षीरदन्ती त्रिफला विड़ङ्गसिंही त्रिवृच्चित्रककर्षकल्कम्।
घृतं विपक्वं कुड़वप्रमाणं तोयेन तस्याक्षसमानकर्षम् ॥ १०३ ॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते पेयां रसं वा प्रचरेद्विधिज्ञः।
नाराचमेतज्जठरामयाणां युक्त्योपजुष्टं समनुप्रदिष्टम् ॥ १०४ ॥

इति नाराचघृतम्।

त्रिफलाचित्रको दन्ती वृहती कण्टकारिका।
स्नुहीसार्कविड़ङ्गानि घृतस्य कुड़वं पचेत् ॥ १०५ ॥
तस्य मृद्वग्निसिद्धस्य कर्षार्द्धं पाययेन्नरः।
शोथगुल्मोदरानाह प्लीहोदरकफोदरान् ॥ १०६ ॥
नाशयत्युल्वणानेतान् सर्पिर्नाराचसंज्ञितम् ॥ १०७ ॥

इति नाराचघृतम्।

पयस्यष्टगुणे सर्पिः प्रस्थं स्नुक् पयसः फलम्।
त्रिवृता पलषट्केन सिद्धं जठरगुल्मनुत् ॥ १०८ ॥

इति त्रिवृताद्यं घृतम्।

अर्कक्षीरपले द्वे तु स्नुहीक्षीरपलानि षट्।
पथ्या कम्पिल्लकं श्यामा शम्याकं गिरिकर्णिका ॥ १०९ ॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकं तथा।

एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ ११० ॥
अथास्य कोष्ठे मलिनि बिन्दुमात्रं प्रदापयेत् ।
यावत्तस्य पिबेद्बिन्दू स्तावद्वेगाद्विरिच्यते ॥ १११ ॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम् ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ॥ ११२ ॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ।

इति बिन्दुघृतम् ।

शालिपर्णी विदारी च सहदेवा सगोक्षुरा ।
उभे स्थिरे शारिवे च जीवकर्षभकावुभौ ॥ ११३ ॥
पर्णिन्यौ च विशाला च रुबूको वृद्धिरेव च ।
कण्डूरा त्वक् पत्री च फलत्रयमथापि वा ॥ ११४ ॥
एषां चतुर्दशपलं मानतः सर्वसंयुताम् ।
पुनर्नवैरण्डयोश्च पलमेकं पृथक् पृथक् ॥ ११५ ॥
षोड़शांशसमाख्यातं दशमूल्याश्च विंशतिम् ।
सङ्कुट्य क्वथिते द्रोणे जले पादावशेषिते ॥ ११६ ॥
दधिकाञ्जिकमूत्राणां प्रस्थं प्रस्थं चतुश्चतुः ।
तैलमैरण्डजं चैव प्रस्थमेकं समाचरेत् ॥ ११७ ॥
सार्द्धकर्षप्रमाणां तां मात्रां वैद्यस्तु दापयेत ॥ ११८ ॥
पलाशपुष्पीधवचित्रकाणां स्नुहीद्रुमत्वङ्मदनाह्वकानाम्।
फलत्रिकस्यापि तथैव दद्यात् चारस्य लोध्रस्य पलं तथैव ॥११९
पयः स्नुहायाश्च पलञ्चतुष्कं येषां च कल्केन पचेद्विधज्ञः ।
क्षीरेण तद्वै पिबतश्च जन्तोः सर्वोदरं तैलवरं निहन्ति ॥१२०॥

इति शालीपर्णीतैलम् । सामान्यविधिः ।

अथ प्लीहनिदानमाह ।

विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च ।
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धो प्लीहोत्थमेतज्जठरं वदन्ति ॥१२१॥

तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ॥१२२॥
प्लीहानिर्वेदनः श्वेतः कठिनः स्थूल एव च ।
महापरिग्रहः शान्तः श्लेष्मसम्भव उच्यते ॥ १२३ ॥
सज्वरः सपिपासश्च खेदनस्तीव्रवेदनः ।
पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥ १२४ ॥
नित्यमाबद्धकोष्ठश्च नित्योदावर्त्तपीड़ितः ।
वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ॥ १२५ ॥
क्लमो विदाहः सम्मोहो वैवर्ण्यं गात्रगौरवम् ।
उत्क्लेदभ्रममूर्च्छाभिर्ज्ञेयं रक्तस्य लक्षणम् ॥ १२६ ॥
त्रयाणामपि रूपाणि प्लीहासाध्ये भवन्ति हि ॥ १२७ ॥

अथ चिकित्सामाह ।

स्नेहस्वेदविरेकादि विधेयं प्लीहरोगिणे ॥ १२८ ॥
दध्ना भुक्तवतो वाम बाहुमध्ये शिरां भिषक् ।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ॥
प्लीहानं मर्दयेद्गाढ़ं दुष्टरक्तप्रशान्तये ॥ १२९ ॥
मणिबन्धे समुत्पन्नं वाममङ्गुष्ठमीरितम् ।
दहेच्छिरां शरेणाशु वैद्यः प्लीहप्रशान्तये ॥ १३० ॥
विड़ङ्गाढ्यान् ससिन्धूत्थान् शक्तून् कृत्वा वचान्वितान् ।
पिबेत् क्षीरेण सञ्चूर्ण्य प्लीहगुल्मोदरापहम् ॥ १३१ ॥
सिन्धुमगधाग्निचूर्णं शिग्रुशिवामलकीरसनिपीतञ्च ।
प्रवलमपि योगराजः प्लीहानं नाशयत्याशु ॥ १३२ ॥
तिलैरण्डद्रवस्तस्य क्षारो भल्लातकं कणा ।
एषां भागं समं कृत्वा तत्तुल्यन्तु गुड़ं मतम् ॥ १३३ ॥
खादेदग्निबलं मत्वा पावकस्य विवृद्धये ।
जयेत् प्लीहानमत्युग्रं यकृद्गुल्मं तथैव च ॥ १३४ ॥

अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ।
पीतः प्लीहोदरं हन्ति पिप्पलीमरिचान्वितः ॥ १३५ ॥
कुष्ठं वचाशृङ्गवेरं चित्रकं कौटजं फलम् ।
पाठा चैवाजमोदा च पिप्पल्यः समचूर्णिताः ॥ १३६ ॥
ततो विडालपदकं पिबेदुष्णेन वारिणा ।
प्लीहोदरमुदावर्त्तं सर्वमेतेन शाम्यति ॥ १३७ ॥
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ।
पयसा च प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ १३८ ॥
अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम् ।
निहन्ति मस्तुना पीतं प्लीहानमतिदारुणम् ॥ १३९ ॥
वायुः प्लीहानमुद्गम्य कुपितो यस्य तिष्ठति ।
शूलैः परितुदन् पार्श्वं प्लीहा तस्य विवर्द्धते ॥ १४० ॥
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम् ।
मातुलुङ्गरसोपेतं प्लीहशूलहरो रजः ॥ १४१ ॥
पलाशक्षारतोयेन पिप्पलीपरिभाविता ।
गुल्मप्लीहार्त्तिशमनी वह्निदीप्तिकरी मता ॥ १५२ ॥
रसेन जम्बीरफलस्य शङ्ख नाभीरजः पीतमवश्यमेव ।
कर्षप्रमाणं शमयेदशेषं प्लीहामयं कूर्मसमानमाशु ॥१४३॥
शरपुङ्खमूलकल्कः पीतस्तक्रेण नाशयत्यचिरात् ।
चिरतरकालसमुत्थं प्लीहानं रूढ़मवगाढ़म् ॥ १४४ ॥
क्षारं वा विड़कृष्णाभ्यां पूतीकस्याम्बु निःसृतम् ।
यकृत्प्लीहप्रशान्त्यर्थं पिबेत्प्रातर्यथाबलम् ॥ १४५ ॥

इति क्षारयोगः ।

सुस्विन्नं शाल्मलीपुष्पं निशापर्य्युषितं नरः ।
राजिकाचूर्णसंयुक्तं मद्यात् प्लीहोपशान्तये ॥ १४६ ॥
यवानिकाचित्रकयावशूक षड्ग्रन्थिदन्तीमगधोद्भवानाम् ।

प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥१४७॥

इति यवान्यादिचूर्णम्।

विड़ङ्गानि यवानी च चित्रकं चेति तत्समम्।
द्विगुणं देवदारु च नागरं सपुनर्नवम् ॥ १४८ ॥
अथ चैतानि चूर्णानि गवां मूत्रेण पाययेत्।
उदरीभूतमप्येवं प्लीहानं सम्प्रणाशयेत् ॥ १४९ ॥

इति विड़ङ्गादिचूर्णम्।

भल्लातकाभयाजाजी गुड़ेन सह मोदकः।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम् ॥ १५० ॥

इति भल्लातक मोदकः।

अभयाफलत्रयाणां पलत्रयं त्रिकटुकात्पलमेकञ्च।
दीप्यकचव्यकचित्रक विड़ङ्गत्वचाम्लसिन्धुवचार्द्धपलैः ॥ १५१ ॥
त्वक्पत्रैलाकर्षैस्त्रिभिर्युक्तं सुचूर्णितं सूक्ष्मम्।
त्रिंशद्गुड़पलसहिताः कर्त्तव्यास्तदक्षसम्मिता वटकाः ॥ १५२ ॥
अभयावटकानाम्ना प्लीहार्शो गुल्मजठरापहराः।
पाण्डामयकामलिनां मन्दाग्नीनां सर्वदा शस्ताः ॥१५३॥

इति अभयावटकाः।

चित्रकं त्रिवृता दन्ती त्रिफलापुष्करैः समैः।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु सैन्धवम् ॥ १५४ ॥
भावयेत्तु स्नुहीक्षीरे तत्काण्डे प्रक्षिपेद्बुधः।
मृत्तिकेनानुलिप्तस्य प्रक्षिपेज्जातवेदसि ॥ १५५ ॥
सुदग्धन्तु ततो ज्ञात्वा उद्धरेत्तु शनैर्भिषक्।
यकृत्प्लीहोदरानाह गुल्मपाण्ड्वामयादिहृत् ॥ १५६ ॥
सेविनोऽग्निबलं मत्वा अर्शोभ्यः प्रतिमोचयेत्।
लवणोऽग्निमुखो नाम्ना वह्नेर्दीप्तिकरः परः ॥ १५७ ॥

इति अग्निमुखलवणम्।

पिप्पलिपिप्पलीमूल चव्यचित्रकसुनागराणाम् ।
ससैन्धवानाम्पलिका भागा घृतप्रस्थं तदेकध्यम् ॥ १५८ ॥
तुल्यक्षीरं विपचेत्सर्पिः स्यात् खलु षट्पलकं नाम्ना ।
प्लीहाग्निसादगुल्मोदावर्त्तश्वयथुपाण्डुगदान् ॥ १५९ ॥
श्वासं कासं सपीनसमर्द्धाङ्गवातविषमज्वरानपहरति॥१६०॥

इति षट्पलकं घृतम् ।

चिरविल्वत्वचः क्वाथ मार्द्रकस्वरसं घृतम् ।
मस्तुभल्लातकक्वाथं शुक्तञ्चैवाम्लकाञ्जिकम् ॥ १६१ ॥
एतैस्तुल्यैर्घृतं धृत्वा कल्कैरेतैस्तु पादिकैः ।
ग्रन्थिकव्योषहपुषा हिङ्गुजाजीद्वयं तथा ॥ १६२ ॥
चव्याजमोदे सक्षारे तथा लवणपञ्चकम् ।
श्रेयसी चेति मृदुना तत्साध्यमनलेन वा ॥ १६३ ॥
वह्निषट्प्रस्थमेतत्तु जठरानलदीपनम् ।
प्लीहोदराध्मानहरं वातोदरदकोदरम् ॥ १६४ ॥
कफवातकृते चैव शूलेऽतीव प्रशस्यते ।
अर्शांसि नाशयत्याशु क्रमींश्चैव विशेषतः ॥ १६५ ॥
सपाण्डुराणि कुष्ठानि दद्रुकुष्ठानि यानि च ।
अन्यान्यपि च कुष्ठानि तानि हन्यादिदं घृतम् ॥ १६६ ॥

इ[ति] वह्निषट्प्रस्थं घृतम् ।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत् ।
आरनालन्तु द्विगुणं दधिमण्डं चतुर्गुणम् ॥ १६७ ॥
पञ्चकोलकतालीस क्षारैर्लवणसंयुतैः ।
द्विजीरकनिशायुग्मैर्मरिचन्त्वत्र दापयेत् ॥ १६८ ॥
प्लीहगुल्मोदरोन्मादपाण्डुरोगारुचिज्वरान् ।
वस्तिहृत्पार्श्वकट्यूरु शूलोदावर्त्तपीनसान् ॥ १६९ ॥
हन्यात्पीतं तदर्शोघ्नं शोथघ्नं दीपनं परम् ।

बलवर्णकरञ्चापि भस्मकञ्च नियच्छति ॥ १७० ॥

इति चित्रकाद्यं घृतम्। इति चित्रकघृतम्।

शिलाह्वयं नागरकालशाकं काकादनीमूलनिदग्धिका च।
पञ्चैव दद्याल्लवणानि हिङ्गुकृष्णा च तैरक्षसमैः पृथक् पृथक्॥१७१
प्रस्थं घृतं स्याच्च पचेच्छनैः शनैः चतुर्गुणं मूत्रमतः प्रदीयते।
पयश्च दद्यात् द्विगुणं विपक्वं तद्ब्रह्मजुष्टं प्रवदन्ति सर्पिः।
प्लीहोदरं दूष्यमथोदरञ्च आयास्यमानं जठरं निहन्ति ॥ १७२ ॥

इति ब्रह्मघृतम्।

स्वर्जिका च यवक्षारः कासीसं टङ्कणं तथा।
सौराह्वं सैन्धवञ्चैव लवणं स्फटिकानि च ॥ १७३ ॥
सर्वमेकत्र कर्त्तव्यं सूक्ष्मचूर्णन्तु कारयेत्।
कूपमध्ये क्षिपेत्तन्तु द्रावयेद् द्रावयन्त्रके ॥ १७४ ॥
गुल्मं प्लीहान्लथानाहं सर्वोदरांस्तथैव च।
अर्शांसि ग्रहणीदोषं भगन्दरव्रणानि च। १७५ ॥
नाशयेन्नात्र सन्देहो नान्यथा शङ्करोऽब्रवीत्।

इति शङ्खद्रावः।

रोहितकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ १७६ ॥
पलिकैः पञ्चकोलैश्च तत्तुल्यैश्चापि मात्रया।
रोहितकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ १७७ ॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम्।
तथा गुल्मज्वरश्वास क्रमिपाण्डुत्वकामलाः ॥ १७८ ॥
अत्राष्टगुणे जले निष्क्वाथ्य चतुर्भागावशेषः कर्त्तव्यः।

इति रोहितकघृतम्।

रोहितकात्पलशतं संक्वाथ्य बदराढ़कम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १७९ ॥

घृतप्रस्थं समावाप्य छागक्षीरं चतुर्गुणम् ।
तस्मिन्द्रव्याणि सर्वाणि प्रदद्यात्कार्षिकाणि च ॥ १८० ॥
व्योषं फलत्रिकं हिङ्गु यवानी तुम्बुरु विड़म् ।
अजाजीकृष्णलवणं दाड़िमं देवदारु च ॥ १८१ ॥
पुनर्नवा विशाला च यवक्षारं सपौष्करम् ।
विड़ङ्गं चित्रकञ्चैव हपुषा कारवी तथा ॥ १८२ ॥
एतैर्घृतं विपक्वन्तु विदध्याद्भाजने नवे ।
पाययेत्त्रिपलां मात्रां व्याधेर्बलमवेक्ष्य च ॥ १८३ ॥
रसकेनाथ यूषेण पयसा वा घृतं पिबेत् ।
प्रयुक्तन्तु घृतं तेषां व्याधीन् हन्यादिमान् बहून् ॥ १८४ ॥
यकृत्प्लीहोदरञ्चैव प्लीहशूलं तथैव च ।
हृच्छूलं कुक्षिशूलञ्च पार्श्वशूलमरोचकम् ॥ १८५ ॥
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम् ।
छर्द्यतीसारशूलघ्नं तन्द्राज्वरनिवारणम् ।
रोहितकघृतं ह्येतत् प्लीहानां दृष्टमौषधम् ॥ १८६ ॥

इति महारोहितकं घृतम् ।

कदलीतिलनालानां क्षारेण क्षुरकस्य च ।
पीतं तैलं जयेन्नृणां प्लीहानं कफवातजम् ॥ १८७ ॥

इति कदलीक्षारतैलम् ।

माणमार्गामृता वासा स्थिरा चित्रकसैन्धवम् ।
नागरं तालमूलञ्च प्रत्येकन्तु त्रिकार्षिकम् ॥ १८८ ॥
विड़ं सौवर्चलं क्षारौ पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ॥ १८९ ॥
सान्द्रीभूते गुटीं कुर्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शो ग्रहणीहरः ॥ १९० ॥

योगः परिकरो नाम्ना वह्निसन्दीपनः परः।

इति माषादिगुटिका।

चित्रकस्य शतं दद्यात् तत्तुल्यं ग्रन्थिकस्य च।
पञ्चाशद्दशमूलस्य शेषान् पञ्च पलान् पृथक्॥ १९१॥
बलाभार्गीशटी पाठा पौष्करं मूलमेव च।
चतुर्द्रोणेऽम्भसः पक्वा पादशेषावतारिते॥ १९२॥
पचेद्गुड़शतं दत्त्वा तैलवत् साधु साधयेत्।
चतुष्पलन्तु पिप्पल्यास्तुगाक्षीर्य्याश्चतुष्पलम्॥ १९३॥
त्रिजातकपलञ्चैकं मरिचस्य पलं तथा।
सूक्ष्मचूर्णं ततः कृत्वा दत्त्वा सम्यग्विघट्टयेत्॥ १९४॥
पलमात्रं ततः खादेत् प्लीहगुल्मोदराणि च।
हन्ति यक्ष्माणमत्युग्रं पित्तार्त्तिं चाम्लपित्तिनाम्॥ १९५॥
भारद्वाजेन कथितो लेहश्चित्रकसंज्ञकः॥ १९६॥

इति चित्रकलेहः।

चपलायाः पलं पञ्च यवाग्रं तावदेव तु।
सामुद्रलवणानाञ्च तावन्मात्रं प्रदापयेत्॥ १९७॥
वेणुशाखोटकञ्चैव शिखर्यङ्गांस्तथैव च।
शिरीषो लोध्रवृक्षश्च विशाखा माणकन्दकम्॥ १९८॥
सुधा च सुरपुष्पञ्च शम्याकदलसञ्चयम्।
वरुणं शिग्रुमूलञ्च वाट्यालं चित्रकं तथा॥ १९९॥
एषां पञ्चपलान् भागान् पलांशान् पञ्चविंशतिम्।
क्षारं दत्त्वा तु सर्व्वेषां पचेत्तत्र जलाढ़के॥ २००॥
गोमूत्रं तावदेवात्र साधयेच्च यथाविधि।
भक्षयेद् घृतसंयुक्तां यकृत् प्लीहहरां पराम्॥ २०१॥
वातमष्ठीलकाञ्चैव गुल्मं हन्ति त्रिदोषजम्॥

इति क्षारपिप्पली।

प्रशस्तेऽहनि नक्षत्रे वृक्षकं लोध्रचित्रकम् ।
वरुणं शिग्रुमूलञ्च वाव्यालं चाथ पुष्करम् ॥ २०२ ॥
कन्दो विशाखापुष्पी च तथा ब्राह्मणयष्टिका ।
पृथक् पञ्च पलान्येषां पलाशात् पञ्चविंशतिः ॥ २०३ ॥
क्षारं कृत्वा पचेद्वारि गोमूत्राढ़कयोस्तथा ।
सर्वं विपाच्य सक्षारा समुस्तानलपिप्पली ॥ २०४ ॥
पृथक् पञ्चपलैर्भागैः पिप्पली घृतमर्दिता ।
यकृत् प्लीहहरा श्रेष्ठा वाताष्ठीलामगुल्मनुत् ॥ २०५ ॥

इति वृहत् क्षारपिप्पली ।

पारिभद्र पलाशार्क स्नुह्यपामार्गचित्रकाः ।
वरुणोऽग्निमन्य' वसुकं श्वदंष्ट्रा वृहतीद्वयम् ॥ २०६ ॥
पूतीकास्फोतकुटज कोशातक्यः पुनर्नवा ।
समूलपत्रशाखायाः क्षोदयित्वा उदूखले ॥ २०७ ॥
तिलनालप्रदीप्ताग्नि सुदग्धं भस्म शीतलम् ।
क्षारप्रस्थं गृहीत्वा तु न्यसेत् पात्रे दृढ़े नवे ॥ २०८ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
पूर्ववत् क्षारकल्केन साधयेच्च विचक्षणः ॥ २०९ ॥
प्रस्थमेकञ्च लवणं तदर्द्धाञ्च हरीतकीम् ।
तुल्याम्बुभागगोमूत्रं साधयेन्मृदुनाग्निना ॥ २१० ॥
किञ्चित् सवाष्पे चार्द्रे च सम्यक् सिद्धेऽवतारिते ।
अजाजी त्र्यूषणं हिङ्गु यवानी पुष्करं शटी ॥ २११ ॥
एतैश्चार्द्धपलैश्चूर्णं कृत्वा तत्र प्रदापयेत् ।
लवणञ्चाभया नाम भक्षयेच्च यथा बलम् ॥ २१२ ॥
व्याधिञ्चावेक्ष्य मतिमाननुपानं यथा हितम् ।
ये च कोष्ठगता रोगास्तान्निहन्ति न संशयः ॥ २१३ ॥
यकृत् प्लीहोदरानाह गुल्माष्ठीलाग्निसादनुत् ।

प्रतितूनयर्त्ति हृद्रोग शर्कराश्मरिनाशनम् ॥ २१४ ॥

इति अभयालवणम्। इति प्लीहोदरचिकित्सा।

अथ यकृद्रोगनिदानमाह।

मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः चीणबलोऽतिपाण्डुः।
सव्यान्यपार्श्वे यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तथैव ॥ २१५ ॥

उदावर्त्तरुजानाहैर्मोहतृट्दहनज्वरैः।
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥ २१६ ॥

अथ चिकित्सामाह।

प्लीहोद्दिष्टाः क्रियाः सर्वा यकृतः संप्रकल्पयेत्।
कार्य्यञ्च दक्षिणे बाहौ तत्र शोणितमोक्षणम् ॥ २१७ ॥
पिप्पली चित्रकात् मूलं पिष्ट्वा सर्पिर्विपाचयेत्।
घृतं चतुर्गुणं चीरं यकृत् प्लीहोदरापहम् ॥ २१८ ॥

इति चित्रकघृतम्।

पिप्पलीकल्कसंयुक्तं घृतं चीरं चतुर्गुणम्।
पिबेत् प्लीहाग्निसादाग्नि यकृद्रोगहरं परम् ॥ २१९ ॥

इति पिप्पलीघृतम्। इति यकृद्दाल्युदरम्।

अथ बद्धोदरनिदानमाह।

यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत्।
सञ्चीयते यस्य मलः सदोषः शनैः शनैः शर्करवच्च नाड्याम्॥२२०
निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्।
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति ॥ २२१ ॥
स्वल्पं तथान्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा।
तस्मात् चतान्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदजस्तु भूयः२२२
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम्।
एतत्परिस्राव्युदरं प्रदिष्टन्दकोदरं कीर्त्तयतो निबोध ॥ २२३ ॥
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़ः।

पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥२२४
स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति ।
स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना वा ॥२२५॥
यथादृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥२२६

अथ चिकित्सामाह ।

स्विन्ने बद्धोदरे योज्यो मूत्रैस्तीक्ष्णैर्यथान्वितैः ।
सतैललवणश्चात्र निरूहश्चानुवासनम् ॥ २२७ ॥
क्षारं वनकरीषाणां स्विन्नं वस्त्रेण गालयेत् ।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥ २२८ ॥
पिप्पलीचित्रकं शुण्ठी त्रिवृता त्रिफलावचा ।
द्वौ क्षारौ सातला दन्ती स्वर्णक्षीरी विषाणिका ॥ २२९ ॥
कोलप्रमाणां वटिकां पिबेत्सौवीरसंयुताम् ।
श्वयथावथ वल्कस्य प्रवृद्धे च दकोदरे ॥ २३० ॥

इति क्षारगुटिका ।

छिद्रान्त्रबद्धसंज्ञेषु जठरेषु प्रयोगवित् ।
लब्धानुज्ञो भिषक्कुर्य्यात् पाटनं व्यधनक्रियाम् ॥ २३१ ॥
तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक् ।
ज्ञातींश्च सुहृदो दारान् ब्राह्मणान् नृपतिं गुरुम् ॥ २३२ ॥
अनुज्ञाप्य भिषक्कर्म्म विदध्यात् संशयावहम् ।
सुवेष्टितमधो नाभेर्वामतश्चतुरङ्गुलात् ॥ २३३ ॥
अङ्गुल्योदरमात्रन्तु व्रीहिवक्त्रेण भेदयेत् ।
नाड़ीमुभयतो द्वारां संयोज्यापहरेज्जलम् ॥ २३४ ॥
न चैकस्मिन् दिने सर्वं दोषन्त्वपहरेत्तथा ।
कासश्वासज्वरास्तृष्णा गात्रभङ्गश्च वेपथुः ॥ २३५ ॥
अतिसारश्च सुतरां पूर्य्यते जठरं तथा ।
तृतीयपञ्चमाद्येषु दिवसेष्वल्पशः पुनः ॥ २३६ ॥

स्रावयेदुदकं तैललवणाभ्यां दृढं व्रणम्।
बध्नीयाद्विस्रुते दोषे जठरं परिगृह्य वा॥ २३७॥
संवेष्टयेद्गाढ़तरं कौशेयाविकचर्म्मभिः।
निःस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत्॥ २३८॥
अतःपरन्तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः।
त्रीन्मासान् पयसा पेयां पिबेत्त्रींश्चापि भोजयेत्॥ २३९॥
सकोरदूषं श्यामाकं पयसा लवणं लघु।
नरः संवत्सरेणैव जयेत्प्राप्तजलोदरम्॥ २४०॥

इति बद्धक्षतदकोदरचिकित्सा।

स्नुह्यर्कदन्ती धववह्निफल्गी शोफारिपांशी सलकञ्च कन्दः।
माणत्रियामाग्निकवाणखण्डा तालं तथा मञ्जरिपारभद्रौ॥२४१॥
प्रत्येकशः क्षारचतुःपलांशं तथा पलांशस्य समैः समः स्यात्।
चतुर्गुणे क्वाथजलावशेषे पचेद्विधिज्ञो विधिशुद्धलोहम्॥ २४२॥
चूर्णीकृतं तत् पुटितं पुटेन तन्तुच्युतं षोड़षिकं पलानाम्।
वर्षाभुभल्लातकवह्निदन्ती त्रिवृद्द्रवन्ती रविवृद्धमूलम्॥ २४३॥
कञ्चुकी तालमूली च पीवरी गिरिकर्णिका।
नीलिनी वृहती पत्रं शम्याकं विजया समम्॥ २४४॥
चतुष्पलांशं क्वथिताष्टशेषं स्नुह्यर्कदुग्धेन पलाष्टकेन।
दत्वा पचेत्ताम्रमये सुपात्रे पलैर्द्विरष्टैर्द्विविषस्तथैव॥ २४५॥
अमूनि चूर्णानि च सिद्धशीते क्षिपेत्तथा लोहरजः समानि॥२४६
मिलितानीति सम्बन्धः।
लवणानि च सर्वाणि क्षारः पञ्चोषणस्तथा।
मरिचं चाजमोदा च हिङ्गुभल्लातकानि च॥ २४७॥
चित्रकं तालमूलञ्च गवाक्षी त्रिवृतामृता।
वर्षाभूः सूरणो मानो विड़ङ्गं दन्तीग्रन्थिकम्॥ २४८॥
पलं माक्षिकचूर्णस्य कङ्कुष्ठकशिलाजतोः।

गुग्गुलोर्गन्धकस्यापि पारदस्य पलं पृथक् ॥ २४८ ॥
शीते पलाष्टकं क्षौद्रं दत्त्वा मधुघृतान्वितम् ।
लोहदण्डेन संघृष्य लोहपात्रे चिरं भिषक् ॥ २५० ॥
विधिज्ञोक्तेन विधिना हिताहारविहारवान् ।
अन्नपानं यथासात्म्यं कुर्वन्नित्यं निरामयः ॥ २५१ ॥
उदरेषु च सर्वेषु शोथेषु विविधेषु च ।
अर्शःसु च विशेषेण पाण्डुरोगे सकामले ॥ २५२ ॥
विधिनोक्तेन कुर्वाणो नरो रोगान्न विन्दति ।

इत्युदरारिलौहम् ।

अथ साध्यासाध्यनिदानम् ।

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं स्मृतम् ।
बलिनस्तदजाताम्बु यत्नात्साध्यं नवोत्थितम् ॥ २५३ ॥
पक्षाद्दद्धगुदं तूर्द्धं सर्वजातोदकं तथा ।
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥ २५४ ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नं तनुत्वचम् ।
बलशोणितमांसाग्नि परिक्षीणन्तु वर्जयेत् ॥ २५५ ॥
पार्श्वभङ्गान्न विद्वेषशोफातिसारपीड़ितम् ।
विरिक्तं चाप्युदरिणं पूर्य्यमाणं विवर्जयेत् ॥ २५६ ॥

अथ चिकित्सामाह ।

हरीतकीनागरदेवदारु पुनर्नवा छिन्नरुहा कषायः ।
सगुग्गुलुर्मूत्रयुतश्च पेयः शोफोदराणां प्रवरः प्रयोगः ॥ २५७ ॥
पुनर्नवानिम्बपटोलशुण्ठी तिक्तामृतादार्व्यभया कषायः ।
सर्वाङ्गशोथोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥२५८॥
पुनर्नवां दार्व्यभयां गुड़ूचीं पिबेत्समूत्रां महिषाख्ययुक्ताम् ।
त्वग्दोषशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्द्धकफामयेषु ॥ २५९ ॥
पुराणवारुणी वह्नि त्र्यूषणं लवणानि च ।

चविकाचिरविल्वञ्च भस्म चैषां सुसंस्कृतम् ॥ २६० ॥
गव्येन मस्तुना साध्यं भोजयेत भिषग्वरः।
श्वयथूदरगुल्मेषु वह्निसादे च दुस्तरे ॥ २६१ ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं तोयक्षीराभ्यामभ्यासे पायसन्तु तम् ॥ २६२ ॥
हन्ति वातोदरं शोथं ग्रहणीपाण्डुतामपि ॥ २६३ ॥
नवघृतमार्द्रककल्क स्वरसाभ्यां परिसाधितं च विधिना।
श्वयथूदराग्निसादैरभिभूतः पिबेद्भवत्यरोगः ॥ २६४ ॥

इति आर्द्रकघृतम्।

विल्वाग्निचव्यार्द्रक शृङ्गवेरक्काथेन कल्केन च सिद्धमाज्यम्।
सच्छागदुग्धं ग्रहणीगदोत्थे शोथाग्निसादारुचिषु प्रदिष्टम्॥२६५

इति विल्वादिघृतम्।

इति वङ्गसेनसङ्कलितः उदरनिदानचिकित्साधिकारः समाप्तः।

---

## अथ शोथनिदानमाह।

रक्तपित्तकफान् वायुर्दुष्टो दुष्टा वहिःशिराः।
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम् ॥
उत्सेधं संहतं शोथं तमाहुर्निचयात्मकम् ॥ १ ॥
सर्वैर्हेतुविशेषैस्तु रूपभेदान्नवात्मकम्।
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ॥ २ ॥
तत्पूर्वरूपं दवथुः शिरायामोऽङ्गगौरवम् ॥ ३ ॥
शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा।
दध्याममृच्छाकविरोधिपिष्टगरोपसृष्टान्ननिषेवणञ्च ॥ ४ ॥
अर्शांस्य चेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः।
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥५॥

सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ शिरातनुत्वम्।
सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥६॥

चलस्तनुत्वक् परुषोऽरुणोऽसितः
सुषुप्तिहर्षार्त्तियुतो निमित्ततः।
प्रशाम्यति प्रोन्नमति प्रपीड़ितो
दिवाबली च श्वयथुः समीरणात् ॥ ७ ॥
मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शसहोऽचिरागवान्
स पित्तशोथो भृशदाहपाकवान् ॥ ८ ॥

गुरुस्थिरः पाण्डुररोचकान्वितप्रसेकनिद्रावमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीड़ितो नचोन्नमेद्रात्रिबली कफात्मकः॥९

निदानकृतिसंसर्गाच्छ्वयथुः स्यात् द्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ॥ १० ॥
अभिघातेन शस्त्रादि छेदभेदक्षतादिभिः।
हिमानिलो दध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ११ ॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्।
भृशोष्मालोहिताभासः प्रायशः पित्तलक्षणः ॥ १२ ॥
विषजः सविषप्राणिपरिसर्पणमूत्रणात्।
दंष्ट्रादन्तनखाघाता दविषप्राणिनामपि ॥ १३ ॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात्।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ १४ ॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ॥ १५ ॥
दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशये स्थिताः।
पक्वाशयस्था मध्ये तु वर्चस्थानगतास्त्वधः।
कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ १६ ॥

यो मध्यदेशे श्वयथुः कष्टः सर्वाङ्गगश्च यः।
अर्द्धाङ्गोऽरिष्टभूतः स्याद्यश्चोर्द्धं परिसर्पति॥ १७॥
श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च।
यस्य चान्ने रुचिर्नास्ति श्वयथुं तं विवर्जयेत्॥ १८॥
अनन्योपद्रवकृतः शोथः पादसमुत्थितः।
पुरुषं हन्ति नारीञ्च मुखजो गुदजो द्वयम्॥ १९॥
ऊर्ध्वगामी नरं पद्म्या मधोगामी तथा स्त्रियम्।
उभयं वस्तिसञ्जातः शोथो हन्ति न संशयः॥ २०॥
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः॥ २१॥
क्षुन्नाशो हृदयाऽशुद्धिस्तन्द्राजठरगौरवैः।
दोषप्रवृत्तिर्नो यत्र व्याधिमामान्वितं वदेत्॥ २२॥
उक्तञ्च तन्त्रान्तरे।—

अथ चिकित्सामाह।

पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम्।
अल्पमल्पं पटुस्नेहं भोजनं श्वयथौ हितम्॥ २३॥
सप्ताहं माहिषं मूत्रं पयसाऽन्नाम्बुवर्जितम्।
पीत्वा चौष्ट्रमजामूत्रं श्वयथूदरनाशनम्॥ २४॥
शिग्रुत्वङ्नक्तमालार्क दार्व्यारग्वधमूलकैः।
गोमूत्रपिष्टैः श्वयथुः प्रलेप्तव्यः कफात्मकः॥ २५॥
स्वोक्तिश्चाह।
निदानदोषैस्तु विपर्ययक्रमैरुपाचरेत् वै बलकालदोषवित्।
यथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्वणदोषमादितः॥ २६॥
शिरोगतं शीर्षविरेचनैश्च
संशोधनैः शोध्यमधस्तथोर्ध्वम्।
उपाचरेत् स्नेहभवं हि रूक्षणैः
प्रकल्पयेत् स्नेहगणैश्च रूक्षजम्॥ २७॥

विबद्धविट्केऽनिलजे निरूहणं घृतं तु पित्तानिलजे सतिक्तम् ।
पयश्च मूर्च्छापरिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते ।
कफोत्थितं क्षारकटूष्णसंयुतैः समूत्रदुग्धासवयुक्तिभिर्हरेत् ॥२८॥

शोथे वातोत्थिते पूर्वं मासार्द्धं त्रिवृतं पिबेत् ।
तैलमैरण्डजं वापि मलबन्धे तदेव तु ॥ २९ ॥
शाल्यन्नं पयसा युक्तं रसैर्वापि प्रयोजयेत् ।
स्वेदाभ्यङ्गांश्च वातघ्नान् सेकलेपांश्च कल्पितान् ॥ ३० ॥
शुण्ठीपुनर्नवैरण्ड पञ्चमूलशृतं जलम् ।
वातके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ ३१ ॥
न्यग्रोधादिगणे सिद्धं सर्पिः स्यात्पित्तशोथिने ।
तृण्मोहदाहपादस्थे हिमलेपादिवाचरेत् ॥ ३२ ॥

क्षीराशनः पित्तकृते तु शोथे पिबेद्गुडूचीत्रिफलाकषायम् ।
पिबेद्गवां मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाक्षमात्रम् ॥३३॥

पटोलत्रिफलारिष्ट दार्वीक्वाथः सगुग्गुलुः ।
हन्ति पित्तकृतं शोथं तृष्णाज्वरसमन्वितम् ॥ ३४ ॥
कफोद्भवे पिबेत्तैलं सिद्धमारग्वधादिना ।
मन्दाग्नौ स्तिमिते कोष्ठे स्रोतोरोधे रुजावति ॥ ३५ ॥
क्षारमूत्रासवारिष्ट चूर्णतक्राणि योजयेत् ॥ ३६ ॥

कफे तु कृष्णासिकतापुराण पिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठिजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥३७॥
वर्हानुरूपः स्वरसः सर्षपतैलेन मिश्रितः पीतः ।
पङ्कजपत्रसमुत्थः शोथानां नाशनः परमः ॥ ३८ ॥

पुनर्नवाविश्वत्रिवृद्गुडूची शम्याकपथ्यासुरदारुकल्कम् ।
शोथे कफोत्थेऽक्षसमं समूत्रं क्वाथं पिबेद्वाप्यथ चैव तेषाम् ॥३९॥
व्योषं त्रिवृत्तिक्तकरोहिणी च सायोरजः सत्रिफलारसेन ।
पीताः कफोत्थं शमयन्ति शोथं गव्येन मूत्रेण हरीतकी वा॥४०॥

विड़ङ्गातिविषादारु नागरेन्द्रयवावचा।
उष्णाम्बुना पिबेच्छोथी ह्यक्षमात्रं महौषधम्॥ ४१॥
स्नुक्क्षारभाविताः कृष्णाः पथ्यामूत्रेण वा युताः।
योजिताः शमयन्त्याशु शोथं श्लेष्मभवं नृणाम्॥ ४२॥
पुनर्नवाऽमृतादारु दशमूलरसाढ़के।
आर्द्रकस्वरसे प्रस्थे गुड़स्य च तुलां पचेत्॥ ४३॥
तत्सिद्धं व्योषचव्यैला त्वक्पत्रैः कार्षिकैः पृथक्।
चूर्णीकृतैर्लिहेच्छीते मधुनः कुड़वं क्षिपेत्॥ ४४॥
लेहः पौनर्नवो नाम्ना श्लेष्मशोथनिसूदनः।
श्वासकासारुचिहरो बलपुष्ट्यग्निवर्द्धनः॥ ४५॥

इति पुनर्नवादिलेहः।

मिश्रे मिश्रक्रमं कुर्य्यात् सर्वजे सर्वमेव तु॥ ४६॥

पिप्पल्यजाजीगजपिप्पली च
निदिग्धिका नागरचित्रके च।
रजन्यथो पिप्पलीमूलपाठा
मुस्तञ्च चूर्णं सुखतोयपीतम्॥ ४७॥
हन्यात्त्रिदोषं चिरजञ्च शोथं
कल्कोऽथ भूनिम्बमहौषधाभ्याम्।
रसस्तथैवाऽऽर्द्रकनागरस्य
पयोऽथ जीर्णे पयसान्नमद्यात्॥ ४८॥

शिलाद्वयञ्च त्रिफलारसेन हन्यात् त्रिदोषं श्वयथुं प्रसह्य।
तक्रं पिबेद्वा गुरुभिन्नवर्चाः सव्योषसौवर्चलमाक्षिकञ्च।
विड्वातसङ्गे पयसा रसैर्वा प्रागुष्णमद्यादुरुचूकतैलम्॥ ४९॥

विल्वपत्ररसं पूतं शोषणं श्वयथौ त्रिजे।
विड्भङ्गे चैव दुर्नाम्नि विदध्यात् कामलासु च॥ ५०॥
शोथे वागन्तुजे कुर्य्यात् सेकलेपादिशीतलम्॥ ५१॥

भल्लातक्या जयेच्छोथं सतिला कृष्णमृत्तिका।
माहिषं नवनीतं वा लेपाद्दुग्धं तिलान्वितम्॥ ५२॥
यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः।
शोथमारुष्करं हन्ति चूर्णं सालदलस्य च॥ ५३॥
महिषीक्षीरसंपिष्टैर्नवनीतसमन्वितैः।
भल्लातककृतः शोथस्तिललिप्तश्च शाम्यति॥ ५४॥
सरुचकप्रलेपस्तु तिलवृक्षोद्भवोमृदा।
भल्लातकोत्थं श्वयथुं हन्ति सर्वरुजां ध्रुवम्॥ ५५॥
विषनिमित्तोत्थेषु शोथेषु विषोक्तः प्रतीकारः कर्त्तव्यः।
पथ्यामृताभार्गिपुनर्नवाग्नि दार्वीनिशादारुमहौषधानाम्।
क्वाथः प्रसह्योदरपाणिपादवक्त्रस्थितं हन्त्वचिरेण शोथम्॥५६॥
पुनर्नवामूलकविश्वदारु क्विन्नोद्भवा चित्रकमूलसिद्धाः।
रसा यवाग्वश्च पयांसि यूषाः शोथे प्रदेया दशमूलगर्भाः॥५७॥
वृश्चीव देवद्रुमनागरैर्वा दन्तीत्रिवृत्त्र्यूषणचित्रकैश्च।
पयः सुसिद्धं विधिना निपीतं गीतं परं शोथहरं भिषग्भिः॥५८
क्षीरं शोथहरं दारु वर्षाभूनागरैः शृतम्।
पेयं वा चित्रकव्योष त्रिवृद्दारुप्रसाधितम्॥ ५९॥
विल्वमूलं त्रिकटुकं श्यामाचित्रकमेव च।
क्षीरमेतैः शृतं पेयं श्वयथोर्विनिवारणम्॥ ६०॥
यूषो मूलकशुण्ठीनां शाकं वह्निपुनर्नवा।
माणकन्दकृता हन्ति यवागूः शोथमुद्धतम्॥ ६१॥
सेकस्तथार्कवर्षाभू निम्बक्वाथेन शोफजित्।
गोमूत्रेणापि कुर्वीत सुखोष्णेनावसेचनम्॥ ६२॥
उरुबूककरञ्जार्क वर्षाभूनिम्बकैः शृतम्।
कोष्णं सेकं प्रशंसन्ति शोफे सर्वाङ्गगे नृणाम्॥ ६३॥
पुनर्नवादारुशुण्ठी सिद्धार्थः शिग्रुमेव च।

पिष्ट्वा चैवारनालेन प्रलेपः सर्वशोथनुत् ॥ ६४ ॥
विभीतकानां फलमध्यलेपः सर्वेषु दाहार्त्तिहरः प्रदिष्टः।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पिड़िकासुलेपः॥६५॥
रास्नाव्हषार्कं त्रिफलाविड़ङ्गं शिग्रुत्वचो मूषिककर्णिका च।
निम्बार्कजो व्याघ्रनखः समूर्वा सुवर्चिका तिक्तकरोहिणी च॥६६
सकाकमाची बृहती सकृष्णा पुनर्नवानागरचित्रकैश्च।
उद्वर्त्तनं शोथिषु मूत्रपिष्टं शस्तं तथा गोसलिलेन सेकः॥६७॥

त्रूषणायो रजः क्षारः शोथनुत्त्रिफलारजः।
कटुकायो रजो व्योष त्रिवृद्भिर्वा समन्वितम् ॥ ६८ ॥
पुरो मूत्रेण सेव्यश्च पिप्पली वा पयोन्विता।
गुड़ेन वाऽभयातुल्या विश्वा वा शोथरोगिभिः ॥ ६९ ॥
दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित्।
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥ ७० ॥
गोमूत्रस्य प्रयोगो वा शीघ्रं श्वयथुनाशनः।
कल्को वा गिरिकर्ण्याश्च पीतः शोथविनाशनः ॥ ७१ ॥
पिवेदुष्णाम्बुना दारु पथ्याशुण्ठीपुनर्नवाः।
विड़ङ्गातिविषावासा विश्वदारुकणान्विताः ॥ ७२ ॥

इति दार्वादिचूर्णम्।

विड़ङ्गदन्तीकटुका त्रिवृच्चित्रकदारुणाः।
व्योषेभकृष्णात्रिफलाः समादेया ह्ययोरजः।
द्विगुणन्तु पिवेच्चूर्णं पयसा शोथशान्तये ॥ ७३ ॥

इति विड़ङ्गादिलौहम्।

सितपुनर्नवामूलं पीतञ्च गोसलिलेन निहन्ति।
शोथं सर्वसमुत्थमुदराणि च दुस्तराण्यचिरात् ॥ ७४ ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं क्षीरतोयाभ्यामभ्यसेत्पायसन्तु तत् ॥ ७५ ॥

इति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ ७६ ॥

इति मानमण्डः ।

सुसाध्यं वज्रकन्देन पायसं योतिमानतः ।
युक्तं कोशाम्रतैलेन तेनाभ्यङ्गं प्रकुर्वतः ।
शोथः प्रशान्तिमायाति बहुदुष्टं निरन्तरम् ॥ ७७ ॥
आर्द्रकं सगुड़ं खादेत् प्रकुञ्चार्द्धविवर्द्धितम् ।
यावत्पञ्चपलं मुद्गयूषक्षीररसाशिनः ॥ ७८ ॥
श्वयथुं गुल्ममुदरं कासं श्वासमरोचकम् ।
पीनसं पाण्डुदुर्नाम हृद्रोगञ्च विनाशयेत् ॥ ७९ ॥
गुड़ार्द्रकं वा गुड़नागरं वा गुड़ाभयां वा गुड़पिप्पलीं वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥८०॥
शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शो ग्रहणीविकारान्
हन्यात्तथान्यान् कफवातरोगान् ॥ ८१ ॥
आर्द्रकस्य रसः पीतः पुराणगुड़मिश्रितः ।
अजाक्षीराशिनां शीघ्रं सर्वशोथहरो भवेत् ॥ ८२ ॥
भूनिम्बविश्वकल्कं भुक्त्वा पेयः पुनर्नवाक्काथः ।
अपहरति नियतमाशु श्वयथुं सर्वाङ्गजं नृणाम् ॥ ८३ ॥
विश्वं गुडेन तुल्यं हस्वीव रसानुपानमभ्यस्तम् ।
विनिहन्ति सर्वशोथं घनवृन्दं चण्डवायुरिव ॥ ८४ ॥
गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ८५ ॥

इति गुड़चूर्णम् ।

गुड़ात्पलत्रयं ग्राह्यं शृङ्गवेरपलत्रयम् ।

शृङ्गवेरसमा कृष्णा लोहविट् भस्मनः पलम् ॥
एतच्चूर्णं समुद्दिष्टं सर्वश्वयथुनाशनम् ॥ ८६ ॥

इति द्वितीयगुड़ाद्यं चूर्णम्।

पुनर्नवा दार्व्यमृता पाठा विश्वं श्वदंष्ट्रिका।
रजन्यो द्वौ बृहत्यौ च पिप्पल्यश्चित्रकं विषम् ॥ ८७ ॥
समभागानि संचूर्ण्य गवां मूत्रेण वा पिबेत्।
बहुप्रकारं श्वयथुं सर्वगात्रप्रसारिणम्।
हन्ति चैवोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ ८८ ॥

इति पुनर्नवाद्यं चूर्णम्।

सिंहास्यामृतभाण्डाकी क्वाथं कृत्वा समाक्षिकम्।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं ज्वरं वमिम् ॥ ८९ ॥
गोमूत्रसिद्धं मण्डूरं सुरभीरसभावितम्।
माणकार्द्रकन्दानां रसेष्वपि च भावयेत् ॥ ९० ॥
त्रिफलाव्योषचव्यानां चूर्णं पाणितलद्वयम्।
क्षिपेत् सुसिद्धे पाके च मधुनश्च पलद्वयम् ॥ ९१ ॥
निहन्ति सर्वजं शोथं सर्वाङ्गञ्च विशेषतः ॥ ९२ ॥

अत्र गोमूत्रसिद्धं लोहमलं चूर्णं माणकार्द्रकरसैः आतपे परिभाव्य, त्रिफलादिचूर्णं द्विगुणमूत्रे पक्तव्यम्।

इति गोमूत्रमण्डूरम्।

पुनर्नवापत्ररसालमूलं संक्षुद्य तोयार्म्मणशेषसिद्धम्।
चतुर्थभागेन घृतं विपक्वं प्रस्थं तु तत्कल्कपलाष्टकेन ॥ ९३ ॥
संसेवितं वातबलासरोगान् सर्वांश्च शोथानपि दुस्तरांश्च।
गुल्मोदरप्लीहगुदोद्भवांश्च निहन्ति वह्निं कुरुते हि पुंसाम्॥९४॥

इति पुनर्नवाद्यं घृतम्।

पुनर्नवाचित्रकदेवदारु वचोषणक्षारहरीतकीनाम्।

कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिषूदनं स्यात् ॥९५॥

इति द्वितीयपुनर्नवाद्यं घृतम् ।

सचित्रकाधान्ययवानिपाठा सदीप्यकास्त्र्यूषणवेतसाम्लाः ।
बिल्वोत्पलं दाड़िमयावशूकं सपिप्पलीमूलमथापि चव्यम्॥९६॥

पिष्टाक्षमात्राणि जलाढ़केन
पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात् ।
अर्शांसि गुल्मं श्वयथुञ्च कृत्स्नं
निहन्ति वह्निं कुरुते च दीप्तम् ॥ ९७ ॥

इति चित्रकाद्यं घृतम् ।

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन ।
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ।
अर्शोऽतिसारानिलगुल्ममेहांस्तद्धन्ति सम्बर्द्धयते च वह्निम् ॥९८॥

इति द्वितीयचित्रकाद्यं घृतम् ।

माणकक्काथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥ ९९ ॥

इति माणकं घृतम् ।

स्थलपद्मपलान्यष्टौ त्र्यूषणस्य चतुष्पलम् ।
घृतप्रस्थं पचेदेतैर्दत्त्वा क्षीरं चतुर्गुणम् ॥
पञ्च कासान् हरेच्छीघ्रं शोथञ्चैव सुदुस्तरम् ॥ १०० ॥

इति स्थलपद्मकाद्यं घृतम् ।

रसेन विपचेत्सर्पिः पञ्चकोलकुलत्थयोः ।
पुनर्नवायाः कल्केन तत्परं शोथनाशनम् ॥ १०१ ॥

इति पञ्चकोलकघृतम् ।

शुष्कमूलकवर्षाभू दारुरास्नामहौषधैः ।
पक्वमभ्यञ्जनात् तैलं समूलं शोथनाशनम् ॥ १०२ ॥

इति शुष्कमूलकाद्यं तैलम् ।

सवेतसाः चीरवतां द्रुमाणां त्वचः समञ्जिष्ठलता मृणालाः।
सचन्दनं पद्मकबालकौ च पैत्ते प्रदेहस्तु सतैलपाकः॥ १०३॥
इति वेतसाद्यः प्रदेहः।

यवान् कुलत्थान् कोलांश्च दशमूलञ्च साधयेत्।
एतत्कषाये विपचेत्तैलं चीरचतुर्गुणम्॥ १०४॥
शतावरीजीवनीयैः पिष्टैः समधुशिग्रुभिः।
पानाभ्यङ्गाज्जयत्याशु श्वयथुं मारुतोल्वणम्॥ १०५॥
इति यवाद्यं तैलम्।

शैलेयकुष्ठागरुदारुकौन्ती त्वक् पद्मकोलाम्बुशटी समुस्तैः।
प्रियङ्गुस्थौणेयकहेममांसी तालीशपत्रप्लवपत्रधान्यैः॥ १०६॥
श्रीवेष्टकं ध्यामकपिप्पलीभिः पृक्कानखैश्चैव यथोपलाभम्।
वातोत्थितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम्॥१०७
इति शैलाद्यं तैलम्।

पञ्चमूलं सलवणं सरलं देवदारु च।
हस्तिकर्णपलाशस्य फलानि निचुलस्य च॥ १०८॥
पलाशं काकनासा च गुडूची देवपुष्पकम्।
अहिंस्रा श्रेयसी हिंस्रा वत्सगन्धा पुनर्नवा॥ १०९॥
कायस्था च वयस्था च दारुकौ जटिला जटा।
अलम्बुषोरुवूकञ्च प्रपुन्नाटं सनागरम्॥ ११०॥
शिग्रुगोधावतीभार्गी तर्कारी पौष्करी जटा।
एतैः सिद्धं यथा लाभं तैलमभ्यञ्जनैस्त्रिभिः॥ १११॥
निहन्त्युदीर्णं श्वयथुं जन्तोर्वातकफात्मकम्॥ ११२॥
इति पञ्चमूलाद्यं तैलम्।

द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुडाच्च।
लिहेत्सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च॥११३
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।

एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥११४
श्वासज्वरारोचकमेहगुल्मप्लीहांस्त्रिदोषोदरपाण्डुरोगान् ।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥११५॥
किञ्चिच्च कर्षपर्य्यायः शुक्तिरर्द्धपलं मतम् ।
निदध्यात् मधुनो मानं व्योषाद्यैर्मिश्रितस्य च ॥ ११६ ॥
दशमूल्या हरीतक्या तुल्यं कंसहरीतकी ।
मानं तेनात्र तत्रत्यं चरके प्राह जैज्जटः ॥ ११७ ॥

इति कंसहरीतकी ।

दशमूलीकषायस्य कंसे पथ्याशतं गुड़ात् ।
तुलां पचेद् घने दद्यात् व्योषक्षारचतुष्पलम् ॥ ११८ ॥
त्रिजातकं सुचूर्णांशं प्रस्थार्द्धं मधुना लिहेत् ।
दशमूलीहरीतक्यः शोथं घ्नन्ति सुदुस्तरम् ॥ ११९ ॥
ज्वरारोचकगुल्मार्शो मेहपाण्डूदरामयान् ।
श्वासकार्श्यामवाताम्ल पित्तं वह्नेश्च मन्दताम् ॥ १२० ॥

इति दशमूलहरीतकी ।

यथा दोषञ्च तीक्ष्णानि वमनानि विरेचनानुवासनानि अजस्रमुपसेवेत शिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्र पाण्डुशोथादिभिरिति ।

पुराणयवशाल्यन्नं दशमूलोपसाधितम् ।
अल्पमल्पं कटुस्नेह भोजनं शोथिने हितम् ॥ १२१ ॥
पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च ।
पयो गुड़ं तैलमथो गुरूणि शोथं जिघांसुः परिवर्जयेत्तु ॥१२२॥
त्रिकटुत्र्यूषणं दन्ती विड़ङ्गं त्रिफला तथा ।
चित्रको देवदारुश्च त्रिवृच्च गजपिप्पली ॥ १२३ ॥
चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयो रजः ।

चीरेण पीतमेतत्तु श्रेष्ठं श्वयथुनाशनम्॥ १२४॥

इति त्रिकटुकाद्यं लौहम्।

पुनर्नवामृतावह्नि गवाचीमाणशिग्रुकाः।
सूर्य्यावर्त्तकमूलञ्च पृथगष्टपलं जले॥ १२५॥
पादशेषे शृते द्रोणे सुपूते वस्त्रगालिते।
विधिवत्पाचितं पूतं योज्यञ्च पुटनक्रमैः॥ १२६॥
लोहचूर्णाष्टपलकं पचेत्ताम्रादिपात्रके।
अर्कस्य द्विपलं चीरं स्नुहीचीरं चतुष्पलम्॥ १२७॥
पलद्वयं कौशिकस्य गन्धकस्य पलं तथा।
पलार्धं पारदं तत्र विधिवच्छोधितं चिपेत्॥ १२८॥
सिद्धेऽवतारिते चूर्णं वच्यमाणं निधापयेत्।
कङ्कुष्ठवह्निकं दन्ती गवाच्याखण्डकर्णजम्॥ १२९॥
पलाशस्य च वीजानि कञ्चुकीतालमूलिका।
त्रिफला वा कृमिरिपु त्रिवृद्दन्तीभवं तथा॥ १३०॥
सूर्य्यावर्त्तगवाचश्च वर्षाभूवज्रवल्लिजम्।
एषां लोहसमा मात्रा भाण्डे स्निग्धे सुगोपिते॥ १३१॥
संस्थापिते ततः शुद्धौ सुयोगादस्य सर्वशः।
उदराणि पाण्डुरोगाश्च कामला सहलीमका॥ १३२॥
अर्शोभगन्दरं कुष्ठं कृमिः शूलं तथैव च।
ये चान्ये विविधा रोगाश्चिरकालानुबन्धिनः॥ १३३॥
ते सर्वे नाशमायान्ति प्रयोगादस्य सर्वशः।
नातःपरतरं किञ्चित् शोथोदरविनाशनम्॥ १३४॥

इति शोथोदरहरं लौहम्।

इति वङ्गसेनसङ्कलितः शोथोदरनिदानचिकित्साधिकारः समाप्तः।

———

## अथ अन्त्रवृद्धिनिदानमाह ।

क्रुद्धोऽनूर्ध्वगतिर्वायुः शोफशूलकरश्चरन् ।
कुक्षौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ।
प्रपीड्य धमनीः वृद्धिं करोति फलकोषयोः ॥ १ ॥
दोषास्रमेदो मूत्रान्त्रैः सवृद्धिः सप्तधा गदः ।
मूत्रान्त्रजावप्यनिला द्धेतुभेदस्तु केवलम् ॥ २ ॥
वातपूर्ण इति स्पर्शो रूक्षो वातादहेतुरुक् ।
पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ ३ ॥
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ॥४॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गस्तु रक्तजः ।
कफवान् मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ ५ ॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ।
मूत्रकृच्छ्रमधस्ताच्च चलयन् कफकोषयोः ॥ ६ ॥
वातकोपिभिराहारैः शीततोयावगाहनैः ।
धारणे रणभाराध्व विषमाङ्गप्रवर्त्तनैः ॥ ७ ॥
क्षोभनैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ।
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ ८ ॥
कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ ९ ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक् स्तम्भमतीव कुर्य्यात् ।
प्रपीड़ितोऽन्तःस्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुष्कम्॥१०
क्षुद्रान्त्रावयवाश्लेषो मुष्कयोर्वातसञ्चयात् ।
अन्त्रवृद्धिरसाध्येयं वातवृद्धिसमाकृतिः ॥ ११ ॥
वेगाघातं पृष्ठयानं व्यायामं मैथुनं तथा ।
अत्यशनमथाध्वानमुपवासं परित्यजेत् ॥ १२ ॥

अथ चिकित्सामाह।

वातवृद्धौ पिबेत् स्निग्धैः यथान्यायं विरेचनम्।
सक्षीरञ्च पिबेत्तैलं मासमैरण्डसम्भवम् ॥ १३ ॥
गुग्गुल्वेरण्डजं तैलं गोमूत्रेण पिबेन्नरः।
वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीम् ॥ १४ ॥
अन्त्रवृद्धिमदीप्ताग्नेर्वस्तिभिः समुपाचरेत्।
तैलं नारायणं योज्यं पानाभ्यञ्जनवस्तिभिः ॥ १५ ॥
जलौकाभिर्हरेद्रक्तं वृद्धौ पित्तभवे तथा।
पित्तग्रन्थिक्रमेणैव पित्तवृद्धिमुपाचरेत् ॥ १६ ॥
चन्दनं मधुकं पद्मं चोशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ॥ १७ ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
एषामेव कषायेण शीतेन परिषेचनम् ॥ १८ ॥
न्यग्रोधोदुम्बराश्वत्थाः सपिप्पलकपीतनाः।
क्षीरवृक्षास्तु पञ्चैषां वल्कलं पञ्चवल्कलम् ॥ १९ ॥
क्वचित्कपीतनस्थाने शिरीषो वेतसः क्वचित् ॥ २० ॥

इति पञ्चवल्कलम्।

कफवृद्धौ मूत्रसम्पिष्टैरुष्णवीर्य्यैः प्रलेपनम्।
पातव्यो मूत्रसंयुक्तः कषायः पीतदारुणः ॥ २१ ॥
त्रिकटु त्रिफलाक्वाथं सक्षारलवणं पिबेत्।
कफवातप्रकोपेऽपि विरेकः कफवृद्धिनुत् ॥ २२ ॥
त्रिफलाक्वाथगोमूत्रं पिबेत्प्रातरतन्द्रितः।
कफवातोद्भवं हन्ति श्वयथुं वृषणोद्भवम् ॥ २३ ॥
लेपनः कटुतीक्ष्णोष्णः स्वेदनं रूक्षमेव च।
परिषेकोपनाहौ च सर्वमुष्णमिहेष्यते ॥ २४ ॥
वचासर्षपकल्केन प्रलेपः शोथनाशनः।

शिग्रुत्वक् सर्षपैः पिष्टैः शोथः श्लेष्मानिलापहः ॥ २५ ॥
सरलागरुकुष्ठानि देवदारुमहौषधम् ।
मूत्रारनालसम्पिष्टं शोथघ्नं कफवातजित् ॥ २६ ॥
हरीतकीं मूत्रसिद्धां सतैललवणान्विताम् ।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ २७ ॥
अविदाहि च कर्त्तव्यं भेषजं रक्तपैत्तिके ।
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोत्तणम् ॥ २८ ॥
शीतमालेपनं कार्य्यं पाको रक्ष्यः प्रयत्नतः ।
मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत् ॥ २९ ॥
पिबेद्विरेचनं वापि शर्करा चौद्रसंयुतम् ।
पित्तवृद्धिक्रमं कुर्य्यां दामे पक्के च रक्तजे ॥ ३० ॥
स्विन्नं मेदः समुत्थन्तु लेपयेत् सुरसादिना ।
शिरोविरेचनद्रव्यैः सुखोष्णैर्मूत्रसंयुतैः ॥ ३१ ॥
संस्वेद्य मूत्रप्रभवं वस्त्रपट्टेन वेष्टयेत् ।
सीवन्याः पार्श्वतोऽधस्ताद्विध्येत् व्रीहिमुखेन वै ॥ ३२ ॥
मुष्ककोशमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः ।
वातवृद्धिक्रमं कुर्य्याद्दाहस्तत्राग्निना हितः ॥ ३२ ॥
शङ्खस्योपरिकर्णान्ते त्यक्त्वा सेवनीमादरात् ।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ३३ ॥
तैलमैरण्डजं पीत्वा बलासिद्धं पयोन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ ३४ ॥
रास्ना यष्ट्यमृतैरण्ड बलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः ॥ ३५ ॥
विदग्धासु च सर्वासु योज्यं कर्म व्रणापहम् ।
अङ्गुष्ठमध्ये त्वक् छित्वा दहेद्वायुं विवर्जयेत् ॥
अनेनैव विधानेन कुर्य्याद्वातकफात्मजे ॥ ३६ ॥

त्र्यूषणं पिप्पलीमूलं देवदारुफलत्रिकम् ।
कषायं पाचयेत् तेषां सक्षारलवणत्रयम् ॥ ३७ ॥
त्रिभिर्मासैः प्रशाम्येत वृद्धिर्वातकफात्मजा ॥ ३८ ॥
रास्नायष्ट्यमृतैरण्ड पटोलारेणुका बला ।
वृषश्च क्वथितो वृद्धिं निहन्याच्चित्रतैलवान् ॥ ३९ ॥
गन्धर्वतैलसंमिश्रं विशालामूलजं रजः ।
क्षीरेण पीतं सप्ताहात् वृद्धिं हन्ति न संशयः ॥ ४० ॥

अथ कुरण्डलक्षणमाह ।

अत्यभिष्यन्दि गुर्वन्नसेवनान्निचयं गतः ।
करोति ग्रन्थिवच्छोफं दोषो वङ्क्षणसन्धिषु ॥ ४१ ॥

अथ चिकित्सामाह ।

यवाम्बुना तु संपिष्टं मूलं भार्ग्याः प्रलेपनात् ।
कुरण्डं गण्डमालाञ्च हन्त्यवश्यं न संशयः ॥ ४२ ॥
शम्बूकोदरनिहितं गव्यं सप्ताहमातपे सर्पिः ।
स्थितमपहरति कुरण्डं सैन्धवचूर्णान्वितं लेपात् ॥ ४३ ॥
ससैन्धवं घृताभ्यक्तं ताम्रभाजनमातपे ।
प्रतप्तं चूर्णनिर्घृष्टं तन्मलं समुपाहरेत् ॥ ४४ ॥
म्रक्षयेत्तेन कौरण्डमनुद्विग्नो दिवानिशम् ।
प्रवृद्धं तेन कौरण्डं नश्यत्याह पुनर्वसुः ॥ ४५ ॥
लज्जालुमूलगृध्रस्य विट्प्रलेपः प्रयोजितः ।
कुरण्डं योनिरोगञ्च नाशयेदविकल्पतः ॥ ४६ ॥
सतैललवणं भस्म पारदं लेपमात्रतः ।
अपि तालफलाकारां वृद्धिं जयति वेगतः ॥ ४७ ॥
शतपुष्पामृतादारुचन्दनं रजनीद्वयम् ।
जीरके द्वे वचानागं त्रिफला गुग्गुलुत्वचम् ॥ ४८ ॥

मांसी कुष्ठं पत्रकैला रास्ना शृङ्गी च चित्रकम्।
कृमिघ्नमश्वगन्धा च शैलेयं कटुरोहिणी ॥ ४९ ॥
सैन्धवं तगरञ्चैव कुष्ठजातिविषैः समैः।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ ५० ॥
वृषमुण्डितिकैरण्डनिम्बपत्रभवो रसः।
कण्टकार्य्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत् ॥ ५१ ॥
सिद्धमेतद्घृतं पीतमन्त्रवृद्धिं व्यपोहति।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिमथापि वा ॥ ५२ ॥
मूत्रवृद्धिं श्लीपदञ्च यकृत्प्लीहानमेव च।
शतपुष्पाद्घृतं चैतद् हन्यादेतन्न संशयः ॥ ५३ ॥

शतपुष्पाद्यं घृतम्।

शतमेरण्डमूलस्य पलं शुण्ठ्या यवाढ़कम्।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥ ५४ ॥
तेन पादावशेषेण पयसा तत्समेन च।
प्रस्थमेरण्डतैलस्य तन्मूलाच्च चतुष्पलम् ॥ ५५ ॥
त्रिपलं शृङ्गवेरस्य गर्भं दत्त्वा विपाचयेत्।
तत्पिबेन्नियतः शुद्धो नरः क्षीरान्नभुक् सदा ॥ ५६ ॥
अन्त्रवृद्धिं जयत्याशु तैलं गन्धर्वहस्तकम् ॥ ५७ ॥

इति गन्धर्वहस्ततैलम्।

तैलं नारायणं योज्यं पानाभ्यञ्जनवस्तिषु।
घृतं सौरेश्वरञ्चैव ह्यन्त्रवृद्धिनिवृत्तये ॥
आर्द्रकं षट्पलं वापि चव्याद्यं च प्रयोजयेत् ॥ ५८ ॥

इति वङ्गसेनसङ्कलितः अन्त्रवृद्धिनिदानचिकित्साधिकारः समाप्तः।

---

## अथ ब्रध्ननिदानमाह ।

अत्यभिष्यन्दिगुर्व्वन्न शुष्कपूत्यामिषाशनात् ।
करोति ग्रन्थिवत् शोथं दोषो वङ्क्षणसन्धिषु ॥
ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्द्दिशेत् ॥ १ ॥
निर्व्यथश्च कुरण्डः स्यात् ब्रध्नो भवति सव्यथः ।
अयमेवानयोर्भेदः अन्यत्सर्वं समं तथा ॥ २ ॥

अथ चिकित्सामाह ।

भृष्टश्चैरण्डतैलेन कल्कः पथ्यासमुद्भवः ।
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ॥ ३ ॥
आविक्षीरेण गोधूमचूर्णं कुन्दुरुकस्य च ।
प्रलेपनं सुखोष्णं स्याद् ब्रध्नरोगहरं परम् ॥ ४ ॥
मृतमात्रे च वै काके विशाले तु प्रवेशयेत् ।
ब्रध्ने मुहूर्त्तं मेधावी तत्क्षणादरुजो भवेत् ॥ ५ ॥
अजाजीहपुषाकुष्ठं गोधूमं वदरान्वितम् ।
काञ्जिकेन तु संपिष्टं कुर्य्याद् ब्रध्नप्रलेपनम् ॥ ६ ॥
श्वदंष्ट्रासिन्धुविश्वाब्ददारुकृमिहराश्मभित् ।
लोध्रचूर्णं घृतेनाद्याद्वातब्रध्नहरं परम् ॥ ७ ॥
पुष्योद्धृतं हरेदाशु विप्लुतं तुषवारिणा ।
भार्गीमूलमखण्डन्तु पानाद्वङ्क्षणवातजित् ॥ ८ ॥
मूलं विल्वकपित्थयोररलुकस्याग्नेर्वृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम् ।
कृष्णाग्रन्थिकचव्यपञ्चलवणं क्षाराजमोदान्वितम्
पीतं काञ्जिककोष्णतोयमथितैश्चूर्णीकृतं ब्रध्नजित् ॥ ९ ॥

इति विल्वाद्यं चूर्णम् ।

सैन्धवं मदनं कुष्ठं शताह्वा निचुलं वचा ।
ह्रीवेरं मधुकं भार्गी देवदारु सनागरम् ॥ १० ॥
कट्फलं पौष्करं मेदे चविका चित्रकं शटी ।
विड़ङ्गातिविषाश्यामा हरेणु नलिनी स्थिरा ॥ ११ ॥
विश्वाजमोदे कृष्णा च दन्ती रास्ना च तैः समैः ।
साध्यमैरण्डजं तैलमभ्यङ्गात्कफवातजित् ॥ १२ ॥
ब्रध्नोदावर्त्तगुल्मार्शः प्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात् ॥ १३ ॥

इति वृहत्सैन्धवाद्यं तैलम् ।

इति वङ्गसेनसङ्कलितः ब्रध्ननिदानचिकित्साधिकारः समाप्तः ।

---

## अथ गलगण्डनिदानमाह ।

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान् वा यदि ह्रस्वो गलगण्ड तमादिशेत् ॥ १ ॥
वातः कफश्चापि गले प्रदुष्टौ मध्ये समाश्रित्य तथैव मेदः ।
कुर्वन्ति गण्ड क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥२॥
तोदान्वितः कृष्णशिरावनद्धः श्यावारुणो वा पवनात्मकस्तु ।
पारुष्ययुक्तश्चिरवृद्धिपाको यदृच्छया पाकमियात् कदाचित् ॥३॥
वैरस्य मास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रशोषः ।
स्थिरः सवर्णो गुरुरुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु ॥४॥
चिराच्च वृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित् ।
माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रलेपः ॥५॥
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोयुतः कण्डुयुतो रुजश्च ।
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ ६ ॥
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम् ॥७॥

कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्त्तम्।
क्षीणञ्च वैद्यो गलगण्डयुक्तं भिन्नस्वरञ्चापि विवर्जयेत् तम् ॥८॥

अथ चिकित्सामाह।

स्वेदोऽनिलोत्थे गलगण्डकादौ नाड्यानिलघ्नौषधपत्रभङ्गैः।
स्वेदोपनाहैः कफसम्भवे तु संस्वेद्य विस्रावणमेव कुर्य्यात् ॥९॥
मेदःसमुत्थे तु यथोपदिष्टं विध्येच्छिरां स्निग्धतनोर्नरस्य।
श्यामासुधालोहपुरीषदन्ती रसाञ्जनैश्चापि हितः प्रलेपः।
मूत्रेण वा लोध्र हिताय कल्कं प्रातः पिबेत्क्षारमहीरुहाणाम्॥१०

निचुलं शिग्रुवीजानि दशमूलमथापि वा।
आलेपनं वातगण्डे सुखोष्णं संप्रशस्यते ॥ ११ ॥
देवदारुविशाला च कफगण्डे प्रलेपनम्।
छर्दनं शीर्षरेकश्च सर्वो रेचनिको हितः ॥ १२ ॥

सर्षपान् शिग्रुवीजानि शणवीजातसीयवान्।
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत् ॥ १३ ॥
गण्डानि ग्रन्थयश्चैव गण्डमालाः सुदारुणाः।
आलेपादेव नश्यन्ति विलयं यान्ति चाचिरात् ॥ १४ ॥
रक्षोघ्नतैलयुक्तेन जलकुम्भीकभस्मना।
लेपनं गलगण्डस्य चिरोत्थस्यापि शस्यते ॥ १५ ॥
दग्धं वराहपुच्छाग्रं कटुतैलसमन्वितम्।
नस्येन हन्ति तरुणं गलगण्डमसंशयम् ॥ १६ ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपतः।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥ १७ ॥
श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः।
सर्पिषा नियताहारो गलगण्डप्रशान्तये ॥ १८ ॥
तिक्तालवुफले पक्के सप्ताहमुषितं जलम्।

मद्यं वा गलगण्डघ्नं पानात्पथ्यान्नसेविनः ॥ १९ ॥
कर्णयुग्मवहिः सन्धिमध्याभ्यासे स्थितञ्च यत् ।
उपर्य्युपरि तच्छिन्द्याद्गलगण्डे शिरात्रयम् ॥ २० ॥
हिंस्रा वचा गुडूची त्रिफलानलदारुपिप्पलीकल्कैः ।
भृङ्गस्वरसैः सिद्धं तैलं गलगण्डजित् मधुना ॥ २१ ॥

इति हिंस्राद्यं तैलम् ।

तैलं पिबेच्चामृतवल्लिनिम्ब हिंस्राह्वया वृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी ॥२२॥

इति अमृताद्यं तैलम् ।

प्रियङ्गुयष्टीमधुकं सकुष्ठं सपिप्पलीचन्दनमुस्तनिम्बम् ।
कल्कं विनिक्षिप्य विपाच्य तैलं चतुर्गुणे नस्यविधिप्रयुक्तम् ।
शाखोटवल्कस्वरसे च सिद्धं हन्यात् प्रवृद्धं गलगण्डरोगम् ॥२३॥

इति शाखोटाद्यं तैलम् ।

त्रिफलायाः त्रयो भागा व्योषस्तद्विगुणो मतः ।
तस्माच्च द्विगुणं देयं काञ्चनारस्य वल्कलम् ॥ २४ ॥
एकीकृते तु चूर्णेऽस्मिन् समो देयोऽथ गुग्गुलुः ।
क्षौद्रस्य तु ततो दद्यात् दशभागान् विचक्षणः ॥ २५ ॥
नाड़ीव्रणेषु सर्वेषु गलगण्डे तथैव च ।
सर्वासु गण्डमालासु गुटिकेयं प्रशस्यते ॥ २६ ॥

इति काञ्चनारगुग्गुलुगुटिका ।

यवमुद्गपटोलादि कटुरूक्षञ्च भोजनम् ।
छर्दिञ्च रक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥ २७ ॥

इति वङ्गसेनसङ्कलितः गलगण्डनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ गण्डमालानिदानमाह ।

कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु ।
मेदः कफाभ्यां चिरमन्दपाकैः स्याद्गण्डमालाबहुभिस्तु गण्डैः॥१
ते ग्रन्थयः केचिदवाप्तपाका स्रवन्ति नश्यन्ति भवन्ति चान्ये ।
कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ॥२॥
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वऽसाध्या॥३॥

अथ चिकित्सामाह ।

सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह ।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम् ॥ ४ ॥
अश्वत्थकाष्ठं निचुलं गवां दन्तञ्च दाहयेत् ।
वाराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥ ५ ॥
वनकर्पासजं मूलं तण्डुलैः सह योजितम् ।
पक्वाज्ये पोलिकां खादेदपचीनाशनाय च ॥ ६ ॥
अलम्बुषादलोद्भूतं स्वरसं द्विपलं पिबेत् ।
अपच्या गण्डमालाया: कामलायाश्च नाशनम् ॥ ७ ॥
मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक् ।
अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥ ८ ॥
चन्दनं साभया लाक्षा वचा कटुकरोहिणी ।
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ ९ ॥

इति चन्दनाद्यं तैलम् ।

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
एभिस्तैलं शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ॥ १० ॥

इति व्योषाद्यं तैलम् ।

काकादनी शिफाकल्कैर्निर्गुण्ड्याः स्वरसैः शृतम् ।

आरनालैश्च कटुकं तैलं स्यादपचीहरम् ॥ ११ ॥

इति काकादन्यादि तैलम् ।

अजमोदा ससिन्दूरं श्रीवासं रजनीद्वयम् ।
क्षारद्वयमपामार्गं हरितालं मनःशिलाः ॥ १२ ॥
आर्द्रकागुरु वा शुण्ठी जालिनी सेन्द्रवारुणी ।
सर्वे द्रव्याः समानाः स्युर्भागाश्चार्द्धपलोन्मिताः ॥ १३ ॥
छागेनाष्टगुणेनैव मूत्रेण मृदुवह्निना ।
कटुतैलं पचेदेभिः स्नुह्यर्कपयसा सह ॥ १४ ॥
उत्पाद्यमानामपचीं नस्याद्विपर्यये नृणाम् ।
उत्पन्नामामपक्वाञ्च नस्याभ्यङ्गेन नाशयेत् ॥ १५ ॥
विशीर्णक्वथितात्यर्थं निर्गन्धा पूयवाहिनी ।
चिरजासाध्यकल्पापि तैलेनानेन साध्यते ॥ १६ ॥
युक्ताहारविहारेण नस्यदानेन चैव हि ।
रोहिताच्चिप्रमेवं हि सप्तरात्रात् न संशयः ॥ १७ ॥

इति महाजमोदाद्यं तैलम् । इति अपची चिकित्सा ।

माक्षिकाढ्यः सकृत् पीतः क्वाथो वरुणमूलजः ।
गण्डमालां हरत्याशु चिरकालानुबन्धिनीम् ॥ १८ ॥
पिष्ट्वा ज्येष्ठाम्बुना पेयाः काञ्चनारत्वचः शुभाः ।
विश्वभेषजसंयुक्ता गण्डमालाहराः पराः ॥ १९ ॥
पलमर्द्धपलं वापि पिष्ट्वा तण्डुलवारिणा ।
काञ्चनारत्वचः पीत्वा मुच्यते गण्डमालया ॥ २० ॥
जिह्वाधःपार्श्वयोः मूलाच्छिरा द्वादश कीर्त्तिताः ।
तासां स्थूलशिरे द्वे तु छिद्यते च शनैः शनैः ॥ २१ ॥
वड़िशेनैव संगृह्य कुशपत्रेण बुद्धिमान् ।
स्रुते रक्ते व्रणे तस्मिन् दद्यात् सगुड़मार्द्रकम् ॥ २२ ॥
भोजनं चानभिष्यन्दि यूषः कौलत्थमिष्यते ।

नस्यं वैरेचनं योज्यं वमनञ्च प्रयोजयेत्।
गण्डमालाप्रशान्त्यर्थं यवमुद्गादिभोजनम्॥ २३॥
वचाशटीहरिद्रे द्वे देवदारुमहौषधम्।
हरीतकी चातिविषा मुस्तकेन्द्रयवाः समाः॥ २४॥
एतान् दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
पादशेषे जले तस्मिन् घृतप्रस्थं विपाचयेत्॥ २५॥
कल्कं दत्त्वा पलोन्मानैः क्वाथ्यद्रव्यैः सुपेषितैः।
प्रक्षिप्य त्रिगुणं क्षौद्रं व्योषचूर्णात् पलानि षट्॥ २६॥
यथाकालं पिबेन्मात्रां यथेष्टाहारमेव च।
गण्डमालां निहन्त्याशु बहुवर्षसमुद्भवाम्॥ २७॥
कासं श्वासं प्रतिश्यायं गलगण्डं मुखामयम्।

इति वचाद्यं घृतम्।

चक्रमर्दकमूलस्य कल्कं कृत्वा विपाचयेत्।
केशराजरसे तैलं कटुकं मृदुनाग्निना॥ २८॥
पक्वा शेषे विनिक्षिप्य सिन्दूरमवतारयेत्।
एतत् तैलं निहन्त्याशु गण्डमालां सुदारुणाम्॥ २९॥

चक्रमर्दादिसिन्दूरतैलम्।

निर्गुण्डीस्वरसे तैलं लाङ्गलीमूलकल्कितम्।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम्॥ ३०॥

इति निर्गुण्डीतैलम्।

गुञ्जामूलफलैस्तैलं तोये द्विगुणिते पचेत्।
नस्याभ्यङ्गेन शमयेद्गण्डमालां सुदारुणाम्॥ ३१॥

इति गुञ्जातैलम्।

विड़ङ्गानलसिन्धूत्थ रास्नोग्राक्षारदारुभिः।
तैलं चतुर्गुणं सिद्धं कटुतुम्बीजलेन वा॥

गण्डमालापहं श्रेष्ठं गलगण्डहरं परम् ॥ ३२ ॥

इति तुम्बीतैलम् ।

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा ।
विल्वाश्वमारनिर्गुण्डी साधितं चापि नावनम् ॥ ३३ ॥

इति शाखोटकविल्वाद्यं तैलम् ।

कुकुन्दर्य्यां विपक्कन्तु चणात्तैलवरं ध्रुवम् ।
अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम् ॥ ३४ ॥

इति कुकुन्दरीतैलम् ।

त्रिफला त्रिवृता दन्ती नीलिनी चतुरङ्गुलैः ।
पञ्चविंशतिसङ्ख्याकैः प्रत्येकं पलमात्रया ॥ ३५ ॥
क्वथितैः कुट्टितैरेभिश्चतुर्द्रोणे प्रमाणतः ।
पचेत्तु सलिले तावद्यावद्द्रोणञ्च शेषितम् ॥ ३६ ॥
पञ्चाशत्तत्र निक्षिप्य गुग्गुलोस्तु पलान्यपि ।
क्वाथयेत् सघनं यावत् पुनस्तत्पूर्ववत् पचेत् ॥ ३७ ॥
ततस्तस्मिन् घनीभूते त्वगेलानागकेसरम् ।
त्रिकटुत्रिफलापर्णी यवानी जीरकाणि च ॥ ३८ ॥
पिप्पलीमूलदहन हपुषाकृष्णजीरकम् ।
वाष्पिका चाजमोदा च तिन्तिड़ीचाम्लवेतसम् ॥ ३९ ॥
सौवर्चलयुतं कृत्वा श्लक्ष्णचूर्णं विनिक्षिपेत् ।
प्रत्येकमर्द्धपलिकैर्भागैः सम्यग्विचक्षणः ॥ ४० ॥
ततोऽक्षमात्रां गुटिकां भक्षयेच्च दिने दिने ।
गण्डमालार्वुदग्रन्थि जङ्घास्तम्भोदरार्दितः ॥ ४१ ॥
अनेनैव विधानेन गिरिजं वा प्रयोजयेत् ॥ ४२ ॥

इति त्रिफलाद्यो गुग्गुलुः ।

इति वङ्गसेनसङ्कलितः गण्डमालाविकारः समाप्तः ॥

———

## अथ ग्रन्थिनिदानमाह।

वातादयो मांसमसृग्प्रदुष्टाः संदूष्य मेदश्च तथा शिराश्च।
वृत्तोन्नतं विग्रथितं तु शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥१॥
आयम्यते वृश्चति तुद्यते च प्रभ्रंश्यते मथ्यति भिद्यते च।
कृष्णो मृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥२॥
दन्दह्यते धूप्यति चूष्यते च पापच्यते प्रज्वलतीव चापि।
रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥३॥
शीतो विवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत्संहननोपपन्नः।
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥४॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान् कण्डुयुतोऽरुजश्च।
मेदः कृतो गच्छति चात्र भिन्ने पिण्याकसर्पिः प्रतिमन्तु मेदः॥५॥
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुश्च शिराप्रतानम्।
सङ्कोच्य सम्पीड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्॥६
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात् सरुजश्चलश्च।
अरुक्स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः ॥७॥

अथ चिकित्सामाह।

ग्रन्थिष्वथामेषु भिषग्विदध्याच्छोथक्रियां विस्तरतो विधिज्ञः।
रक्तेऽवलं चास्य नरस्य नित्यं तद्रक्षितं व्याधिबलं निहन्ति ॥८॥
हिंस्रा सरोहिण्यमृताथ भार्गी श्योनाकविल्वागुरुकृष्णगन्धाः।
गोपित्तपिष्टाः सह तालपत्र्या ग्रन्थ्ये विधेयोऽनिलजे प्रलेपः ॥९॥
कुर्य्यात् स्वेदोपनाहांश्च तथान्यान् सिद्धलेपनान् ॥ १० ॥
विदार्य्य वा पक्कमपोह्य पूयं प्रक्षाल्य विल्वार्कनरेन्द्रतोयैः।
तिलैश्च पञ्चाङ्गुलपत्रमिश्रैः संस्वेदयेत् सैन्धवसंप्रयुक्तैः ॥ ११ ॥
शुद्धं व्रणञ्चाप्युपरोहयेत्तु तैलेन रास्नासरलान्वितेन।

विड़ङ्गयष्टीमधुकामृताभिः सिद्धेन वा क्षीरसमन्वितेन ॥ १२ ॥
जलायुकाः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि पित्ते कषायाणि सशर्कराणि ॥१३
द्राक्षारसेनेक्षुरसेन चापि चूर्णं पिबेद्वापि हरीतकीनाम् ॥१४॥
मधूकजम्बार्जुनवेतसानां त्वग्भिः प्रदेहानवधारयेच्च ।
सशर्करैर्वा तृणमूलकल्कैर्दिह्यादभीक्ष्णं मुचुकुन्दजैर्वा ॥१५॥
विदार्य्य चापक्वमपोह्य पूयं धौतं कषायेण वनस्पतीनाम् ।
तैलैः सयष्टीमधुकैर्विशोध्य सर्पिःप्रयोज्यं मधुकैर्विपक्वम् ॥१६॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते च ।
स्विन्नस्य विस्रावनमेव कुर्य्यादङ्गुष्ठलोहोपलवेणुदण्डैः ॥ १७ ॥
विकङ्कतारग्वध काकणन्ती काकादनीतापसवृक्षमूलैः ।
आलेपयेदेनमलाबुभार्गी करञ्जकालामदनैश्च विद्वान् ॥१८॥

मेदः समुत्थितं ग्रन्थिं तिलकल्कैः प्रदिह्य च ।
संछाद्य वस्त्रपट्टेन स्वेदयेत्तप्तलोहकैः ॥
पाटयित्वा तु शस्त्रेण हृत्वा मेदोऽग्निना दहेत् ॥ १९ ॥

ग्रन्थीनमर्मप्रभवानपक्वानुद्धृत्य चाग्निं विदधीत वैद्यः ।
क्षारेण चैतान् प्रतिसारयेच्च संलिख्य संलिख्य यथोपदेशम् ॥२०॥

लेपनं शङ्खचूर्णेन सह मूलस्य भस्मना ।
कफार्वुदापहं कुर्य्याद् ग्रन्थ्यादिषु विशेषतः ॥ २१ ॥
ग्रन्थीनुद्धृत्य वा पक्वं वह्निकर्म प्रयोजयेत् ।
पश्चात् क्षारेण संशोध्य व्रणवत् समुपाचरेत् ॥ २२ ॥
शिराग्रन्थिं परित्यज्य शेषं यत्नेन साधयेत् ॥ २३ ॥
दन्तीचित्रकमूलत्वक् सुधार्कपयसीगुड़ः ।
भल्लातकास्थि काशीसं लेपो भिन्द्याच्छिलामपि ॥ २४ ॥
स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः ।
प्रलेपे विहितः श्लक्ष्णो हन्ति ग्रन्थ्यर्वुदादिकान् ॥ २५ ॥

यानि प्रतिद्वादश चाङ्गुलानि मेढ्रञ्च वस्तिं परिवर्ज्य सम्यक्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो विकृष्य जालं पललं विदध्यात्२६

इति वङ्गसेनसङ्कलितः ग्रन्थिनिदानाधिकारः समाप्तः।

---

## अथ अर्बुदनिदानमाह।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्त मनल्पमूलं चिरवृद्ध्यपाकम्॥
कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति॥१॥
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसापि।
यज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति॥२॥
दोषः प्रदुष्टो रुधिरं शिरासु सङ्कोच्य सम्पीड्य ततस्त्वपाकम्।
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम्॥३॥
स्रवत्यजस्रं रुधिरं सदुष्टमसाध्यमेकं रुधिरात्मकन्तु।
रक्तक्षयोपद्रवपीड़ितत्वात् पाण्डुर्भवेदर्बुदपीड़ितस्तु॥ ४॥
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टञ्जनयेच्च शोथम्।
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्॥ ५॥
प्रदुष्टमांसस्य नरस्य गाढ़मेतद्भवेन्मांसपरायणस्य।
मांसार्बुदन्त्वेतदसाध्यमुक्तं साध्येष्वपीमानि विवर्जयेत्तु॥ ६॥
सम्प्रस्रुतं मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्।
यज्जायतेऽन्यत् खलु पूर्व्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः॥ ७॥
यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम्॥ ८॥
न पाकमायान्ति कफाधिकत्वान् मेदो बहुत्वाच्च विशेषतस्तु।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्व्वार्बुदान्येव निसर्गतस्तु॥ ९॥

अथ चिकित्सामाह।

जयेद्विद्रधिवत् पूर्व्वमर्बुदं प्रोञ्छनादिभिः।

क्षाराग्निभ्यां दहेच्चापि प्रदेहैर्विविधैर्जयेत् ॥ १० ॥
कर्कारुकैर्वारुकनारिकेल प्रियालपञ्चाङ्गुलवीजपूरैः ।
वातार्वुदं क्षीरघृताम्लसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु ॥ ११ ॥
स्वेदं विदध्यात् कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ।
वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धां शताह्वां त्रिवृतां पिबेद्वा ॥१२॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्वुदे कायविरेचनञ्च ।
विघृष्य चोदुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥१३॥
सूक्ष्मीकृतः सर्जरसप्रियङ्गु पतङ्गलोध्रार्जुनयष्टिकाह्वैः ॥ १४ ॥
शुद्धस्य जन्तोः कफजेऽर्वुदे तु रक्ते च सिक्ते च ततोऽर्वुदं तत् ।
कपोतपारावतविड्विमिश्रैः सकांस्यनीली शुकलाङ्गलाख्यैः ॥१५॥
सूक्ष्मैस्तु काकादनमूलमिश्रैः क्षारप्रदिग्धैरथवा प्रदिह्येत् ॥१६॥
निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमर्दितैश्च ।
लेपं विदध्यात् क्रमशो यथात्र मुञ्चन्त्यपत्यान्यथमक्षिका वा ।
अल्पावशिष्टं क्रमिभिः प्रदग्धं लिखेत्ततोऽग्निं विदधीत पश्चात्१७
अशेषदोषाणि हि नार्वुदानि करोति तस्याशु पुनर्भवन्ति ।
नरो न शेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथा विषाग्नी ॥१८॥

हरिद्रा लोध्रपतङ्गगृहधूममनःशिला ।
मधुप्रगाढो लेपोऽयं मेदोऽर्वुदहरः परः ॥
एतामेव क्रियां कुर्य्यादशेषां शर्करार्वुदे ॥ १९ ॥

यदल्पमूलं त्रपुसैः सताम्रैस्तद्वेष्ट्य पत्रैरथवायसैर्वा ।
क्षाराग्निशस्त्राण्यवचारयेच्च मुहुर्मुहुः प्राणमवेक्ष्यमाणः ॥
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥ २० ॥
आस्फोतगोजीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम् ।
शुद्धञ्च तैलं विदधीत भार्गी विड़ङ्गपाठा त्रिफला सुसिद्धम् ॥२१॥

स्नुही गण्डीरिकास्वेदो नाशयेदर्वुदानि च ।
लवणेनाथवा स्वेदः सीसकेन तथैव च ॥ २२ ॥

निष्कृत्य जिह्वां दशनैर्विदंश्य त्रिधा शिराशब्दमपि प्रकृत्य।
निशावसाने त्रिदिनान्यवश्यं पीड़ां हरेदर्बुदजां सुघोराम् ॥२३॥

मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च।
शङ्खचूर्णेन संयुक्तो लेपः सिद्धोऽर्बुदापहः ॥ २४ ॥

उपोदिकरसाभ्यक्तास्तत्पत्रपरिवेष्टिताः।
प्रणश्यन्त्यचिरान्नृणां पिड़का ह्यर्बुदादयः ॥ २५ ॥

उपोदिका काञ्जिकतक्रपिष्टा तयोपनाहं लवणेन सार्द्धम्।
दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्दिने दिने वा त्रिषु मर्मजानाम्॥२६

वटदुग्धकुष्ठरोमकलिप्तं बद्धं वटस्य कल्केन।
अध्यस्थि सप्तरात्रान् महदपि शमयेत् सिद्धमिदम् ॥२७॥

गन्धशिलाविश्वौषधविड़ङ्गयवभस्मजं समं चूर्णम्।
कृकलासरक्तयुक्तं लेपात् सर्वार्बुदध्वंसि ॥ २८ ॥

सितमारशिग्रुसर्षपयवमूलकवीजसरलेन।
लेपस्तत्र कृतोऽयं ग्रन्थ्यर्बुदगण्डमालाघ्नः ॥ २९ ॥

शिग्रुमूलकयोर्वीजं रक्षोघ्नं सरलं यवम्।
अश्वमारञ्च सम्पिष्य तक्रलेपोऽर्बुदादिजित् ॥ ३० ॥

इति वङ्गसेनसङ्कलितः अर्बुदनिदानचिकित्साधिकारः समाप्तः।

---

## अथ श्लीपदनिदानमाह।

यः सज्वरो वङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः क्रमेण।
तत् श्लीपदं स्यात् करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहुः ॥१॥

वातजं कृष्णरूक्षञ्च स्फुटितं तीव्रवेदनम्।
अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ २ ॥

पित्तजं पीतसङ्काशं दाहज्वरयुतं मृदु।
श्लैष्मिकं स्निग्धवर्णञ्च श्वेतं पाण्डु गुरु स्थिरम् ॥ ३ ॥

वल्मीकमिव सञ्जातं कण्टकैरुपचीयते।
अब्दात्मकं महत्तच्च वर्जनीयं विशेषतः॥ ४॥
त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात्।
गुरुत्वञ्च महत्वञ्च यस्मान्नास्ति विना कफात्॥ ५॥
यत् श्लेष्मलाहारविहारजातं पुंसः प्रकृत्यापि कफात्मकस्य।
सास्रावमत्युन्नतसर्व्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम्॥ ६॥
पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः॥ ७॥

अथ चिकित्सामाह।

शाम्यति पिच्छिलगुटिका सर्षपकल्कोपनाहतः सपदि।
शैलबलाभ्यां लेपः करचरणशोथतामपि च॥ ८॥
लङ्घनालेपनस्वेदरेचनैः रक्तमोक्षणैः।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत्॥ ९॥
मासमेरण्डजं तैलं पिबेन्मूत्रेण मानवः।
कासमर्दशिफाकल्कं गव्येनाज्येन यः पिबेत्।
श्लीपदं वातजं तस्य नाशमायाति सत्वरम्॥ १०॥
महौषधविपक्केन पयसा चान्नमादिशेत्॥ ११॥
गुल्फस्याधःशिरां बिध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्व्वुदविसर्पवान्॥ १२॥
मञ्जिष्ठा मधुकं रास्ना सहिंस्रा सपुनर्नवा।
पिष्टारणालैर्लेपोऽयं पित्तश्लीपदशान्तये॥ १३॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे।
पिवेद्वाप्यभयाकल्कं मूत्रेणान्यतमेन वै॥ १४॥
पिवेदेव गुडूचीं वा नागरं भद्रदारु च।
पिवेत्सर्षपतैलेन श्लीपदानां निवृत्तये॥ १५॥
हितं वा लेपने नित्यं चित्रकं देवदारु च।

सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥ १६ ॥
सिद्धार्थशोभाञ्जनदेवदारु विश्वौषधैर्मूत्रयुतैः प्रलेपः।
पुनर्नवानागरसर्षपाणां कल्केन वा काञ्जिकमिश्रितेन ॥१७॥
धत्तूरैरण्डनिर्गुण्डी वर्षाभूशिग्रुसर्षपैः।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ १८ ॥
असाध्यमपि यात्यस्तं श्लीपदं चिरकालजम्।
मूलेन सहदेवायास्तालमिश्रेन लेपितम् ॥ १९ ॥
निष्पिष्टमारणालेन रूपिकामूलवल्कलम्।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि स्थिरम् ॥ २० ॥
आखोटवल्कलमिश्रं तोयं गोमूत्रसंयुतं पीत्वा।
हन्याच्छ्लीपदमुग्रं श्लेष्मभवं श्लीपदं पुंसाम् ॥ २१ ॥
पिण्डारकतरुसम्भववन्दाकशिफा जयति सर्पिषा पीता।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम् ॥ २२ ॥
धत्तूरकस्य वीजानि पिप्पलीवर्द्धमानवत्।
शीतोदकेन पीतानि श्लीपदं घ्नन्ति दारुणम् ॥ २३ ॥
पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये।
पूतीकरञ्जच्छदजं रसं वापि यथा बलम् ॥ २४ ॥
अनेनैव विधानेन पुत्रजीवकजं रसम्।
प्रयुञ्जीत भिषक् प्राज्ञः कालसाम्यविभागवित् ॥ २५ ॥
सप्ततांम्बूलपत्राणां कल्कं तप्तेन वारिणा।
संसृष्टलवणोपेतं श्लीपदं हन्ति सेवितम् ॥ २६ ॥
रजनीगुड़संयुक्तं गोमूत्रेण पिबेन्नरः।
वर्षोत्थं श्लीपदं हन्ति कण्डूं कुष्ठं विशेषतः ॥ २७ ॥
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम्।
सक्षौद्रं विलिहेल्लेहं चिरोत्थं श्लीपदं जयेत् ॥ २८ ॥
वृद्धदारुकचूर्णन्तु मूत्रसौवीरकादिभिः।

मीलितं श्लीपदं हन्ति कृच्छ्रं संवत्सरोत्थितम् ॥ २९ ॥
क्षीरेण प्रातरुत्थाय पिवेद्यस्तु बलाद्वयम्।
सक्षीरं श्लीपदाज्जन्तु रसाध्यादपि मुच्यते ॥ ३० ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम्।
दीपनं चामदोषघ्नमेतत् श्लीपदनाशनम् ॥ ३१ ॥
उपोष्य पिष्टा क्षीरेण पिबेदक्षसमं शुचिः।
कीचकस्य च वीजस्य सप्तपर्णत्वचस्तथा ॥ ३२ ॥
नाड़ी च वीजकस्यापि वातज्वरप्रशान्तये।
पीत्वा च माससेकं हि श्लीपदं नाशयेत् ध्रुवम् ॥ ३३ ॥
जिङ्गिण्यास्तु दलैः सम्यक् तुषाम्बुपरिपेषितैः।
स्वेदः श्लीपदनाशाय कर्त्तव्यः सम्प्रजानता ॥ ३४ ॥
गन्धर्वतैलसिद्धां हरीतकीं गोजलेन यः पिबति।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ ३५ ॥

इति गोमूत्रहरीतकी।

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिस्तु हरीतक्यो गुड़स्य तु पलद्वयम् ॥ ३६ ॥
मधुना सह संयुक्तं श्लीपदं हन्ति दारुणम्।

इति कृष्णाद्यो मोदकः।

पिप्पली त्रिफला दारु नागरं सपुनर्नवम्।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥ ३७ ॥
काञ्जिकेन हि तच्चूर्णं पिबेत्कर्षप्रमाणतः।
जीर्णे वा परिहारं स्याद्भोजनं सार्वकामिकम् ॥ ३८ ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च प्रयच्छति ॥ ३९ ॥

इति पिप्पल्याद्यं चूर्णम्।

त्रिकटु त्रिफला चव्यं दार्वीवरुणगोक्षुरम्।

अलम्बुषा गुडूची च समभागानि चूर्णयेत्॥ ४०॥
सर्वेषां चूर्णमाहृत्य वृद्धदारुकवत्समम्।
काञ्जिकेन च तत्पेय मक्षमात्रं प्रमाणतः॥ १४॥
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम्।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम्॥ ४२॥
गुल्मकुष्ठारुचिहरं वातश्लेष्मरुजापहम्।

इति वृद्धदारुकचूर्णम्।

निर्गुण्डीतिन्तिड़िका शिखिमन्यदलं पुनर्नवामूलम्।
भित्ता पाषाणानां गोक्षुरकः पारिभद्रकत्वक्॥ ४३॥
एतैः पलांशैर्यो राशिस्ततः स्याद्दिगुणः खलिः।
तैलेन सर्षपाणान्तु तदेकीकृत्य बुद्धिमान्॥ ४४॥
शालेर्मण्डेन सन्दध्यात् सप्तरात्रं नवे घटे।
ततः सर्षपतैलेन पिबेत्कर्षप्रमाणतः॥ ४५॥
जीर्णे भुञ्जीत शाल्यन्नं मुद्गानां पक्षिणां रसैः।
पञ्चाशद्वर्षजातञ्च जाताङ्कुरमपि ध्रुवम्।
त्रिसप्ताहाज्जयत्येष श्लीपदं नात्र संशयः॥ ४६॥

इति निर्गुण्ड्यादिमण्डः।

पिप्पली त्रिफला दारु नागरं सपुनर्नवम्।
प्रत्येकं षोड़शपलं गृहीत्वा चात्र चूर्णयेत्॥ ४७॥
वृद्धदारुकचूर्णेन समभागेन मिश्रयेत्।
ततश्चूर्णं पिबेत्कर्षं मानवः काञ्जिकादिभिः॥ ४८॥
जीर्णे त्वपरिहारं स्याद्भोजनं सार्वकामिकम्।
नाशयेच्छ्लीपदं गुल्मं शूलं प्लीहानमेव च॥ ४९॥
अग्निञ्च कुरुते दीप्तं सेव्यमानन्तु भस्मकम्।
उदावर्त्तमजीर्णञ्च हन्त्यामानिलपाण्डुताम्।

पिप्पल्यादिरयं ख्यातो विशेषाच्छ्लीपदे हितः ॥ ५० ॥

इति पाठान्तरभेदेन पिप्पल्याद्यं चूर्णम् ।

काकादनी काकजङ्घा बृहती कण्टकारिका ।
कदम्बपुष्पी मन्दारी लवा शुकनसी तथा ॥ ५१ ॥
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत् क्षारकल्पवत् ।
तत्र दद्यात् प्रतीवापं काकोदुम्बरिकारसम् ॥ ५२ ॥
मदनानां पलक्वाथं शुकाख्याया रसस्तथा ।
एषः क्षारस्तु पानीयः श्लीपदं हन्ति सेवितः ॥ ५३ ॥
अपचीं गण्डमालाञ्च ग्रहणीदोषमेव च ।
अभक्ते रोचनञ्चैव हन्यात् सर्वविषाणि च ॥ ५४ ॥
एष्वेव तैलं संसिद्धं यस्याभ्यङ्गेषु योजितम् ।
एतत्तानामयान् हन्ति ये च दुष्टव्रणा नृणाम् ॥ ५५ ॥

इति काकादन्यादिक्षारम् ।

सुरसा देवकाष्ठञ्च त्रिकटु त्रिफला तथा ।
लवणानि च सर्वाणि विड़ङ्गान्यथ चित्रकम् ॥ ५६ ॥
चविका पिप्पलीमूलं गुग्गुलुर्हपुषा वचा ।
यवाग्रजञ्च पाठा च शर्व्वले वृद्धदारुकम् ॥ ५७ ॥
कल्कैश्च कार्षिकैरेतैर्घृतप्रस्थं विपाचयेत् ।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥ ५८ ॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
पक्वं तदुद्धृतं कल्कात् पिबेत् कर्षत्रयं हविः ॥ ५९ ॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदः श्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥ ६० ॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्वुदम् ।
नाशयेद् ग्रहणीदोषं श्वयथुं गुदजान्यपि ॥ ६१ ॥
परमग्निकरं हृद्यं कोष्ठकृमिविनाशनम् ॥ ६२ ॥

घृतं सौरेश्वरं नाम श्लीपदं हन्ति दारुणम् ।
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम् ॥ ६३ ॥

इति सौरेश्वरं घृतम् ।

दन्तीमूलपलं दद्याच्छिन्नमूलपलं तथा ।
त्रिफलातिविषाचित्रविड़ङ्गार्द्धपलोन्मितम् ॥ ६४ ॥
स्नुहीक्षारसमायुक्तं घृतस्य कुड़वं पचेत् ।
बिन्दुमात्रोपयोगेन वेगः समुपजायते ॥ ६५ ॥
दुर्वारं श्लीपदं हन्ति वृत्रमिन्द्राशनिर्यथा ॥

इति दन्तीघृतम् ।

घृतप्रस्थं विपक्तव्यं सव्योषैर्वृद्धदारकैः ।
कल्कैः सौवीरसिद्धं स्याच्छ्लीपदानां निवृत्तये ॥ ६६ ॥
अग्निञ्च कुरुते नृणामामवाते च शस्यते ।
एभिः कटु पचेत्तैलं पानाच्छ्लीपदनाशनम् ॥ ६७ ॥

इति वृद्धदारुकं घृतन्तैलञ्च ।

विड़ङ्गमरिचार्केषु नागरं चित्रकं तथा ।
भद्रदार्वेलकाख्ये च सर्वेषु लवणेषु च ॥ ६८ ॥
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥

इति विड़ङ्गाद्यं तैलम् ।

यवान्नं कटुतैलेन कूर्ममांसञ्च योजयेत् ।
श्लीपदानां प्रशान्त्यर्थमशान्तौ दाहमग्निना ॥ ६९ ॥

इति श्रीवङ्गसेनसङ्कलितः श्लीपदनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ विद्रधिनिदानमाह ।

त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ १ ॥
महामूलं रुजावन्तं वृत्तं वाप्यथवाऽऽयतम् ।

स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥ २ ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
षण्णामपि हि तेषां तु लक्षणं सम्प्रचक्षते ॥ ३ ॥
कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः ॥ ४ ॥
पक्वोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ॥ ५ ॥
शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिःकफसम्भवः ॥ ६ ॥
तनुपीतसिताश्चैषां सास्रावाः क्रमशः स्मृताः ॥ ७ ॥
नानावर्णरुजास्रावो घण्टालो विषमो महान् ।
विषमं पच्यते वापि विद्रधिः सान्निपातिकः ॥ ८ ॥
तैस्तैर्भावैरभिहते क्षते वा पथ्यकारिणः ।
क्षतोष्मावायुविसृतः सरक्तं पित्तमीरयेत् ॥ ९ ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ।
आगन्तुर्विद्रधिर्ज्ञेयः पित्तविद्रधिलक्षणः ॥ १० ॥
कृष्णस्फोटावृतः श्याव स्तीव्रदाहरुजाकरः ।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥ ११ ॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्त्रिदोषजः ।
आभ्यन्तरानतश्चोर्द्धं विद्रधीन् परिचक्ष्महे ॥ १२ ॥
पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ।
वल्मीकवत्समुन्नद्ध मन्तः कुर्वन्ति विद्रधिम् ॥ १३ ॥
गुदे वस्ति मुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ।
वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि चाप्यथ ॥ १४ ॥
तेषामुक्तानि लिङ्गानि वाह्यविद्रधिलक्षणैः ।
अधिष्ठानविशेषेण लक्षणानि निबोध मे ॥ १५ ॥

गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतवेदना ॥ १६ ॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ।
वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् ॥ १७ ॥
सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।
श्वासो यकृति हिक्का च पिपासा क्लोमजेऽधिका ॥ १८ ॥
नाभेरुपरिजा पक्वा यान्त्यूर्द्ध्वमितरेत्वधः ।
अधःस्रुतेषु जीवेत्तु स्रुतेषूर्द्ध्वं न जीवति ॥ १९ ॥
हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु वाह्यतः ।
जीवेत् कदाचित पुरुषो नेतरेषु कथञ्चन ॥ २० ॥
साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः ।
आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥ २१ ॥
आध्मानं बद्धनिःस्यन्दं छर्दिहिक्कातृषान्वितम् ।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥
आमो वा यदि वा पक्वो महान्वा यदि चेतरः ।
सर्वो मर्मोत्थितश्चात्र विद्रधिः कष्ट उच्यते ॥ २३ ॥
हृन्नाभिवस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ।
मुष्टिप्रमाणो रक्तस्तु विद्रधिस्तु ततः परः ॥ २४ ॥
गुल्मस्तिष्ठति दोषेषु विद्रधिर्मांसशोणिते ।
विद्रधिः पच्यते तस्मात् गुल्मश्चापि न पच्यते ॥ २५ ॥
पवनेन स्तनशिराः विकृताः प्राप्य योषिताम् ।
सूतानां गर्भिणीनाञ्च सम्भवे श्वयथुर्घनः ॥ २६ ॥
स्तने सदुग्धे वा वाह्यो विद्रधेर्लक्षणान्वितः ।
नाड़ीनां सूक्ष्मवक्त्रत्वात् कन्यानां न तु जायते ॥ २७ ॥

अथ चिकित्सामाह ।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ ।

मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ २८ ॥
अपक्वे विद्रधौ युञ्ज्याद्व्रणशोथवदौषधम् ।
वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ॥ २९ ॥
सुखोष्णो बहुशो लेपः प्रयोज्यो वातविद्रधौ ।
स्वेदोपनाहः कर्त्तव्यः शिग्रुमूलसमन्वितः ॥ ३० ॥
यवागोधूममुद्गैश्च सर्पिः पिष्टैः प्रलेपयेत् ।
विलीयते क्षणेनैव स विदग्धस्तु विद्रधिः ॥ ३१ ॥
पुनर्नवादारुविल्व दशमूलभवाम्भसा ।
गुग्गुल्वेरण्डतैलं वा पिबेन्मारुतविद्रधौ ॥ ३२ ॥
दशमूलीछिन्नरुहा पथ्यादारुपुनर्नवाः ।
ज्वरविद्रधिशोफेषु शिग्रुविश्वयुता हिताः ॥ ३३ ॥
पैत्तिकं सारिवा लाजा मधुकैः शर्करायुतैः ।
प्रदिह्यात् क्षारपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ३४ ॥
त्रिवृद्धरीतकीनाञ्च चूर्णं मधुयुतं पिबेत् ।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ॥ ३५ ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ।
सर्पिषा शतधौतेन नवनीतेन वा गवाम् ॥ ३६ ॥
इष्टकासिकतालोह गोशकृत्तुषपांशुभिः ।
मूत्रैरुष्णैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ३७ ॥
दशमूलीकषायेण सस्नेहेन रसेन वा ।
शोथं व्रणं वा कोष्णेन समूलं परिषेचयेत् ॥ ३८ ॥
त्रिफलाशिग्रुवरुणं दशमूलाम्भसा पिबेत् ।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥ ३९ ॥
शिरां यथोक्तां विध्येच्च कफजे विद्रधौ भिषक् ।
रक्तपित्तानिलोत्थेषु केचिद्दाहा भवन्ति हि ॥ ४० ॥
पित्तविद्रधिवत्सर्वां क्रियानिरवशेषतः ।

विद्रध्योः कुशलः कुर्य्या द्रक्ताङ्गन्तु निमित्तयोः ॥ ४१ ॥
पिबेद्वाभ्यन्तरे पथ्यां स च शोभाञ्जनाद्रसम्।
नाराचमथवा सर्पिस्तैलं वाद्याद्रुबूकजम् ॥ ४२ ॥
कृष्णाजाजीविशाला च ह्यपामार्गफलं तथा।
पीतं ह्येतन्निहन्त्याशु विद्रधिं कोष्ठसम्भवम् ॥ ४३ ॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत्।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ ४४ ॥
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च।
जलेन क्वथितं पीत मपक्वं विद्रधिं जयेत् ॥ ४५ ॥
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः।
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितः ॥ ४६ ॥
शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्बुना पीतम्।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ ४७ ॥

काशीससैन्धवशिलाजतु हिङ्गुचूर्ण-
मिश्रीकृतो वरुणवल्कलजः कषायः।
अभ्यन्तरोत्थितमपक्वमतिप्रमाणं
नृणामयं जयति विद्रधिमुग्रवीर्य्यम् ॥ ४८ ॥

दन्तीचित्रकगोदन्त चिरविल्वाश्वमारकान्।
आन्तरे वितरेद्विद्वानऽपक्वे शोथविद्रधौ ॥ ४९ ॥
वरुणादिगणक्वाथ मपक्वेऽभ्यन्तरोत्थिते।
उषकादिप्रतीवापं पिबेत्संशमनाय वै ॥ ५० ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ ५१ ॥
स्रुतेऽप्यूर्द्धमधश्चापि मैरेयाम्लसुरासवैः।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ ५२ ॥
मधुशिग्रुस्तु मूलेन यवागूं साधुसाधिताम्।
यवकोलकुलत्थानां रसैर्भुञ्जीत मानवः ॥ ५३ ॥

भूनिम्बार्द्धपलं निशापलयुतं दार्व्या पले द्वे तथाः
मूर्वार्द्धेन पुनर्नवां कुटसमां दार्व्याः समः प्रग्रहः ।
वासादर्द्धयुतं पलन्तु कटुका योज्या तदर्द्धेन वै
अश्वाह्वं निशया समानममृता कर्षास्तु पञ्चैव तु ॥ ५४ ॥
सर्वं वत्सक सप्तकर्षसहितं सुश्लक्ष्णचूर्णीकृतम् ।
वासायाः स्वरसेन भावितमिदं त्रीन् पञ्च वै वासरान् ॥५५॥
भूयस्तद्गुड़वारिणा प्रतिदिनं पीतं पुरस्थे रवौ ।
पुंसां विद्रधिनाशनञ्च कथितं तथ्यं स्वयं ब्रह्मणा ॥ ५६ ॥

इति भूनिम्बाद्यं चूर्णम् ।

सिद्धं वरुणादिगणे विधिना तत्क्वाथकल्पितं सर्पिः ।
शुद्धतनोस्तत्पीतं भिषजा सद्योऽग्निजं प्रथितम् ॥ ५७ ॥
शिरसां शूलमशेषं विद्रधिमन्तःस्थमुग्रमपहरति ।
पञ्चविधं गुल्मगदं शमयति वारि बहुभुक्तान्नम् ॥ ५८ ॥

इति वरुणकाद्यं घृतम् ।

नक्तमालस्य पत्राणि वरुणादिफलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥ ५९ ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ।
प्रियङ्गुकुशमूलञ्च निचुलस्य त्वगेव च ॥ ६० ॥
एतेषां कार्षिकैर्भागै र्घृतप्रस्थं विपाचयेत् ।
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम् ॥ ६१ ॥
सद्यः छिन्नं व्रणानाञ्च करञ्जाद्यमिदं शुभम् ॥ ६२ ॥

इति करञ्जघृतम् ।

तिक्तकट्फलकं सर्पि र्महातिक्तमथापि वा ।
धान्वन्तरं वा नैम्बं वा विद्रधौ योजयेत्सदा ॥ ६३ ॥
प्रियङ्गुधातकीलोध्रं कट्फलं द्विनिशान्वितम् ।

एतत्तैलं विपक्तव्यं विद्रधौ व्रणरोपणम् ॥ ६४ ॥

इति प्रियङ्ग्वाद्यं तैलम्।

द्विपञ्चमूलीत्रिफला कुलत्थविल्वच्छनैः मूलकशिग्रुयुक्तैः।
तैलं तिलैरण्डजमेतदेभिः सिद्धं हितं विद्रधिगुल्मशूले ॥ ६५ ॥

इति वङ्गसेनसङ्कलितः विद्रधिनिदानचिकित्साधिकारः समाप्तः।

---

## अथ व्रणशोथनिदानमाह।

एकदेशोत्थिते शोथे व्रणानां पूर्वलक्षणम्।
षड्विधः स्यात् पृथक् सर्वरक्तागन्तुसमुद्भवः ॥ १ ॥
शोथाः षडेते विज्ञेयाः प्रागुक्तैः शोथलक्षणैः।
विशेषः कथ्यते तेषां पक्वापक्वादिनिश्चये ॥ २ ॥
विषमं पच्यते वातात् पित्तोत्थश्चाचिरं चिरम्।
कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवः ॥ ३ ॥
मन्दोष्मताल्पशोथत्वं काठिन्यं त्वक् सवर्णता।
मन्दवेदनता चैव शोथानामामलक्षणम् ॥ ४ ॥
दह्यते दहनेनेव क्षारेणेव प्रपच्यते।
पिपीलिकागणेनैव दश्यते छिद्यते तथा ॥ ५ ॥
भिद्यते चैव शस्त्रेण दण्डेनैव च ताड्यते।
पीड्यते पाणिनेवान्तःसूचीभिरिव तुद्यते ॥ ६ ॥
सोषचोषो विवर्णः स्यादङ्गुल्येवावघट्यते।
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥ ७ ॥
न गच्छेदायतः शोथो भवेदाध्मानवस्तिवत्।
ज्वरस्तृष्णारुचिस्त्वेतत् पच्यमानस्य लक्षणम् ॥ ८ ॥
वेदनोपशमः शोथो लोहितोऽल्पो न चोन्नतः।
प्रादुर्भावो वलीनाञ्च तोदः कण्डूर्मुहुर्मुहुः ॥ ९ ॥

उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचः।
वस्ताविवाम्बुसञ्चारः शोथेऽङ्गुलिनिपीड़िते ॥ १० ॥
पूयस्य पीड़यत्येकमन्तमन्ते च पीड़िते।
भक्ताकाङ्क्षा भवेच्चैव शोथानां पक्वलक्षणम् ॥ ११ ॥
कफजेषु तु शोथेषु गम्भीरं पाकमेत्यसृक्।
पक्वं लिङ्गञ्च तत् स्पष्टं यत्र स्याच्छान्तशोफता ॥ १२ ॥
त्वक् स्रावाच्च रुजोऽल्पत्वं यत्र स्पर्शत्वमश्मवत्।
रक्तपाकमिति ब्रूयात् तत् प्राज्ञो मुक्तसंशयः ॥ १३ ॥
ऋतेऽनिलाद्रुग्न विना च पित्तं पाकः कफाच्चापि विना न पूयः।
तस्माद्धि सर्वे परिपाककाले पचन्ति शोथास्त्रिभिरेव दोषैः ॥१४
कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य।
पचत्यतः शोणितमेषपाको मतः परेषां विदुषां द्वितीयः ॥१५॥
कक्षं समासाद्य यथैव वह्निर्वातेरितः सन्दहति प्रसह्य।
तथैव पूयो ह्यविनिःसृतो हि मांसं शिराः स्नायु च खादतीह ॥१६
आमं विदह्यमानं हि सम्यक् पक्वञ्च यो भिषक्।
जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ १७ ॥

इति व्रणशोथनिदानम्।

इति वङ्गसेनसङ्कलितः व्रणशोथनिदानचिकित्साधिकारः समाप्तः।

---

## अथ व्रणरोगनिदानमाह।

द्विधा व्रणः स विज्ञेयः शरीरागन्तुभेदतः।
दोषैराद्यस्तयोरन्य शस्त्रादिक्षतसम्भवः ॥ १८ ॥
स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥ १९ ॥
तृष्णामोहज्वरक्लेद दाहपाकावदारणैः।
व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः ॥ २० ॥

बहुपिच्छो गुरुस्निग्धः स्तिमितो मन्दवेदनः।
पाण्डुवर्णोऽल्पसंक्लेद श्चिरपाकी कफव्रणः॥ २१॥
रक्तो रक्तस्रुतीरक्ताद्द्विविजः स्यात्तदन्वयैः॥ २२॥
त्वङ्मांसजः सुखे देशे तरुणस्याऽनुपद्रवः।
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः॥ २३॥
गुणैरन्यतमैर्हीन स्ततः कृच्छ्रो व्रणः स्मृतः।
सर्वैर्विहीनो विज्ञेय स्त्वसाध्यो निरुपक्रमः॥ २४॥
पूतिपूयातिदुष्टासृक् स्राव्युत्सङ्गी चिरस्थितिः।
दुष्टव्रणोऽतिगन्धाद्यः शुद्धलिङ्गविपर्य्ययः॥ २५॥
जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः।
सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः॥ २६॥
व्रणः शुध्यति गन्धेन मृदुत्वञ्चोपगच्छति।
रोहत्यपरिनिःसङ्गस्तस्माद्गन्धः प्रशस्यते॥ २७॥
कपोतवर्णप्रतिमा यस्यान्तः क्लेदवर्जिताः।
स्थिराश्च पिठिकावन्तो रोहतीति तमादिशेत्॥ २८॥
दोषप्रकोपाद्व्यायामा दभिघातादजीर्णतः।
हर्षात् क्रोधाद्भयाच्चैव व्रणो रूढ़ोऽपि दीर्य्यते॥ २९॥
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः॥ ३०॥
वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्।
आगन्तुजो व्रणः सिध्येन्नसिध्येद्दोषसम्भवः॥ ३१॥
मद्यागुर्वाज्य सुमनः पद्मचन्दनचम्पकैः।
सुगन्धा दिव्यगन्धाश्च मुमुर्षूणां व्रणाः स्मृताः॥ ३२॥
ये च मर्मसु सम्भूता भवन्त्यत्यर्थवेदनाः।
दह्यन्ते चान्तरत्यर्थं वहिः शीताश्च ये व्रणाः॥ ३३॥
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतलाः।

प्राणमांसक्षयश्वासकासारोचकपीड़िताः ॥ ३४ ॥
प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्मसु ।
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ॥ ३५ ॥
वर्जयेदपि तान् वैद्यः संरक्षन्नात्मनो यशः ।

अथ चिकित्सामाह ।

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम् ।
तृतीयमुपनाहन्तु चतुर्थीं पाटनक्रियाम् ॥ ३६ ॥
पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमं च क्षतापहम् ॥ ३७ ॥
मातुलुङ्गाग्निमन्थौ च सुरदारु महौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथनुत् ॥ ३८ ॥
कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ।
सुपर्ण इव नागानां वातशोथविनाशनः ॥ ३९ ॥
शिरीषोन्मत्तवीजानि हिंस्राकाला सुदर्शनः ।
तण्डुलीयकमूलञ्च प्रलेपः शोथनाशनः ॥ ४० ॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा ॥ ४१ ॥
न्यग्रोधोदुम्बराश्वत्थ प्लक्षवेतसशेलुभिः ।
चन्दनद्वयमञ्जिष्ठा यष्टीशूरणगैरिकैः ॥ ४२ ॥
शतधौतघृतोन्मिश्रै र्लेपो रक्तप्रसादनः ।
दाहपाकरुजास्राव शोफनिर्वापणः परः ॥ ४३ ॥

इति वृहन्न्यग्रोधादिलेपः ।

विधिर्विषघ्नो विषजे पित्तघ्नो विहितो विधिः ॥ ४४ ॥
अजगन्धाजशृङ्गीञ्च काला सरलमेव च ।
एकांशिकाश्वगन्धा च प्रलेपः श्लेष्मशोथहा ॥ ४५ ॥
पुनर्नवादारुशिग्रु दशमूलमहौषधैः ।

कफवातकृते शोथे लेपः कोष्णो विधीयते ॥ ४६ ॥
पिण्डीतकात्वयं लोध्रं पूर्वजैश्च प्रकीर्त्तिताः।
वर्गास्त्रयः प्रलेपेन शोथे सर्वकृते हितः ॥ ४७ ॥
स्निग्धाम्ललवणैर्वाते स्निग्धः शीतः पयोन्वितः।
पित्ते कोष्णः कफे चार मूत्राढ्यस्तत् प्रशान्तये ॥ ४८ ॥
न रात्रौ लेपनं कुर्य्याद्दत्तञ्च पतितं तथा।
न च पर्युषितं चैव शुष्यमाणं न धारयेत् ॥ ४९ ॥
न प्रशाम्यति यः शोथः प्रलेपादिविधानतः।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥ ५० ॥
शोथयो रुपनाहन्तु कुर्य्यादामविदग्धयोः।
प्रशाम्यत्य विदग्धस्तु विदग्धः पाकमेति च ॥ ५१ ॥
कटुतैलान्वितैर्लेपात् सर्पनिर्मोकभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति ध्रुवम् ॥ ५२ ॥
दण्डोत्पलकमूलेन पिटिका सम्प्रलेपिता।
तण्डुलोदकपिष्टेन नाशमायात्यसंशयम् ॥ ५३ ॥
सतिला सातसी वीजा दध्यम्ला सक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ ५४ ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः।
सक्तवः किण्वमतसी प्रदेहः पाचनः स्मृतः ॥ ५५ ॥
संपूरणैः स्नेहपानैः सन्दिग्धैश्चोपनाहनैः।
प्रदेहपरिषेकैश्च वातव्रणमुपाचरेत् ॥ ५६ ॥
शीतलैर्मधुरस्निग्धैः प्रदेहपरिषेचनैः।
अन्नपानाशनैः सर्वैः पित्तव्रणमुपाचरेत् ॥ ५७ ॥
रूक्षैः कटुभिरुष्णैश्च प्रदेहपरिषेचनैः।
कफव्रणं प्रशमयेत्तथा लङ्घनपाचनैः ॥ ५८ ॥
रुजावतां दारुणानां कठिनानां तथैव च।

शोथानां स्वेदनं कार्य्यं ये चाप्येवंविधा व्रणाः ॥ ५९ ॥
वेदनोपशमाद्वापि तथा पाकभयादपि ।
सुचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम् ॥ ६० ॥
सशोथे कठिने श्यामे सरक्ते वेदनावति ।
संरब्धे विषमे वापि व्रणे विस्रावणं हितम् ॥ ६१ ॥
वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ।
विरेचनं प्रसंशन्ति व्रणेषु व्रणकोविदैः ॥ ६२ ॥
अन्तः पूयिष्ठ वक्त्रेषु सदैवोत्सर्गवत्स्वपि ।
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥ ६३ ॥
बालवृद्धासहक्षीण भीरूणां योषितामपि ।
मर्म्मोपरि च जातेषु पक्वदोषेषु दारणम् ॥ ६४ ॥
चिरविल्वाग्निको दन्ती चित्रको हयमारकः ।
कपोतकाकगृध्राणां पुरीषाणि च दारणम् ॥ ६५ ॥
अत्यर्थकठिना यान्ति शोथाः पाचनभेदनम् ।
द्रव्याणां पिच्छिलानां त्वङ्मूलेन परिपीड़िताः ॥ ६६ ॥
यवगोधूममाषाणां चूर्णानि च समासतः ।
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ॥
न चापि मुखमालिम्पेत्तथा दोषः प्रसिच्यति ॥ ६७ ॥
ततः प्रक्षालने क्वाथः पटोलनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ६८ ॥
पञ्चमूलीद्वयं वाते न्यग्रोधादिश्च पैत्तिके ।
आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥ ६९ ॥
त्रिफला खदिरो दार्व्वी न्यग्रोधादि बलाकुशाः ।
निम्बकोलकपत्राणि कषायाः शोधने हिताः ॥ ७० ॥
गृहधूमः सलवणः सकिण्वतिलचित्रकः ।
भेदो दुष्टव्रणान्याशु शोषयेन्मधुमिश्रितः ॥ ७१ ॥

तिलसैन्धवयष्ट्याह्व निम्बपत्रनिशायुगैः ।
त्रिवृद्घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥ ७२ ॥
एकं वा शारिवामूलं सर्वव्रणविशोधनम् ।
निम्बपत्रतिलैः कल्को मधुना क्षतशोधनः ।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः ॥ ७३ ॥
व्रणान् विशोधयेद्वर्त्त्या सूक्ष्मांश्च सन्धिवर्त्मजान् ।
अभया त्रिवृता दन्ती लाङ्गली मधुसैन्धवैः ॥ ७४ ॥
अपेतपूतिमांसानां मांसस्थानमरोहताम् ।
कल्कस्तु रोपणो देय स्तिलजो मधुसंयुतः ॥ ७५ ॥
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः परः ।
पूर्वाभ्यां सर्पिषा वापि युक्तः संरोपणः परः ॥ ७६ ॥
निम्बपत्रघृतक्षौद्र दार्वीमधुकसंयुता ।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद् व्रणान् ॥ ७७ ॥
अश्वगन्धारुहालोध्र कट्फलं मधुयष्टिका ।
समङ्गाधातकीपुष्पं परमं व्रणरोपणम् ॥ ७८ ॥
प्रपौण्डरीकं जीवन्ती गोजिह्वा धातकी बला ।
रोपणं सतिलं दद्यात् प्रलेपं सघृतं व्रणे ॥ ७९ ॥
यष्टी तिलाः सुपिष्टा वा सघृता व्रणरोपणे ।
धातकीचन्दनबला समङ्गामधुकोत्पलैः ।
दार्वीमेदातिलैर्लेपः ससर्पिर्व्रणरोपणः ॥ ८० ॥
निम्बपत्रतिलादन्ती त्रिवृत्सैन्धवमाक्षिकम् ।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ॥ ८१ ॥
वसुकार्जुनविक्रान्ता मांसीलोध्रनिशायुगैः ।
तिलवह्निशिखारिष्टैर्लेपो दुष्टव्रणापहः ॥ ८२ ॥
कट्फलदाड़िमरजनी प्रियङ्गुफलताम्रपुष्पैः ।
धात्रीरससम्पिष्टैर्दुष्टव्रणरोपणः कल्कः ॥ ८३ ॥

सर्षपतैलविमिश्रो रविकरसंशोषितस्तु सप्ताहम्।
विषनिशयोः समभागो दुष्टव्रणनाशनः कथितः॥ ८४॥
गम्भीरे शुष्कमांसे च व्रणे चोच्छादनं मतम्।
अपामार्गोऽश्वगन्धा च तालपत्री तथैव च।
उच्छादने प्रशस्यन्ते काकोल्यादिश्चयो गणः॥ ८५॥
सुषवीपत्रधत्तूर कर्णमोटकुठेरकाः।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः॥ ८६॥
ककुभोदुम्बराश्वत्थ जम्बूकफललोध्रजैः।
त्वक्चूर्णैश्चूर्णिताः क्षिप्रं संरोहन्ति व्रणा ध्रुवम्॥ ८७॥
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमांश्चैव भृष्टान् पयसि निर्वृतान्।
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक्॥ ८८॥
द्विपञ्चमूलकल्केन क्वथितेनाम्भसापि वा।
सर्पिषा सहतैलेन कोष्णेन परिषिचयेत्॥ ८९॥
यवचूर्णं समधुकं सह तैलेन सर्पिषा।
दद्यात्प्रलेपनं कोष्णं दाहशूलोपशान्तये॥ ९०॥
उच्छूनमधुमांसानां व्रणानामवसादनम्।
जातीपुष्पं मनोह्वा च स्नुहीकालसचित्रकैः॥ ९१॥
मासोत्थितांश्चिरोत्थांश्च दुःशोथकठिनान् व्रणान्।
दण्डोद्भूतसमायुक्ताञ्छोधयेत् क्षारकर्मणा॥ ९२॥
वातादिभूतान् सस्रावान्धूपयेदुग्रवेदनान्।
यवाज्यभूर्जमदन श्रीवेष्टकसुराह्वयैः॥ ९३॥
श्रीवासगुग्गुल्वगुरु सालनिर्यासधूपिताः।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्राववेदनाः॥ ९४॥
रक्तपित्तविषागन्तुगम्भीरान् सोष्मणान् व्रणान्।
क्षीररोपणभैषज्य शृतेनाज्येन रोपयेत्॥ ९५॥

निर्वापनघृतं चौद्रं तैलं मधुकचन्दनम्।
लेपनं शोथरुग्दाह रक्तं निर्वापयेद्व्रणात् ॥ ९६ ॥
करञ्जारिष्टनिर्गुण्डी रसो हन्याद् व्रणक्रमीन्।
कलायविदलीपत्रं कोशाम्रास्थि च पूरणात्।
सुरसादिरसैः सेको लेपनं लशुनेन वा ॥ ९७ ॥
निम्बपत्रवचाहिङ्गु सर्पिर्लवणसर्षपैः।
धूपनं स्याद्व्रणे देयं क्रमिकण्डूरुजापहम् ॥ ९८ ॥
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति।
क्षुरकर्त्तरिसन्दंशै स्तस्य रोमाणि निर्हरेत् ॥ ९९ ॥
रोमस्थाने यदा रोम व्रणशान्ते च नो भवेत्।
तत्र वैद्येन कर्त्तव्यो रोमसञ्चयनो विधिः ॥ १०० ॥
कपोतवङ्कालशुनं सशीर्षं ससैन्धवं चित्रकमूलमिश्रम्।
तदश्वलेण्डस्य रसेन पिष्टं व्रणे प्रलेपो भवति हि रोमृणाम् ॥१०१॥
ये क्लेदपाकस्रुतिगन्धवन्तो व्रणाश्चिरोत्थाः सरुजः सशोथाः।
प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलारसेन ॥१०२
पटोलनिम्बासनसारधात्री पथ्याच्चनिर्यूहमहर्मुखेषु।
नरः पिबेद्गुग्गुलुना विसर्पविस्फोटदुष्टव्रणशान्तिमिच्छन् ॥१०३
मनःशिला समञ्जिष्ठा सलाक्षा रजनीद्वयम्।
प्रलेपात्सघृतः चौद्रस्त्वग्विशुद्धिकरः परः ॥ १०४ ॥
पूतिगन्धिविवर्णांश्च महास्रावान् महारुजः।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥ १०५ ॥
जीर्णशाल्योदनं स्निग्ध मल्पमुष्णं द्रवोत्तरम्।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ १०६ ॥
तण्डुलीयकजीवन्ती सुनिषण्णकवास्तुकैः।
कालमूलकवार्त्ताकु पटोलैः कारवेल्लकैः ॥ १०७ ॥
सदाडिमैः सामलकै र्घृतभृष्टैः ससैन्धवैः।

अन्यैरेवं गुणैर्वापि मुद्गादीनां रसेन वा ॥ १०८ ॥
अम्लं दधि च शाकञ्च मांसमानूपमोदकम् ।
क्षीरं गुरूणि चान्नानि व्रणे च परिवर्जयेत् ॥ १०९ ॥
दिवानिद्राविहीनश्च निर्वातगृहसेवकः ।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥ ११० ॥
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात् ते च मृत्युश्च मैथुनात् ॥१११॥
यश्छिनत्त्याममज्ञानात् यश्च पक्वमुपेक्षते ।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ ११२ ॥

इति वङ्गसेनसङ्कलितः व्रणशोथशारीरव्रणोपक्रमनिदान-
चिकित्साधिकारः समाप्तः ।

---

## अथ आगन्तुव्रणनिदानमाह ।

नानाधारामुखैः शस्त्रैः नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणास्तांस्तां निबोध मे ॥ १ ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्छितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥
तिर्य्यक् छिन्न ऋजुर्वापि व्रणो यस्त्वायतो भवेत् ।
गात्रस्य पाटनं तद्धि छिन्नमित्यभिधीयते ॥ ३ ॥
शक्तिकुन्तेषुखड्गाग्र विषाणैराशयो हतः ।
यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥ ४ ॥
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ।
हृदुन्दुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥

मूर्च्छाश्वासतृषाध्मान मभक्तच्छन्द एव च।
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥ ७ ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च।
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ॥ ९ ॥
पक्वाशयगते चापि रुजा गौरवमेव च।
अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥
सूक्ष्मास्यशल्याभिहतं यदङ्गन्तु शरैः प्लुतम्।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥ ११ ॥
नातिच्छिन्नं नातिभिन्न मुभयोर्लक्षणान्वितम्।
विषमं व्रणमङ्गेषु तत्क्षतन्तु विनिर्दिशेत् ॥ १२ ॥
प्रहारपीड़नाभ्याञ्च यदङ्गं पृथुतां गतम्।
सास्थि तत्पिच्छितं विद्यान्मज्जारक्तपरिप्लुतम् ॥ १३ ॥
घर्षणादभिघाताद्वा यदङ्गं विगतत्वचः।
ऊषास्रावान्वितन्तत्तु घृष्टमिति विनिर्दिशेत् ॥ १४ ॥
श्यावं सशोफं पिटिकाचितं च मुहुर्मुहुः शोणितवाहिनञ्च।
मृदून्नतं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति ॥ १५ ॥
त्वचोऽतीत्य शिरादीनि भित्वा वा परिहृत्य वा।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्याद्रक्तानुपद्रवान् ॥ १६ ॥
तत्रान्तर्लोहितं पाण्डु शीतपादकराननम्।
शीतोच्छ्वासं रक्तनेत्र मानद्धञ्च विवर्जयेत् ॥ १७ ॥
भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात स्तीव्रा रुजो वातकृताश्च तास्ताः॥१८
मांसोदकाभं रुधिरञ्च गच्छेत्सर्वेन्द्रियार्थो परमस्तथैव।
दशार्द्धसंख्येष्वथवा क्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ १९॥

सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत् तत्क्षतजश्च वायुः
करोति रोगान् विविधान् यथोक्ताञ्छिरासु विद्धास्वथवा क्षतासु२०
कौब्जं शरीरावयवावसादः क्रियास्वऽशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत् ॥२१
शोथाभिवृद्धिस्तुमुला रुजश्च बलक्षयः सर्वत एव शोथः ।
क्षतेषु सन्धिष्वचलाचलेषु स्यात्सर्वकर्मोपरमश्च लिङ्गम् ॥ २२ ॥
घोरारुजो यस्य निशादिनेषु सर्वास्ववस्थासु च नैति शान्तिम् ।
भिषग्विपश्चिद्विदितार्थसूत्रः तमस्थिविद्धं पुरुषं व्यवस्येत् ॥२३॥
यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिताडितेषु ।
पाण्डुर्विवर्णः स्पृशितं नवेत्ति यो मांसमर्मस्वभिताडितः स्यात् २४

मर्माश्रितं व्रणं प्राप्य वायुर्हि सर्वदेहगः ।
वेगैरायामयेद्देहं व्रणायामन्तु तत्त्यजेत् ॥ २५ ॥
विसर्पः पक्षघातश्च शिरःस्तम्भोऽपतानकः ।
मोहोन्मादव्रणरुजो ज्वरस्तृष्णाहनुग्रहः ॥ २६ ॥
कासः छर्दिरतीसारो हिक्काश्वासः सवेपथुः ।
षोड़शोपद्रवाः प्रोक्ताः व्रणानां व्रणचिन्तकैः ॥ २७ ॥

अथ चिकित्सामाह ।

बुद्ध्वागन्तुव्रणं वैद्यो घृतक्षौद्रसमन्विता ।
शीतक्रिया प्रयोक्तव्या रक्तपित्तोष्मनाशिनी ॥ २८ ॥
क्रुद्धे सद्योव्रणे युञ्ज्या दूर्द्धं चाधश्च शोधनम् ।
लङ्घनञ्च बलं ज्ञात्वा भोजनं चास्रमोक्षणम् ॥ २९ ॥
घृष्टे विदालिते चैव सुतरामिष्यते विधिः ।
यतोह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ ३० ॥
छिन्ने भिन्ने तथा विद्धे क्षते वास्रगतिस्रवेत् ।
रक्तक्षयात्तत्र रुजः करोति पवनो भृशम् ॥ ३१ ॥
स्नेहपानपरीषेक लेपस्वेदोपनाहनम् ।

कुर्वीत स्नेहवस्तिञ्च मारुतघ्नौषधैः शृतैः ॥ ३२ ॥
छिन्ने भिन्ने तथा विद्धे क्षते सद्यो भिषग्वरः ।
पटसूत्रेण संवेष्ट्य व्रणं व्रणविशारदः ॥ ३३ ॥
मुहुर्मुहु तथा दुःखं न प्राप्नोति भिषग्वरः ।
तथा कर्म प्रकुर्वीत सर्वतश्च सुखप्रदम् ॥ ३४ ॥
अथवा दीप्यलवण पोटल्या स्वेदयेन्मुहुः ।
सन्तप्तया तप्तलोहपात्रसंयोगतः क्रमात् ।
दुष्टं रक्तं स्थितं चापि शृङ्खलाव्वादिभिर्हरेत् ॥ ३५ ॥
सद्यःक्षते व्रणे वैद्यः सशूले परिषेचयेत् ।
यष्टीमधुकमिश्रेण नातिशीतेन सर्पिषा ॥ ३६ ॥
कषायमधुराः शीताः क्रियाः सर्वास्तु योजयेत् ॥ ३७ ॥
आमाशयस्थे रुधिरे विदध्याद्वमनं नरः ।
तस्मिन् पक्काशयस्थे तु प्रकुर्वीत विरेचनम् ॥ ३८ ॥
क्वाथो वंशत्वगेरण्ड श्वदंष्ट्राश्मभिदा कृतः ।
हिङ्गुसैन्धवसंयुक्तः कोष्ठस्थं स्रावयेदसृक् ॥ ३९ ॥
खङ्गादिछिन्नगात्रस्य तत्काले पूरितो व्रणः ।
गाङ्गेरुकीमूलरसैः सद्यः स्याद्गतवेदनः ॥ ४० ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्न यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ४१ ॥
अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।
सद्यो व्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ४२ ॥
कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति ।
सद्यः शस्त्रक्षतं तत्तु व्यथापाकविवर्जितः ॥ ४३ ॥
शुनोजिह्वाकृतश्चूर्णः सद्यःक्षतविरोहणः ।
चुक्रतैलं क्षते बिद्धे रोपणं परमं मतम् ॥ ४४ ॥
मानुषशिरःकपालं तदस्थि लेपनं मूत्रेण ।

रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम् ॥ ४५ ॥
स्नेहपानं परीषेकं स्नेहलेपोपनाहनम् ।
स्नेहवस्तिं च कुर्वीत वातघ्नौषधसाधिताम् ॥ ४६ ॥
इति सप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ।
सप्ताहात्परतो कुर्य्याच्छारीरव्रणवत् क्रियाम् ॥ ४७ ॥
त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निर्यन्त्रणो विबन्धघ्नो व्रणशोधनरोपणः ॥ ४८ ॥

इति गुग्गुलुवटिका ।

अमृतापटोलमूल त्रिफलात्रिकटुक्रिमिघ्नानाम् ।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ॥ ४९ ॥
प्रतिवासरमेकैकां खादेदक्षप्रमाणां गुटिकाम् ।
जेतुं व्रणान्वातासृग्गुल्मोदरश्वयथुरोगादीन् ॥ ५० ॥

इति अमृतागुग्गुलुः ।

जातीनिम्बपटोलपत्रकटुका दार्वीनिशासारिवा ।
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः ॥
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो ।
गम्भीराः सरुजो व्रणाः सगतिकाः शुद्ध्यन्ति रोहन्ति च ॥५१॥
वृद्धवैद्योपदेशेन पारम्पर्य्योपदेशतः ।
जातीघृते तु संसिद्धे चेतव्यं सिक्थकं बुधैः ॥ ५२ ॥

इति जात्यादिघृतम् ।

तिक्तासिक्थनिशायष्टी नक्ताह्वाफलपल्लवैः ।
पटोलमालतीनिम्बपत्रैर्व्रण्यं स्मृतं घृतम् ॥ ५३ ॥

इति तिक्ताद्यं घृतम् ।

जातिनिम्बपटोलानां नक्तमालस्य पल्लवाः ।
सिक्थं समधुकं कुष्ठं द्वे निशे कटुरोहिणी ॥ ५४ ॥
मञ्जिष्ठा पद्मकं लोध्रमभयानीलमुत्पलम् ।

तुत्थकं शारिवाबीजं नक्तमालस्य दापयेत्॥ ५५॥
एतानि समभागानि पिष्ट्वा तैलं विपाचयेत्।
विषव्रणे समुत्पन्ने स्फोटिके कच्छुरोगके॥ ५६॥
दद्रुविसर्परोगेषु कीटदुष्टेषु सर्वथा।
सद्यः शस्त्रप्रहारेषु दग्धविद्धेषु चैव हि॥ ५७॥
नखदन्तक्षते देहे दुष्टमांसापकर्षणे।
प्रोक्षणार्थमिदं तैलं हितं शोधनरोपणम्॥ ५८॥

इति जातिकाद्यं तैलम्।

शरपुङ्खालाङ्गली चित्रकरामठरसोनसिन्धुवरैः।
सविषामयैः समांशैः कटुतैलसाधितं विधिना॥ ५९॥
विपरीतमल्लसंज्ञं तैलं दुष्टव्रणं तथा नाड़ीम्।
बहुभेषजैरसाध्या मपथ्यभोक्तुश्च निस्तुदति॥ ६०॥

इति विपरीतमल्लतैलम्।

कुठारकात्पलशतं क्वाथयेदुल्वणेऽम्भसि।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत्॥ ६१॥
कल्कैः कुठारापामार्गप्रोष्ठिकामक्षिकासु च।
एतत्तैलं कुठारस्य शोधनं व्रणरोपणम्॥ ६२॥
नाड़ीषु परमाभ्यङ्गो निजास्वागन्तुकेषु च॥

इति कुठारतैलम्।

दूर्वास्वरससंसिद्धं तैलं कम्पिल्लकेन वा।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम्॥ ६३॥

इति दूर्वाद्यं तैलम्।

बलाशिखरिकामूलं पिष्ट्वा तैलं विपाचयेत्।
नूलतैलमिति ख्यात मभ्यङ्गान्नूलकान्वितः॥ ६४॥
ये व्रणास्त्रिवृत्ताः केचिच्छरीरागन्तवः सदा।

रोपणार्थं भिषक् तेषा मिदं तैलं प्रयोजयेत् ॥ ६५ ॥

इति नूलतैलम् ।

अमृतागुग्गुलुः श्रेष्ठो हितं तैलञ्च वज्रकम् ॥ ६६ ॥
विड़ङ्गत्रिफलाव्योष चूर्णं गुग्गुलुना समम् ।
सर्पिषा वटकी कृत्य खादेद्वा हितभोजनम् ॥ ६७ ॥
दुष्टव्रणापचीमेह कुष्ठनाड़ीविशोधनः ।

इति व्रणेषु वटिकागुग्गुलुरेषः ।

त्रिकटुत्रिफलामुस्त विड़ङ्गामृतचित्रकम् ।
पटोलपिप्पलीमूलं हपुषा सुरदारु च ॥ ६८ ॥
तुम्बुरु पुष्करं चव्यं विशाला रजनीद्वयम् ।
विड़ं सौवर्चलं क्षारं सैन्धवं गजपिप्पली ॥ ६९ ॥
यावन्त्येतानि सर्वाणि तावद्द्विगुणगुग्गुलुः ।
कोलप्रमाणां गुटिकां भक्षयेन्मधुना सह ॥ ७० ॥
कासं श्वासं तथा शोथ मर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥ ७१ ॥
अश्मरीमूत्रकृच्छ्रञ्च ह्यन्त्रवृद्धिं तथा क्रमीन् ॥ ७२ ॥
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ।
आनाहञ्च तथोन्मादं कुष्ठान्यष्टोदराणि च ॥ ७३ ॥
नाड़ीदुष्टव्रणान् सर्वान् प्रमेहान् श्लीपदं तथा ।
सप्तविंशतिको नाम्ना गुग्गुलुः प्रथितो महान् ।
धन्वन्तरिकृतो ह्येषः सर्वरोगनिषूदनः ॥ ७४ ॥

इति सप्तविंशतिको गुग्गुलुः । इति सद्योव्रणचिकित्सा ।

तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति । अग्निसन्तप्तो हि स्नेहः सूक्ष्ममार्गानुसारित्वात् त्वगादींस्तु प्रविश्याशु दहति । तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति । तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धमिति चतुर्विधं भवत्यग्नि-

दग्धम्। तत्र विवर्णमात्रं पुष्यते तत्पुष्टं यत्रोत्तिष्ठन्ति स्फोटा-स्तीव्रदाहवेदनाश्चिराद्वेोपशाम्यन्ति तद्दुर्दग्धम्। सम्य-ग्दग्धमवगाढ़ं तालवर्णं सुस्थितं पूर्वलक्षणसंयुक्तं च। अतिदग्धे त्वङ्मांसावलम्बनं गात्रविश्लेषणं शिरास्नायुसन्ध्यस्थि व्यापादन-मतिमात्रवेदना ज्वरदाहपिपासा मूर्च्छाश्वासोपद्रवा भवन्ति। व्रणाश्चास्य चिरेणोपरोहन्ति उपरूढ़ा विवर्णा भवन्ति। इति व्रणः पुष्टादिभेदेन वह्निदग्धश्चतुर्विधो भवति।

अथ तस्य चिकित्सामाह।

पुष्टस्याग्निप्रतपनं कुर्य्यादुष्णं तथौषधम्।
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्यात्ततः पुनः॥ ७५॥
घृतलेपनसेकांस्तु शीतानेवास्य कारयेत्॥ ७६॥
अतिदग्धे तु शीर्णानि मांसानुद्धृत्य शीतलाम्।
क्रियां कुर्य्याच्च तां काले शालितण्डुलचन्दनैः।
तिन्दुक्या त्वक् कषायैर्वा घृतमिश्रैः प्रलेपयेत्॥ ७७॥
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः।
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक्॥ ७८॥
पथ्या कर्दमजीरक मधुसिक्थकसर्जमिश्रितं लेपात्।
गव्यं घृतमपहरति पावकजनितं व्रणं सद्यः॥ ७९॥
अन्तरधूमकुठारको दहनजं लेपान्निहन्ति व्रणम्।
अश्वत्थस्य च शुष्कवल्कलकृतं चूर्णं तथा गुण्डनात्॥
अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितम्।
पिष्ट्वा शाल्मलितूलकैर्जलगता लेपात्तथा बालुका॥ ८०॥

अस्मिंश्चत्वारो योगाः कथिताः।

दग्धयवभस्मचूर्णं तिलतैलाक्तं प्रलेपनादचिरात्।
हरति शिखिदाहदग्धं भूयोऽभ्यङ्गाद्व्रणञ्चाशु॥ ८१॥
पित्तविद्रधिवीसर्पशमनं लेपनादिकम्।

अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत विचक्षणः ॥ ८२ ॥
शुभ्रा पुरातनी दग्ना वारिणा परिपेषिता ।
लेपनं तैलदग्धस्य विस्फोटव्याधिनाशनम् ॥ ८३ ॥
अक्षिजेषु तु कर्त्तव्यमिदमाश्वशोतनं हितम् ।
शेलुत्वक् त्रिफला दार्वी क्वाथो रोचनया युतः ॥
स्नुह्यर्कक्षीरसिक्तेऽक्षिण गव्यं सर्पिर्निषेचयेत् ॥ ८४ ॥
मधूच्छिष्टं समधुकं लोध्रं सर्जरसं तथा ।
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥ ८५ ॥
सर्वेषामग्निदग्धानां व्रणरोपणमुत्तमम् ।

इति मधूच्छिष्टाद्यं घृतम् ।

उभे हरिद्रे मञ्जिष्ठा मधुकं लोध्रकट्फलम् ।
कम्पिल्लकमुभे मेदे लाङ्गलीमूलमेव च ॥ ८६ ॥
पिप्पली त्रिफला चैव निम्बपत्रञ्च कार्षिकम् ।
कपिलाया घृतप्रस्थं पचेत्तद्द्विगुणं पयः ॥ ८७ ॥
पलद्वयञ्च सिक्थस्य सिद्धपूते च दापयेत् ।
लाङ्गलीकं घृतं नाम व्रणानां रोपणं परम् ॥ ८८ ॥
अग्निदग्धे विसर्पे च कीटलूता व्रणेषु च ।
चिरोत्थेषु च दुष्टेषु नाड़ीमर्माश्रितेषु च ॥ ८९ ॥

इति लाङ्गलीघृतम् ।

सिद्धं कषायकल्काभ्यां पटोल्याः कटुतैलकम् ।
दग्धव्रणरुजास्राव दाहविस्फोटनाशनम् ॥ ९० ॥

इति पटोलीतैलम् ।

चन्दनं वटशुङ्गाश्च मञ्जिष्ठा मधुकं तथा ।
प्रपौण्डरीकं मूर्वा च पतङ्गं धातकी तथा ॥ ९१ ॥
एतैस्तैलं विपक्तव्यं सर्पिः क्षीरसमायुतम् ।

अग्निदग्धे व्रणे श्रेष्ठं तत्त्वणाद्रोपणं परम् ॥ ९२ ॥

इति चन्दनाद्यं तैलम्।

अम्लं दधिच शाकञ्च मांसमानूपवारिजम्।
क्षीरं गुरूणि चान्नानि व्रणिनः परिवर्जयेत् ॥ ९३ ॥
वातास्रमसृतं दुष्टं सशोथं ग्रथितं व्रणम्।
कुर्य्यात्सदाहं कण्ड्वाढ्यं व्रणग्रन्थिरिति स्मृतः ॥ ९४ ॥
क्षारसूत्रं प्रयुञ्जीत दुष्टव्रणहरं विधिम्।
कम्पिल्लकं विडङ्गानि त्वचं दार्व्यास्तथैव च ॥
पिष्ट्वा तैलं विपक्तव्यं व्रणग्रन्थिहरं परम् ॥ ९५ ॥

इति कम्पिल्लकतैलम्।

इति वङ्गसेनसङ्कलितः आगन्तुव्रणाग्निदग्धव्रणनिदानचिकित्साधिकारः समाप्तः।

---

## अथ भग्ननिदानमाह।

पतनपीड़नव्यालविषदग्धप्रभृतिभिः अभिघातविशेषैः अनेकविधिभिः सन्ध्यस्थ्नां भङ्गमुपदिशन्तीत्यत आह।
भग्नं समासाद्विविधं हुताशकाण्डे च सन्धाविह तत्र सन्धौ।
उत्पिष्टविश्लिष्टविवर्त्तितञ्च तिर्य्यग्गतं क्षिप्तमधश्च षट्कम् ॥ १ ॥
प्रसारणाकुञ्चनवर्त्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम्।
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात्।
विशेषतो रात्रिभवारुजा च विश्लिष्टकेतौ च रुजा च नित्यम्॥२॥
विवर्त्तिते पार्श्वरुजश्च तीव्रास्तिर्य्यग्गते तीव्ररुजो भवन्ति।
क्षिप्तेऽति शूलं विषमा रुगस्थ्नोः क्षिप्ते त्वधो रुग्विघटश्च सन्धेः॥३॥
काण्डे त्वतः कर्कटकाश्व कर्णविचूर्णितं पिच्छितमस्थि खल्लितम्।
काण्डे च भग्नं ह्यतिपातितं च मज्जागतञ्च स्फुटितञ्च वक्रम् ॥४॥
छिन्नं द्विधा द्वादशधा च काण्डे स्रस्ताङ्गता शोफरुजातिवृद्धिः।

सम्पीड्यमानो भवतीह शब्दः स्पर्शासहः स्पन्दनतोदशूलाः ॥५॥
सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् ।
भग्नन्तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम् ॥६

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ७ ॥
भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथाच्युतम् ।
जघनं प्रतिपिष्टञ्च वर्जयेत्तु विचक्षणः ॥ ८ ॥
असंश्लिष्ट कपालञ्च ललाटे चूर्णितञ्च यत् ।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि तु वर्जयेत् ॥ ९ ॥
सम्यक् संहितमप्यस्थि दुर्निक्षेपनिबन्धनात् ।
संक्षोभाद्वापि यद्गच्छे द्विक्रियां तच्च वर्जयेत् ॥ १० ॥
तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि च ।
कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च ॥ ११ ॥

अथ भग्नचिकित्सामाह ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ।
पङ्केनालेपनं कार्य्यं बन्धनं च कुशान्वितम् ॥ १२ ॥
अवनामितमुन्नम्येदुन्नतं चावपीड़येत् ।
आञ्छेदतिक्षिप्तमधोगतञ्चोपरिवर्त्तयेत् ॥ १३ ॥
पलाशोदुम्बराश्वत्थ कदम्बनिचुलत्वचः ।
वंशसर्जार्जुनानाञ्च कुशार्थमुपसंहरेत् ॥
पटस्योपरि बध्नीयान्न गाढ़ं शिथिलं न वा ॥ १४ ॥
सप्तसप्तदिनाच्छीते घर्मे मुञ्चेत्त्र्यहात् त्र्यहात् ।
समाने पञ्चपञ्चाहाद्भग्नं दोषवशेन च ॥ १५ ॥
आलेपनार्थं मञ्जिष्ठा मधुकं चाम्बुपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ १६ ॥
सद्योऽभिघातजनिता रागन्तुजाः श्वयथवः प्रशाम्यन्ति ।

पिष्टकलवणालेपादम्लीकाफलरसाभ्यां वा ॥ १७ ॥
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने।
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात्सवेदने ॥ १८ ॥
सुखोष्णमवचार्य्यं वा चुक्रतैलं विजानता।
अविदाहिभिरन्नैश्च पौष्टिकैः समुपाचरेत् ॥ १९ ॥
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ॥ २० ॥
मांसं मांसरसः क्षीरं सर्पिर्यूषः सतीनजः।
बृंहणं चान्नपानञ्च देयं भग्नाय जानता ॥ २१ ॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ २२ ॥
सघृतेनास्थिसंहारं लाक्षागोधूममर्जुनम्।
सन्धिमुक्तेऽस्थिसंभग्ने पिबेत् क्षीरेण वा पुनः ॥ २३ ॥
चूर्णं पुटेन संयोज्य घृतेनार्जुनलाक्षयोः।
भग्नः सन्धानमायाति लीढ्वा क्षीरघृताशनः ॥ २४ ॥
मूलं शृगालविन्नायाः पीत्वा मांसरसेन तु।
चूर्णीकृत्य त्रिसप्ताहा दस्थिभग्नमपोहति ॥ २५ ॥
आभाचूर्णं मधुयुत मस्थिभग्ने त्र्यहं पिबेत्।
पीत्वाप्यस्थि भवेत् सम्यग् वज्रसारनिभं दृढम् ॥ २६ ॥
अम्लीकाफलकल्कः सौवीरस्तैलविमिश्रितः स्वेदात्।
भग्नाभिहतरुजाघ्नै रथवौषधसाधितं श्वयथौ ॥ २७ ॥
आभाफलत्रिकव्योषैः सर्वैरेतैः समांशकैः।
तुल्यं गुग्गुलुना योज्यं भग्नसन्धिप्रसाधनम् ॥ २८ ॥

इत्याभागुग्गुलु।

लाक्षास्थिसंहृत् ककुभोऽश्वगन्धाचूर्णीकृतो नागबला पुरश्च।
सम्भग्नमुक्तास्थिरुजं निहन्यादङ्गानि कुर्य्यात् कुलिशोपमानि॥२९

इति लाक्षादिगुग्गुलुः।

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ॥ ३० ॥
तृतीयं सप्तरात्रन्तु भावयेन्मधुराम्बुना ।
ततः क्षीरं पुनः पीतान् शुष्कान् सूक्ष्मान्विचूर्णयेत् ॥३१॥
काकोल्यादिं श्वदंष्ट्राह्वं मञ्जिष्ठां शारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥ ३२ ॥
शतपुष्पाञ्च संचूर्ण्य तिलचूर्णेन योजयेत् ।
पीड़नार्थे तु कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥ ३३ ॥
चतुर्गुणेन पयसा तत्तैलं पाचयेत् पुनः ।
एलामंशुमतीपत्रं जीवन्ती तगरं तथा ॥ ३४ ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥ ३५ ॥
पिष्ट्वा शृङ्गाटकं चैव प्रागुक्तान्यौषधानि च ।
एभिर्वा विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥ ३६ ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षघाते तालुशोषे तथार्दिते ॥ ३७ ॥
मन्यास्तम्भे शिरोरोगे कर्णरोगे हनुग्रहे ।
वाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ ३८ ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरेतेनैव प्रजायते ॥ ३९ ॥
मुखञ्च पद्मप्रतिमं ससुगन्धि समीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥ ४० ॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव चिकित्सकैः ।
तिलचूर्णसमं तत्र मिलितं चूर्णमिष्यते ॥ ४१ ॥

इति गन्धतैलम् ।

पूर्वे वयसि जातं हि भग्नं सुकरमादिशेत् ।

अल्पदोषस्य जन्तोश्च काले तु समशीतले ॥ ४२ ॥
प्रथमे वयसि त्वेवं मासात्सन्धिः स्थिरो भवेत्।
मध्यमे द्विगुणात् कालादन्तमे त्रिगुणात्तथा ॥ ४३ ॥
नैति पाकं यथा भग्नं तथा यत्नेन रक्षयेत्।
पक्वा हि स्याच्छिरास्नायुस्तद्धि कृच्छ्रेण सिध्यति ॥ ४४ ॥
पतनादभिघाताद्वा शूनमङ्गं यदक्षतम्।
शीतान् सेकान् प्रदेहांश्च भिषक् तस्यावचारयेत् ॥ ४५ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत् ॥ ४६ ॥
वातव्याधिविनिर्दिष्टान् स्नेहांस्तत्रापि योजयेत्।
लवणं कटुकं क्षारं मम्लमातपमैथुनम्।
व्यायामं न च सेवेत भग्नो रूक्षान्नमेव च ॥ ४७ ॥
भग्नसन्धिमनाविद्ध महीनाङ्गमनुल्वणम्।
सुखचेष्टाप्रचारञ्च सम्यक् सन्धितमादिशेत् ॥ ४८ ॥

इति वङ्गसेनसङ्कलितः भग्ननिदानचिकित्साधिकारः समाप्तः।

---

## अथ नाड़ीव्रणनिदानमाह।

यः शोफमाममिति पक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्वविहितानि ततः सपूयः ॥ १ ॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाड़ीव यद्वहति तेन मता च नाड़ी ॥ २ ॥
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ ३ ॥

तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ।
पित्ताच्च तृट्ज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ॥ ४ ॥
ज्ञेया कफाद्बहुघना सितपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ।
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गतिव्यतिकरप्रभवांस्तु विद्यात् ॥ ५ ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत्पवनपित्तकफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥ ६ ॥
नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिलं मथितमुष्णमसृग्विमिश्रं
स्रावं करोति सहसा सरुजञ्च नित्यम् ॥ ७ ॥
नाड़ी त्रिदोषप्रभवा न सिध्ये-
च्छेषाश्चतस्रः खलु यत्नसाध्याः ॥ ८ ॥

अथ चिकित्सामाह ।

तत्रानिलोत्थामुपनाह्य पूर्वमशेषतः पूयगतिं विदार्य्य ।
फलैरपामार्गभवैः सुपिष्टैः ससैन्धवैः संपरिपूर्य्य बन्धेत् ।
प्रक्षालने वापि सदा व्रणस्य योज्यं महद्यत् खलु पञ्चमूलम् ॥ ९
हिंस्रां हरिद्रां कटुकीं वचाञ्च गोजिह्विकाञ्चापि सबिल्वमूलम् ।
संहृत्य तैलं विपचेद्व्रणस्य संशोधनं पूरणरोपणञ्च ॥ १० ॥

इति हिंस्राद्यं तैलम् ।

पित्तात्मिकां प्रागुपनाह्य धीमा नुत्कारिकाभिः सपयोघृताभिः ।

निपात्य शस्त्रं तिलनागदन्तीमञ्जिष्ठकल्कैः परिपूरयेच्च ॥
प्रक्षालने चापि हरिद्रसोमनिम्बाः प्रयोज्याः कुशलेन नित्यम् ॥११

श्यामात्रिभङ्गीत्रिफलासु सिद्धं हरिद्रया तिल्वकहृत्वकेण।
घृतं सदुग्धं व्रणतर्पणेन हन्याद्गतिं कोष्ठगतापि या स्यात् ॥१२॥

इति श्यामाघृतम्।

नाड़ीं कफोत्थामुपनाह्य पूर्वं कुलत्थसिद्धार्थकशक्तुविल्वैः।
सुदूक्तामेकगतिं विदित्वा निपातयेच्छस्त्रमशेषकारि ॥ १३ ॥

दद्यात् व्रणे निम्बतिलाग्निदन्तीसुराष्ट्रजाः सैन्धवसंप्रयुक्ताः।
प्रक्षालने चापि करञ्जनिम्बजात्यर्कपीलुस्वरसाः प्रयोज्याः ॥१४

स्वर्जिकासिन्धुदन्त्यग्नि यूथिका जलनीलिका।
खरमञ्जरिवीजेषु तैलं गोमूत्रसाधितम् ॥
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम् ॥ १५ ॥

इति स्वर्जिकाद्यं तैलम्।

सैन्धवाक्षमरिचज्वलनाख्यैः कारवेल्लरजनीद्वयसिद्धम्।
तैलमेतदचिरेण निहन्याद् दूरगामपि कफानिलनाड़ीम् ॥१६॥

इति सैन्धवाद्यं तैलम्।

नाड़ीन्तु शल्यप्रभवां विदार्य्य निष्कास्य शल्यं प्रविशोध्य मार्गम्।
बन्धेद्व्रणं चौद्रघृतप्रगाढ़ं निम्बां स्तिलान् शोध्यच रोपयेच्च॥१७॥

कुम्भीकखर्जूरकपित्थविल्ववनस्पतीनाञ्च शलाटुवर्गे।
कृत्वा कषायं विपचेत्तु तैलमवाप्य मुस्तं सरलं प्रियङ्गुम् ॥ १८॥

सौगन्धिकं मोचरसाहिपुष्पं लोध्राणि दत्त्वा खलु धातकीं च।
एतेन शल्यप्रभवा हि नाड़ी रोहेद्व्रणो वा सुखमाशु चैव ॥१९॥

इति कुम्भिकाद्यं तैलम्।

स्नुह्यर्कदुग्धदार्व्वीणां वर्त्तिं कृत्वा प्रपूरयेत्।
एष सर्वशरीरस्थां नाड़ीं हन्यात्प्रयोगराट् ॥ २० ॥
आरग्वधनिशाकालं चूर्णयेत् चौद्रसंयुतम्।

सूत्रवर्त्तिर्व्रणे योज्या शोधिनी गतिनाशिनी ॥ २१ ॥
वर्त्तीकृतं माक्षिकसंप्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितं तु तैलं तत्सेव्यमानं गतिमाशु हन्ति ॥ २२ ॥
जात्यर्कं शम्याककरञ्जदन्ती सिन्धूत्थ सौवर्चलयावसूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्टा सह चित्रकेण ।
विभीतकाम्राास्थि वटप्रबालहरेणुका शङ्खिनी वीजमिश्रा ॥
वराहविट् सूक्ष्ममसी प्रदेया नाड़ीषु तैलेन विमिश्रयित्वा ॥२३

मेषरोममसीतुम्बीकटुतैलं विपाचितम् ।
नाड़ीव्रणं चिरोद्भूतं जयेत्तूलकसङ्गमात् ॥ २४ ॥

इति मेषरोममसी ।

कर्पूरस्य रसेनैव कटुतैलं विपाचयेत् ।
सिन्दूरकल्कितं नाड़ि दुष्टव्रणविसर्पनुत् ॥ २५ ॥

इति कर्पूराद्यं तैलम् ।

स्वर्जिकासैन्धवं दन्ती नीलीमूलं फलं तथा ।
मूत्रे चतुर्गुणे सिद्धं तैलं नाड़ीव्रणापहम् ॥ २६ ॥

इति स्वर्जिकाद्यं तैलम् ।

सर्वो व्रणक्रमः कार्य्यो शोधनारोपणादिकः ।
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितैः ॥
अक्षप्रमाणां गुटिकां खादेदेकामतन्द्रितः ॥ २७ ॥
नाड़ीं दुष्टव्रणं शूल मुदावर्त्तं भगन्दरम् ।
गुल्मञ्च गुदजान् हन्यात् पक्षिराट् पन्नगानिव ॥ २८ ॥

इति सप्ताङ्गगुग्गुलुः ।

या द्विव्रणीये विहितास्तु वर्त्त्यस्ताः सर्वनाड़ीषु भिषग्विदध्यात्२

कृशदुर्बलभीरूणां नाड़ीं मर्माश्रितामपि ।
क्षारसूत्रेण तां छिन्द्या न्न शस्त्रेण कदाचन ॥ ३० ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।

सूचीं विदध्यान्नाद्यन्ते प्रोन्नाम्याशु विनिर्हरेत्॥ ३१ ॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत्।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्प्रवेशयेत्॥ ३२ ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः।
भगन्दरे प्येष विधिः कार्य्यो वैद्येन जानता॥ ३३ ॥
अर्बुदादिषु चोत्क्षिप्य मूले मूत्रं निधापयेत्।
सूचिभिर्यववक्त्राभि राचितं वा समन्ततः॥
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्व्रणम्॥ ३४ ॥

इति श्रीवङ्गसेनसङ्कलितः नाड़ीव्रणनिदानचिकित्साधिकारः समाप्तः।

---

## अथ भगन्दरनिदानमाह।

गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिड़कार्त्तिकृत्।
भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः॥ १ ॥
कटीकपालनिस्तोद दाहकण्डूरुजादयः।
भवन्ति पूर्वरूपाणि भविष्यति भगन्दरे॥ २ ॥
कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे पिड़कां करोति याम्।
उपेक्षणात्पाकमुपैति दारुणं रुजा च भिन्नारुणफेनवाहिनी॥३॥
तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत्॥ ४ ॥
प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदस्थिताम्।
तदाशु पाकां हिमपूयवाहिनीं भगन्दरं चोष्ट्रशिरोधरं वदेत्॥५॥
कण्डूयनो घनस्रावी कठिनो मन्दवेदनः।
श्वेतावभासः कफजः परिस्रावी भगन्दरः॥ ६ ॥
बहुवर्णरुजास्रावः पिड़का गोस्तनोपमाः।
शम्बूकावर्त्तगतिकः शम्बूकावर्त्तको मतः॥ ७ ॥
क्षतान्नतिः पायुगता विवर्द्धते ह्युपेक्षणात्सा क्रिमिभिर्विदार्य्यते।

प्रकुर्वते मार्गमनेकधा मुखैर्व्रणैस्तमुन्मार्गिभगन्दरं वदेत् ॥ ८ ॥
घोराः साधयितुं दुःखाः सर्व एव भगन्दराः ।
तेष्वसाध्यस्त्रिदोषोत्थः चतजश्च विशेषतः ॥ ९ ॥
वातमूत्रपुरीषाणि क्रमयः शुक्रमेव च ।
भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम् ॥ १० ॥

अथ चिकित्सामाह ।

अथास्य पिड़कामेव तथा यत्नादुपाचरेत् ।
शुद्ध्यस्रस्रुतिसेकाद्यैर्यथा पाकं न गच्छति ॥ ११ ॥
वटपत्रेऽष्टकाशुण्ठी गुडूची सपुनर्नवाः ।
सुपिष्टः पिड़कावस्थे लेपः शस्तो भगन्दरे ॥ १२ ॥
पिड़कानामपाकानामपतर्पणपूर्वकम् ।
कर्म कुर्य्याद्विरेकान्तं भिन्नानां वच्यते क्रिया ॥ १३ ॥
एषणीपाटनचार वह्निदाहादिकं क्रमम् ।
विधाय व्रणवत्कार्य्यं यथा दोषं यथा क्रमम् ॥ १४ ॥
पयः पिष्टैस्तिलैराज्य मधुकैश्च सुशीतलैः ।
भगन्दरे प्रशस्तोऽयं सरक्ते वेदनावति ॥ १५ ॥
सुमना वटपत्राणि गुडूचीविश्वभेषजम् ।
सैन्धवं तक्रपिष्टञ्च लेपाद्धन्ति भगन्दरम् ॥ १६ ॥
त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा ।
उत्सादनं भवेदेतत्सैन्धवचौद्रसंयुतम् ॥ १७ ॥
खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत् ।
महिषाचविड़ङ्गानां भगन्दरविनाशनम् ॥ १८ ॥
शम्बूकमांसमश्नीयात् प्रकारैर्व्यञ्जनादिभिः ।
अजीर्णवर्जी मासेन मुच्यते तु भगन्दरात् ॥ १९ ॥
न्यग्रोधादिर्गणो यश्च हितः शोधनरोपणः ।
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ २० ॥

तिला ज्योतिष्मती कुष्ठं लाङ्गली गिरिकर्णिका।
शताह्वा त्रिवृता दन्त्यः शोधनाश्च भगन्दरे ॥ २१ ॥
तिलाभयाकुष्ठमरिष्टपत्रं निशे बला लोध्रमगारधूमम्।
भगन्दरे चाप्युपदंशजे च दुष्टव्रणे शोधनरोपणाय ॥ २२ ॥
स्नुह्यर्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा विचक्षणः।
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः ॥
एषा सर्वशरीरस्थां नाड़ीं हन्ति न संशयः ॥ २३ ॥
त्रिफलारससंयुक्तं विड़ालास्थिप्रलेपनम्।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम् ॥ २४ ॥
कुष्ठं त्रिवृत्तिला दन्ती मागध्यः सैन्धवं मधु।
रजनीत्रिफलातुत्थं हितं स्याद्व्रणशोधनम् ॥ २५ ॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठा निम्बपल्लवाः।
त्रिवृत्तेजोवती दन्ती वल्को नाड़ीव्रणापहः ॥ २६ ॥
ज्योतिष्मती लाङ्गली च श्यामा दन्ती त्रिवृत्तिला।
कुष्ठं शताह्वा गोलोमी वर्गः शोधन इष्यते ॥ २७ ॥
मधुतैलयुता विड़ङ्गसार त्रिफलामागधिकाकणाश्च लीढ़ाः।
कुष्ठभगन्दरप्रमेहान् क्षयनाड़ीव्रणरोपणा भवन्ति ॥ २८ ॥
चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्चिकाम् ॥ २९ ॥
ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे।
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥ ३० ॥

इति विष्यन्दनतैलम्।

निशार्कक्षीरसिन्धूत्थ पुराश्वहरवत्सकैः।
सिद्धमभ्यञ्जनं तैलं भगन्दरहरं परम् ॥ ३१ ॥

इति निशाद्यं तैलम्।

करवीरनिशादन्ती लाङ्गलीलवणाग्निभिः।
मातुलुङ्गकवत्साह्वैः पचेत्तैलं भगन्दरे॥ ३२॥

इति करवीराद्यं तैलम्।

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता।
गुटिका शोथगुल्मार्शोभगन्दरवतां हिता॥ ३३॥

इति नवकार्षिको गुग्गुलुः।

नाड्यन्तरे व्रणान् कुर्य्याद्भिषक् तु शतपोनके।
ततस्तेष्ववरूढ़ेषु शेषा नाड़ीरुपाचरेत्॥ ३४॥
व्याधौ तत्र बहुच्छिद्रे भिषजा तु विजानता।
अर्धलाङ्गलिकः छेदः कार्यो लाङ्गलिकोऽपि च॥ ३५॥
सर्वतो भद्रको वापि कार्य्यो गोतीर्थकोऽपि वा।
द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलिको मतः॥३६॥
ह्रस्वमेकतरं यत्तु सोऽर्द्धलाङ्गलिकः स्मृतः।
सेवनीं वर्जयित्वा तु चतुर्धा दारिते गुदे॥ ३७॥
सर्वतोभद्रकं छेद माहुः छेदविदो जनाः।
पार्श्वादागतशस्त्रेण छेदो गोतीर्थको मतः॥ ३८॥
सर्वानास्रावमार्गांस्तु दहेद्वैद्यस्तथाग्निना।
अथोष्ट्रग्रीवमेषिण्या छित्वा क्षारं निपातयेत्॥
पूतिमांसव्यपोहार्थमग्निरत्र तु पूजितः॥ ३९॥
उत्कृत्याऽऽस्रावमार्गन्तु परिस्राविणि बुद्धिमान्।
क्षारेणाऽऽस्रावितगतिं दहेद्धुतवहेन वा॥ ४०॥
गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्जूरपत्रकम्।
चन्द्रार्द्धं चन्द्रवक्त्रञ्च सूचीमुखमवाङ्मुखम्॥
छित्वाग्निना दहेत्सम्यगेवं क्षारेण वा पुनः॥ ४१॥
येषान्तु शस्त्रपतनात् वेदना ह्यतिजायते।
तत्राशु तैलेनोष्णेन परिषेकः प्रशस्यते॥ ४२॥

आगन्तुजे भिषङ्नाड़ीं शस्त्रेणोत्कृत्य यत्नतः।
जम्बोष्ठेनाग्निवर्णेन तप्तया वा शलाकया॥ ४३॥
दहेद्यथोक्तं मतिमां स्तं व्रणं सुसमाहितः॥ ४४॥
व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च।
संवत्सरं परिहरेत् उपरूढ़व्रणो नरः॥ ४५॥

इति वङ्गसेनसङ्कलितः भगन्दरनिदानचिकित्साधिकारः समाप्तः।

---

## अथ उपदंशनिदानमाह।

हस्ताभिघातान्नखदन्तघातादधावनाद्रत्युपसेवनात् वा।
योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधोपचारैः॥१॥
सतोदभेदस्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशम्।
पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तात्पिशितावभासैः॥ २॥
सकण्डूरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन।
नानाविधस्रावरुजोपपन्न मसाध्यमाहुस्त्रिमलोपदंशम्॥ ३॥
प्रशीर्णमांसं कृमिभिः प्रजग्धं मुष्कावशेषं परिवर्जयेच्च॥ ४॥
सञ्जातमात्रे न करोति मूढ़ः क्रियां नरो यो विषये प्रसक्तः।
कालेन शोथः कृमिदाहपाकैः प्रशीर्णशिश्नो म्रियते स तेन॥५॥

अथ लिङ्गार्शमाह।

अङ्कुरैरिव सङ्घातैरुपर्युपरि संस्थितैः।
क्रमेण जायते वर्त्ति स्ताम्रचूड़शिखोपमा॥ ६॥
कोषस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि वा।
लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे।
सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा॥ ७॥

अथ चिकित्सामाह।

उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः।

मेढ्रमध्ये शिरां विध्येत्पातयेद्वा जलौकसः ॥ ८ ॥
हरेदुभयतश्चापि दोषानत्यर्थमूर्च्छितान् ।
सद्योनिर्हृतदोषस्य रुक्शोथावुपशाम्यतः ॥ ९ ॥
यदि वा दुर्बलो जन्तु र्न च प्राप्तविरेचनः ।
निरूहेण हरेत्तस्य दोषानत्यर्थमूर्च्छितान् ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ १० ॥
प्रपौण्डरीकयष्ट्याह्व सरलागुरुदारुभिः ।
सरास्नाकुष्ठपृथ्वीके वातिके लेपसेचने ॥ ११ ॥
निचुलैरण्डबीजानि यवगोधूमशक्तवः ।
एतैश्च वातजैः स्निग्धैः सुखोष्णं संप्रलेपयेत् ॥ १२ ॥
पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसैः ।
सर्पिः स्निग्धैः समधुकैः पैत्तिकं संप्रलेपयेत् ॥ १३ ॥
सेचयेच्च घृतक्षीर शर्करेक्षु मधूदकैः ।
अथवापि सुशीतेन कषायेण वटादिना ॥ १४ ॥
शालाजकर्णाश्वकर्ण धवत्वग्भिः कफोत्थितम् ।
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥ १५ ॥
आरग्वधादिक्वाथेन परिषेकञ्च दापयेत् ॥ १६ ॥
निम्बार्जुनाश्वत्थकदम्बशाला जम्बूवटोदुम्बरवेतसैश्च ।
प्रक्षालनालेपघृतानि कुर्य्याच्चूर्णं च पित्तास्रभवोपदंशे ॥ १७ ॥
त्वचोदारुहरिद्रायाः शङ्खनाभिरसाञ्जनम् ।
लाक्षागोमयनिर्य्यासस्तैलं क्षौद्रं घृतं पयः ॥ १८ ॥
एभिस्तु पिष्टैस्तुल्यांशै रुपदंशं प्रलेपयेत् ।
व्रणाश्च तेन शाम्यन्ति श्वयथुर्दाह एव च ॥ १९ ॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम् ।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥ २० ॥
शस्त्रेणोल्लेखयेच्चापि पाकमागतमाशु च ।

तमपोह्य तिलैः सर्पिः चौद्रयुक्तैः प्रलेपयेत् ॥ २१ ॥
वटप्ररोहार्जुनजम्बु पथ्यालोध्रं हरिद्रा च हितः प्रलेपः।
सर्वोपदंशेष्ववरोहणार्थं चूर्णञ्च कार्य्यं विमलाञ्जनेन ॥ २२ ॥
त्रिफलायाः कषायेण भृङ्गराजरसेन च।
व्रणप्रचालनं कुर्य्यादुपदंशप्रशान्तये ॥ २३ ॥
पटोलनिम्बत्रिफलाकिरातक्वाथं पिबेद्वा खदिरासनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरः प्रयोगः ॥ २४ ॥
नीलोत्पलानि कुमुदं पद्मसौगन्धिकानि च।
उपदंशेषु चूर्णानि प्रदेहोऽयं प्रशस्यते ॥ २५ ॥
बन्धूकदलचूर्णेन दाड़िमत्वग्रजोऽथवा।
गुण्डनं वृषणे शस्तं लेपः पूगफलेन वा ॥ २६ ॥
सौराष्ट्री गैरिकं तुत्थं पुष्पं काशीश सैन्धवम्।
लोध्रं रसाञ्जनं वापि हरितालं मनःशिला ॥ २७ ॥
हरेणुकैले च तथा समं संहृत्य चूर्णयेत्।
तच्चूर्णं चौद्रसंयुक्त मुपदंशेषु योजितम् ॥ २८ ॥
पुटदग्धकृतं भस्म हरितालं मनःशिला।
उपदंशविसर्पाणा मेतद्धानिकरं परम् ॥ २९ ॥
दहेत्कटाहे त्रिफलां तां मसीं मधुसैन्धवम्।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ३० ॥
तिरीटाञ्जनवन्याच्च कोविदारेभकेशरैः।
लेपनं पुरुषव्याधौ जलपिष्टैः प्रशस्यते ॥ ३१ ॥
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्।
सचौद्रं लेपनं योज्यं सर्वानङ्गगदापहम् ॥ ३२ ॥
भार्गीसम्भवशिखरिजमूलं भद्रश्रियं च सम्पिष्टम्।
मनःशिलाञ्च मधुना शमयत्युपदंशमचिरेण ॥ ३३ ॥
शतधौतं प्रयत्नेन लिङ्गोत्थमवचूर्णयेत्।

रोगं कासीसचूर्णेन पुरुषः सुखवाञ्छया ॥ ३४ ॥
करवीरस्य मूलेन परिपिष्टेन वारिणा ।
असाध्यापि व्रजत्यस्तं लिङ्गोत्था रुक् प्रलेपनात् ॥ ३५ ॥
करञ्जनिम्बासनशालजम्बूवटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकस्रुतिपाकयुक्तम् ॥ ३६ ॥

इति करञ्जाद्यं घृतम् ।

भूनिम्बनिम्बत्रिफलापटोलकरञ्जधात्रीखदिरासनानाम् ।
सतोयकल्कैर्घृतमाशु पक्कं सर्वोपदंशापहरं प्रदिष्टम् ॥ ३७ ॥

इति भूनिम्बाद्यं घृतम् ।

घृतानि यानि वक्ष्यामि कुष्ठे नाड़ीव्रणे व्रणे ।
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजनैः ॥ ३८ ॥
आगारधूमो रजनी सुराकिट्टञ्च तैस्त्रिभिः ।
यथोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम् ॥ ३९ ॥
शोधनं रोपणञ्चैव उपदंशहरं परम् ॥ ४० ॥

इत्यागारधूमाद्यं तैलम् ।

गोजीविड़ङ्गयष्टीभिः सर्वगन्धैश्च संयुतम् ।
एतत्सर्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥ ४१ ॥

इति गोजीतैलम् ।

जम्बूवेतसपत्राणि धात्रीपत्रं तथैव च ।
नक्तमालस्य पत्राणि तद्वत्पद्मोत्पलानि च ॥ ४२ ॥
बला चातिबलास्थास्थि मधुकञ्च प्रियङ्गवः ।
लाक्षा कालीयकं लोध्रं चन्दनं त्रिवृताह्वया ॥ ४३ ॥
एतान्येकीकृतान्येव वस्तमूत्रेण पेषयेत् ।
अक्षमात्रयुतैर्द्रव्यैः स्तैलप्रस्थं विपाचयेत् ॥ ४४ ॥
सर्वव्रणहरं तैल मेतत्सिद्धं प्रयोजितम् ।

उपदंशहरं श्रेष्ठं मुनिभिः परिकीर्त्तितम् ॥ ४५ ॥

इति जम्वाद्यं तैलम् ।

यस्य लिङ्गस्य मांसन्तु शीर्य्यते मुष्कशोषतः ।
तिक्तकोशातकीलम्बा वीजनागरसाधितम् ॥ ४६ ॥
तैलं हन्त्यचिराद् घोरं व्रणदुष्टमनेकधा ।

इति कोशातकीतैलम् ।

सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ।
अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत् ॥ ४७ ॥

अथ लिङ्गार्शश्चिकित्सामाह ।

स्वर्जिकातुत्थशैलेयं सरलं सरसाञ्जनम् ।
मनःशिलाले च समे चूर्णो मांसाङ्कुरापहः ॥ ४८ ॥

इति वङ्गसेनसङ्कलितः उपदंशनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ शूकदोषनिदानमाह ।

अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढ़धीः ।
व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥ १ ॥
गौरसर्षपसंस्थाना शूकदुर्भुग्नहेतुका ।
पिड़काश्लेष्मवाताभ्यां ज्ञेया सर्षपिका बुधैः ॥ २ ॥
कठिना विषमैर्भुग्नै र्वायुनाष्ठीलिका भवेत् ।
शूकैर्यत्पूरितं शश्वद् ग्रथितं नाम तत्कफात् ॥ ३ ॥
कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभा शुभा ।
अलजीलक्षणैर्युक्ता मलजीं प्रवितर्कयेत् ॥ ४ ॥
मृदितं पीड़ितं यत्तु संरब्धं वायुकोपतः ।
पाणिभ्यां भृशसंमूढ़े संमूढ़पिड़का भवेत् ॥ ५ ॥

दीर्घा बह्वग्रश्च पिड़का दीर्य्यन्ते मध्यतस्तु याः।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥ ६ ॥
पिड़काभिश्चिता या तु पित्तशोणितसम्भवा।
पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिका तु सा ॥ ७ ॥
स्पर्शहानिन्तु जनयेच्छोणितं शूकदूषितम् ॥ ८ ॥
मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा तु या।
व्याधिरेषोत्तमा नाम शूकाजीर्णनिमित्तजा ॥ ९ ॥
छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः।
वातशोणितजो व्याधिः स ज्ञेयः शतपोनकः ॥ १० ॥
वातपित्तकृतो ज्ञेय स्त्वक्पाकी ज्वरदाहकृत् ॥ ११ ॥
कृष्णैः स्फोटैः सरक्ताभिः पिड़काभिर्निपीड़ितम्।
यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १२ ॥
मांसदोषेण जानीया दर्वुदं मांससम्भवम्।
शीर्य्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः।
विद्यात्तं मांसपाकन्तु सर्वदोषकृतं भिषक् ॥ १३ ॥
विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १४ ॥
कृष्णानि चित्राख्यथवा शुक्लानि सविषाणि वा।
पाचितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १५ ॥
कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः।
सन्निपातसमुत्थांस्तु तान्विद्यात्तिलकालकान् ॥ १६ ॥
तत्र मांसार्वुदं यच्च मांसपाकश्च यः स्मृतः।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १७ ॥

अथ चिकित्सामाह।

शूकदोषेषु सर्वेषु विषघ्नीं कारयेत् क्रियाम्।
विरेचनं प्रयुञ्जीत शोणितस्य च मोक्षणम् ॥ १८ ॥
जलौकाभिर्हरेद्रक्तं मेढ्रे वा व्यधयेच्छिराम्।

गुग्गुलुं पाययेच्चापि त्रिफलाक्काथसंयुतम्।
क्षीरेण लेपसेकांश्च शीतानेव च कारयेत्॥ १९॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत्।
तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम्॥ २०॥
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः।
अष्ठीलायां सृते रक्ते श्लेष्मग्रन्थिवदाचरेत्॥ २१॥
कुम्भिकायां हरेद्रक्तं पक्कायां शोधिते व्रणे।
तिन्दुकत्रिफलालोध्र लेपस्तैलञ्च रोपणम्॥ २२॥
अलज्यां हृतरक्तायां मयमेव क्रियाक्रमः॥ २३॥
स्वेदयेद् ग्रथितं शश्वन्नाड़ीस्वेदेन बुद्धिमान्।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत्॥ २४॥
उत्तमाख्यान्तु पिड़कां संछिद्य वड़िशोद्धृताम्।
कल्कैश्चूर्णं कषायाणां क्षौद्रयुक्तैरुपाचरेत्॥ २५॥
क्रमः पित्तविसर्पोक्तः पुष्करीमूढ़योर्हितः॥ २६॥
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत्॥ २७॥
रसक्रिया विधातव्या लिखिता शतपोनके।
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम्॥ २८॥
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्वुदे।
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम्।
शोधने रोपणे चैव वीक्ष्यवीक्ष्यावचारयेत्॥ २९॥
क्षीरेण लेपसेकांश्च शीतैनैव च कारयेत्।
पूयते च यथा चाशु नैति पाकं यथा ध्वजम्॥ ३०॥
अर्वुदे मांसपाके च विद्रधौ तिलकालके।
प्रत्याख्याय प्रकुर्वीत भिषक्तेषां प्रतिक्रियाम्॥ ३१॥
दार्वीसुरसयष्ट्याह्वै र्गृहधूमनिशायुतैः।

तैलमभ्यञ्जने पाने मेढ्रे रोगं विनाशयेत् ॥ ३२ ॥

इति दार्वीतैलम् ।

गुञ्जाभस्ममषीवाथ हरितालं मनःशिला ।
दार्वीहरिद्रामधुकं घृतक्षौद्रसमायुतम् ।
प्रलेपार्थं प्रयुञ्जीत विशुद्धव्रणरोपणम् ॥ ३३ ॥
रसाञ्जनं साह्वयमेतदेव प्रलेपमात्रेण नयेत्प्रशान्तिम् ।
सपूतिपूयव्रणशोथकण्डूशूलान्वितं सर्वमनङ्गरोगम् ॥ ३४ ॥

इति वङ्गसेनसङ्कलितः शूकदोषनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ कुष्ठनिदानमाह ।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥ १ ॥
व्यायाममग्निसन्तापमतिभुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान् भजतामक्रमेण तु ॥ २ ॥
घर्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशनानाञ्च पञ्चकर्मापचारिणाम् ॥ ३ ॥
नवान्नदधिमत्स्यादि लवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्न तिलक्षीरगुड़ाशिनाम् ॥ ४ ॥
व्यवायं चाप्यजीर्णेऽन्ने निद्रां वा भजतां दिवा ।
विप्रान् गुरून्धर्षयतां पापकर्म च कुर्वताम् ॥ ५ ॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति सकुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ६ ॥
अतः कुष्ठानि जायन्ते सप्त चैकादशैव तु ॥ ७ ॥
तिलतैलकुलत्थांश्च वल्मीकलिङ्गमेव च ।
माहिषं दधि वृन्ताकं सप्तैते कुष्ठहेतवः ॥ ८ ॥

कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः।
सर्व्वेष्वपि त्रिदोषेषु व्यपदोषोऽधिकस्ततः॥ ९॥
अतिश्लक्ष्णखरस्पर्शं स्वेदास्वेदविवर्णता।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः॥ १०॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः।
रूढ़ानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम्।
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्॥ ११॥
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु।
कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम्॥ १२॥
रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम्।
उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्॥ १३॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम्।
कृच्छ्रमन्योऽन्यसंयुक्तं कुष्ठं मण्डलमुच्यते॥ १४॥
कर्कशं रक्तपर्य्यन्त मन्तःश्यावं सवेदनम्।
यदृक्षजिह्वासङ्काश मृक्षजिह्वं तदुच्यते॥ १५॥
सश्वेतरक्तपर्य्यन्तं पुण्डरीकदलोपमम्।
सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते॥ १६॥
श्वेतं ताम्रञ्च तनु य द्रजोघृष्टं विमुञ्चति।
प्रायश्चोरसि तत्सिध्म मलावुकुसुमोपमम्॥ १७॥
यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम्।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति॥ १८॥
अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम्।
तदेव कुष्ठं चर्माख्यं बहुलं हस्तिचर्मवत्॥ १९॥
श्यावक्किणं खरस्पर्शं परुषं किटिभं स्मृतम्।
वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम्॥ २०॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकश्चितम्।

सकण्डूरागपिड़कं दद्रुमण्डलमुद्गतम् ॥ २१ ॥
रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि ।
तच्चर्मदलमाख्यातं संस्पर्शाऽसह मुच्यते ॥ २२ ॥
सूक्ष्मा बह्वरः पिड़काः स्राववत्यः
पामित्युक्ताः कण्डूमत्यः सदाहाः ।
सैव स्फोटैस्तीव्रदाहैरुपेता
ज्ञेया पाण्योः कच्छुरुग्रास्फिजोश्च ॥ २३ ॥
स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ।
रक्तं श्यावं सदाहार्त्तिः शतारुः स्याद्बहुव्रणम् ॥ २४ ॥
सकण्डूपिड़काश्यावा बहुस्रावा विचर्चिका ॥ २५ ॥
खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् ।
पित्तात् प्रकुपितं दाहरागस्रावान्वितं मतम् ॥ २६ ॥
कफात् क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम् ।
द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम् ॥ २७ ॥

अथ धातुगतकुष्ठलक्षणान्याह ।

त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते ।
त्वक्स्वाको रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम् ॥ २८ ॥
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसम्भवे ॥ २९ ॥
दौर्गन्ध्यं सर्वदेहेऽस्मिन् पूयोऽतिक्रमयस्तथा ।
गात्राणां भेदनं वापि कुष्ठे मांससमाश्रिते ॥ ३० ॥
कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ।
मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ ३१ ॥
नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः ।
स्वरोपघातश्च भवेदस्थिमज्जासमाश्रिते ॥ ३२ ॥
दम्पत्योः कुष्ठबाहुल्याद् दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्जातं ज्ञेयं तच्चापि कुष्ठितम् ॥ ३३ ॥

साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत्।
मेदसि द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम्॥ ३४॥
कृमितृट्दाहमन्दाग्नि संयुक्तं यत्त्रिदोषजम्।
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्॥ ३५॥
वातेन कुष्ठं कापालं पित्तेनोदुम्बरं कफात्।
मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्ततः॥ ३६॥
चर्मैककुष्ठं किटिभं सिध्मालसविपादिकाः।
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी॥ ३७॥
पुण्डरीकं सविस्फोटं पामाचर्मदलं तथा।
सर्वैः स्यात्काकणं पूर्वं त्रिकं दद्रुसकाकणम्॥
पुण्डरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु॥ ३८॥

अथ श्वित्रलक्षणमाह।

कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत्।
निर्दिष्टमपरिस्रावं त्रिधातूद्भवसंश्रयम्॥ ३९॥
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु॥ ४०॥
सकण्डूरं क्रमाद्रक्तमांसमेदस्सु चादिशेत्।
वर्णैनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्॥ ४१॥
अशुक्लरोमा बहुलमसंश्लिष्टमथो नवम्।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा॥ ४२॥
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्।
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता॥ ४३॥
प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात्।
एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्॥ ४४॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव।

औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ४५ ॥

अथ चिकित्सामाह।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्र्यम् ॥ ४६ ॥

घृतं महानीलमुशन्ति वाते पित्ते महातिक्तकमेव तज्ज्ञाः।
तैलन्तु शैरीषमुशन्ति कुष्ठे श्लेष्मात्मकेऽभ्यञ्जनपानयोगे ॥ ४७ ॥

प्रच्छन्नैर्वा जलौकाभिः शृङ्गलावुशिराव्यधैः।
स्निग्धस्य मोचयेत् कुष्ठे दुष्टरक्तं पुनः पुनः ॥ ४८ ॥

स्रुतरक्ते हृते दोषे स्नेहैः संशमितेऽनिले।
रसायनानि प्राश्याश्च प्रशस्ताः कुष्ठिनामतः ॥ ४९ ॥

वचावासापटोलानि निम्बस्य फलिनीत्वचः।
कषायो मधुना पीतः वान्तकृन्मदनान्वितः ॥ ५० ॥

इति पञ्चकषायः।

विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ ५१ ॥

ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ५२ ॥

पथ्या करञ्जसिद्धार्थ निशावल्गु ससैन्धवैः।
विड़ङ्गसहितैः पिष्टैः लेपो मूत्रेण कुष्ठजित् ॥ ५३ ॥

एलाकुष्ठविड़ङ्गानि शताह्वा चित्रको वचा।
दन्तीरसाञ्जनञ्चैभिर्लेपः कुष्ठविनाशनः ॥ ५४ ॥

मनःशिलैले मरिचानि तैल मार्कं पयः कुष्ठहरः प्रदेहः।
करञ्जवीजैडगजः सकुष्ठो गोमूत्रपिष्टश्च वरः प्रदेहः ॥ ५५ ॥

धात्रीस्नुहीसर्जरसचक्रमर्दतुषोदकैः।
कच्छुदद्रुहरो लेपः कण्डूत्वग्दोषनाशनः ॥ ५६ ॥

शृङ्गाटकर्कटीमूलं हविषा ब्रह्मचारिणा।
निपीतं शमयत्याशु दद्रुरोगमसंशयम् ॥ ५७ ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ५८ ॥
एड़गजकुष्ठसैन्धव सौवीरसर्षपैः क्रमिघ्नैश्च ।
क्रमिसिध्मदद्रुमण्डल कुष्ठानां नाशनो लेपः ॥ ५९ ॥
त्रिफला मुस्तकं पिण्डी दार्वीशम्याकवत्सकाः ।
सिद्धार्थं कुष्ठनुच्चैभिः स्नानपानप्रलेपनम् ॥ ६० ॥
कासमर्दकमूलानि सौवीरेण तु पेषयेत् ।
किटिभसिध्मदद्रूणि जयेदेतत्प्रलेपनात् ॥ ६१ ॥
वीजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुनाटवीजम् ।
श्रीवेष्टकव्योषविड़ङ्गकुष्ठं पिष्ट्वा च मूत्रेण सुलेपनं स्यात् ॥
दद्रूणि सिध्मान् किटिभानि पामां कपालकुष्ठं विषमञ्च हन्यात् ६२
आरग्वधस्य पत्राणि चारनालेन लेपयेत् ।
दद्रुकिटिभकुष्ठानि हन्ति सिध्मानमेव च ॥ ६३ ॥
प्रपुन्नाटस्य वीजानि धात्री सर्जरसस्नुही ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ ६४ ॥
स्नुह्या रसः सालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदम्बुपिष्टो लेपः कृतो दद्रुमृगेन्द्रसिंहः ॥ ६५ ॥
चक्रमर्दकवीजञ्च मूलकाम्बुप्रपेषितम् ।
दद्रुघ्नं लेपनं कुर्य्याच्छिग्रुमूलत्वचोऽथ वा ॥ ६६ ॥
चक्रमर्दकवीजानि जीरकञ्च समांशकम् ।
स्तोकं सुदर्शनामूलं दद्रूकुष्ठविनाशनम् ॥ ६७ ॥
दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि बद्धमूलं दद्रुञ्च कण्डूञ्च विनाशयन्ति ॥६८॥
तृणकपत्रमपि दारुणं दद्रुरोगञ्च प्रघर्षयोगेन ।
प्रशमयति तनु श्वित्रं प्रागैन्द्रीभवं यदि गृहीतम् ॥६९॥
समूलपत्रस्तम्बस्य तृणकस्य तु घर्षणात् ।

भक्षणाद्वापि शाम्यन्ति दद्रुसिध्मविचर्चिका: ॥ ७० ॥
शिखिरिरसेन तु पिष्टं मूलकबीजं प्रलेपत: सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ ७१ ॥
कुष्ठं मूलकबीजं प्रियङ्गव: सर्षपा: सदुरालभा: ।
एतत् केशरषट्कं निहन्ति चिरकालजं सिध्म ॥ ७२ ॥

इति केशरषट्कम् ।

गन्धपाषाणमिश्रेण यवक्षारेण लेपितम् ।
सिध्मनाशमुपैत्याशु कटुतैलयुतेन च ॥ ७३ ॥
कासमर्दकबीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ ७४ ॥
बीजं मूलकजं निम्बपत्राणि सितसर्षपा: ।
गृहधूमञ्च सम्पेष्य जलेनाङ्गं प्रलेपयेत् ॥ ७५ ।
उद्वर्त्त्य नवनीतेन क्षालयेदुष्णवारिणा ।
त्र्यहादनेन सिध्मानि शाम्यन्त्याशु शरीरिणाम् ॥ ७६ ॥
लाक्षा श्रीवेष्टकं कुष्ठं हरिद्रे गौरसर्षपा: ।
व्योषं मूलकबीजानि प्रपुन्नाटफलानि ॥ ७७ ॥
एतान्यम्लप्रपिष्टानि कुष्ठेषूद्वर्त्तनं परम् ।
सिध्मानां किटिभानाञ्च दद्रूणाञ्च विशेषत: ॥ ७८ ॥
मयूरकक्षारजले सप्तकृत्व: परिस्रुते ।
सिद्धं ज्योतिष्मतीतैल मभ्यङ्गात्सिध्मनाशनम् ॥ ७९ ॥
प्रपुन्नाटार्कदुग्धाग्नि दन्तीजन्तुघ्नसैन्धवै: ।
गृहधूमनिशायुग्म सिंहीफलयुतै: समै: ॥
लेप: समस्तकुष्ठघ्न: सुप्तिवैवर्ण्यनाशन: ॥ ८० ॥
प्रलेपोद्वर्त्तनस्नान पानभोजनकर्मसु ।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥ ८१ ॥
दह्यमानाच्च्युतं कुम्भे समूलखदिराद्रसम् ।

साज्यधात्रीरसक्षौद्रं हन्यात् कुष्ठं रसायनम् ॥ ८२ ॥
निम्बपत्रघृतं पिष्ट्वा निम्बामलकमेव च ॥ ८३ ॥
श्वेतकरवीरमूलं कुटजकरञ्जौ त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः॥ ८४ ॥
गुडूचीत्रिफलादार्वी क्वाथो मूत्रोष्णवारिभिः।
त्वग्दोषव्रणशोथघ्नः पीतो मासञ्च गुग्गुलुः॥ ८५ ॥
खदिरत्रिफलानिम्ब पटोलामृतवासकैः।
अष्टकोऽयं जयेत् कुष्ठं कण्डूविस्फोटकानि च ॥ ८६ ॥
विसर्पपामाकिटिभ शीतपित्तमसूरिकाः॥

इति खदिराष्टकम्।

त्रिफलानिम्बपटोलं मञ्जिष्ठारोहिणीवचारजनी।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥ ८७ ॥

इति नवकषायः।

निम्बैरण्डदुरालभार्भकवचामूर्वाहरिद्राद्वय-
त्रायन्तीत्रिफला पटोलदहनद्रेकामृता भार्गिभिः।
काकोदुम्बरिकाकरञ्जखदिरैः शाखोटसप्तच्छदैः
व्याघ्रीसिंहिशिरीष वेतसकणाभूनिम्बशक्राह्वयैः॥ ८८ ॥
प्रापुन्नाटकवाकुची कुशजटामातङ्गकृष्णानलैः
पाठापर्पटकेन्द्रवारुणी वृषादन्ती त्रिवृच्चन्दनैः।
मञ्जिष्ठाऽऽमययासवासकटुकाराजद्रुमग्रन्थिकैः
तुल्यांशैः सुरभीजलेन पिबतां सिद्धं कषायं नृणाम् ॥८९॥
कण्डूदुम्बरपुण्डरीकलसकाः कुष्ठामयाः पापजाः
नश्यन्ति द्रुतमेव दारुणतराः प्रोद्भूयमानानलाः।
ज्वालादग्धप्रतप्तकाञ्चनसमान्यङ्गानि राजन्ति च
क्वाथोऽयं मुनिभिर्दयासुनिपुणैरुक्तो नृणां हितवे ॥ ९० ॥

इति निम्बादि महाकषायः।

मञ्जिष्ठारिष्टवासात्रिफलदहनकं द्वे हरिद्रे गुडूची
भूनिम्बो रक्तसारं सखदिरका वाकुची व्याधिघातः।
मूर्वादन्तीविशालाक्रमिरिपुजटिलात्रायमाणाः सपाठाः
श्यामानन्ता पटोलाः समरिचमगधाः साधितोऽयं कषायः॥९१॥
पीतो हन्यात्समस्तान् सकलतनुगतान् रक्तजान्वै विकारान्।
कण्डू विस्फोटकादीनलसकिटिभकश्वित्रपामादिदोषान् ॥९२॥

इति मञ्जिष्ठादि महाकषायः।

श्यामामृता खदिरसारशिरीषशिग्रु-
शैलेय सर्जसुरसासुरसिन्धुवारैः।
श्योनाकरञ्जकरिकर्ण वचाविशाला
भल्लातवेतसवराहृषसप्तपर्णैः॥ ९३ ॥
काकादनीफलककेरुककण्टकारी
कण्डूकरीकुटजकेशरकर्णिकारैः।
कर्कोटकार्ककरमर्दकदम्बनिम्ब-
जम्बूनिशातिनिसकेशरशारिवाभिः॥ ९४ ॥
गोधोपलानलशिलाजतुकुन्दराजी
राजीवकेशरशठीप्रपुनाटचूर्णम्।
अष्टावशेषितजलं सुरभीजलेन
क्वाथं विधाय पिबतः व्यथितेन्द्रियस्य॥ ९५ ॥
सर्वाङ्गसादपरिपोटनतोदभेद-
दाहव्रणस्फुटनसुप्ति विदीर्णभावैः।
वैपादिकार्वुदविवर्णविशीर्णकर्ण-
घ्राणाङ्घ्रिपाणिघनघर्घरघोरनादैः॥ ९६ ॥
गम्भीरपाकक्वथितं क्रमिजातपूति-
पूयास्रविस्रतनुगन्धिविसन्धिदग्धम्।
दुर्वारदारुणमुदुम्बरकुष्ठशोथम्

अल्पैर्दिनैः प्रशममेति महान्तमुग्रम् ॥ ९७ ॥

इति उदयमार्त्तण्ड महाकषायः।

पटोलखदिरारिष्ट त्रिफलाकृष्णवेत्रकम्।
तिक्ताशनः पिबन् क्वाथं कुष्ठी कुष्ठात् व्यपोहति ॥ ९८ ॥
काकोदुम्बरिकारिष्ट विड़ङ्गव्योषवासकम्।
कल्कं पीत्वा जयेत् कुष्ठं कुटजत्वक् सिताम्बुना ॥ ९९ ॥
विड़ङ्गं वाकुची कृष्णा पथ्या वाराह लाङ्गली।
त्रिफला सगुड़ा चैषां मोदकाः कुष्ठनाशकाः ॥ १०० ॥
अवल्गुजाद्दीजकर्षं पिबेदुष्णेन वारिणा।
भोजनं चीरसर्पिर्भ्यां सर्वकुष्ठहरं परम् ॥ १०१ ॥
तिलाज्यत्रिफलाचौद्र व्योषभल्लातशर्कराः।
वृष्याः सप्त समा मेध्याः कुष्ठहाः कामचारिणः ॥ १०२ ॥
निम्बस्य स्वरसं वापि सेव्यमानो यथाबलम्।
जीर्णे घृतान्नं भुञ्जीत स्वल्पयूषोदकेन च ॥
अपि चीणशरीरोऽपि दिव्यरूपी भवेन्नरः ॥ १०३ ॥
इन्द्राशनस्य पत्रं मधुना सितया च सर्पिषा युक्तम्।
खादेदशेषकुष्ठनाशकरमस्मात्परं नास्ति ॥ १०४ ॥
अमृता वाभयाव्योष वल्लारुष्करवाकुची।
केशराजाः क्रमाद्दृद्धाः कुष्ठघ्नास्तैलपिण्डिकाः ॥ १०५ ॥
पञ्चाह्वयां समाचीर्णां सस्नेहां वापि चूर्णिताम्।
तैलयुक्तां लिहेत् कुष्ठी ह्यारोग्यमचिरात् लभेत् ॥ १०६ ॥

अथ कुष्ठलेपानाह।

विषवरुणहरिद्रा चित्रकागारधूम-
मदनमरिचमूर्वाचीरमर्कस्नुहीभ्याम्।
दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ १०७ ॥

चक्राह्ववीजं स्नुक्क्षीरभावितं मूत्रसंयुतम् ।
रवितप्तं हि किञ्चित्तु लेपनं किटिभापहम् ॥ १०८ ॥
पिप्पलीपूतिकायस्थाकुष्ठगोपित्तचित्रकैः ।
लेपं सम्यक् प्रशंसन्ति किटिभघ्नं चिकित्सकाः ॥ १०९ ॥
गोमूत्रवारिसंपिष्टैः शिलाकाशीश तुत्थकैः ।
लेपः किटिभवीसर्पं कुष्ठनाशाय पूजितः ॥ ११० ॥
राजिकागुड़युक्तेन सैन्धवेन प्रयोजितम् ।
विड़ालचर्मणा बद्धं नाशं चर्मदलं व्रजेत् ॥ १११ ॥
वचया श्वेतया नाशं याति चर्मदलं द्रुतम् ।
लेपादिन्द्रयवैर्वापि गोमूत्रपरिपेषितैः ॥ ११२ ॥
सलिले चाम्रपेशी तु किञ्चित्सिन्धुसमन्विता ।
ताम्रपात्रे विनिर्घृष्टा लेपश्चर्मदलापहा ॥ ११३ ॥

शैलेयकम्पिल्लकयष्टिकाह्वा
सौराष्ट्रिकासर्जरसोत्पलानि ।
शिला च चूर्णो नवनीतयुक्तः
कुष्ठे स्रवत्यऽभ्यधिकः प्रदिष्टः ॥ ११४ ॥

स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ११५ ॥
स्नुक्काण्डे शुषिरे दग्ध्वा गृहधूमं ससैन्धवम् ।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्चिकाम् ॥ ११६ ॥
मधुसिक्थकसैन्धव घृतगुड़महिषाक्षसालनिर्यासम् ।
गैरिकमेतत्पक्वं पादस्फुटनापहं सिद्धम् ॥ ११७ ॥
पिष्ट्वा जातीफलं लेपाद्विनिहन्ति विपादिकाम् ।
तद्वत्सर्जरसं क्षौद्र तिलतैलसमन्वितः ॥ ११८ ॥
नारिकेलोदके न्यस्ता स्तण्डुलाः पूतितां गताः ।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥ ११९ ॥

धत्तूरवीजकल्केन माणकक्षारवारिणा।
कटुतैलं विपक्वन्तु द्रुतं हन्याद्विपादिकाम्॥ १२०॥
इति धत्तूरक तैलम्।

अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम्।
मणिमन्थेन तुल्यांशं मस्तु काञ्जिकपेषितम्॥ १२१॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट्॥ १२२॥
कोमलं सिंहास्यदलं सनिशं सुरभीजलेन संपिष्टम्।
दिवसत्रयेण नियतं शमयति कच्छुं विलेपनतः॥ १२३॥
हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम्।
पिबेन्नरः कामचारी कच्छूपामाविनाशनम्॥ १२४॥
शिवाहरिद्रागुड़च्छर्दनानां तुल्यं विभागं मसृणं प्रपिष्य।
सम्प्राश्य तोयं तदनु प्रपीय जयेद्‌ व्रणानां प्रभवं सनातनम्॥१२५
श्रीवासकं सर्ज्जरसं लोध्रं कम्पिल्लकं तथा।
मनःशिला यवानी च गन्धपाषाणमेव च॥ १२६॥
पलिकैश्चूर्णितैरेतै र्घृतप्रस्थं प्रयोजयेत्।
सूर्य्यांशुपक्वमभ्यङ्गा घोरां कच्छूं व्यपोहति॥ १२७॥
इति श्रीवासघृतम्।

सिन्दूरगुग्गुलुरसाञ्जनसिक्थतुल्यैः
कल्कीकृतैश्च कटुतैलमिदं विपक्वम्।
कच्छूस्रवत्पिड़किकामथवा विशुष्का-
मभ्यञ्जनेन सकृदुद्धरति प्रसह्य॥ १२८॥
इति सिन्दूराद्यं तैलम्।

सिन्दूरं चन्दनं मांसी विड़ङ्गं रजनीद्वयम्।
प्रियङ्गु पद्मकं कुष्ठं मञ्जिष्ठा खदिरं वचा॥ १२९॥
जात्यर्कं त्रिवृता निम्बं करञ्जं विषमेव च।
कृष्णा चित्रकलोध्रञ्च प्रपुन्नाटं च संहरेत्॥ १३०॥

श्लक्ष्णपिष्टानि सर्वाणि योजयेत्तैलमात्रया।
अभ्यङ्गेन प्रयोज्यं तत् वर्णकृत् कुष्ठनाशनम्॥ १३१॥
पामां विचर्चिकां कच्छूं विसर्पं विषमेव च।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् बहून्।
सिन्दूराद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ १३२॥

इति बृहत्सिन्दूराद्यं तैलम्।

निशासुधारग्वधकाकमाचीपत्रैः सदार्व्वी प्रपुनाटवीजैः।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिषूद्वर्त्तनमेतदिष्टम्॥१३३॥
गोशकृत् सिन्धुसंयुक्तं रजनीमाक्षिकेण तु।
घृष्ट्वा प्रलेपने योज्यं पामाकच्छूविनाशनम्॥ १३४॥
सैन्धवं चक्रमर्दन्तु सर्षपं पिप्पलीं तथा।
पेषयेदारनालेन पामाकण्डूविनाशनम्॥ १३५॥
मांसीचन्दनशम्याक करञ्जारिष्टसर्षपम्।
यष्टीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः॥ १३६॥
जीरकस्य पलं पिष्ट्वा सिन्दूरार्द्धपलं तथा।
कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम्।
वृद्धवैद्योपदेशेन पाच्यं तैलं पलाष्टकम्॥ १३७॥
अर्कपत्ररसैः पक्वं रजनीकल्कसंयुतम्।
कटुतैलं हरेत्तूर्णं पामाकच्छूविचर्चिकाम्॥ १३८॥

इति अर्क तैलम्।

त्रिफलारुष्करलोहैः सवल्गुजभृङ्गलाङ्गलीव्योषैः।
सगुडैर्वराहकन्दैः पलिकैरेकत्र संमिश्रैः॥ १३९॥
गुटिकां प्रकल्प्य खादेदेकैकामक्षसंमितां प्रातः।
कुष्ठं दद्रुकिलासं जित्वा वर्षेण निर्वलीपलितः॥ १४०॥
जीवति वर्षशतं वै दीप्तहुताशो युवेव सोत्साहः।

इति त्रिफलाद्या गुटिका।

शशाङ्कलेखा सविड़ङ्गसारा सपिप्पलीका सहुताशमूला।
सायोमला सामलका सतैला सर्वाणि कुष्ठानि निहन्ति लीढ़ा॥१४१

इति शशाङ्कलेखादिलेहः।

त्रैफलस्य तु चूर्णस्य पलानि दशपञ्चकम्।
सप्तचैव विड़ङ्गानां लोहचूर्णं पलद्वयम्॥ १४२॥
शतं भल्लातकानाञ्च पलानि दश वाकुची।
शिलाजतुपलार्द्धन्तु द्वे पले गुग्गुलोस्तथा॥ १४३॥
पलं पुष्करमूलस्य पलार्द्धपलसैन्धवम्।
सचित्रकं समरिचं पिप्पलीविश्वभेषजम्॥ १४४॥
त्वक् पत्रं कुङ्कुमं मुस्तं कार्षिकानुपकल्पयेत्।
यावन्त्येतानि चूर्णानि तावत् खण्डं प्रदापयेत्॥ १४५॥
पलिकान् मोदकान् कृत्वा प्रातरुत्थाय नित्यशः।
एकैकं भक्षयेत् प्राज्ञो यथेष्टं चात्र भोजनम्॥ १४६॥
कुष्ठान्यष्टादशानीह प्लीहगुल्मभगन्दरान्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्॥ १४७॥
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्।
शालाक्यगतरोगांश्च शिरोऽक्षिभ्रूगतांस्तथा॥ १४८॥
कण्ठतालुगतांश्चैव जिह्वायामुपजिह्विकाम्।
ऊर्द्ध्वजत्रुगते रोगे भुक्तस्योपरि दापयेत्॥ १४९॥
शरीरे दापयेत् पूर्वं मौदरे मध्यभोजने।
निर्दिष्टरोगांच्छमयेत् क्रियमाणं रसायनम्॥ १५०॥

इति त्रिफलाद्यो मोदकः।

निम्बगोपारुणा कट्वी त्रायन्ती त्रिफला घनम्।
पटोलावल्गुजानन्ता वचा खदिरचन्दनम्॥ १५१॥
पाठा शुण्ठीशटी भार्गी वासाभूनिम्बवत्सकम्।
श्यामेन्द्रवारुणी मूर्वा विड़ङ्गातिविषानलम्॥ १५२॥

हस्तिकर्णामृताद्रेका पटोलं रजनीद्वयम् ।
कृष्णारग्वधसप्ताह्वं शिरीषं चोच्चटाफलम् ॥ १५३ ॥
मञ्जिष्ठा लाङ्गली रास्ना नक्तमालं पुनर्नवा ।
दन्तीबीजकसारञ्च भृङ्गराजं कुटन्नटम् ॥ १५४ ॥
अक्षोटकञ्च शाखोटं द्विपलांशं पृथक् पृथक् ।
गृह्णीयात्तानि सर्वाणि जलद्रोणे पचेच्छनैः ॥ १५५ ॥
अष्टभागावशेषन्तु कषायमवतारयेत् ।
विधाय वाससा पूतं स्थापयेद्भाजने दृढ़े ॥ १५६ ॥
भल्लातकसहस्राणि छित्वा त्रोण्यर्मणेऽम्भसि ।
पचेदष्टावशेषन्तु कषायमवतारयेत् ॥ १५७ ॥
तच्च वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत् ।
गुड़स्य तु तुलां दत्त्वा लेहवत्तत्पचेच्छनैः ॥ १५८ ॥
भल्लातकसहस्रस्य मज्जानं तत्र निक्षिपेत् ।
त्रिकटु त्रिफला मुस्तं विड़ङ्गं चित्रकं तथा ॥ १५९ ॥
सैन्धवं चन्दनं कुष्ठं दीप्यकञ्च पृथक् पलम् ।
सौगन्ध्यार्थं क्षिपेत्तत्र चातुर्जातं पलं पलम् ॥ १६० ॥
महाभल्लातको ह्येष महादेवेन निर्मितः ।
प्राणिनान्तु हितार्थाय नाशयेच्छीघ्रमेव तु ॥ १६१ ॥
श्वित्रमौदुम्बरं दद्रु मृचजिह्वञ्च काकणम् ।
पुण्डरीकं सचर्माख्यं विस्फोटं रक्तमण्डलम् ॥ १६२ ॥
कण्डूं कापालकुष्ठञ्च पामानञ्च विपादिकाम् ।
वातरक्तमुदावर्त्तं पाण्डुरोगं व्रणान् क्रमीन् ॥ १६३ ॥
अर्शांसि षट्प्रकाराणि कासश्वासौ भगन्दरम् ।
सदाभ्यासेन पलितमामवातं सुदुर्जयम् ॥ १६४ ॥
नियन्त्रणस्तु कथितः सर्वर्त्तुषु च शस्यते ।
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम् ॥ १६५ ॥

अनुपानं प्रयोक्तव्यं छिन्नात्तोयं पयोऽथवा।
भोजनञ्च तथा त्याज्य मुष्णं चाम्लं विशेषतः॥ १६६॥

इति महाभल्लातकम्।

पिचुमर्दफलं पुष्पं त्वक् पत्रं मूलमेव च।
पञ्चैतानि सुसूक्ष्माणि समचूर्णानि कारयेत्॥ १६७॥
अष्टभागावशेषेण खदिरासनवारिणा।
भावयित्वा तु संयोज्य द्रव्याख्येतानि दापयेत्॥ १६८॥
चित्रकोऽथ विड़ङ्गानि व्याधिघातकशर्कराः।
भल्लातकहरीतक्यौ शुण्ठ्यामलकगोक्षुराः॥ १६९॥
चक्रमर्दकवाकूची पिप्पली मरिचं निशा।
लोहचूर्णसमायुक्तं समभागं प्रमाणतः॥ १७०॥
भावयेद् भृङ्गराजेन पुनः शुष्काणि कारयेत्।
निम्बाङ्गं सर्वमेतेषा मेकीकृत्य निधापयेत्॥ १७१॥
विड़ालपदमात्रन्तु सर्पिषा पयसापि वा।
प्रातः प्रातर्निषेवेत खदिरासनवारिणा॥ १७२॥
परिहारो नचात्रास्ति पञ्चनिम्बेऽवतिष्ठति।
मासमात्रप्रयोगेण कुष्ठं हन्ति रसायनम्॥ १७३॥
त्वग्दोषं नीलिकाव्यङ्गं तथैव तिलकालकान्।
अष्टादशविधं कुष्ठं सप्त चैव महाक्षयान्॥
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतं सुखी॥ १७४॥

इति पञ्चनिम्बादिचूर्णम्।

त्रिफलातिविषाकटुका निम्बकलिङ्गवचापटोलमागधिकाः।
रजनीद्वयपद्ममूर्वा विशालाभूनिम्बानि पलांशानि॥ १७५॥
दद्यात्त्रिवृतं त्रिगुणं चूर्णमिदं कुष्ठसुप्तिहरम्॥

इति त्रिफलाद्यं चूर्णम्।

पथ्यां सेन्द्रयवांसकिंशुकफलां सार्कां तथाऽऽवर्त्तिनीम्

व्याधिघ्नेन च योजितां हुतभुजा सारुष्करां वाकुचीम्।
तद्वच्च क्रमिशत्रुणा व्युपगतामेकैकवृद्धामिमां
गोमूत्रेण विमृद्य तां च सकलां कृत्वा वटीं भक्षयेत् १७६
निहन्ति हतनाशिका करजकर्णपादाङ्गुली:
क्षरद्रुधिरपूतिपूय परिजन्तु जग्धव्रणान्।
प्रभिन्नचिरलक्षितस्वरकमाशु कुष्ठं महत्
निहन्ति कुरुते वपुस्तरुणभास्करार्चिः समम् ॥ १७७ ॥

इति पथ्याद्यो वटकः।

निम्बं पटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्य्यादर्द्धपलांशान् पर्पटकं त्रायमाणां च ॥ १७८ ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तक मागधिकास्त्रायमाणा वा ॥ १७९ ॥
मुस्तं वत्सकवीजं कल्कीकृत्यार्द्धकार्षिकान् भागान्।
नव सर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ १८० ॥
कुष्ठं ज्वरमेहार्श ग्रहणीपाण्ड्वामयश्वयथून् हन्ति।
पामाविसर्पिपिड़का कण्डू गण्डव्रणान् सद्यः ॥ १८१ ॥

इति तिक्तषट्कं घृतम्।

निम्बं पटोलं व्याघ्री च गुड़ूची वासकं तथा।
कुर्य्याद्दशपलान् भागानेकैकस्य तु कुट्टितान् ॥ १८२ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥ १८३ ॥
पञ्चतिक्तमिति ख्यातं सर्वकुष्ठविनाशनम्।
अशीतिं वातजान् रोगां श्चत्वारिंशच्च पैत्तिकान् ॥ १८४ ॥
विंशतिं श्लैष्मिकांश्चापि पानादेवापकर्षति।
दुष्टव्रणक्रमीनर्शः पञ्चकासांश्च नाशयेत् ॥ १८५ ॥

इति पञ्चतिक्तकं घृतम्।

निम्बामृतावृषपटोलनिदिग्धिकानां
पक्कं घृतं क्वथितकल्कयुतं यथावत् ।
ख्यातं यथोक्तममृतं भुवि पञ्चतिक्तं
हन्याद्विसर्पविषमज्वरपाण्डुकुष्ठान् ॥ १८६ ॥

इति द्वितीयं पञ्चतिक्तकं घृतम् ।

पटोलवत्सकातिक्त नक्तमालसहामृताः ।
निःक्वाथ्य सलिलद्रोणे पलैर्विंशतिभागिकैः ॥ १८७ ॥
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ।
कल्कैरक्षसमैर्दारुत्रिफलात्र्यूषणाग्निभिः ॥ १८८ ॥
पृथ्वी प्रतिविषा पाठा चव्येन्द्रयवदीप्यकैः ।
मूर्वाक्षारद्वयाजाजी वचाक्रमिहरैर्युतैः ॥ १८९ ॥
कटुकासप्तपर्णाभ्यां पुरस्याष्टपलेन च ।
कुष्ठानि रक्तपित्तञ्च वीसर्पपूतिकुष्ठताम् ॥ १९० ॥
पानात्प्रशमयेदेतद् गुग्गुलुः पञ्चतिक्तकः ।
सिद्धमेतेन विधिना सर्पिः प्रस्थं सगुग्गुलुम् ॥ १९१ ॥
पानाभ्यञ्जननस्येषु तच्चोक्तानाप्नुयाद्गुणान् ।

इति गुग्गुलुपञ्चतिक्तकं घृतम् ।

निम्बामृतापटोलानां कण्टकार्य्या वृषस्य च ।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ १९२ ॥
त्र्यूषणं स्वर्जिकाक्षारं शतपुष्पा च कार्षिका ।
गर्भं समावाप्य पचेद्गुग्गुलोः पञ्चविंशतिः ॥ १९३ ॥
पलञ्च खादयेदेतद्गुग्गुलुः पञ्चतिक्तकम् ।
विधिना हन्ति न चिरात्त्वग्दोषानतिविस्तरान् ॥ १९४ ॥
विवर्णस्वापसङ्कोचं क्लेदवतीः शिरास्तथा ।
गण्डमालार्वुदव्यङ्गनाड़ीक्लष्ठभगन्दरान् ॥ १९५ ॥
विषमज्वरहृद्रोग गरदोषविषक्रमीन् ।

प्रमेहासृग्दरोन्माद शोथगुल्मोदराणि च ॥
कामलापाण्डुरोगांश्च चिप्रमेव व्यपोहति ॥ १९६ ॥

इति गुग्गुलुपञ्चतिक्तकम् ।

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकान् ॥ १९७ ॥
धन्वयवासं चन्दन मुपकुल्यां पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥ १९८ ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान्यष्ट्याह्वं त्रायमाणाञ्च ॥ १९९ ॥
कल्कस्य चतुर्भागं जलमष्टगुणं रसेऽमृतफलानाम् ।
द्विगुणं घृतं प्रदेयं तत्सर्पिः पाययेत्सिद्धम् ॥ २०० ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि ।
विसर्पमम्लपित्तं वातासृक् पाण्डुरोगञ्च ॥ २०१ ॥
विस्फोटकान् सपामानुन्मादान् कामलां ज्वरान् पाण्डून् ।
हृद्रोगगुल्मपिड़कामसृग्दरं गण्डमालां च ॥ २०२ ॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः ।
योगशतैरप्यजितान्महाविकारान् जयेन्महातिक्तम् ॥२०३॥

इति महातिक्तकं घृतम् ।

वासागुडूचीत्रिफलापटोल करञ्जनिम्बासनकृष्णवेत्रम् ।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रकं कुष्ठहरं प्रदिष्टम् ॥२०४॥
विशीर्णकर्णाङ्गुलिहस्तपादः कम्पार्दितो भिन्नगलोऽपि मर्त्यः ।
पौराणिकीं कान्तिमवाप्य जीवेद्व्याधिको वर्षशतं च कुष्ठी॥२०५

इति वज्रकं घृतम् ।

वासागुडूचीत्रिफलापटोलनिदिग्धिकानिम्बकरञ्जतोये ।
वासादिकल्केन तु सिद्धमेतद् घृतं महावज्रकमादिशन्ति॥२०६॥
तन्मासमात्रञ्च निषेव्यमाणो हिताशनो नातिचिरेण कुष्ठी ।

विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेत्स सम्पूर्णतनुः शरीरी॥२०७॥
उदीर्णवेगानपि च प्रमेहांश्चिरप्रवृत्तान्विषमज्वरांश्च।
तदेव सर्पिः सुजनैः प्रयुक्तं विजित्य कुष्ठं बलमादधाति॥२०८॥

इति महावज्रकं घृतम्।

खदिरारग्वधव्योष त्रिवृद्दन्ती सचित्रकम्।
पटोलत्रिफलारिष्ट हरिद्रावाकुचीफलम्॥ २०९॥
कटुकातिविषा पाठा त्रायन्ती धन्वयासकम्।
कुष्ठं करञ्जबीजानि शारिवे द्वे सवत्सके॥ २१०॥
भल्लातकविड़ङ्गानि गुग्गुलोः कल्कसंयुतम्।
पञ्चतिक्तकषायेण सर्पिः सिद्धं पिबेन्नरः॥ २११॥
विषविसर्पविस्फोट कण्ड् कुष्ठव्रणानि च।
दद्रुकिटिभकुष्ठानि गलगण्डविचर्चिकाः॥ २१२॥
पानतः शमयत्याशु वृत्तमिन्द्राशनिर्यथा॥

इति खदिराद्यं घृतम्।

खदिरस्य तु तुलाः पञ्च शिंशिपासनयोस्तुले।
तुलार्द्धं सर्व एवैते करञ्जारिष्टवेतसाः॥ २१३॥
पर्पटं कुटजं चैव वृषः क्रमिहरस्तथा।
हरिद्रे कृतमालञ्च गुडूचीत्रिफलात्रिवृत्॥ २१४॥
सप्तपर्णं च सङ्कुट्य चतुर्द्रोणेन वारिणा।
पक्वा कषायं संगृह्य चतुर्भागावशेषितम्॥ २१५॥
तेन क्वाथेन कुशलो घृतस्यार्द्धाढ़कं पचेत्।
कल्कैः कृतैर्महातिक्तै द्रव्यैरर्द्धपलोन्मितैः॥ २१६॥
महाखदिरमेतद्धि कुष्ठिनामुत्तमं घृतम्।
अष्टादशविधं कुष्ठं पानादेव व्यपोहति॥ २१७॥

इति महाखदिर घृतम्।

मेषशृङ्गीश्वदंष्ट्रा शार्ङ्गष्टागुडूचीसिद्धं कृतम्।

तैलमिदं कुष्ठिनां पानाभ्यङ्गयोर्विदधीत ॥ २१८ ॥

इति मेषशृङ्ग्याद्यं तैलम् ।

सप्तपर्णकरञ्जार्क मालतीकरवीरजम् ।
मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि ॥ २१९ ॥
करञ्जबीजं त्रिफला त्रिकटुरजनीद्वयम् ।
सिद्धार्थकं विडङ्गानि प्रपुन्नाटञ्च संहरेत् ॥ २२० ॥
मूत्रपिष्टैः पचेत्तैल मेभिः कुष्ठविनाशनम् ।
अभ्यङ्गाद्वज्रकं नाम नाड़ीदुष्टव्रणापहम् ॥ २२१ ॥

इति वज्रकं तैलम् ।

एरण्डतार्क्ष्यघननीपकदम्बभार्गी
कम्पिल्लवेल्लफलिनी सुरवारुणीभिः ।
निर्गुण्डीपुष्करसुराह्वयस्वर्णदुग्धी
श्रीवेष्टगुग्गुलुशिलाहरितालमिश्रैः ॥ २२२ ॥
तुल्यैस्त्वगर्कदुग्धैः सिद्धं तैलं महावज्रम् ।
अतिशयितवज्रकगुणं श्वित्रार्शो ग्रन्थिमालाघ्नम् ॥ २२३ ॥

इति महावज्रकं तैलम् ।

चतुर्गुणे तृणरसे कटुतैलं विपाचयेत् ।
मञ्जिष्ठा रङ्गिणा चक्रमर्दारग्वधपल्लवैः ॥ २२४ ॥
एतत्सिद्धाग्निना साध्यं वर्णदं कान्तिदायकम् ।
अष्टादशसु कुष्ठेषु शस्यते गात्रम्रक्षणात् ॥
दद्रुं विचर्चिकां पामां हन्ति सिध्मं विशेषतः ॥ २२५ ॥

इति तृणतैलम् ।

दार्वीविड़ङ्गं हयमारमूलं श्यामा च मूलं कृतमालकस्य ।
कुसुम्भहेमोत्पलकासमर्दशिरीषयष्टीद्वयगन्धसिद्धाः ॥ २२६ ॥
निम्बं वचाचन्दनपद्मकं च कुष्ठं निशासैन्धवचक्रमर्दाः ।
मञ्जिष्ठमांसी सुरदारुलाक्षासिद्धार्थकं वाकुचिबीजमूर्वे ॥२२७॥

शायविसारं सुरसापटोलं यवानिकावीजकरञ्जवीजम्।
द्रव्यैः समस्तैर्विधिना विपक्कं कर्षप्रमाणैः परिकीर्त्तितैश्च ॥२२८
प्रस्थं च तैलं सितसर्षपाणां दत्त्वा रसं षड्गुणकं तृणस्य।
शनैः पचेत्ताम्रमये कटाहे उद्धृत्य तैलं परिपाच्यमानम् ॥ २२९
पीत्वाथवा नस्यविधौ प्रयोज्यं सिध्मं महाददृकिलासकुष्ठम्।
विचर्चिकाव्यङ्गविसर्पपामाः निहन्ति नूनं क्वथितं समस्तम् २३०
विभर्त्ति रूपं कमनीयमन्यै र्वर्णं तथा कान्तिकरं मनुष्यम्।

इति वृहत्तृणतैलम्।

मरिचालमिलाह्वार्क पयोऽश्वारिजटा त्रिवृत्।
शकृद्रसविशालारुङ्निशायुग्दारुचन्दनैः ॥ २३१ ॥
कटुतैलं पचेत्प्रस्थं द्रव्यैर्विषपलान्वितैः।
सगोमूत्रैस्तदभ्यङ्गाद्दद्रुकुष्ठविनाशनम्।
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रशस्यते ॥ २३२ ॥

इति मरिचाद्यं तैलम्।

मरिचं त्रिवृता दन्ती चीरमार्कं शकृद्रसः।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥ २३३ ॥
विशाला करवीरञ्च हरितालं मनःशिला।
चित्रको लाङ्गली लाक्षा विड़ङ्गं चक्रमर्दकम् ॥ २३४ ॥
शिरीषं कुटजो निम्बं सप्तपर्णस्नुहामृताः।
शम्याको नक्तमालोऽब्दः खदिरो वाकुची वचा ॥ २३५ ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत्।
आढ़कं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ॥ २३६ ॥
मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत्।
हन्यात्तैलवरं ह्येतत्प्रलेपात् कौष्ठिकान् व्रणान् ॥ २३७ ॥
पामाविचर्चिकाकण्डू दद्रुविस्फोटकानि च।
वलयः पलितं छाया नीलीव्यङ्गं तथैव च ॥ २३८ ॥

५२

अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते।
प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते।
जरामप्यजरां प्राप्य यातः स्तनौ न नम्रताम् ॥ २३९ ॥

इति वृहन्मरिचाद्यं तैलम्।

मरिचं पिप्पलीकुष्ठं मर्कचीरं शकृद्रसः।
देवदारु हरिद्रे द्वे मांसीलोहितचन्दनम् ॥ २४० ॥
विशाला करवीरञ्च हरितालं मनःशिला।
एतैरर्द्धपलैर्भागैः गृहीतैः श्लक्ष्णपिष्टितैः ॥ २४१ ॥
कटुतैलस्य च प्रस्थं गोमूत्रं स्याच्चतुर्गुणम्।
मृद्भाण्डे लोहभाण्डे वा शनैर्मृद्वग्निना पचेत् ॥ २४२ ॥
तत्तैलं मधुपर्णीभ्यां निषसमवतारयेत्।
एतेनैवोपशाम्यन्ति कोमला त्वक् प्रजायते ॥ २४३ ॥
प्रश्वितानि च श्वित्राणि तैलेनानेन म्रक्षयेत्।
अपि त्रिवार्षिकं श्वित्रं शमं नयति तत्क्षणात् ॥ २४४ ॥
बलीवर्दस्तुरङ्गो वा गजो वा व्याधिपीड़ितः।
त्रिभिर्वस्तिभिरत्यर्थं भवेन्मारुतविक्रमः ॥ २४५ ॥
यासाञ्च दीयते नस्यं स्त्रीणां प्रथमयौवने।
जरासमयमासाद्य स्तना नो यान्ति विक्रमम् ॥ २४६ ॥
पुरुषस्यापि यस्येदं दीयते नस्यकर्मणि।
योजनानि व्रजत्यष्टौ श्रमं नाप्नोत्यसौ पथि ॥ २४७ ॥
अष्टादशानां कुष्ठानां तैलमेतद्विनाशनम्।

इति मरिचाद्यं तैलम्।

गुडूची दारु कुष्ठञ्च शृङ्गवेरं पुनर्नवा।
रास्ना बला मातुलुङ्गं त्रिपलांशं पृथक् पृथक् ॥ २४८ ॥
जलद्रोणे समावाप्य पादशेषं समुद्धरेत्।
विपाच्य तद्रसं गृह्य कल्कानेतान् प्रदापयेत् ॥ २४९ ॥

मरिचं त्रिफला दन्ती चार्कचीरं शकृद्रसः।
दारुकुष्ठं हरिद्रे द्वे लोमसी रक्तचन्दनम्॥ २५० ॥
एतेषां पलिकान् भागान् विषस्यार्द्धपलं भवेत्।
गोमूत्रे पेषितं सर्वं सुसूक्ष्मन्तु समाचरेत्॥ २५१ ॥
कटुतैलपलं त्रिंशच्छनैर्मृद्वग्निना पचेत्।
एतन्नस्यं प्रदातव्यं सर्वरोगापहं शुभम्॥ २५२ ॥
दन्तरोगेषु सर्वेषु शिरोरोगे गलग्रहे।
पूतिनासे पूतिमुखे तथैवार्द्धावभेदके॥
गलगण्डे मुखव्यङ्गे तथैव कर्कशत्वचि॥ २५३ ॥
प्रथमे वयसि स्त्रीणां नस्यं देयं यथाविधि।
न पतन्ति स्तनास्तासां सौकुमार्य्यञ्च जायते॥ २५४ ॥
पुरुषस्याथवा नस्यं दीयते यस्य कस्यचित्।
स याति योजनान्यष्टौ न श्रमं मन्यते क्वचित्॥ २५५ ॥
दद्रुकिटिभकुष्ठानि मण्डलानि विचर्चिकाः।
स्रचणादेव शाम्यन्ति ये च शाखाश्रया गदाः॥ २५६ ॥
वातभग्नस्तुरङ्गो वा वृषो वा वायुपीड़ितः।
वातामयाभिभूतो यः पुरुषो मन्दगोऽपि वा॥
बलवेगो भवेत्तेषां वस्तिभिश्च त्रिभिस्त्रिभिः॥ २५७ ॥
शीर्णकर्णाङ्गुलीघ्राणः पिबेदग्निबलेन च।
न विकारं तथा तस्य भवेद्देहः पुनर्नवः॥ २५८ ॥

इति महामरिचाद्यं तैलम्।

नक्तमालं हरिद्रे द्वे चार्कं तगरमेव च
करवीरं वचा कुष्ठ मास्फोतं रक्तचन्दनम्॥ २५९ ॥
मालती सप्तपर्णञ्च मञ्जिष्ठा सिन्दुवारकम्।
एषामर्धपलान् भागान् विषस्यापि पलं भवेत्॥ २६० ॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत्॥ २६१ ॥

श्वित्रविस्फोटकिटिभ कीटलूताविचर्चिकाः ।
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः ॥ २६२ ॥
विषतैलमिदं नाम सर्वव्रणविशोधनम् ॥

इति विषतैलम् ।

सोमराजिहरिद्रे द्वे सर्षपारग्वधं गदम् ।
करञ्जैडगजाबीजगर्भं दत्त्वा विपाचयेत् ॥ २६३ ॥
तैलं सर्षपसम्भूतं नाड़ीदुष्टव्रणापहम् ।
अनेनाशु प्रशाम्यन्ति कुष्ठान्यष्टादशैव तु ॥ २६४ ॥
नीलिकापिड़काव्यङ्गं गम्भीरं वातशोणितम् ।
कण्डूकच्छूप्रशमनं कच्छूपामाविनाशनम् ॥ २६५ ॥

इति सोमराजीतैलम् ।

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे ।
चर्मदलसिध्मपामाविस्फोट किटिभजित्तैलम् ॥ २६६ ॥

इति श्वेतकरवीराद्यं तैलम् ।

गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वक् लवणैः समूत्रैः ।
तैलं पचेन्मण्डलदद्रुकुष्ठदुष्टव्रणादिकिटिभापहारि ॥ २६७ ॥

इति गण्डीराद्यं तैलम् ।

स्नुहीक्षीरं विड़ङ्गानि चार्कक्षीरं च लाङ्गली ।
बलापलाशबीजानि कोशातक्योऽथ पिप्पली ॥ २६८ ॥
सिद्धं तैलन्तु गोमूत्रे कुष्ठानां नाशनं परम् ।
पामापहरणं प्रोक्तं पूयघ्नं व्रणरोपणम् ॥ २६९ ॥

इति स्नुहाद्यं तैलम् ।

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य ।
प्रक्षेप्याः पृथक् पलिकाः सर्वास्तु चूर्णितास्तस्मिन् ॥२७०॥
त्रिफलात्रिकटुकरजनी मुस्तारुष्करविड़ङ्गवाकुचिकाः ।
सुवर्णत्वक् छिन्नरुहा धातकी मधुशतपलं मासम् ॥ २७१ ॥

विदधीत धान्यमध्ये प्रातः प्रातः पिबेत्ततो युक्त्या।
मासेन महाकुष्ठं हन्त्यनल्पञ्च पक्षेणार्शः ॥ २७२ ॥
श्वासभगन्दरकासकिलासप्रमेहशोफांश्च।
स भवति कनकवर्णः पीत्वारिष्टं कनकविन्दुञ्च ॥ २७३ ॥

इति कनकविन्दुनामारिष्टः।

पक्षात्पक्षाच्छर्दनान्यभ्युपेया न्मासान्मासाच्छोधनं चाप्यधस्तात्।
त्र्यहात्त्र्यहान्नस्यनिष्ठीवनञ्च मासेष्वसृङ्मोचयेत् षट्सु षट्सु २७४
शालिषष्टिकगोधूम यवमुद्गादयो हिताः।
पुराणाः कुष्ठिनां तिक्तं शाकं जाङ्गलसंयुतम् ॥ २७५ ॥
नीचरोमनखो यस्तु नित्यमौषधतत्परः।
योषिन्मांससुरावर्जी कुष्ठी कुष्ठादपोहति ॥ २७६ ॥

इति कुष्ठनिदानचिकित्सा।

अथ श्वित्रचिकित्सामाह।

श्वित्रिणो हृतदोषस्य हृतरक्तस्य वाऽसकृत्।
खदिराम्बुयवान्नानां तप्तस्य मलयूरसः।
सगुड़ः शस्यते पाने यवागूमण्डभोजिनः ॥ २७७ ॥
अशुद्धे तत्र ये स्फोटा जायन्ते तांश्च कण्टकैः।
भित्वा लेपैः प्रदेहैस्तान् क्षाराग्निभ्यां प्रसाधयेत् ॥ २७८ ॥
खदिरामलककषायं वाकुचीवीजान्वितं पिबेन्नित्यम्।
शङ्खेन्दुकुन्दधवलं श्वित्रं हन्तीह तच्छीघ्रम् ॥ २७९ ॥
कुड़वमवल्गुजवीजं हरितालचतुर्थभागसंमिश्रम्।
मनःशिलातोलकार्द्धं गुञ्जाफलमग्निमूलञ्च ॥
गोमूत्रेण च पिष्टं सवर्णकरणं परं श्वित्रे ॥ २८० ॥
दग्ध्वा च गोः शकृत् क्षारं तन्मूत्रेणैव गालितम्।
प्रक्षिप्तं बर्हिपित्ताक्तं सद्यः सावर्ण्यमाप्नुयात् ॥ २८१ ॥
श्वेतकुष्ठं व्रजत्यस्तं पक्षार्द्धेनाधिकेन वा।

गिरिकर्ण्यास्तु कृष्णायाः मूलेन परिलेपितम् ॥ २८२ ॥
कुनटीशिखिपित्तेन भस्मवातालकोद्भवम् ।
गजदर्पेण मालत्याः चारो वा श्वित्रनाशनः ॥ २८३ ॥
स्नुगर्कजातीपूतीकसुवर्णहरिपल्लवाः ।
मूत्रपिष्टाः प्रलेपेन श्वित्रदद्रुव्रणच्छिदः ॥ २८४ ॥
शुनोऽस्थिकदलीभस्म काकस्य विट् प्रलेपतः ।
श्वित्रमुग्रं निहन्त्येतत् चत्वारिंशद्दिनैः किल ॥ २८५ ॥
समनःशिलाविड़ङ्ग' कासीसरोचना कनकपुष्पी च ।
श्वित्राणां प्रशमनार्थं ससैन्धवं लेपनं दद्यात् ॥ २८६ ॥
अयोरजः कृष्णतिलाञ्जनानि सवल्गुजान्यामलकानि दग्ध्वा ।
पिष्टानि भृङ्गस्य सकृद्रसेन हन्यात्किलासं परिघृष्य लेपात् ॥२८७
दासीकुरण्टस्य सितस्य पुष्पमादित्यवल्लग्ञ्जनवह्निनीलौ ।
पुष्पाणि तेषां स्वरसं प्रपीड्य तल्लोहचूर्णाञ्जनसंप्रयुक्तम् ॥२८८॥
विघृष्य पूर्वं सकलान् व्रणांस्तु
ततः प्रयोगेण पुनः प्रलिम्पेत् ।
सितानि रोमाणि निहन्ति शीघ्रं
कृष्णानि कुर्य्यादपि योगकोऽयम् ॥ २८९ ॥
कपोतवङ्कालशुनस्य शीघ्रं ससैन्धवं चित्रकमूलमिश्रम् ।
ततश्च तेषां स्वरसेन मिश्र' व्रणप्रलेपाज्जननं हि रोमणाम् ॥२९०
कटुकालाबुसव्योष हिंस्रार्कहयमारकाः ।
कुष्ठं वल्गुजभल्लात स्नुहीमूलानि सर्षपाः ॥ २९१ ॥
विल्वकारिष्टपीलूनां पत्राण्यारग्वधस्य च ।
त्रिफलामुस्तजीमूत विशालामूत्रपेषितः ॥ २९२ ॥
गोगजाश्वाजमूत्राणा माढ़क' त्वाढ़क' पचेत् ।
स्नुह्यर्कक्षारकुड़वं तैलं युक्त्या प्रदापयेत् ॥ २९३ ॥
पचेद्दार्वीप्रलेपन्तु घृष्ट्वा कुष्ठानि लेपयेत् ।

श्वित्राणि हि प्रलिप्तानि यान्ति नाशमशेषतः॥ २९४॥

इति कटुकादि प्रलेपः।

खदिरस्य पलान्यष्टौ सोमराज्याः पलद्वयम्।
जलाढ़कद्वये साध्यं यावत्पादावशेषितम्॥ २९५॥
क्वाथ्यमानञ्च मृद्वग्नौ घृतप्रस्थं विपाचयेत्।
चतुष्पलं सोमराज्याः खदिरस्य पलं भिषक्॥ २९६॥
पटोलमूलं त्रिफलां त्रायमाणां दुरालभाम्।
कल्कार्थं योजयेदेतान् कार्षिकान् श्लक्ष्णपेषितान्॥ २९७॥
पलद्वयं कौशिकस्य शुद्धस्यात्र प्रदापयेत्।
सिद्धं सर्पिरिदं नश्येत् श्वित्रमभ्र इवानलम्॥ २९८॥
अष्टादशानां कुष्ठानां परमं भेषजं मतम्।
आमवातापतन्त्राणां पाण्डुप्रदरशोषिणाम्॥ २९९॥
किलासघ्नं च कण्डूघ्नं दीपनं पाचनं तथा।
सोमराजीघृतं नाम निर्मितं ब्रह्मणा पुरा॥ ३००॥

इति सोमराजीघृतम्।

त्रिफलाढ़कं तथा प्रस्थावऽयसो रजसो मतौ।
वायसीकाकमाचीभ्यां द्वे तुले शङ्खिनी तुला॥ ३०१॥
द्विद्रोणेऽपां पचेदेतत् पादभागावशेषितम्।
घृतप्रस्थं तु विपचेद् गर्भे चैतत्समाचरेत्॥ ३०२॥
वरुणं वत्सकफलं त्र्यूषणं देवदारु च।
निदिग्धिकां भृङ्गराजं पारावतपदीमपि॥ ३०३॥
नीलकं नाम विख्यातं घृतं कुष्ठविनाशनम्।
श्वित्राणि रञ्जयेच्चैतत् पानाभ्यञ्जनयोजितम्॥ ३०४॥
पामाविचर्चिकासिध्म किटभानि च नाशयेत्॥

इति नीलीघृतम्।

आरग्वधं वायसी च सुरसा मदयन्तिका।

एकैकस्य तुला देया त्रैफलं चाढ़कद्वयम् ॥ ३०५ ॥
दन्ती दारु हरिद्रा च कुड़वं वरुणत्वचम् ।
चित्रकं चार्कमूलञ्च काकमाची निदिग्धिका ॥ ३०६ ॥
एषां दशपलान् भागां श्चतुर्द्रोणेऽम्भसः पचेत् ।
अष्टभागावशिष्टन्तु पूतं पुनरधिश्रयेत् ॥ ३०७ ॥
दधिसर्पिश्च दुग्धं च गोमूत्रं च शकृद्रसम् ।
आढ़काढ़कमेतेषां गर्भे चैनं समावपेत् ॥ ३०८ ॥
अवल्गुजं सकटुकं नक्तमालफलानि च ।
त्रिफला चित्रको दन्ती मुस्तं कटुकरोहिणी ॥ ३०९ ॥
पिचुमर्दस्य शिग्रोश्च सेङ्गुदस्य फलानि च ।
किराततिक्तकं श्यामा नीलिनी नीलमुत्पलम् ॥ ३१० ॥
एतैः सिद्धं घृतं स्राव्यं पाययेत् श्वित्ररोगिणाम् ।
महानीलमिति ख्यात मेतत् श्वित्रहरं परम् ॥ ३११ ॥
भगन्दरं तथार्शांसि क्रमीनपि विनाशयेत् ।
अष्टादशानां कुष्ठानां सर्पिरेतच्चिकित्सितम् ॥ ३१२ ॥
अथर्वविहिते दीप्ते ब्रह्मदण्ड इवाशनिः ।
विशेषतश्च श्वित्राणि रञ्जयेच्च भिनत्ति च ।
प्रयोगतः सेव्यमानं पानेनाभ्यञ्जनेन च ॥ ३१३ ॥

इति महानीलीघृतम् ।

मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गाच्छ्वित्रनाशनम् ॥ ३१४ ॥

इति ज्योतिष्मतीतैलम् ।

कुष्ठाधिकारनिर्दिष्टं विषतैलमिहोच्यते ॥

इति वङ्गसेनसङ्कलितः कुष्ठश्वित्रनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ उदर्दशीतपित्तकोठनिदानमाह ।

शीतमारुतसंस्पर्शात् प्रदुष्टौ कफमारुतौ ।
पित्तेन सह सम्भूय वहिरन्तर्विसर्पतः ॥ १ ॥
पिपासारुचिहृल्लास देहसादाङ्गगौरवम् ।
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥ २ ॥
वरटीदष्टसंस्थानः शोफः सञ्जायते वहिः ।
सकण्डू तोदबहुल छर्दिज्वरविदाहवान् ॥ ३ ॥
उदर्दमिति तं विद्याच्छीतपित्तमथापरे ।
वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥ ४ ॥
सोत्सङ्गैश्च सरोगैश्च कण्डूमद्भिश्च मण्डलैः ।
शैशिरः कफजो व्याधिरुदर्दः परिकीर्त्तितः ॥ ५ ॥
असम्यग्वमनोदीर्ण पित्तश्लेष्मान्नविग्रहैः ।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥ ६ ॥

अथ चिकित्सामाह ।

अत्राशु वमनं कार्य्यं पटोलारिष्टवासकैः ।
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ॥ ७ ॥
त्रिफलाक्षौद्रसंयुक्तं पिबेद्वा नव कार्षिकम् ।
विसर्पोक्तममृतादि भिषगत्रापि योजयेत् ॥ ८ ॥
सितां त्रिकटुसंयुक्तां गुड़मामलकैः सह ।
यवानीं पाययेच्चापि सव्योषक्षारसंयुताम् ॥ ९ ॥
रास्नादेवाह्वत्रिफलां साश्वगन्धां शतावरीम् ।
यवानीं हिङ्गुसंयुक्ता मुदर्दविनिवृत्तये ॥ १० ॥
प्रियालं तिल्वकं खदिरः खदिरासनः ।
सप्तपर्णैरिमेदा च गणोऽयं स्यादुदर्दहा ॥ ११ ॥

सगुडं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ्नरः।
तस्य नश्यति सप्ताहा दुदर्दः सर्व्वदेहजः॥ १२॥
सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सदा।
कटुतैलेन संमिश्र मेतदुद्वर्त्तनं परम्॥ १३॥

इति सिद्धार्थकाद्युद्वर्त्तनम्।

आर्द्रकस्वरसः पेयः पुराणगुड़संयुतः।
शीतपित्तापहः श्रेष्ठो वह्निमान्द्यविनाशनः॥ १४॥
चीरखिन्नानि काश्मर्य्याः फलान्यश्नन् हिताशनः।
क्रमिदद्रुहराख्येव शीतपित्ते प्रयोजयेत्॥ १५॥
घृतं पीत्वा महातिक्तं शोणितं मोचयेत् तथा।
स्निग्धखिन्नस्य संशुद्धि मादौ कोठे समाचरेत्॥ १६॥
सर्व्वतः शुद्धदेहस्य कुष्ठघ्नीं कारयेत् क्रियाम्।
कुष्ठोक्ताञ्च क्रियां कुर्य्या दम्लपित्तघ्नमेव च॥
उदर्दोक्तां क्रियां वापि कोठरोगे समासतः॥ १७॥
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात्।
विस्फोटकण्डूक्रमिशीतपित्तमुदर्दकोठौ च कफञ्च हन्यात्॥१८
कुष्ठं हरिद्रासुरसापटोलं निम्बाश्वगन्धासुरदारुशिग्रु।
ससर्षपं तुम्बुरुधान्यचव्यमिमानि चूर्णानि समानि कुर्य्यात् १९
तत्तक्रपिष्टं प्रथमं शरीरं तैलाक्तमुद्वर्त्तयुतं यतेत।
ततोऽस्य कण्डूपिड़का सशोषकुष्ठानि शोथाश्च शमं व्रजन्ति २०
तैलस्योद्वर्त्तने योगे योज्योराज्यादिको गणः॥ २१॥

इति श्रीवङ्गसेनसङ्कलित उदर्दशीतपित्तकोठनिदानचिकित्सा-
धिकारः समाप्तः।

---

## अथ अम्लपित्तनिदानमाह ।

विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् ।
पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥ १ ॥

अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः ।
हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्बुधः ॥ २ ॥

तृड्दाहमूर्च्छाभ्रममोहकारि प्रयात्यधो वा विविधप्रकारम् ।
हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित् ॥ ३ ॥

वान्तं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम् ।
मांसोदकाभं त्वतिपिच्छिलाभं श्लेष्मानुजातं विविधं रसेन ॥४॥

भुक्ते विदग्धेऽप्यथवाप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित् ।
उद्गारमेवंविधमेव कण्ठहृत्कुक्षिदाहं शिरसो रुजञ्च ॥ ५ ॥

करचरणदाहमौष्ण्यं महतीमरुचीं ज्वरञ्च कफपित्तम् ।
जनयति कण्डूमण्डलपिड़काशतनिचितगात्ररोगचयम् ॥६ ॥

रोगोऽयमम्लपित्ताख्यो यत्नात् संसाध्यते नवः ।
चिरोत्थितो भवेद्याप्यः कृच्छ्रसाध्यः स कस्यचित् ॥ ७ ॥

सानिलं सानिलकफं सकफं तच्च लक्षयेत् ।
दोषलिङ्गेन मतिमान् भिषङ्मोहकरं हि तत् ॥ ८ ॥

कम्पप्रलापमूर्च्छाचिमिचिमिगात्रावसादशूलानि ।
तमसो दर्शनविभ्रमहर्षणमोहाश्च वातयुते ॥ ९ ॥

कफनिष्ठीवनगौरवजड़तारुचिशीतसादवमिलेपाः ।
दहनबलसादकण्डूनिंद्राचिह्नं कफानुगते ॥ १० ॥

उभयमिदमेव चिह्नं मारुतकफसम्भवे भवत्यम्ले ॥ ११ ॥

तिक्ताम्लकटुकोद्गारवमिहृत्कण्ठदाहकृत् ।
तमो मूर्च्छारुचिच्छर्दिरालस्यञ्च शिरोरुजा ॥
प्रसेको मुखमाधुर्य्यं श्लेष्मपित्तस्य लक्षणम् ॥ १२ ॥

अथ चिकित्सामाह ।

अम्लपित्ते तु वमनं पटोलारिष्टवासकैः ।
कारयेन्मदनक्षौद्र सिन्धुयुक्तं ततो भिषक् ॥ १३ ॥
विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलद्रवैः ॥ १४ ॥
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम् ।
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥ १५ ॥
तिक्तभूयिष्ठमाहारं पानं वापि प्रयोजयेत् ।
यवगोधूमविकृती स्तीक्ष्णसंस्कारवर्जिताः ।
यथास्वं लाजशक्तून्वा सितामधुयुतान् पिबेत् ॥ १६ ॥
पूतीकरञ्जशुङ्गानि घृतभृष्टानि रोगिणे ।
निवेद्य भोजने कार्य्यं वमनं कोष्णवारिणा ॥ १७ ॥
अलसं मूर्च्छितं तस्य सुखं निर्ह्रियते यतः ।
अरोचकस्य वैरस्य व्रणकण्ठोपलेपनात् ॥ १८ ॥
द्व्यहादत्रैव वमनं प्रकुर्य्याद्योगविन्नरः ।
धारयेत् कवलानिष्टान् पित्तहानतिरोचकान् ।
भृष्टान् कलायानथवा मसूरान् वा प्रकल्पयेत् ॥ १९ ॥
ऊर्द्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥ २० ॥
वमने शोधने जाते यदि दोषो न शाम्यति ।
तदा वै शिशिरा लेपा असृक्स्रावश्च युक्तितः ॥ २१ ॥
कम्पप्रलापमूर्च्छाङ्गदाहतृष्णाम्लपित्तिनः ।
वातप्रकोपं तृष्णाश्च रक्षन् शोधनमाचरेत् ॥ २२ ॥
चित्रकैरण्डमूलानि यवाश्च सयवासकाः ।
जलेन क्वथितं शीतं कोष्ठदाहरुजापहम् ॥ २३ ॥
अभयापिप्पलीद्राक्षा सिताधन्वयवासकम् ।
मधुना कण्ठदाहघ्न मम्लपित्तहरं परम् ॥ २४ ॥
निस्तुषयवधात्री च त्रिगन्धं क्वथितं पिबेत् ।

क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥ २५ ॥
छिन्नोद्भवा निम्बपटोलपत्रं पलत्रिकं सुक्वथितं सुशीतम्।
क्षौद्रान्वितं पित्तमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम् ॥२६॥
अमृतानागरमुस्त किराततसमभागसाधितं यत्तोयम्।
दारुणं तदम्लपित्तं जयत्यवश्यं नृणां सद्यः ॥ २७ ॥
पटोलशुण्ठीयवपिप्पलीनां क्वाथं पिबेन्माक्षिकसम्प्रयुक्तम्।
तदम्लपित्तं विनिहन्ति शूलमग्नेश्च वृद्धिं भुजयोर्बलञ्च ॥ २८ ॥
वासामृतापर्पटक निम्बभूनिम्बमार्कवैः।
त्रिफला कुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ २९ ॥

इति दशाङ्गक्वाथः।

हिङ्गु च कनकफलानि चिञ्चात्वचा घृतश्च पुटदग्धम्।
शमयति तदम्लपित्त मम्लभुजो यथोत्तरं द्विगुणम् ॥३०॥
एलापटोलघनचन्दनधान्यधात्री-
वांशीवराङ्गदलनागकणाभयाभिः।
लेहः सिताज्यमधुभिः सितया च पिण्डी
सम्यक् कृता शुभदिनेन सुमन्त्रपूता ॥ ३१ ॥
हन्त्यम्लपित्तवमनारुचिदाहमोह-
खालित्यमेहतिमिरव्रणशुक्रदोषान्।
भुक्त्वा नरः सततमामलकीरसेन
वृद्धोऽप्यनेन तु भवेत्तरुणो रिरंसुः ॥ ३२ ॥
यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्च ह्यरुचिञ्च वमिन्तथा ॥ ३३ ॥
वासानिम्बपटोलत्रिफलासनयासयोजितो जयति।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ ३४ ॥

इति वासादिगुग्गुलुः।

त्रिकटुकसुकण्टकारीपर्पटकारिष्टकुटजवीजानाम्।

सौराष्ट्रिकापटोलत्वायन्तीदारुमूर्वाणाम् ॥ ३५ ॥
तिक्ताम्टणालमलयज कलिङ्गकैलाकिराततिक्तानाम् ।
सवचातिविषाकेशरदीप्यकमधुशिग्रुवीजानाम् ॥ ३६ ॥
चूर्णं पञ्चष्टमिदं पीतं शिशिरेण वारिणा प्रातः ।
लीढ़ं चौद्रेण चाम्लपित्तं प्रायेणाधोगतं हन्ति ॥ ३७ ॥
अधोगतेऽम्लपित्ते तु पैत्तिकीं ग्रहणीविधिम् ।
पाचनीं दीपनीञ्चैव वीच्य वीच्यावचारयेत् ॥ ३८ ॥
ज्वलन्तमिव चात्मानं मन्यते योऽम्लपित्तवान् ।
तस्य संशोधनं पथ्यं न शान्तिः शोधनं विना ॥ ३९ ॥
अचिरोत्थे चिरोत्थे च वमनं तत्र कारयेत् ।
सवाते सविबन्धेऽस्मिन् हिता कंसहरीतकी ॥ ४० ॥
चीरं तथा गुड़श्चैव सर्पिर्लेह्योऽथवा पुनः ।
अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः ॥ ४१ ॥
गुड़कूष्माण्डकं चैव तथा खण्डामलक्यपि ।
गुड़चीरकणा सिद्धं सर्पिश्चापि योजयेत् ॥ ४२ ॥
रक्तपित्तेऽपि यच्चोक्तं यच्छूले चापि पैत्तिके ।
तत्सर्वं कारयेद्धीमान् अम्लपित्ते विशेषतः ॥ ४३ ॥
पिप्पलीक्काथकल्कानां घृतं सिद्धं मधुप्लुतम् ।
पिबेत्प्रातः समुत्थाय ह्यम्लपित्तनिवृत्तये ॥ ४४ ।

इति पिप्पली घृतम् ।

शतावरीमूलकल्कं घृतप्रस्थं पयः समम् ।
पचेन्मृद्वग्निना सम्यक् चीरं दत्त्वा चतुर्गुणम् ॥ ४५ ॥
नाशयेदम्लपित्तञ्च वातपित्तोत्थितं ध्रुवम् ।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥ ४६ ॥

इति शतावरीघृतम् ।

तिक्तकं षट्पलं सर्पिः पञ्चतिक्तमथापि वा ॥

गुग्गुलुतिक्तकं वापि ह्यम्लपित्ते प्रयोजयेत्॥ ४७॥
धात्रीशतावरीक्षौद्रं तुल्यं शर्करया समम्।
लिह्यात्तदनुपानेन पयसाथ घृतेन च॥ ४८॥
अम्लपित्तं निहन्त्याशु बलिपलितनाशनम्।
चक्षुष्यमायुष्यतमं चतुःसममुदाहृतम्॥ ४९॥

इति चतुःसमचूर्णम्।

त्रिकटु त्रिफला मुस्तं विड़ङ्गं चित्रकं तथा।
एषां संचूर्णितानान्तु प्रत्येकन्तु पलं भवेत्॥ ५०॥
कर्षद्वयं गन्धकस्य तदर्द्धं पारदस्य च।
विड़ालपदमात्रन्तु लिह्यात्तन्मधुसर्पिषा॥ ५१॥
शीतोदकं चानुपिबेत् क्रमाद्गव्यं पयस्तथा।
अम्लपित्तमग्निमान्द्यं परिणामरुजं तथा॥ ५२॥
कामलां पाण्डुरोगञ्च हन्यादेतद्रसामृतम्।

इति रसामृतं चूर्णम्।

कुड़वं नारिकेलस्य जले मृद्वग्निना पचेत्।
नारिकेलजलाभावे गव्ये पयसि तत्पिबेत्॥ ५३॥
धान्यकं पिप्पली मुस्तं चातुर्जातं विचूर्णितम्।
प्रत्येकं टङ्कमात्रन्तु शीते तस्मिन् विनिःक्षिपेत्॥ ५४॥
पलमात्रस्तदर्द्धोऽपि भक्षितः प्रत्यहं नरैः।
नारिकेलकखण्डोऽयं पुंस्त्वनिद्राबलप्रदः॥ ५५॥
अम्लपित्तं रक्तपित्तं शूलञ्च परिणामजम्।
क्षयं क्षपयति क्षिप्रं शुष्कं दावानलो यथा॥ ५६॥

इति नारिकेलखण्डः।

प्रस्थन्तु नारिकेलस्य सूक्ष्मं दृषदि पेषितम्।
निष्कुलीकृतकूष्माण्ड खण्डानामर्द्धमाढ़कम्॥ ५७॥
तद्द्वयं भर्ज्जयेद्गव्ये घृते तु कुड़वोन्मिते।

ततस्तत्र क्षिपेच्छुद्धं गोदुग्धं चाढ़कोन्मितम् ॥ ५८ ॥
तत्रैव निक्षिपेद्भव्यां सितां प्रस्थद्वयोन्मिताम् ।
पचेत्सर्वाणि चैकत्र मृदुना वह्निना भिषक् ॥ ५९ ॥
सुपक्वे शीतले तत्र चूर्णीकृत्य विनिक्षिपेत् ।
सूक्ष्मैला धान्यकं धात्री पर्पटं जलदं जलम् ॥ ६० ॥
उशीरं चन्दनं द्राक्षा शृङ्गाटं च कसेरुकम् ।
त्वक् पत्रकञ्च कर्पूरं कर्षयुग्मं पृथक् पृथक् ॥ ६१ ॥
सर्वं संमिश्रयेद्रक्षेद्भाजने मृण्मये नवे ।
पलमात्रमिदं प्रात र्भक्षयेद्वा यथानलम् ॥ ६२ ॥
एतन्निषेवितं हन्ति रोगानेतान्न संशयः ।
अम्लपित्तं ज्वरं पित्तं रक्तपित्तमरोचकम् ॥ ६३ ॥
वातरक्तं तृषां दाहं पाण्डुरोगं च कामलाम् ।
क्षयं क्षपयति क्षिप्रं शूलञ्च परिणामजम् ॥ ६४ ॥
नारिकेलस्य खण्डोऽयं मश्विभ्यां भाषितः पुरा ।
वर्णदो बृंहणो वृष्यः पुंस्त्वनिद्रा बलप्रदः ॥ ६५ ॥

इति वृहन्नारिकेलखण्डः ।

नारिकेलफलप्रस्थं पिष्टं घृतविभर्जितम् ।
प्रस्थं प्रस्थं समादाय शुण्ठ्याश्चूर्णञ्च तद् युतम् ॥ ६६ ॥
द्विप्रस्थं नारिकेलाम्बु तत्समं क्षीरमेव च ।
धात्र्याश्च स्वरसप्रस्थं खण्डस्यापि तुलां न्यसेत् ॥ ६७ ॥
एकीकृत्य पचेत्सर्वं शनैर्मृद्वग्निना भिषक् ।
सिद्धशीते प्रदातव्यं चूर्णं तत्र सुकण्डितम् ॥ ६८ ॥
त्रिकटुः सचतुर्जातः प्रत्येकं तु पलोन्मितम् ।
धात्रीजीरकयुग्मञ्च धान्यकं ग्रन्थिपर्णकम् ॥ ६९ ॥
तुगापयोदचूर्णानि त्रिकर्षञ्च पृथक् पृथक् ।
मधुनः पलानि चत्वारि स्निग्धे भाण्डे निधापयेत् ॥ ७० ॥

कर्षप्रमाणं कर्त्तव्यं रसं यूषं पिबेदनु।
अम्लपित्तं निहन्त्याशु शूलं चैव सुदुस्तरम्॥ ७१ ॥
परिणामभवं शूलं पृष्ठशूलं च नाशयेत्।
अन्नोपरि भवं शूलं हृच्छूलं च सुदुस्तरम्॥ ७२ ॥
सर्वशूलहरं श्रेष्ठं वायोर्वेगं यथागिरिः।
कण्ठदाहं च हृद्दाहं छर्दिं तृष्णां सुदारुणम्॥ ७३ ॥
कासं पञ्चविधं चैव रक्तपित्तं सुदारुणम्।
पीनसञ्च प्रतिश्यायं यक्ष्माणं विनिहन्ति च॥ ७४ ॥
परं वाजीकरं श्रेष्ठं बलपुष्टिविवर्द्धनम्।
अग्निसन्दीपनकरं रसायनमिदं शुभम्॥ ७५ ॥
मूत्ररोगेषु सर्वेषु वातरोगेषु शस्यते।
गुदजानि च सर्वाणि तांस्तान् रोगान्निहन्ति च॥ ७६ ॥
रोगानीकविनाशाय लोकानुग्रहहेतुना।
अश्विभ्यां निर्मितं श्रेष्ठममृताख्यं रसायनम्॥ ७७ ॥

इति नारिकेलामृतम्।

त्रिकटु त्रिफला मुस्त बीजं चैव विड़ङ्गजम्।
एलापत्रं च सर्वाणि समभागानि कारयेत्॥ ७८ ॥
यावन्त्येतानि सर्वाणि लवङ्गं तत्समं भवेत्।
सर्वचूर्णाद्द्विगुणितं त्रिवृच्चूर्णं च कारयेत्॥ ७९ ॥
यावन्त्येतानि सर्वाणि तावती शर्करा भवेत्।
सर्वमेकीकृतं पात्रे स्निग्धे चैव निधापयेत्॥ ८० ॥
भोजनादौ ततो भक्षेन्माषाष्टकमिदं शुभम्।
शीततोयानुपानञ्च नारिकेलोदकं तथा॥ ८१ ॥
ततो यथेष्टमाहारं कुर्य्यात् क्षीरोदनञ्च वै।
अम्लपित्तं हरत्याशु शूलदुर्नामनाशनम्॥ ८२ ॥
प्रमेहं विंशतिञ्चैव मूत्राघातं तथाश्मरीम्।

अतिबलकरं चूर्णमगस्तिमुनिभाषितम् ॥ ८३ ॥

इत्यतिबलकरं चूर्णम् ।

पिप्पल्याः कुड़वं चूर्णं घृतस्य कुड़व द्वयम् ।
पलं षोड़शकं खण्डाच्छतावर्य्याः पलाष्टकम् ॥ ८४ ॥
शिवायाः स्वरसस्यापि पलं षोड़शकं मतम् ।
क्षीरप्रस्थद्वये साध्ये लेहीभूतेऽत्र निक्षिपेत् ॥ ८५ ॥
त्रिजातकाभयाजाजी धान्यमुस्तशिवातुगाः ।
एतेषां कार्षिकं चूर्णं कर्षार्द्धं कृष्णजीरकम् ॥ ८६ ॥
नागरं नागरं जातीफलं समरिचं हिमम् ।
दत्त्वा पलत्रयं क्षौद्रं स्निग्धभाण्डे विनिःक्षिपेत् ॥ ८७ ॥
प्रातर्यथाबलं लिह्या दम्लपित्तप्रशान्तये ।
हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् ॥ ८८ ॥

इति पिप्पल्याद्यवलेहः ।

कूष्माण्डकरसो ग्राह्यः पलानां शतमात्रकम् ।
रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ ८९ ॥
लघ्वग्निना पचेत्तावत् यावद्भवति पिण्डितम् ।
धात्रीतुल्या सिता योज्या पलार्द्धं लेहयेदनु ॥ ९० ॥
खण्डकूष्माण्डकं ख्यात मम्लपित्तं नियच्छति ।

इति खण्डकूष्माण्डकम् ।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिका पद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः ॥९१
युञ्जीत मात्रां सहभोजनेन सर्वर्त्तुपानेऽपि भिषग्विदध्यात् ।
बलासपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्
सर्वं निहन्याद् घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥ ९२ ॥

इति द्राक्षाद्यं घृतम् ।

द्राक्षापथ्ये समे कृत्वा तयोस्तुल्यां सितां क्षिपेत् ।

सङ्गुड्याक्षद्वयमितं पिण्डिकां कारयेद्भिषक्॥ ९३॥
तां खादेदम्लपित्तार्त्तो हृत्कण्ठदहनापहाम्।
तृड्मूर्च्छाभ्रममन्दाग्निनाशिनीं चामवातहाम्॥ ९४॥

इति द्राक्षादिगुटिका।

इति वङ्गसेनसङ्कलितः अम्लपित्तनिदानचिकित्साधिकारः समाप्तः।

---

## अथ विसर्पनिदानमाह।

लवणाम्लकटूष्णादि सेवनाद्दोषकोपतः।
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्॥ १॥
पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः।
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः॥
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः॥ २॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः स पित्तकफसम्भवः॥ ३॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः॥ ४॥
तत्र वातात्सवीसर्पो वातज्वरसमव्यथः॥
शोफस्फुरणनिस्तोदभेदायामार्त्ति हर्षवान्॥ ५॥
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः।
कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक्॥ ६॥
सन्निपातसमुत्थश्च सर्वरूपसमन्वितः॥ ७॥
वातपित्तात् ज्वरच्छर्दि मूर्च्छातीसारतृट्भ्रमैः।
अस्थिभेदोऽग्निसदन तमकारोचकैर्युतः॥ ८॥
करोति सर्वदेहञ्च दीप्ताङ्गारावकीर्णवत्।
यं यं देशं विसर्पश्च विसर्पति भवेत्तु सः॥ ९॥

शान्ताङ्गारासितो नीलो रक्तो वाशूपचीयते।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वात् द्रुतं स च ॥ १० ॥
मर्मानुसारी वीसर्पः स्यात्ततोऽतिबलस्ततः।
व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् ॥ ११ ॥
हिध्माञ्च स गतोऽवस्था मीदृशीं लभते नरः।
क्वचिच्छर्मारतिग्रस्तो भूमिशय्याशनादिषु ॥ १२ ॥
चेष्टमानस्ततः क्लिष्टो मनोदेहसमुद्भवः।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निविसर्प उच्यते ॥ १३ ॥
कफेन रुद्धः पवनो भित्वा तं बहुधा कफम्।
रक्तं वा वृद्धरक्तस्य त्वक्‌छिरास्नायुमांसगम् ॥ १४ ॥
दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम्।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग् ज्वराम् ॥ १५ ॥
श्वासकासातिसारांश्च शोषहिक्कावमिभ्रमैः।
मोहवैवर्ण्यमूर्च्छाङ्ग भङ्गाग्निसदनैर्युतः ॥
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ १६ ॥
कफपित्ताज्ज्वरस्तम्भो निद्रातन्द्रा शिरोरुजाः।
अङ्गावसादविक्षेप प्रलापारोचकभ्रमाः ॥ १७ ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम्।
आमोपवेशनं लेपः स्रोतसां च विसर्पति ॥ १८ ॥
प्रायेणामाशयं गृह्णन्नेकदेशे न चातिरुक्।
पिड़कैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ १९ ॥
स्निग्धोऽसितो मेचकाभो मलिनः शोफवान् गुरुः।
गम्भीरपाकः प्राज्योष्मास्पृष्टः क्लिन्नोऽवदीर्य्यते ॥ २० ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः।
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ २१ ॥
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन्।

वीसर्पं मारुतः कुर्य्यात् कुलत्थसदृशैश्चितम् ॥
स्फोटैः शोथज्वररुजा दाहाढ्यं श्यावशोणितम् ॥ २२ ॥
ज्वरातिसारौ वमथुस्त्वङ्मांसदरणं क्लमः।
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥ २३ ॥

सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्वात्मकः क्षतकृतश्च न सिद्धिमेति।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव ॥ २४ ॥

तथाच ग्रन्थान्तरात्।
तृट्श्वासमांससङ्कोच दाहहिक्कामदज्वराः।
विसर्पा मर्मसंरोधा स्तेषां प्रोक्ता ह्युपद्रवाः ॥ २५ ॥

अथ चिकित्सामाह।

सर्वेष्वेव विसर्पेषु कुर्य्याल्लङ्घनरूक्षणम्।
विरेकवमनालेप सेचनासृग्विमोक्षणैः ॥
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥ २६ ॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन वा।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥ २७ ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ २८ ॥
रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला।
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ॥ २९ ॥
शक्रद्रसं पयो मूत्रं पञ्चमूलं च तत्समम्।
एतत्सुखोष्णकं कार्य्यं विसर्पेऽनिलसम्भवे ॥ ३० ॥
तृणवर्ज्यं विधातव्यं पञ्चमूलचतुष्टयम्।
प्रदेहसेकौ सर्पिर्भिः विसर्पे वातसम्भवे ॥ ३१ ॥
कुष्ठं शताह्वा सुरदारु मुस्ता वाराहिकुस्तुम्बुरुकृष्णगन्धाः।

वातेऽर्कवंशार्त्तगलाश्च योज्याः सेके प्रलेपेषु तथा घृतेषु ॥ ३२ ॥

द्राक्षारग्वधकाश्मर्य्यत्रिफलैरण्डपीलुभिः ।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ ३३ ॥
न्यग्रोधोदुम्बराश्वत्थ प्लक्षवेतसपीलुभिः ।
चन्दनद्वयमञ्जिष्ठा पद्मकोशीरगैरिकैः ॥ ३४ ॥
शतधौतघृतोन्मिश्रै र्लेपो रक्तप्रसादनः ।
दाहपाकरुजास्रावशोथनिर्वापणः परः ॥ ३५ ॥

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः।
लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पकुष्ठज्वरशोथहारी ॥३६॥

इति दशाङ्गलेपः ।

प्रपौण्डरीकं मञ्जिष्ठा पद्मकोशीरचन्दनैः ।
सयष्टीन्दीवरैः पैत्ते क्षीरपिष्टैः प्रलेपनम् ॥ ३७ ॥

कशेरुशृङ्गाटकपद्मगुन्द्रा सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपो विधेयः सघृतः सुशीतः ॥३८॥

मृणालचन्दनं लोध्रमुशीरं कमलोत्पलम् ।
शारिवा शल्लकी पथ्या प्रदेहाः पित्तमुद्धराः ॥ ३९ ॥
प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः ।
पद्मकोशीरमधुक चन्दनैर्वा प्रशस्यते ॥ ४० ॥
न्यग्रोधपादा गुन्द्रा च कदलीगर्भ एव च ।
विषग्रन्थिकलेपः स्याच्छतधौतघृतप्लुतः ॥ ४१ ॥
मांसीसर्जरसं रोध्रं मधुकं सह रेणुभिः ।
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः ॥
पृथक् लेपाः विसर्पघ्नाः सर्वे वा सर्पिषा सह ॥ ४२ ॥
श्लैष्मिके वमनं पूर्वं रेचनं च कफापहम् ॥ ४३ ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥ ४४ ॥

गायत्रीसप्तपर्णाब्द वासारग्वधदारुभिः।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥ ४५ ॥
अजाश्वगन्धा सरलाथ कालसेकैः शिवा चाप्यथवाजशृङ्गी।
गोमूत्रपिष्टैर्विहितः प्रदेहो हन्याद्विसर्पं कफजं च शीघ्रम् ॥४६॥
त्रिफलापद्मकोशीर समङ्गा करवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥ ४७ ॥
काकजङ्घा शिरीषस्य पुष्पं श्लेष्मातकत्वचम्।
क्षतमालकपत्राणि चाश्वगन्धा प्रियङ्गवः ॥
प्रदेहः कफवीसर्पे कटूष्णः सुप्रयोजितः ॥ ४८ ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पसहिता हिता लेपावचूर्णनैः ॥ ४९ ॥
मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसंयुतः ॥ ५० ॥
अमृतघनपटोलं निम्बकल्कैरुपेतम्।
त्रिफलखदिरसारं व्याधिघातश्च तुल्यम् ॥
क्वथितमिदमशेषं गुग्गुलोः पादयुक्तम्।
हरति विषविसर्पान् कुष्ठसङ्घातमाशु ॥ ५१ ॥
भूनिम्बवासाकटुकापटोलं फलत्रिकं चन्दननिम्बसिद्धः।
विसर्पदाहज्वरशोषकण्डूविस्फोटतृष्णावमिनुत्कषायः ॥ ५२ ॥
पटोलं पिचुमर्दञ्च दार्वीं कटुकरोहिणीम्।
यष्ट्याह्वं त्रायमाणाञ्च दद्याद्वीसर्पशान्तये ॥ ५३ ॥
त्रायन्तीनिम्बदारु कुण्डलीधात्रीपटोलकटुकाभिः।
क्वाथो हन्ति विसर्पान्मकरन्दयुतो बद्धमूलान् ॥ ५४ ॥
त्रिदोषजां क्रियां कुर्य्याद्विसर्पे द्वन्द्वसम्भवे।
सकफे रक्तपित्ते च त्रिफलां योजयेत् पुरैः ॥ ५५ ॥
दुरालभां पर्पटकं पटोलं कटुकां तथा।

कोष्णं गुग्गुलुसंमिश्रं पिवेद्वा खदिराष्टकम् ॥ ५६ ॥
वातपित्तप्रशमनमग्निवीसर्परोहणम् ।
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञके ॥ ५७ ॥
वातपित्तहरं कर्म ग्रन्थिवीसर्पिणे हितः ।
मसूरिस्फोटकुष्ठघ्नी क्रिया योज्या विसर्पिणाम् ॥ ५८ ॥
कुष्ठामयस्फोटमसूरिकोक्त चिकित्सयाप्याशु हरेद्विसर्पान् ।
सर्वांस्तु पक्वान् परिशोध्य धीमान् व्रणक्रमेणोपचरेद्यथोक्तम्॥५९
यच्च सर्पिर्महातिक्तं पित्तकुष्ठनिवर्हणम् ।
निर्दिष्टं तदपि प्राज्ञो दद्याद्वीसर्पशान्तये ॥ ६० ॥
वृषखदिरपटोलनिम्बपत्र त्वगमृतसुशिवाकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति खलु विसर्पकुष्ठगुल्मान् ॥६१॥

इति वृषाद्यं घृतम् ।

द्वे हरिद्रे स्थिरा मूर्वा शारिवा चन्दनद्वयम् ।
मधुकं मधुपर्णी च पद्मकं पद्मकेसरम् ॥ ६२ ॥
उशीरमुत्पलं मेदा त्रिफला पञ्चवल्कलम् ।
कल्कैरक्षसमैरेभिर्घृतप्रस्थं विपाचयेत् ॥ ६३ ॥
विषवीसर्पविस्फोट कीटलूताव्रणापहम् ।
गौरवाद्यमिति ख्यातं सर्पिः श्रेष्ठमनुत्तमम् ॥ ६४ ॥

इति गौरवाद्यं घृतम् ।

कुष्ठेषु यानि सर्पींषि व्रणेषु विविधेषु च ।
विसर्पेषु प्रयोज्यानि सेकालेपनभोजनैः ॥ ६५ ॥
करञ्जसप्तच्छद लाङ्गलीकस्नुह्यर्कदुग्धानलभृङ्गराजैः ।
तैलं निशामूत्रविषैर्विपक्वं विसर्पविस्फोटविचर्चिकाघ्नम् ॥६६॥

इति करञ्जतैलम् ।

इति वङ्गसेनसङ्कलितः विसर्पनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ विस्फोटनिदानमाह ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षचारैरजीर्णाध्यशनातपैश्च ।
तथर्तुदोषेण विपर्य्ययेण कुप्यन्ति दोषाः पवनादयस्तु ॥ १ ॥

त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च ।
घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान् ॥ २ ॥

अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्वत्र वा देहे विस्फोटक इति स्मृतः ॥ ३ ॥

शिरोरुक् शूलभूयिष्ठं ज्वरस्तृट् पर्वभेदनम् ।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥ ४ ॥

ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम् ।
पीतलोहितवर्णश्च पित्तविस्फोटलक्षणम् ॥ ५ ॥

छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुता ।
अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः ॥ ६ ॥

वातपित्तात्मको यस्तु कुरुते तीव्रवेदनाम् ॥
कण्डूस्तैमित्यगुरुभि र्जानीयात् कफवातिकम् ॥ ७ ॥

मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान् ।
दाहरागतृषामोहच्छर्दिमूर्च्छारुजो ज्वरः ।
प्रलापो वेपथु स्तन्द्रा सोऽसाध्यः स्यात्त्रिदोषजः ॥ ८ ॥

रक्तारक्तसमुत्थाना गुञ्जाफलनिभास्तथा ।
वेदितव्यास्तु रक्तेन पैत्तिकेन च हेतुना ॥
न ते सिद्धं समायान्ति सर्वैर्योगवरैरपि ॥ ९ ॥

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ।
सर्वरूपान्वितो घोर स्त्वसाध्यो भूर्य्युपद्रवः ॥ १० ॥

हिक्काश्वासोऽरुचिस्तृष्णा चाङ्गमर्दो हृदि व्यथा ।
विसर्पज्वरहृल्लासा विस्फोटानामुपद्रवाः ॥ ११ ॥

अथ चिकित्सामाह।

लत्वादौ लङ्घनं कार्य्यं वमनं पथ्यभोजनम्।
यथायुक्तं बलं वीक्ष्य युक्तमुक्तं विरेचनम्॥ १२॥
पटोलेन्द्रयवारिष्ट वचामदनसाधितम्।
वमनं तत्प्रदातव्यं विस्फोटे कफपैत्तिके॥ १३॥
क्षुधिते लङ्घिते वान्ते जीर्णशालियवादिभिः।
मुद्गाढ़कीमसूराणां रसैर्वा विश्वसंयुतैः॥ १४॥
सुनिषस्रकवेत्राग्रतण्डुलीयककेतकैः।
कुलकाभीरुकैरेभिः सपर्पटकतीनकैः॥ १५॥
कर्कोटकारवेल्लैश्च कुसुमैर्निम्बविल्वजैः।
तिक्तद्रव्यसमायुक्तं भोजनं संप्रयोजयेत्॥ १६॥
द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा।
अमृता धान्यकं मुस्तं जयेद्वातसमुद्भवान्॥ १७॥
द्राक्षाकाश्मर्य्यखर्जूर पटोलारिष्टवासकैः।
कटुकालाजदुःस्पर्शैः सितायुक्तं तु पैत्तिके॥ १८॥
भूनिम्बनिम्बवासा च त्रिफलेन्द्रयवासकैः।
पिचुमर्दं पटोलञ्च सक्षौद्रं कफजे हितम्॥ १९॥
किरातातिक्तकारिष्ट यष्ट्याह्वाम्बुदवासकम्।
पटोलपर्पटोशीरत्रिफलाकीटजान्वितम्॥
द्वादशाङ्गं तथैवैतत्सर्वविस्फोटनाशनम्॥ २०॥
पटोलामृतभूतिम्ब वासकारिष्टपर्पटैः।
खदिराष्टयुतैः क्वाथो विस्फोटज्वरशान्तये॥ २१॥
कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बुना।
विस्फोटं नाशयत्याशु वायुर्जलधरानिव॥ २२॥
अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।

विविधविषविसर्पं कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥ २३ ॥

पटोलत्रिफलारिष्ट गुडूचीमुस्तचन्दनैः।
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥ २४ ॥
कषायं योजयेदेतत् पित्तश्लेष्मज्वरापहम्।
कण्डूत्वग्दोषविस्फोट विषवीसर्पनाशनम् ॥ २५ ॥
शिरीषयष्टी नतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः।
लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पविस्फोटककण्डूहारी ॥२६

इति दशाङ्गलेपः।

चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे।
शिरीषवल्कलं जातीलेपः स्याद्दाहनाशनः ॥ २७ ॥
विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रपेषितैः।
बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता ॥ २८ ॥
उत्पलं चन्दनं लोध्र मुशीरं शारिवाद्वयम्।
जलेन पिष्ट्वा लिम्पेत स्फोटदाहार्त्तिनाशनम् ॥ २९ ॥
शिरीषोशीरनागाह्व हिंस्राभिर्लेपनाद् द्रुतम्।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ ३० ॥
शिरीषचन्दनानन्ता तिन्तिड़ीवल्कपूरकैः।
प्रलेपः सघृतः कार्य्यो विस्फोटश्लेष्मनाशनः ॥ ३१ ॥
शिरीषोदुम्बरी जम्बु सेकालेपनयोर्हिताः।
श्लेष्मातकत्वचो वापि प्रलेपाश्चयोतने हिताः ॥ ३२ ॥
शिरीषपूगमञ्जिष्ठा चव्यामलकयष्टिकाः।
सजातिपल्लवक्षौद्रा विस्फोटे कवलग्रहाः ॥ ३३ ॥
पद्मकं मधुकं लोध्रं नागपुष्पञ्च केशरम्।
द्वे हरिद्रे विड़ङ्गानि सूक्ष्मैला तगरं तथा ॥ ३४ ॥
कुष्ठं लाक्षापत्रकञ्च सिन्धूत्थं तुल्यमेव च।

तोयेनालोड्य तत्सर्वं घृतप्रस्थं विपाचयेत् ॥ ३५ ॥
यांश्च रोगान्निहन्त्येतत् तान्निबोध महामुने !।
सर्पकीटादिदष्टेषु लूतामूत्रक्षतेषु च ॥ ३६ ॥
विविधेषु च स्फोटेषु तथा कुष्ठविसर्पिषु ।
नाड़ीषु गण्डमालासु प्रभिन्नासु विशेषतः ॥ ३७ ॥
अगस्तिविहितं धन्यं पद्मकं तु महाघृतम् ॥ ३८ ॥

इति पद्मकं घृतम् ।

पटोलसप्तच्छदनिम्बवासा फलत्रिकच्छिन्नरुहाविपक्वम् ।
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥३९॥

इति पञ्चतिक्तं घृतम् ।

कम्पिल्लकं विड़ङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमर्दञ्च लोध्रं मुस्तं प्रियङ्गुकम् ॥ ४० ॥
धातकीं खदिरं सर्जमेलां चागुरुचन्दनम् ।
पिष्ट्वा तैलं भवेत्साध्यं तत्तैलं व्रणरोपणम् ॥ ४१ ॥

इति कम्पिल्लकाद्यं तैलम् ।

पीत्वा घृतं महातिक्तं कौशिकेन च साधितम् ।
कदाचिद्रक्तमोचञ्च ज्ञात्वा दोषं प्रयोजयेत् ॥ ४२ ॥

इति श्रीवङ्गसेनसङ्कलितः विस्फोटनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ स्नायुनिदानमाह ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ।
भित्त्वैव तं क्षते तत्र सोष्ममांसं विशोष्य च ॥ १ ॥
कुर्य्यात्तन्तुनिभं सूत्रं वृत्तं सितद्युतिं बहिः ।
शनैः शनैः क्षतादेति छेदात्तत्कोपमावहेत् ॥ २ ॥
तत्पातताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ।

स स्नायुकः परिख्यातः क्रियोक्तात्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि।
सङ्कोचं खञ्जतां चापि छिन्नो नूनं करोत्यसौ ॥ ४ ॥

अथ चिकित्सामाह।

स्नेहस्वेदप्रलेपादि कर्म्म कुर्य्याद्यथेप्सितम्।
रामठं शीततोयेन पीतं तन्तुकरोगनुत् ॥ ५ ॥
मञ्जिष्ठयष्टीमधुकं पयस्या प्रपौण्डरीकं सह पद्मकेन।
सौगन्धिकं चेति सुखं प्रलेपः शस्तो विसर्पे त्वथ तन्तुरोगे ॥६॥

इति मञ्जिष्ठादिलेपः।

स्वेदात् स्नायुकमत्युग्रं भेकः काञ्जिकसाधितः।
तद्वद्बव्वूलजं वीजं पिष्टं हन्ति प्रलेपनात् ॥ ७ ॥
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डिस्वरसं त्र्यहम्।
पिबेत् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ८ ॥
मूलं सुखव्या हिमवारिपिष्टं पानादिकं तन्तुकरोगमुग्रम्।
शान्तिं नयेत्सत्वरमाशु पुंसां गन्धर्वगन्धेन घृतेन पीतम् ॥ ९ ॥
अतिविषमुस्तकभार्गी विश्वौषधपिप्पलीविभीतकीनाम्।
चूर्णमिदं तन्तुघ्नं पुंसामुष्णेन वारिणा पीतम् ॥ १० ॥
शिग्रुमूलदलैः पिष्टैः काञ्जिकेन ससैन्धवैः।
लेपनं स्नायुकव्याधेः शमनं परमं मतम् ॥ ११ ॥

इति वङ्गसेनसङ्कलितः स्नायुकरोगनिदानचिकित्साधिकारः समाप्तः।

---

## अथ मसूरिकानिदानमाह।

कट्वम्ललवणक्षार विरुद्धाध्यशनाशनैः।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥
क्रुद्धग्रहे क्षणाच्चापि देहे दोषाः समुद्गताः।

जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥
मसूराकृतिसंस्थानाः पिड़काः स्युर्मसूरिकाः २ ॥
तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ।
त्वचि शोथः सवैवर्ण्यो नेत्ररागस्तथैव च ॥ ३ ॥
स्फोटाः रूक्षारुणाः कृष्णास्तीव्रवेदनयान्विताः ।
कठिनाश्चिरपाकाश्च भवन्त्यनिलसम्भवाः ॥ ४ ॥
सन्ध्यस्थिपर्वणां भेदः कासः कम्पोऽरतिः क्लमः ।
शोथस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ॥ ५ ॥
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ।
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥ ६ ॥
विड्भेदश्चाङ्गमर्दश्च तृष्णारत्यरुचिस्तथा ।
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः ॥
रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥ ७ ॥
कफप्रसेकः स्तैमित्यं शिरोरुग् गात्रगौरवम् ।
हृल्लासारुचितन्द्रार्त्तिर्निद्रालस्यसमन्विताः ॥ ८ ॥
श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाः ।
मसूरिकाः कफोत्थाश्च चिरपाकाः प्रकीर्त्तिताः ॥ ९ ॥
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजाः ।
चिरपाकाः पूतिस्रावाः प्रभूताः सर्वदोषजाः ॥ १० ॥
कण्ठरोधोऽरुचिस्तन्द्रा प्रलापारतिसङ्गताः ।
दुश्चिकित्स्याः समुद्दिष्टाः पिड़काश्चर्मसंज्ञिताः ॥ ११ ॥
रोमकूपोन्नतिसमा लोहिताः कफवातजाः ।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥ १२ ॥
तोयवुद्बुदसङ्काशास्त्वग्गताश्च मसूरिकाः ।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १३ ॥
रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः ।

साध्या नात्यर्थदुष्टाश्च भिन्ना रक्तं स्रवन्ति च ॥ १४ ॥
मांसस्थाः कठिनाः स्निग्धाः चिरपाका घनत्वचः।
गात्रशूलानिशं कण्डूः तृष्णारुचिसमन्विताः ॥ १५ ॥
मेदोजा मण्डलाकारा मृदवः किञ्चिदुन्नताः।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः।
सम्मोहारतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत् ॥ १६ ॥
क्षुद्रा गात्रसमा रूक्षा श्चिपिटा किञ्चिदुन्नताः।
मज्जोत्था भृशसम्मोह वेदनारतिसंयुताः ॥ १७ ॥
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च।
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः ॥ १८ ॥
पक्वाभाः पिड़काः स्निग्धाः सूक्ष्माश्चात्यर्थवेदनाः।
स्तैमित्यारतिसम्मोह दाहोन्मादसमन्विताः ॥ १९ ॥
शुक्रजायां मसूर्य्यान्तु लक्षणानि भवन्ति हि।
निर्दिष्टं केवलं चिह्नं दृश्यते न हि जीवितम् ॥ २० ॥
दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः ॥ २१ ॥
त्वग्गता रक्तजाश्चैव पित्तजाः श्लेष्मजास्तथा।
एता विनापि क्रियया प्रशाम्यन्ति शरीरिणाम् ॥ २२ ॥
वातजा वातपित्तोत्था श्लेष्मवातकृताश्च याः।
कृच्छ्रसाध्यमता स्तस्माद्यत्नादेता उपाचरेत् ॥ २३ ॥
असाध्याः सन्निपातोत्था स्तासां वक्ष्यामि लक्षणम्।
प्रवालसदृशाः काश्चित् काश्चिज्जम्बूफलोपमाः ॥ २४ ॥
लोहजालसमाः काश्चिदतसीफलसन्निभाः।
आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २५ ॥
कासो हिक्काप्रकोपश्च ज्वरस्तीव्रः सुदारुणः।
प्रलापश्चारतिर्मूर्च्छा तृष्णादाहो विघूर्णता ॥ २६ ॥
सुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा।

कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् ॥ २७ ॥
मसूरिकाभिभूतस्य यस्यैतानि भिषग्वर: ।
लक्षणानीह दृश्यन्ते न दद्यात्तत्र भेषजम् ॥ २८ ॥
मसूरिकाभिभूतो यो भृशं घ्राणेन नि:श्वसेत् ।
स ध्रुवं त्यजति प्राणांस्तृषार्त्तो वायुदूषित: ॥ २९ ॥
मसूरिकान्ते शोथ: स्यात् कूर्परे मणिबन्धके ।
तथांसफलके वापि दुश्चिकित्स्य: सुदारुण: ॥ ३० ॥

अथ अन्यग्रन्थान्तरात् ।

द्वित्रिलवणसंयुक्तो द्वन्द्वोपद्रवसंयुत: ।
द्वन्द्वजास्तु त्रयो ज्ञेया मनुष्याणां मसूरिका: ॥ ३१ ॥
कफवातादिसम्भूत: कोद्रवो नाम संज्ञित: ।
लोके वदन्ति कच्छाक: स पाकं न च गच्छति ॥ ३२ ॥
यवशूकवदङ्गेषु विध्यति च विशेषत: ।
सप्ताहाद्द्वादशाहाद्वा स्वस्थो भवति मानव: ॥ ३३ ॥

अथ चिकित्सामाह ।

मसूरिकायां कुष्ठोक्ता प्रलेपादिक्रिया हिता ।
पित्तश्लेष्मविसर्पोक्ता क्रिया चात्र प्रशस्यते ॥ ३४ ॥
वेणुत्वक् सुरसा लाक्षा कर्पासास्थि मसूरिका: ।
यवपिष्टं विषं सर्पिर्वचा ब्राह्मी सुवर्चला ।
धूपनार्थं यथालाभं धूममेतत् प्रयोजयेत् ॥ ३५ ॥
आदावेतत् प्रयोक्तव्यं नश्यन्त्याशु मसूरिका: ।
न गृह्णन्ति विषं केचित् यथालाभश्रुतेरिह ॥ ३६ ॥

इति धूप: ।

श्वेतचन्दनकल्केन हिलमोचाभवं रसम् ।
पिबेन्मसूरिकारम्भे नैम्बं वा केवलं रसम् ॥ ३७ ॥
विल्वपत्ररसेनैव मूर्च्छित: पारदो रस: ।

ह्लिमोचरसं पीतं हन्ति माक्षिकसंयुतम् ॥ ३८ ॥
मसूरीं सर्वजां ग्रीष्ममस्थिजां सर्वदेहजाम्।
वमने मरणं प्रोक्तं स्तम्भने जीवनं मतम् ॥ ३९ ॥
सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः।
कषायैश्च वचा वत्सयष्ट्याह्व फलकल्कितैः ॥ ४० ॥
सक्षौद्रं पाययेद्ब्राह्म्या रसं वा हैलमोचकम्।
वान्तस्य रेचनं देयं शमनं वाऽबले नरे ॥ ४१ ॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४२ ॥
वाणीरविल्वजनितं क्वाथं पर्य्युषितमुत्तमे दिवसे।
चैत्रस्य पापरोगं पिबेत्तां न भवे द्रुतं चैतत् ॥ ४३ ॥
नारीणां वामपादस्थं नराणामपसव्यगम्।
पापरोगं त्यजेद्दूराच्छिराश्विविनिवारणम् ॥ ४४ ॥
चैत्रसितभूतदिने रक्तपताका स्नुहीभवने।
धवलितकलसे न्यस्ता पापरुजो दूरतो धत्ते ॥ ४५ ॥
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी।
खदिरः पिचुमर्दश्च बला धात्री विकङ्कतम्।
एषां कषायपानन्तु हन्ति वातमसूरिकाम् ॥ ४६ ॥
द्विपञ्चमूलं रास्ना च धात्र्युशीरं दुरालभा।
सामृतं धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥ ४७ ॥
न्यग्रोधप्लक्षमञ्जिष्ठा शिरीषोदुम्बरत्वचाम्।
ससर्पिष्कं मसूर्य्यान्तु वातजायां प्रलेपनम् ॥ ४८ ॥
गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्ठकम्।
चन्दनं काश्मर्य्यफलं बलामूलं विकङ्कतम्।
पाककाले मसूर्य्यान्तु वातजायां प्रयोजयेत् ॥ ४९ ॥
गुडूची मधुकं द्राक्षा मोरटं दाड़िमैः सह।

पाककाले प्रदातव्यं भेषजं गुड़संयुतम् ॥ ५० ॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥ ५१ ॥
लिह्याद्बदरचूर्णन्तु पाचनार्थञ्च गुड़ेन तु ।
कफवातकृतास्तेन पच्यन्ते च मसूरिकाः ॥ ५२ ॥
शोधनं पित्तजायान्तु कार्य्यं वैद्येन जानता ।
तत्रादौ तर्पणं कार्य्यं लाजचूर्णैः सशर्करैः ॥ ५३ ॥
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ।
भोजनं चाथवा कार्य्यं दुष्टव्रणविसर्पिणाम् ॥ ५४ ॥
आदावेव मसूर्य्यान्तु पित्तजायां प्रयोजयेत् ॥ ५५ ॥
निम्बपर्पटकं पाठा पटोलं चन्दनद्वयम् ।
वासा दुरालभा धात्री व्योषं कटुकरोहिणी ॥ ५६ ॥
एतत्फलं शृतं शीतं मधुशर्करयान्वितम् ।
मसूर्य्यान्तु प्रयोक्तव्यं पित्तजायां विजानता ।
दाहे ज्वरे विसर्पे तु व्रणे पित्ताधिके तथा ॥ ५७ ॥
द्राक्षा काश्मर्य्यखर्जूरपटोलारिष्टवासकैः ।
लाजामलकदुस्पर्शैः सितायुक्तान्तु पैत्तिके ॥ ५८ ॥
शिरीषोदुम्बराश्वत्थ पीलु न्यग्रोधवल्कलैः ।
प्रलेपः सघृतः शीघ्रं व्रणवीसर्पदाहहा ॥ ५९ ॥
श्यामा पर्पटकारिष्ट चन्दनद्वयमूलकैः ।
धात्री तिक्तवृषोशीर यासैश्च क्वथितं जलम् ।
पीतं मसूरिकां हन्ति पित्तजां दाहसंयुताम् ॥ ६० ॥
मोरटं काश्मर्य्यफलं शृतशीतं सशर्करम् ।
लाजाचूर्णयुतं दद्यात् पित्तजायान्तु पाचनम् ॥ ६१ ॥
दुरालभा पर्पटकं पटोलं कटुरोहिणी ।
श्लैष्मिक्यां पित्तजायाञ्च पाने निष्क्वाथ्य दापयेत् ॥ ६२ ॥
भूनिम्बो मुस्तकं वासा त्रिफलेन्द्रयवासकम् ।

पिचुमर्दः पटोलञ्च सक्षौद्रं योजितं हितम् ॥ ६३ ॥
खदिरारिष्टपत्रैश्च शिरीषोदुम्बरत्वचा ।
कुर्य्याल्लेपं कफोत्थायां पित्तजायामथापि वा ॥ ६४ ॥
वृषस्य स्वरसं दद्यात् क्षौद्रयुक्तं कफात्मके ॥ ६५ ॥
कफजायां मसूर्य्यान्तु कठिनायां विशेषतः ।
पाचनाय प्रदातव्यं लेपनं दधिसक्तुभिः ॥ ६६ ॥
पटोलकुण्डलीमुस्त वृषधान्ययवासकैः ।
भूनिम्बनिम्बकटुका पर्पटैश्च शृतं जलम् ॥ ६७ ॥
मसूरीं शमयेदामां पक्वां चैव विशोधयेत् ।
नातःपरतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ ६८ ॥

इति पटोलादिक्वाथः ।

पटोलमुस्तारुणतण्डुलीयकं पचेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिविस्फोटविसर्पशान्तये तदेव रोमान्तिवमिज्वरापहम्॥६९॥
निम्बपर्पटकं द्राक्षा पटोलं कटुरोहिणी ।
वासा दुरालभा धात्री चोशीरं चन्दनद्वयम् ॥ ७० ॥
एष निम्बादिकः क्वाथः पीतः शर्करयान्वितः ।
मसूरीं सर्वजां हन्ति ज्वरविसर्पसम्भवाम् ।
उत्थिता प्रविशेद्यातु पुनस्तां वाह्यतो नयेत् ॥ ७१ ॥

इति निम्बादिक्वाथः ।

काञ्चनारत्वचः क्वाथ स्ताप्यचूर्णावचूर्णितः ।
निर्गन्त्यन्तः प्रविष्टान्तु मसूरीं वाह्यतो नयेत् ॥ ७२ ॥
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलेन क्वथितं सुशीतलं मसूरिकारोगविनाशनं परम् ॥७३॥
सुखवीपत्रनिर्य्यासं हरिद्राचूर्णसंयुतम् ।
रोमन्ती ज्वरवीसर्प मसूरीशान्तये पिवेत् ॥ ७४ ॥
दुरालभापर्पटकं पटोलं कटुरोहिणी ।

श्लेष्मपित्तमसूर्य्यान्तु क्वाथमेषां प्रयोजयेत् ॥ ७५ ॥
रसं पूतिकरञ्जस्य चामलक्या रसं तथा ।
पिबेत्सशर्कराचौद्रं शोफनुत्कफपैत्तिके ॥ ७६ ॥
अमृतादिकषायन्तु जयेत्पित्तकफात्मिकीम् ।
तथा शोणितसंसृष्टं जयेच्छोणितमोक्षणैः ॥ ७७ ॥
काश्चिद्विना प्रयत्नेन सिद्धन्त्याशु मसूरिकाः ।
कृच्छ्रात् कृच्छ्रतराः काश्चित् काश्चित्सिध्यन्ति वा नवा ।
काश्चिन्नैव प्रसिध्यन्ति साध्यमानाः प्रयत्नतः ॥ ७८ ॥
सौवीरेण तु सम्पिष्टं मातुलुङ्गस्य केशरम् ।
प्रलेपात्पाचयत्याशु दाहं वापि नियच्छति ॥ ७९ ॥
पाददाहन्तु कुरुते पिड़का पादजा भृशम् ।
तत्र सेकं प्रकुर्वीत बहुशस्तण्डुलाम्बुना ॥ ८० ॥
पाककाले तु सर्वांस्तान् विशोषयति मारुतः ।
तस्मात्संब्रंहणं कार्य्यं नतु पथ्यं विशेषणम् ॥ ८१ ॥
लिह्याच्च वादरं चूर्णं पाचनार्थं गुड़ेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मकाः ॥ ८२ ॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना ।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ॥ ८३ ॥
दाड़िमाम्लरसैर्युक्ता यूषाः स्युस्त्वरुचौ हिताः ॥ ८४ ॥
पिबेदम्भस्तप्तशीतं भावितं खदिरासनैः ॥ ८५ ॥
शौचे वारि प्रयुञ्जीत गायत्रिबहुवारजम् ॥ ८६ ॥
जातीपत्रसमञ्जिष्ठा दार्वी पूगफलं शमी ।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखव्रणे कण्ठरोगे गण्डूषार्थं प्रशस्यते ॥ ८७ ॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ ८८ ॥
मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ।

उशीरलोध्रमञ्जिष्ठा लेपाश्चाश्चोतने हिताः ॥ ८९ ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च।
प्रलेपमञ्जनं दद्याद्बहुवारस्य वल्कलैः ॥ ९० ॥
पञ्चवल्कलचूर्णेन क्लिन्ना स्रावविती तथा।
दशाङ्गलेपचूर्णेन चूर्णिता शान्तिमेति च ॥ ९१ ॥
कृमिपातभयाच्चापि धूपयेत्सरलादिभिः।
वेदनादाहशान्त्यर्थं स्रुतानां च विशुद्धये ॥ ९२ ॥
तथाष्टाङ्गावलेहोऽत्र कवलश्चार्द्रकादिभिः ॥ ९३ ॥
निशाद्वयोशीरशिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः।
सस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥ ९४ ॥
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः।
कुर्याद्व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ॥ ९५ ॥
निम्बवव्वूरिकाशोकविम्बीवेतसवल्कलम्।
शृतशीतं प्रयोक्तव्यं स्रावप्रक्षालने सदा ॥ ९६ ॥
जपहोमोपचारैश्च दानस्वस्त्ययनादिभिः।
घण्टाकर्णं द्विजान् गाश्च शिवं गौरीञ्च पूजयेत् ॥ ९७ ॥
अगदानि विषघ्नानि रत्नानि च भिषग्वरः।
धारयेद्वाचयेच्चापि वैनतेयस्य संहिताम् ॥ ९८ ॥
कृत्वा दार्वीकषायञ्च कल्कैरेभिः पचेद् घृतम्।
दशमूलीबलापथ्या कुष्ठरास्ना बिभीतकैः ॥ ९९ ॥
दार्वीत्वग्नक्तमालैश्च समञ्जिष्ठैः सुपेषितैः।
अपक्वाः पाचयत्याशु पक्वाश्चैव विशोधयेत् ॥
क्षुद्रास्तु शमयत्येतत् सेकादपि मसूरिकाः ॥ १०० ॥

इति दार्वीघृतम्।

मसूरीषु प्रयुञ्जीत गौराद्यं पद्मकं तथा।
नैम्बं शैरीषिकं वापि भिषक् सर्वेषु कर्मसु ॥ १०१ ॥

कूर्परादिभवे शोथे यत्नात्सिद्धिः प्रजायते ।
व्रणशोथहरैर्योगैर्वातयोगहरैस्तथा ॥ १०२ ॥
दुष्टव्रणेषु तेष्वेव जलौकाभिर्हरेदसृक् ॥ १०३ ॥

इति श्रीवङ्गसेनसङ्कलितः मसूरिकानिदानचिकित्साधिकारः समाप्तः ।

---

## अथ क्षुद्ररोगनिदानमाह ।

स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः ॥ १ ॥

अथ चिकित्सामाह ।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥ २ ॥
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्यामालाङ्गलिकामूर्वाकल्कैर्वापि विलेपयेत् ॥
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ ३ ॥

अथ निदानमाह ।

विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् ।
प्रमण्डलां पित्तकृतां विवृतां नाम तां विदुः ॥ ४ ॥
पद्मकर्णिकवन्मध्ये पिड़िकाभिः समाचिताम् ।
इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ ५ ॥
मण्डलं वृत्तमुत्सन्नं सरक्तं पिड़िकान्वितम् ।
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ ६ ॥
वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥ ७ ॥
कर्णस्याभ्यन्तरे जातां पिड़िकामुग्रवेदनाम् ।
स्थिरां पनसिकां तान्तु विद्यादन्तः प्रपाकिनीम् ॥ ८ ॥

विसर्पवत्सर्पति यः शोथस्तनुरपाकवान्।
दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्दभः॥ ९॥
पिड़िकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाकरीम्।
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम्॥ १०॥
बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम्।
पित्तप्रकोपसंभूतां कक्षामित्यभिनिर्दिशेत्॥ ११॥
एकामेतादृशीं दृष्ट्वा पिड़िकां स्फोटसन्निभाम्।
त्वग्गतां पित्तकोपेन गन्धनाम्नीं प्रचक्षते॥ १२॥

अथ चिकित्सामाह।

विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभम्।
इरिवेल्लीं गन्धनामां कक्षाविस्फोटकांस्तथा॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्॥ १३॥
रोपयेत्सर्पिषा पक्वान् सिद्धेन मधुरौषधैः॥ १४॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्।
कफमारुतशोथघ्नो लेपः पाषाणगर्दभे॥
परिपाकगतं भित्वा व्रणवत् समुपाचरेत्॥ १५॥
नीलीपटोलयोर्मूलं जलपिष्टं घृतप्लुतम्।
निहन्ति लेपनान्नूनं जालगर्दभजां रुजम्॥ १६॥

अथ निदानमाह।

घनामवक्त्रां पिड़िकामुन्नतां परिमण्डलाम्।
अन्त्रालजीमल्पपूयां तां विद्यात्कफवातजाम्॥ १७॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता।
पिड़िकाश्लेष्मवाताभ्यां यवप्रख्येति सोच्यते॥ १८॥
ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः।
कफानिलाभ्यां पिड़िका ज्ञेया कच्छपिका बुधैः॥ १९॥

अथ चिकित्सामाह ।

अलजीं यवप्रख्याञ्च पनसीं कच्छपीं तथा ।
पाषाणगर्दभञ्चैव पूर्वं स्वेदैरुपाचरेत् ॥ २० ॥
मनःशिला देवदारु कुष्ठकल्कैः प्रलेपयेत् ।
पक्वान् व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ २१ ॥

अथ निदानमाह ।

गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थताम् ।
पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम् ॥ २२ ॥

अथ चिकित्सामाह ।

श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥ २३ ॥

अथ विदारिकानिदानमाह ।

विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ।
विदारिकामिति वदेत् सरुजां सर्वलक्षणाम् ॥ २४ ॥

अथ विदारिकाचिकित्सामाह ।

रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ।
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥
नगवृत्तिकवर्षाभू विल्वमूलैरथापि वा ॥ २५ ॥
पक्वां विदार्य्य शस्त्रेण पटोलपिचुमर्दयोः ।
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ॥ २६ ॥
बद्धा च क्षीरवृक्षस्य कषायैः खदिरस्य च ।
व्रणं प्रक्षालयेच्छुद्धां ततस्तां रोपयेत्पुनः ॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ॥ २७ ॥
कच्छपिकां पनसिका मनेन विधिना भिषक् ।
साधयेत्कठिनानन्याच्छोथान् दोषसमुद्भवान् ॥ २८ ॥

अथ शर्करार्बुदनिदानमाह ।

प्राप्य मांसं शिरां स्नायुं श्लेष्ममेदस्तथानिलः ।

ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥ २९ ॥
स्रवत्यास्रावमनिलस्तत्र वृद्धिं गतः पुनः।
मांसं विशोष्य ग्रथितां शर्करां जनयत्यतः ॥ ३० ॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिराः।
स्रवन्ति रक्तं सहसा तं विन्द्याच्छर्करार्बुदम् ॥ ३१ ॥

अथ शर्करार्बुदचिकित्सामाह।

मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥ ३२ ॥
कच्छ्रा विचर्चिका पामालसकाः कुष्ठलिङ्गकाः।
कुष्ठरोगोक्तविधिना एतांस्तद्वदुपाचरेत् ॥ ३३ ॥
लेपश्च शस्यते सिक्थशताह्वागौरसर्षपैः।
वचादार्वीसर्षपैर्वा तैलं वा नक्तमालजम् ॥
सारतैलमथाभ्यङ्गं कुर्वीत कटुकैः शृतम् ॥ ३४ ॥

अथ तिलकालकनिदानमाह।

सममुत्सन्नमरुजं मण्डलं कफरक्तजम्।
सहजं लक्ष्म चैकेषां लक्ष्यो जन्तुमणिस्तु सः ॥ ३५ ॥
अवेदनं स्थिरञ्चैव यस्मिन् गात्रे प्रदृश्यते।
माषवत् कृष्णमुत्सन्न मनिलान्माषमादिशेत् ॥ ३६ ॥
कृष्णानि तिलमात्राणि नीरुजानि समानि वा।
वातपित्तकफोद्रेके तान्विन्द्यात् तिलकालकान् ॥ ३७ ॥

अथ चिकित्सामाह।

चर्मकीलं जन्तुमणिं माषकांस्तिलकालकान्।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ ३८ ॥

अथ निदानमाह।

शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः।
जायन्ते पिड़का यूनां विज्ञेया मुखदूषिकाः ॥ ३९ ॥
महद्वा यदि वाल्पं स्याच्छ्यावं वा यदि वा सितम्।

नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥ ४० ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः।
मुखमागम्य सहसा मण्डलं विसृजत्यतः।
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४१ ॥
कृष्णमेवं गुणं गात्रे मुखे वा नीलिकां विदुः ॥ ४२ ॥

अथ चिकित्सामाह।

युवानपिड़कान्यच्छनीलिकाव्यङ्गशर्कराः।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥ ४३ ॥
अङ्गुलस्य चतुर्भागो मुखलेपो विधीयते।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत्।
स्थितिकाले च शुष्कत्वं शुष्को दूषयति त्वचम् ॥ ४४ ॥

इति मुखलेपमात्रा।

रोध्रधान्यवचालेपः तारुण्यपिड़कापहः।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ ४५ ॥
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम्।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ॥ ४६ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका।
लेपः सनवनीतो वा श्वेताश्वखुरजा मषी ॥ ४७ ॥
रक्तचन्दनमञ्जिष्ठा कुष्ठरोध्रप्रियङ्गवः।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ४८ ॥
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च।
व्यङ्गे मञ्जिष्ठया कुर्य्यात् लेपनं मधुसंयुतम् ॥ ४९ ॥
तिलतैलं प्रतिमर्षात् त्रिसप्ताहात् कृताभवम्।
नश्यन्ति चण्डपिड़काः पयोत्था इव घर्मतः ॥ ५० ॥
मातुलुङ्गजटासर्पिः शिलागोशकृतो रसः।
मुखकान्तिकरो लेपः पिड़का व्यङ्गकालजित् ॥ ५१ ॥

परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः ।
मुखकमलकान्तिकारी पिड़कान् तिलकालकान् जयति॥५२
त्रिभुवनविजयापत्रं मूलं स्थविरस्य शिंशपा चैभिः ।
कल्पितमुद्वर्त्तनं वै न्यच्छव्यङ्गापहं सिद्धम् ॥ ५३ ॥
अर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपनात् ।
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ ५४ ॥
गोमयस्य रसः सर्पिः मातुलुङ्गं मनःशिला ।
मुखस्य वर्णकरणं तिलकालकनाशनम् ॥ ५५ ॥
वटस्य पाण्डुपत्राणि मालतीरक्तचन्दनम् ।
कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥ ५६ ॥
युवानपिटिकानान्तु व्यङ्गानाञ्च विनाशनम् ।
मुखं पद्मनिभं कुर्य्यात् नीलिकादिविवर्जितः ॥ ५७ ॥
यवान् सर्जरसं लोध्रमुशीरं चन्दनं मधु ।
घृतं गुड़ञ्च गोमूत्रे पचेदादर्वीलेपनम् ॥ ५८ ॥
तदभ्यङ्गान्निहन्त्याशु नीलिकां व्यङ्गदूषिकाम् ।
मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥ ५९ ॥
कालीयकोत्पलाऽमयदधिसरवरास्थिमध्यफलिनीभिः ।
लिप्तं भवति हि वदनं शशिप्रभं सप्तरात्रेण ॥ ६० ॥
रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाह्वबस्तिपयः ।
सिद्धेन लिप्तमाननमुद्यच्छरदिन्दुबिम्बवद्धि भाति ॥ ६१ ॥
प्रियङ्गुचन्दनं लोध्रं कुष्ठं पाण्डुवटच्छदम् ।
कालीयकान्वितं लेपात् कुर्य्याच्चन्द्रनिभं मुखम् ॥ ६२ ॥
हरिद्राद्वययष्ट्याह्वकालियककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठा पद्मकं कुष्ठकुङ्कुमम् ॥ ६३ ॥
कपित्थतिन्दुकप्लक्षवटपत्रैः पयोऽन्वितैः ।
पाचयेत् कल्कितैरेतैस्तैलं वाभ्यञ्जने चरेत् ॥ ६४ ॥

विप्लवं नीलिकाव्यङ्गतिलकान्मुखदूषिकान्।
नित्यसेवी जयेत् चिप्रं मुखं कुर्य्यान्मनोहरम् ॥ ६५ ॥

इति हरिद्राद्यं तैलम्।

मञ्जिष्ठाकेशरं लाचा मर्षपालोध्रचन्दनम्।
प्रपौण्डरीकं मधुकं पतङ्गं गैरिकं वचा ॥ ६६ ॥
कर्पासास्थिशिलामज्जकर्षैः कल्कैर्वयोऽन्वितैः।
पचेत्तैलस्य कुड़वं मज्जाचीरं चतुर्गुणम् ॥ ६७ ॥
सिद्धेऽवतारिते दद्यात् मधूच्छिष्टं हिरंशकम्।
म्रचयेन्मुखमेतेन सप्तरात्रमतन्द्रितः ॥ ६८ ॥
पिड़कास्तेन शाम्यन्ति तिलका व्यङ्गकालिकाः।
मुखकार्ष्ण्यरजन्तुमणि पद्मिनीकण्टकास्तथा।
मञ्जिष्ठाद्यमिदं तैलं मुखवर्णप्रसाधनम् ॥ ६९ ॥

इति मञ्जिष्ठाद्यं तैलम्।

मधूकस्य कषायेण तैलस्य कुड़वं पचेत्।
कल्कैः प्रियङ्गुमञ्जिष्ठा चन्दनोत्पलकेशरैः ॥ ७० ॥
कनकं नाम तत्तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्गशोधनं परमर्चितम् ॥ ७१ ॥

इति कनकतैलम्।

कुङ्कुमं चन्दनं पत्र सुशीरं चन्दनोत्पलम्।
गोरोचना हरिद्रे हे मञ्जिष्ठा मधुयष्टिका ॥ ७२ ॥
पतङ्गं शारिवालोध्रं कुष्ठं गैरिककेशरम्।
स्वर्णमाचीप्रियङ्गुश्च कालीयं रक्तचन्दनम् ॥ ७३ ॥
एतैरचसमैर्भागैस्तैलप्रस्थं विपाचयेत्।
अभ्यङ्गो राजपत्नीभ्यां ये चान्ये धनिनो नराः ॥ ७४ ॥
तिलकापिड़काव्यङ्गनीलिकामुखदूषिकाः।
शर्कराश्च शरीरस्थ दुश्छायाश्च विसर्पणम् ॥ ७५ ॥

नाशयत्याशु जनयेद्रूपञ्चापि मनोरमम्।
पद्मकेशरवर्णाभं मुखं भवति कान्तिमत्॥ ७६॥

इति कुङ्कुमाद्यं तैलम्।

अथ निदानमाह।

कण्टकैराचितं वृत्तं मण्डलं पाण्डु कण्डुरम्।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम्॥ ७७॥

अथ चिकित्सामाह।

पद्मिनीकण्टके रोगी छर्दयेन्निम्बवारिणा।
तेनैव सिद्धं सक्षौद्रं सर्पिष्पातुं प्रदापयेत्॥ ७८॥
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम्॥ ७९॥

अथ पाददारीनिदानमाह।

परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्॥ ८०॥

अथ चिकित्सामाह।

पाददार्य्यां शिरां प्राज्ञो मोक्षयेत्तलशोधिनीम्।
स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः।
मधूच्छिष्टवसामज्जो घृतैः क्षारविमिश्रितैः॥ ८१॥
सर्जाह्वसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम्।
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम्॥ ८२॥
मधुसिक्थकसैन्धवघृतगुड़महिषाख्यसालनिर्य्यासैः।
गैरिकसहितैर्लेपः पादस्फुटनापहः सिद्धः॥ ८३॥
खाखसजालीमुस्तकहविषा संलिप्य चरणमतिबहुशः।
संमृद्य नयति नाशं पादस्फुटनाह्वयं रोगम्॥ ८४॥
उपोदिकासर्षपनिम्बमोचककर्करुकैर्वारुकभस्मतोयैः।
तैलं विपक्वं लवणांशयुक्तं तत्पाददारीं विनिहन्ति लेपात्॥८५॥

इत्युपोदिकाद्यं तैलम्।

उन्मत्तकस्य नीरेण माणकक्षारवारिणा ।
कटुतैलं विपक्वन्तु शीघ्रं हन्याद्विपादिकाम् ॥ ८६ ॥

इति उन्मत्ततैलम् ।

अथ निदानमाह ।

शर्कंरोन्मथिते पादे क्षते वा कण्टकादिभिः ।
ग्रन्थिः कीलवदुत्सन्नो जायते कदरन्तु तत् ॥ ८७ ॥

अथ चिकित्सामाह ।

देहात्कदरमुद्धृत्य तैलेन दहनेन वा ॥ ८८ ॥

अथ निदानमाह ।

नखमांसमधिष्ठाय वायुः पित्तञ्च देहिनाम् ।
कुरुते दाहपाकौ च तं व्याधिं चिप्यमादिशेत् ॥ ८९ ॥

अथ चिकित्सामाह ।

चिप्यं शोणितमोक्षेण शोधनैश्चाप्युपाचरेत् ।
गतोष्माणं तथा चैनमुष्णाम्बुपरिषेचितम् ॥ ९० ॥
शस्त्रेणापि यथा योगमुत्कृत्य स्रावयेद् व्रणम् ।
व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः ॥ ९१ ॥
शिलातेजोवती चैव रोचनाच रसाञ्जनम् ।
कल्कैरेतैरम्बुपिष्टैः शोधयित्वा व्रणञ्च तत् ॥ ९२ ॥
हरिद्रागुल्मकालीयकल्कैश्च सरसाञ्जनैः ।
सिद्धेन तिलतैलेन ततस्तु रोपयेद् व्रणम् ॥ ९३ ॥
दाड़िमजकुसुमधन्वयासाभयाश्लक्ष्णचूर्णिता क्षिप्ता ।
नखकोटिपूतिभागं शमयति च शूलं तत्क्षणतः ॥ ९४ ॥
अन्तर्धूमनिदग्धस्य हरितालान्वितस्य च ।
तण्डुलीयकमूलस्य चूर्णं पूतिनखापहम् ॥ ९५ ॥
उद्धृत्य कोणात्समुपास्य कल्कं सिक्तं नखं पूयत्वगस्थिमज्जः ।
तैलप्रदानात्सततं नखाश्च रोहन्ति शुद्धा विगतामयाश्च ॥९६॥

स्वरसेन हरिद्रायाः पात्रे क्लत्वायसेऽभयाम्।
पिष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्य पुनः पुनः॥ ९७॥

अथ निदानमाह।

तदेवाल्पतरैर्दोषैः कुनखं परुषं भवेत्॥ ९८॥

तन्त्रान्तरे च।

अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः।
भवेत्तं कुनखं विद्यात् कुलिरमिति संज्ञितम्॥ ९९॥

अथ चिकित्सामाह।

श्लेष्मविद्रधिकल्केन कुनखं समुपाचरेत्॥ १००॥
नखकोटिप्रविष्टेन टङ्कणेन न शाम्यति।
कुनखश्चेत्तदा भ्रान्तः शैलोऽपि प्लवते जले॥ १०१॥
काश्मर्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितैः।
अङ्गुलीवेष्टकः पुंसां ध्रुवमाशु प्रशाम्यति॥ १०२॥

इति कुनखोपक्रमः।

अथ निदानमाह।

छिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ।
दुष्टकर्दमसंस्पर्शादलसन्तं विभावयेत्॥ १०३॥

अथ चिकित्सामाह।

पादौ सिक्ताररणालेन लेपनं त्वलसे हितम्।
कल्कैः कृतैर्निम्बतिल शिलाकासीसरोचनैः॥ १०४॥
लाक्षाभयारसालेपः कार्य्यं वा रक्तमोक्षणम्॥ १०५॥
बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान्।
शिलारोचनकाशीस चूर्णैर्वा प्रतिसारयेत्॥ १०६॥
करञ्जबीजं रजनी काशीसं पद्मकं मधु।
रोचनाहरितालञ्च लेपोऽयमलसे हितः॥ १०७॥

अथ निदानमाह ।

अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि ।
कफासृक् क्रमिकोपेन नृणां विद्यादरूंषिकाम् ॥ १०८ ॥

अथ चिकित्सामाह ।

अरूंषिकां जलौकाभिर्ग्राहयेद्बहुशो भिषक् ।
प्रक्षालयेन्मुहुस्तत्र सैन्धवक्वाथवारिभिः ॥ १०९ ॥

अरूंषिकायां रुधिरेऽवसिक्ते शिराव्यधेनाथ जलौकसा वा ।
निम्बाम्बुसिक्ते शिरसि प्रलेपो देयोऽश्ववर्चो रससैन्धवाभ्याम् ॥ ११०

मुहुर्मुहुस्ततो लिम्पेत् पटोलारिष्टवासकैः ।
खदिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतैः ॥ १११ ॥
कुटजत्वक् च लवणं सम्यक्पिष्टं प्रलेपयेत् ।
गोशकृद्रसपिष्टं वा तालमूलं प्रशस्यते ॥ ११२ ॥
निम्बोदकेन लवणैः प्रलेपोऽश्वशकृद्रसैः ॥ ११३ ॥
पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ।
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरूंषिकाम् ॥ ११४ ॥
कपालभृष्टकुष्ठं वा चूर्णितं तैलसंयुतम् ।
अरूंष्यां लेपनं क्लेददाहास्रज्वरनाशनम् ॥ ११५ ॥
स्नुह्यर्कदुग्धधत्तूरपत्रं मूत्रविमिश्रितम् ।
लेपनं तैलसंयुक्तं हितं कण्डूशिरोव्रणे ॥ ११६ ॥
मुण्डयित्वा शिरः पूर्वं क्रियामेतां प्रयोजयेत् ॥ ११७ ॥
हरिद्राद्वयभूनिम्ब त्रिफलारिष्टचन्दनैः ।
एतत्तैलमरूंषीणां सिद्धमभ्यञ्जने हितम् ॥ ११८ ॥

इति हरिद्राद्यं तैलम् ।

स्नुही सुपरशुच्छिन्ना शालिपर्ण्यजमृत्तिका ।
एतेषां पलिकान् भागान् कर्षं स्यात् केशभस्मतः ॥११९॥
शफरीं विंशतिं तद्यात्तावतीं माक्षिकां क्षिपेत् ।

अरुंषिकां नाशयति जयेद् दुष्टव्रणानपि ॥ १२० ॥
नखदन्तक्षतोत्पन्नान् विच्छिन्नांश्च विसर्पिणः।
अत्यन्तपूयबहुला अस्रावाः कुपिताश्च ये ॥ १२१ ॥
स्वक्षणाच्छोषयेत् ग्रीष्मं पल्लवाम्भोरुहान् यथा।
शोधयेद्रोपयेच्चैव यथातिहितभोजिनः ॥ १२२ ॥

इति सुह्वाद्यं तैलम्।

मांसीस्वरससंसिद्धं कटुतैलं चतुष्पलम्।
मनःशिला तथा मांसं राजीवश्च सगन्धकम् ॥ १२३ ॥
शाणमात्रैस्तदभ्यङ्गाद्धन्त्यवश्यमरुंषिकाम्।
पामां विचर्चिकाञ्चैव तथान्याञ्छिरसो व्रणान् ॥ १२४ ॥

इति मांसीतैलम्।

इन्द्रलुप्तोक्तविधिना तैलेनानेन वा जयेत्।

अथ निदानमाह।

दारुणा कण्डुरा रूक्षा केशभूमिश्च जायते।
कफमारुतकोपेन विद्याद्दारुणकं भिषक् ॥ १२५ ॥

अथ चिकित्सामाह।

दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम्।
अवपीड़शिरोवस्तीनभ्यङ्गांश्चावचारयेत् ॥ १२६ ॥
कोद्रवाणां तृणक्षारपानीयं परिधावने ॥ १२७ ॥
कार्य्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः।
प्रियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥ १२८ ॥
नीलोत्पलस्य किञ्जल्कं धात्रीफलसमन्वितम्।
यष्टीमधुकसंयुक्तं प्रलेपाद्दारुणं जयेत् ॥ १२९ ॥
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन वा।
कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥ १३० ॥

इति गुञ्जातैलम्।

कीचकानां पलैः पिष्टैः कटुतैलं विपाचयेत्।
सगोमूत्रं तदभ्यङ्गात् कपालव्याधिनाशनम्॥ १३१॥

इति कीचकाद्यं तैलम्।

चित्रकं दन्तीमूलञ्च कोशातकीसमन्वितम्।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम्॥ १३२॥

इति चित्रकाद्यं तैलम्।

भृङ्गराजत्रिफलोत्पलशारि लोहपुरीषसमन्वितकारि।
तैलमिदं पचदारुणहारि कुञ्चितकेशघनस्थिरकारि॥ १३३॥

इति भृङ्गराजतैलम्।

अथ निदानमाह।

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥ १३४॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः।
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभावयेत्॥ १३५॥

अथ चिकित्सामाह।

इन्द्रलुप्ते शिरां मूर्ध्नि स्निग्धखिन्नस्य मोक्षयेत्।
कल्कैः समरिचैर्दिह्याच्छिलाकाशीसतुल्यकैः॥ १३६॥
कुटन्नटादारुकल्कलेपनं वा प्रशस्यते॥ १३७॥
तिक्तापटोलीपत्रस्वरसे घृष्ट्वा शमं याति।
चिरकालजापि रुह्या नियतं दिनत्रयादेव॥ १३८॥
अवगाढ़पदं वापि प्रच्छयित्वा पुनः पुनः।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः॥ १३९॥
इन्द्रलुप्तापहो लेपान्मधुना बृहतीरसः।
गुञ्जामूलफलं वापि भल्लातकरसोऽपि वा॥ १४०॥
गुञ्जापत्रं विषं तैलं तिला मधुककाञ्जिकम्।
पतन्त्यनेन नो केशा लेपाद्रोहन्ति चाद्भुतम्॥ १४१॥

गोक्षुरं तिलपुष्पाणि तुल्ये च मधुसर्पिषी।
शिरः प्रलेपितं तेन केशैः समुपचीयते॥ १४२॥
हस्तिदन्तमषीं कृत्वा आजं क्षीरं रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि॥ १४३॥
मधुकेन्दीवरं मूर्व्वा तैलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति केशा दृढ़मूलायता ऋजवः॥ १४४॥
चतुष्पदानां त्वग्रोमनखशृङ्गास्थिभस्मभिः।
तैलाक्ता केशभूमिश्चावृत्ता केशयुता भवेत्॥ १४५॥
शैथिल्ये वापि केशेषु बहुशो व्यधयेच्छिराम्।
मूर्द्ध्नि तैलं प्रकुर्वीत नस्यकर्म्मविरेचनैः॥ १४६॥
मालतीकरवीराग्निनक्तमालैर्विपाचितम्।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तहरं परम्॥ १४७॥
स्नुहीपयः पयोऽर्कस्य लाङ्गलीमार्कवो विषम्।
आजमूत्रं सगोमूत्रं रक्तिका सेन्द्रवारुणी॥ १४८॥
सिद्धार्थकं तीक्ष्णगन्धागर्भं दत्त्वा विपाचितम्।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम्॥ १४९॥
कूर्म्मपृष्ठसमानापि रूक्षा या रोमतस्करी।
दग्धा सानेन जायेत ऋक्षशारीरलोमशा॥ १५०॥

इति क्षुद्रादिखालित्यहरं तैलम्।

तैलं सयष्टीमधुकैः क्षीरे च त्रैफलैः शृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ॥ १५१॥

इति यष्टीमधुकाद्यं तैलम्।

अथ निदानमाह।

क्रोधशोकश्रमकृतः शरीरोष्माशिरोगतः।
पित्तञ्च केशान् पचति पलितं तेन जायते॥ १५२॥

अथ चिकित्सामाह।

धात्रीफलं द्वयं पथ्ये द्वे तथैकां विभीतकीम्।
लोहचूर्णस्य कर्षन्तु दग्धार्द्धं चूतमज्जतः॥ १५३॥
पिष्ट्वा लोहमये पात्रे स्थापयेदुषितं निशाम्।
लेपोऽयं हन्ति न चिरादकालपलितं महत्॥ १५४॥
अयोरजो भृङ्गराजस्त्रिफला कृष्णमृत्तिका।
स्थितमिक्षुरसे मासं समूलं पलितं जयेत्॥ १५५॥
लोहमलामलकल्कैः सजयाकुसुमैर्नरः सदास्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि॥ १५६॥
त्रिफला नीलिकापत्रं लोहभृङ्गरजः समम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम्॥ १५७॥
निम्बस्य बीजानि हि भावितानि भृङ्गस्य तोयेन तथाशनस्य।
तैलञ्च तेषां विनिहन्ति नस्यात् दुग्धान्नभोक्तुः पलितं समूलम्॥१५८

इति निम्बबीजतैलम्।

केतकं भृङ्गनीलीका पार्श्वपुष्पं सबीजकम्।
सहचरं तिलाः कृष्णाः पिण्डीतकमयो रजः॥ १५९॥
अमृता चोत्पलं श्यामा त्रिफलापद्मकर्दमैः।
कल्कैरेभिः पचेत्तैलं त्रिफलाक्वाथमार्कवैः॥ १६०॥
अकालपलितं हन्ति नाशयेदुपजिह्विकाम्।
केशाश्च तेन जायन्ते स्निग्धाश्चाञ्जनसन्निभाः॥ १६१॥

इति केतकादितैलम्।

अञ्जनं मधुकं श्यामा तार्क्ष्यजं शारिवोत्पलम्।
त्रिफला नीलिकापत्रं काशीसं मुस्तकं तिलाः॥ १६२॥
आम्रास्थि तालपत्रञ्च फलं विभीतकस्य च।
जम्ब्वाम्रार्जुनपुष्पाणि कूर्मपित्तं सतुत्थकम्॥ १६३॥
शिंशपा भूतकेशी च मार्कवश्च त्रिकण्टकम्।

पृथक्कर्षसमान् भागान् तथा लोहरजः समम् ॥ १६४ ॥
तैलप्रस्थमजाक्षीरं धात्रीभृङ्गरसाढ़कम्।
असनकस्य रसस्यापि लोहपात्रे विपाचयेत् ॥ १६५ ॥
पक्वं तल्लोहभाण्डस्थं शिरसोऽभ्यङ्गनस्ययोः।
यत्नेन योजयेत्तैलं वराङ्गे विनिपातयेत् ॥ १६६ ॥
पतन्ति विन्दवो यत्र कृष्णं तदुपजायते।
भवन्ति कुटिलाः शीघ्रं कचाः षट्पदकोपमाः ॥ १६७ ॥
खालित्यं पलितञ्चैव इन्द्रलुप्तञ्च नाशयेत्।
मध्यं चक्षुष्यमायुष्यं बलवर्णकरं परम्।
नीलविन्द्विति विख्यातं विश्वामित्रेण पूजितम् ॥ १६८ ॥

इति नीलविन्दुतैलम्।

काश्मर्य्यार्जुनजम्बू सहचरकुसुमानि चूतफलमध्यम्।
पिण्डीतकफलत्रिफलातैलस्य फलाष्टकं विपाचयेत् ॥ १६९ ॥
दत्त्वा पयश्चतुर्गुण मम्बुभृङ्गस्य मधुकफलरसमिश्रम्।
सिद्धेन तेन दिग्धा भवन्ति धवलाप्यलिकुलनिभाः ॥ १७० ॥
कुन्देन्दुशङ्खधवलैश्चितमपि केशैः शीर्षं मासेन।
अञ्जनभृङ्गश्यामं भवति सदा नस्यतोऽब्दशतम् ॥ १७१ ॥

इति काश्मर्य्याद्यं तैलम्।

काश्मर्य्या मूलमादौ सहचरकुसुमं केतकीनाञ्च मूलं
सायश्चूर्णं सभृङ्गं त्रिफलजलयुतं तैलमेभिः पचेद्यः।
कृत्वा लोहस्य भाण्डे क्षितितलनिहितं स्थापयेन्मासमेकम्
केशाः काशप्रकाशा भ्रमरकुलनिभा स्नक्षणादेव भान्ति ॥१७२॥

इति केशरञ्जनतैलम्।

केतकी त्रिफला दार्वी तत्फलं मदनत्वचः।
आम्रास्थिमज्जकुष्ठञ्च तिला भृङ्गरसोऽञ्जनम् ॥ १७३ ॥
पिण्डीतकमयश्चूर्णं नीलीपङ्कञ्च पद्मजम्।

कल्कैरेतैः पचेत्तैलं वचाभृङ्गरसेन तु ॥ १७४ ॥
शिरोऽभ्यङ्गात्प्रणश्यन्ति दारुणं चेन्द्रलुप्तकम् ।
अकालपलितं कण्डू लूतिकां दद्रुमेव च ॥ १७५ ॥
करोति कुञ्चितान् केशान् भ्रमरोदरसन्निभान् ।
केतकाद्यमिदं नाम्ना विदेहादिप्रकीर्त्तितम् ॥ १७६ ॥

इति केतकाद्यं तैलम् ।

शिखिपित्तविशाम्नास्थि मदयन्त्यञ्जनोत्पलैः ।
सनीलभृङ्गकाशीसैस्तक्रे तैलं विपाचयेत् ॥ १७७ ॥
लोहभाण्डे स्थितं मासमकालं पलितं जयेत् ॥ १७८ ॥

इति मयूरपित्ताद्यं तैलम् ।

क्षीरात्समार्कवरसाद्विप्रस्थं मधुके पले ।
विपचेत्तैलकुड़वं तन्नस्यं पलितापहम् ॥ १७९ ॥

इति मधुकतैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ।
सर्वान् मूर्द्धगतान् हन्ति पलितानि च शीलितम् ॥१८०॥

इति प्रपौण्डरीकाद्यं तैलम् ।

अथ निदानमाह ।

कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १८१ ॥
सप्ताहाद्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ।
तामग्निरोहिणीं विद्यात् असाध्यां सान्निपातिकीम्॥१८२॥

अथ चिकित्सामाह ।

पित्तवीसर्पविधिना साधयेदग्निरोहिणीम् ।
रोहिण्यां लङ्घनं कुर्य्याद्रक्तमोक्षं विरूक्षणम् ।
शरीरस्य च संशुद्धिस्तां त्यजेद्दर्धितां पुनः ॥ १८३ ॥

अथ निदानमाह ।

ग्रीवां सकक्षां करपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः ।
ग्रन्थिः सवल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ॥१८४
मुखैरनेकैः स्रुततोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात्॥१८५

अथ चिकित्सामाह ।

शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ।
विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥ १८६ ॥
वल्मीकन्तु भवेद्यस्य नातिवृद्धस्य मर्मजम् ।
तत्र संशोधनं कृत्वा शोणितं मोचयेद्भिषक् ॥ १८७ ॥
कुलत्थकाया मूलैश्च गुडूच्या लवणेन वा ।
आरग्वधस्य मूलैश्च दन्तीमूलैस्तथैव च ॥ १८८ ॥
श्यामामूलैः सपललैः सक्तुमिश्रैः प्रलेपयेत् ।
सुस्निग्धैश्च सुखोष्णैर्वा भिषक्तमुपनाहयेत् ॥ १८९ ॥
पक्वं वातं विजानीयाद् गताः सर्वा यथाक्रमम् ।
अभिज्ञाय ततश्छित्वा प्रदहेन्मतिमान् भिषक् ॥ १९० ॥
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ।
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक् ॥ १९१ ॥
मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ।
जातिपल्लवतर्कैश्च निम्बतैलं विपाचयेत् ॥ १९२ ॥
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम् ।
पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतम् ।
वल्मीकं यत्सशोफं स्याद्वर्ज्यं तत्तु विजानता ॥ १९३ ॥

इति मनःशिलाद्यं तैलम् ।

अथ निदानमाह ।

प्रवाहनातिसाराभ्यां निर्गच्छति गुदो वहिः ।

रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ १९४ ॥

अथ चिकित्सामाह ।

गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत् ।
प्रविष्टं रोहयेद्यत्नाद् गव्यं सच्छिद्रचर्मणा ॥ १९५ ॥
पद्मिनीकोमलं पत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ १९६ ॥
गुदञ्च गव्यवसया म्रक्षयेदसकृन्नरः ।
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥ १९७ ॥
मूषकाणां वसाभिर्वा गुदभ्रंशे प्रलेपनम् ।
सुस्विन्नमूषिकामांसेनाथवास्वेदयेत् गुदम् ॥ १९८ ॥
वृक्षाम्लानलचाङ्गेरी विल्वं पाठा यवाग्रजम् ।
तक्रेण शीलयेत्पायुभ्रंशार्त्तोऽनलदीपनम् ॥ १९९ ॥
मूषिका कुड़वं मांसं चित्रकस्य पलं तथा ।
दशमूलपलानाञ्च पलं भल्लातकस्य च ॥ २०० ॥
त्रिफलायाः पलञ्चैषां कल्कं दत्वा चतुर्गुणे ।
क्षीरे तैलं पचेत्प्रस्थमभ्यङ्गाच्च प्रशाम्यति ॥ २०१ ॥
गुदनिःसरणं शूलं दुष्टव्रणविशोधनम् ।
मूषकाद्यमिदं तैलं कृष्णात्रेयेण पूजितम् ॥ २०२ ॥

इति मूषकाद्यं तैलम् ।

मूषिकामांसकुड़वं दशमूलं पलोन्मितम् ।
चित्रस्य द्वे पले वापि निष्क्वाथ्याष्टगुणेऽम्भसि ॥ २०३ ॥
पादशेषेण तेनैव तैलप्रस्थं पयः समम् ।
जीवनीयप्रतिवापं पाचयेन्मृदुनाग्निना ॥ २०४ ॥
अभ्यङ्गान्नाशयत्याशु गुदभ्रंशं सुदारुणम् ।
भगन्दरं गुदे शूलं नाड़ीदुष्टव्रणापहम् ॥ २०५ ॥

इति द्वितीयमूषकाद्यं तैलम् ।

निरन्त्रं मूषिकं पक्का पञ्चमूलपयोयुतम्।
तैलं वातहरैः सिद्धं गुदभ्रंशहरं परम्॥ २०६॥
तुल्यमंशं समादय पञ्चमूलाम्बुमांसयोः।
क्षीरपाकविधानेन विपाच्यैतत्समाहितः।
पश्चाद्वातहरैः कल्कैः पक्तव्यं मूषकादिकम्॥ २०७॥

इति तृतीयमूषकाद्यं तैलम्।

मूषकाणां पलशतं जलद्रोणे विपाचयेत्।
पादशेषे पचेत्तैलं दुग्धं तैलचतुर्गुणम्॥ २०८॥
मूषिकाणां शिरः कल्कं वस्तावभ्यञ्जने हितम्।
गुदनिःसरणे शूले रक्तस्रावे च तद्धितम्॥ २०९॥

इति चतुर्थमूषकाद्यं तैलम्।

अथ निदानमाह।

सदाहो रक्तपर्य्यन्तस्त्वक्पाकी तीव्रवेदनः।
कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रकः॥ २१०॥

अथ चिकित्सामाह।

सर्षपरजनीकल्कस्तालमूलीसंयुतो लेपात्।
शमयति शूकरदंष्ट्रं पिड़िकादाहान्वितं पुंसाम्॥ २११॥
भृङ्गराजस्य मूलस्य रजन्या सहितस्य च।
चूर्णञ्च सहसा लेपाद्वराहद्विजनाशनम्॥ २१२॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम्।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम्॥ २१३॥
सूर्य्यावर्त्तजटां सूर्य्यवारिणोत्पाद्य बुद्धिमान्।
पिष्ट्वा भृङ्गाम्बुना लेपाद्वराहद्विजनाशनम्॥ २१४॥
विसर्पोक्तः प्रतीकारः कार्य्यः शूकरदंष्ट्रयोः॥ २१५॥
मूलकबीजमुद्धृत्य चोन्मत्तकदलानि तु।
सूर्य्यावर्त्तशुकाख्याञ्च मिथ्यावीरसपाचितम्॥ २१६॥

तैलं मेध्याविकं नाम वराहद्विजनाशनम् ।
कण्डूकुष्ठप्रशमनं कृच्छ्रं दद्रुविनाशनम् ॥
बलवर्णकरञ्चैव कृष्णात्रेयेण भाषितम् ॥ २१७ ॥

इति मेध्याविकतैलम् ।

अथ निदानमाह ।

मर्दनात्पीड़नाद्वापि तथैवाप्यभिघाततः ।
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ २१८ ॥
तदा वातोपसृष्टत्वाच्चर्म तत्परिवर्त्तते ।
अवेदनः सदाहश्च पाको वर्द्धति चासकृत् ॥ २१९ ॥
मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते ।
परिवर्त्तिकेति तां विद्यात् सरुजां चार्त्तिसम्भवाम् ॥
सकण्डू कठिना वापि सैव श्लेष्मसमुत्थिता ॥ २२० ॥

अथ चिकित्सामाह ।

परिवर्त्तीं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् ।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः साल्वनादिभिः ॥ २२१ ॥
ततोऽभ्यज्य शनैश्चर्म वेशयेत्पीड़येन्मणिम् ।
प्रविष्टे चर्मणि मणौ स्वेदयेदुपनाहनैः ॥ २२२ ॥
दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥२२३॥

अथ निदानमाह ।

अल्पीयःखां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नरः ।
हस्ताभिघातादथवा चर्मण्युद्वर्त्तते बलात् ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥ २२४ ॥
वातात्परुषा रूक्षाभा सूक्ष्मा कृष्णा रुगन्विता ।
पित्तात्सपीता रक्ताभा दाहतृष्णासमन्विता ।
श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना ॥ २२५ ॥

अथ चिकित्सामाह।

स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम् ॥ २२६ ॥

अथ निदानमाह।

वातोपसृष्टे मेढ्रे च चर्म संश्रयते मणिम्।
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥ २२७ ॥
निरुद्ध प्रकशे तस्मिन् मन्दधारमवेदनम्।
मूत्रं प्रवर्त्तते जन्तोर्मणिर्विव्रियते न च ॥
निरुद्धप्रकशं विद्यात्सरुजं वातसम्भवम् ॥ २२८ ॥

अथ चिकित्सामाह।

निरुद्धप्रकशे नाड़ीं लौहीमुभयतो मुखीम्।
दारवीं वा जतुकृतां सघृतां वा प्रवेशयेत् ॥ २२९ ॥
परिषिञ्चेद्वसां मज्जां शिशुमारवराहयोः।
चुक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥ २३० ॥
त्र्यहात् स्थूलपरां सम्यङ्नाड़ीं मार्गे प्रवेशयेत्।
स्रोतः प्रवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत् ॥
भित्वा वा सेवनीं मुक्ता सद्यः क्षतवदाचरेत् ॥ २३१ ॥

अथ निदानमाह।

वेगसन्धारणाद्वायुर्विहतो गुदसंश्रितः।
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ २३२ ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति।
सन्निरुद्धगुदं व्याधि मेनं विन्द्यात् सुदुस्तरम् ॥ २३३ ॥

अथ चिकित्सामाह।

सन्निरुद्धगुदे तैलैः सेको वातहरैः हितः।
तथा निरुद्धप्रकाशक्रमः कार्य्यो विजानता ॥ २३४ ॥

अथ निदानमाह।

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्।

स्विन्नेवास्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥ २३५ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥ २३६ ॥

अथ चिकित्सामाह।

ततः संशोधनैः पूर्वं धात्रीस्तन्यं विशोधयेत् ॥ २३७ ॥
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा।
शङ्खसौवीरयष्ट्याह्वैर्लेपः कार्य्योऽहिपूतने ॥ २३८ ॥
कण्डूरक्तोत्कटे कुर्य्याद्रक्तस्रावं जलौकसा।
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ॥ २३९ ॥
कासीसरोचना तुत्थ हरितालरसाञ्जनैः।
अम्लपिष्टैः प्रलेपोऽयं व्रणकण्डूहिपूतने ॥ २४० ॥
पटोलपत्रत्रिफला रसाञ्जनविपाचितम्।
पीतं घृतं नाशयति कृच्छ्रमप्यहिपूतनम् ॥ २४१ ॥

इति पटोलघृतम्।

अथ निदानमाह।

स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः।
यदा प्रक्लिद्यते स्वेदात्कण्डूं जनयते तदा ॥ २४२ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते।
प्राहुर्वृषणकच्छुं तां श्लेष्मरक्तप्रकोपजाम् ॥ २४३ ॥

अथ चिकित्सामाह।

भिषक् वृषणकच्छुं तु चिकित्सेत्पामरोगवत्।
अहिपूतननिर्दिष्टक्रिययापि च तां हरेत् ॥ २४४ ॥
सर्जाह्वकुष्ठसैन्धव सितसिद्धार्थैः प्रकल्पितो योगः।
उद्वर्त्तनेन नियतं शमयति वृषणकण्डूतिम् ॥ २४५ ॥

अथ निदानमाह।

समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्त्तितम् ॥ २४६ ॥

कट्वीकापालिकामूलं पूतीकं सैन्धवं तथा।
शम्बूकेन श्लक्ष्णपिष्टं चर्मकीलकनाशनम्॥ २४७॥
प्रायेण क्षुद्ररोगेषु शस्त्रक्षारानलक्रिया।
लेपनं शोणितस्रावमिति सामान्यसंग्रहः॥ २४८॥

इति वङ्गसेनसङ्कलितः क्षुद्ररोगनिदानचिकित्साधिकारः समाप्तः।

---

## अथ मुखरोगनिदानमाह।

मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु च।
तत्र चायतनान्योष्ठौ दन्ता दन्तासनं तथा॥ १॥
तालु कण्ठश्च जिह्वा च मुखं सर्वञ्च सप्तमम्॥ २॥
आनूपपिशितक्षीरदधिमाषादिसेवनात्।
मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषाः कफोत्तराः॥ ३॥
कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ।
दाल्येते परिपाठ्येते चोष्ठौ मारुतकोपतः॥ ४॥
चीयते पीड़िकाभिश्च सरुजाभिः समन्ततः।
सदाहपाकपीड़िकौ पीताभासौ च पित्ततः॥ ५॥
सवर्णाभिस्तु चीयेते पीड़िकाभिरवेदनौ।
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू॥ ६॥
सकृत् कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च।
सन्निपातेन विज्ञेयावनेकपीड़िकान्वितौ॥ ७॥
खर्जूरफलवर्णाभिः पीड़िकाभिर्निपीड़ितौ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ॥ ८॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुन्नतौ।
क्रमयश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात्॥ ९॥
सर्पिर्मण्डप्रतिकाशौ मेदसा कण्डुरौ गुरू।

स्वच्छं स्फटिकसङ्काशमास्रावं स्रवतो भृशम् ॥
तयोर्व्रणं न संरोहेन्मृदुत्वं न च गच्छति ॥ १० ॥
ओष्ठौ पर्य्यवदीर्य्येते पाट्येते चाभिघाततः ।
ग्रथितौ च तथा स्याताम् ओष्ठौ कण्डूसमन्वितौ ॥ ११ ॥

अथ चिकित्सामाह।

मुखदन्तमूलदशनच्छदेषु रोगाः कफास्रभूयिष्ठाः ।
तस्मात्तेषामसकृद्रुधिरं विस्रावयेद् दुष्टम् ॥ १२ ॥
स्नेहांस्तथोष्णान् परिषेकलेपान् घृतस्य पानं रसभोजनञ्च ।
अभ्यञ्जनस्वेदनलेपनानि चौष्ठे विदध्यात्पवनाभिभूते ॥ १३ ॥
चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ।
वातजेऽभ्यञ्जनं कुर्य्यान्नाड़ीस्वेदञ्च बुद्धिमान् ॥ १४ ॥
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ।
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते ॥ १५ ॥
तैलं घृतं सर्जरसं ससिक्थं रास्नागुड़ं सैन्धवगैरिकञ्च ।
पक्वं समांशं दशनच्छदानां त्वग्भेदहन्तृ प्रवदन्ति लेपम् ॥१६॥
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च ।
यष्टीमधुकचूर्णञ्च विदध्यात्प्रतिसारणम् ॥ १७ ॥
वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च ।
शीतान् प्रदेहान् परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्य्यात् ॥१८॥
रक्तपित्तोपघातोत्थे जलौकाभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥ १९ ॥
शिरोविरेचनं धूमं स्वेदः कवल एव च ।
हृते रक्ते प्रयोक्तव्यमोष्ठपाके कफात्मके ॥ २० ॥
त्रिकटुस्वर्जिकाक्षारः क्षारश्च यवशूकजः ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ २१ ॥
शूलं विवर्णं सलसीकमोष्ठं सकण्डूरं तीव्ररुजं प्रवातम् ।

लिखेच्च फेनद्विपलासबालैर्निष्पीड्य वातक्षतसारणे वा ॥ २२ ॥
जीवन्तिकल्कं पयसा समांशं तैलं विपक्वा मधुना विमिश्रम् ।
ओष्ठास्ययोः सर्जरसाष्टभागं व्रणं निहन्यात् सकृदेव लेपात् ॥२३

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं लेपने हितम् ॥ २४ ॥
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ।
एतद्दोषप्रकोपाणां साध्यानां कर्म कीर्त्तितम् ॥ २५ ॥
खिन्नं क्षतोष्ठमुल्लिख्य पीड़येत् सुसमाहितः ।
शतधौतघृताभ्यक्तं दद्यात्कवलिकाकृते ॥ २६ ॥
क्लिन्नव्रणे च तत्सर्वं त्यक्त्वा व्रणवदाचरेत् ॥

इत्योष्ठगतदोषोपक्रमः ।

अथ सामान्यमुखरोगलक्षणमाह ।

मुखामये मारुतजेतु शोषकार्कश्यरौक्ष्याणि चलारुजश्च ।
कृष्णारुणं निष्प्रुतनं सशैत्यं प्रस्पन्दनं स्रंसनतोददाहाः ॥ २७ ॥
तृष्णाज्वरस्फोटकदाहपाका धूमायनं चास्यविदीर्णता च ।
पित्तात्समूर्च्छा विविधा रुजश्च मुखं च पीतारुणवर्णयुक्तम् ॥२८॥
कण्डूगुरुत्वं सितवज्जलत्वंस्नेहोऽरुचिर्जाड्यकफप्रसेके ।
उत्क्लेशनं दालनभावतन्द्रा रुजश्च मन्दाः कफवक्त्ररोगे ॥२९॥
द्विदोषलिङ्गानि भवन्ति यत्र द्विदोषजो वक्त्रगदः स वेद्यः ।
लिङ्गानि सर्वाणि मुखे च यस्य भवन्ति तस्यैव तु सन्निपातात् ॥३०

इति तन्त्रान्तरात् सामान्यलक्षणमुक्तम् ।

अथ दन्तवेष्टरोगनिदानमाह ।

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ ३१ ॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ ३२ ॥

दन्तयोस्त्रिषु वा यस्य जायते श्वयथुर्महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ ३३ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ ३४ ॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥ ३५ ॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञकः ॥ ३६ ॥
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ ३७ ॥
वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ।
अत्यर्दिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥ ३८ ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ।
यस्मिन् सोपकुशोनाम पित्तरक्तकृतो गदः ॥ ३९ ॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
भवन्ति चञ्चला दन्ताः स वैदर्भोऽभिघातजः ॥ ४० ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खल्लिवर्द्धनसंज्ञोऽसौ सञ्जाते रुक् च शाम्यति ॥ ४१ ॥
शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।
कमालान् विकटान् दन्तान् करालो न च सिध्यति ॥४२॥
हानव्ये पश्चिमे दन्ते महाञ्छोथो महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ ४३ ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ ४४ ॥

अथ दन्तरोगनिदानमाह ।

दीर्य्यमाणेष्विव रुजा भृशं दन्तेषु जायते ।
दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ ४५ ॥

कृष्णच्छिद्रश्चलस्रावी ससंरम्भो महारुजः।
अनिमित्तरुजो वातात् स ज्ञेयः कृमिदन्तकः॥ ४६॥
वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः॥ ४७॥
शीतरूक्षप्रवाताम्ल स्पर्शानामसहा द्विजाः।
पित्तमारुतकोपेन दन्तहर्षः स नामतः॥ ४८॥
दन्तमांसमलैः सास्रैर्बाह्यतः श्वयथुर्महान्।
सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः॥ ४९॥
मलो दन्तगतो यस्तु कफमारुतशोषितः।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा॥ ५०॥
कपालेष्विव दीर्य्यन्तु दन्तानां सैव शर्करा।
कपालिकेति सा ज्ञेया सदा दन्तविनाशिनी॥ ५१॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः॥ ५२॥
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥ ५३॥

अथ निदानमाह।

सामान्येन निदानेन ये निर्दिष्टा मुखामयाः।
तान् विदित्वा त्विदं कुर्य्याद्यथास्वं भेषजक्रियाम्॥ ५४॥
तेजोह्वा मागधीमूलं समङ्गा कटुका घनम्।
पाठा ज्योतिष्मती लोध्रं दार्वीकुष्ठञ्च चूर्णयेत्॥ ५५॥
दन्तानां घर्षणं कण्डू रक्तस्रावरुजापहम्॥ ५६॥
शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निष्क्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्।
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम्॥ ५७॥
काशीसं लोध्रं कृष्णा मनःशिला सप्रियङ्गु तेजोह्वा।
एषां चूर्णं मधुयुक् शीतादे पूतिमांसहरम्॥ ५८॥

प्रपौण्डरीकं मधुकं त्रिफलोत्पलसाधितम् ।
तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते ॥ ५९ ॥
कुष्ठं दार्वीं लोध्रमब्दं समङ्गा पाठा तिक्ता तेजनी पीतिका च ।
चूर्णं शस्तं घर्षणं तद्द्विजानां रक्तस्रावं हन्ति कण्डूं रुजाश्च॥६०॥
पाठा लोध्रसमङ्गा पर्पटगदतेजनीनिशायुगलैः ।
कण्डूं रुक्स्रावयुतं चूर्णीकृतैर्विघर्षयेच्छूच्यैः ॥ ६१ ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ।
शिरोविरेकश्च हितो नस्यं स्निग्धञ्च भक्षणम् ॥ ६२ ॥
तिलभववीजपावकसिततरसिद्धार्थकल्पितः कवलः ।
उष्णाम्बुसंप्रयुक्तो द्विजतलसञ्जातशोथहरः ॥ ६३ ॥
विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत् ।
लोध्रपतङ्गमधुकलाक्षाचूर्णैः मधूत्तरैः ॥ ६४ ॥
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ ६५ ॥
चलदन्तस्थिरकरं कार्य्यं वकुलचर्वणम् ॥ ६६ ॥
भद्रमुस्ताभयाव्योष विड़ङ्गारिष्टपल्लवैः ।
गोमूत्रपिष्टैर्वटिकां छायाशुष्कां प्रकल्पयेत् ॥ ६७ ॥
तां निधाय मुखे सुप्याच्चलदन्तातुरो नरः ।
नातःपरतरं किञ्चिच्चलद्दन्तस्य भेषजम् ॥ ६८ ॥

इति भद्रमुस्तादिवटिका ।

दशमूलीकषायेण तैलं वा घृतमेव च ।
विपक्वं कवले शस्तं सक्षौद्रं दन्तधावने ॥ ६९ ॥
दन्तचाले दन्तहर्षे मुखरोगे च वातिके ।
सुखोष्णमथवा शीतं तैलकल्कोदकं हितम् ॥ ७० ॥
शौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः ।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ७१ ॥
माक्षिकं पिप्पली सर्पिः मिश्रितं धारयेन्मुखे ।

दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम् ॥ ७२ ॥
हिङ्गुकट्फलकाशीसस्वर्जिकाकुष्ठवल्कजम्।
रदरुजं जयत्याशु वक्त्रस्थं दशने धृतम् ॥ ७३ ॥
शारिवोत्पलयष्ट्याह्वशारिवागुरुचन्दनैः।
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ॥ ७४ ॥
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः।
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा ॥ ७५ ॥
काकोदुम्बरिकापत्रैर्व्रणं विस्रावयेद्भिषक्।
लवणैः क्षौद्रयुक्तैश्च सव्योषैः प्रतिसारयेत् ॥ ७६ ॥
पिप्पली सर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन संसृष्टं कवलञ्चापि धारयेत् ॥ ७७ ॥
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः।
क्षौद्रद्वितीयाः पिप्पल्याः कवलश्चात्र कीर्त्तितः ॥ ७८ ॥
पटोलनिम्बत्रिफला कषायश्चात्र धावने।
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥ ७९ ॥
नाड़ीव्रणहरं कर्म दन्तनाड़ीषु कारयेत्।
यद्दन्तमध्ये जायेत नाड़ी तं दन्तमुद्धरेत् ॥ ८० ॥
छित्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत्।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥ ८१ ॥
भिन्नत्युपेक्षिते दन्ते हनुकास्थिगतिर्ध्रुवम्।
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च ॥ ८२ ॥
उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते।
रक्तातियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥ ८३ ॥
काणः सञ्जायते जन्तुरर्दितं चास्य जायते।
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ॥ ८४ ॥
धावने जातिमदन स्वादुकण्टकखादिरम् ॥ ८५ ॥

कषायं जातिमदनकण्टकी स्वादुकण्टकैः ।
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि तत्कृतम् ।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥ ८६ ॥
कषायं परतः कृत्वा पिष्ट्वा लोध्रादिकल्कितम् ।
कण्टकीमदनो योज्यः स्वादुकण्टो विकङ्कतः ॥ ८७ ॥
एभिः कृतं कषायमपि नाड़ीधावनार्थं योज्यम् ।

इति जात्यादितैलम् । इति दन्तवेष्टोपक्रमः ।

अथ दन्तोपक्रममाह ।

सुखोष्णाः स्नेहकवलाः सर्पिषस्त्रिवृतस्य च ।
निर्यूहश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ ८८ ॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ।
रसो रसयवाग्वश्च चीरं सन्तानिका घृतम् ॥
शिरोवस्ति हितश्चापि क्रमो यश्चानिलापहः ॥ ८९ ॥
दन्तानां तोदहर्षौ तु जायेते वाततस्तयोः ।
उष्णतैलाज्यवातघ्ननिर्यूहाः कवलग्रहाः ॥ ९० ॥
अहिंसन्दन्तमूलानि शर्करामुद्धरेद्भिषक् ।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥ ९१ ॥
दन्तहर्षक्रिया चापि कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिताः ॥ ९२ ॥
कृमिदन्तकमादौ तु सकृमिं गुड़पूरणम् ।
दहेच्छलाकया चीरमार्कवं कृमिनाशनम् ॥ ९३ ॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ।
तथावपीड़ैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥ ९४ ॥
भद्रदार्वादिवर्षाभू लेपैः स्निग्धैश्च भोजनैः ।
कृमिदन्तापहं कोष्णं हिङ्गुदन्तान्तरे स्थितम् ॥ ९५ ॥
बृहती भूमिकादम्बी पञ्चाङ्गुलकण्टकारिका क्वाथः ।

गण्डूषस्तैलयुत: क्रमिदन्तकवेदनाशमन: ॥ ९६ ॥
नीलीवायसजङ्घास्नुक् दुग्धीनान्तु मूलमेकैकम्।
सञ्चर्व्य दशनविधृतं दशनक्रमिपातनं प्राहु: ॥ ९७ ॥
वीजपूरकमूलस्य वाकूचीनां तथैव च।
भागाभ्यां तु समं कृत्वा पिष्ट्वा वर्त्तिन्तु कारयेत् ॥ ९८ ॥
एषा रदस्थवर्त्तिस्तु दन्तैर्दन्तैर्निपीड़येत्।
सद्योऽवस्थितमात्रा तु क्रमिदन्तरुजापहा ॥ ९९ ॥
दन्तीसुवर्णदुग्धा कासीसविड़ङ्गवत्सकफलानाम्।
चूर्णैरर्कस्नुह्यो: पयोभिर्वा पूरणं श्रेष्ठम् ॥ १०० ॥
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च।
ततो विदारीयष्ट्याह्व शृङ्गाटककसेरुभि: ॥
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥ १०१ ॥

इति विदार्य्यादितैलम्।

हनुमोक्षे समुद्दिष्टां कुर्य्यादर्दितवत् क्रियाम् ॥ १०२ ॥
वकुलस्य फलं लोध्रं वज्रवल्लीकुरण्टकम्।
चतुरङ्गुलवव्वोल वालिकर्णारिमाशनम् ॥ १०३ ॥
तेषां तु क्वाथकल्काभ्यां तैलं पक्वं मुखे धृतम्।
स्थैर्य्यं करोति दन्तानां चलतां पवनेन च ॥ १०४ ॥

इति वकुलाद्यं तैलम्।

तुलां धृतां नीलसहाचरस्य द्रोणेऽम्भस: संश्रययेद्यथावत्।
पूते चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तै: ॥ १०५ ॥
कल्कैरनन्ता खदिरा च मेदा जम्ब्वाम्रयष्टीमधुकोत्पलानाम्।
तत्तैलमाश्वेव धृतं मुखेन स्थैर्य्यं द्विजानां विदधाति सद्य: ॥१०६॥

इति सहचराद्यं तैलम्।

उभे हरिद्रे पिप्पल्य: सैन्धवं देवदारु च।
विड़ङ्गं चित्रकं विल्वं रोहिषस्य च पल्लवा: ॥ १०७ ॥

गन्धं सौवर्चलं द्राक्षा मञ्जिष्ठा मधुकं बला।
वेतसस्य च मूलानि पद्मकोशीरचन्दनैः ॥ १०८ ॥
विल्वप्रमाणैः कल्कैस्तु तैलप्रस्थं विपाचयेत्।
द्विगुणं च पयो दद्यात् तत्सिद्धं नश्यतां नयेत् ॥ १०९ ॥
श्लेष्मजं सन्निपातोत्थं शिरोरोगं नियच्छति।
उपजिह्वां च मालाञ्च कण्ठशालूकमर्वुदम् ॥ ११० ॥
विदारिकां मांसपाकं मुखशोकं गलग्रहम्।
दन्तचालं हनुस्तम्भं तैलमेतन्नियच्छति ॥ १११ ॥

इति हरिद्राद्यं तैलम्।

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत्।
चतुर्गुणमितैः क्वाथैर्द्रव्यैश्च पलसंमितैः ॥ ११२ ॥
लोध्रकट्फलमञ्जिष्ठा पद्मकेशरपद्मकैः।
चन्दनोत्पलयष्ट्याह्वैः तैलं गण्डूषधारणम् ॥ ११३ ॥
दालनं दन्तचालञ्च दन्तमोक्षं कपालिकाम्।
शीतादं पूतिवक्त्रञ्च ह्यरुचिं विरसास्यताम् ॥ ११४ ॥
हन्यादाशु गदानेतान् कुर्य्याद्दन्तानपि स्थिरान्।
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥ ११५ ॥

इति लाक्षाद्यं तैलम्।

इरिमेदत्वक् पलशतमभिनवमापोथ्य खण्डशः कृत्वा।
तोयाढ़कैश्चतुर्भिः निःक्वाथ्यश्चतुर्थशेषेण ॥ ११६ ॥
क्वाथेन तेन मतिमां स्तैलस्यार्द्धाढ़कं पचेच्छनकैः।
कल्कैरक्षसमांशैर्मञ्जिष्ठा लोध्रमधुकानाम् ॥ ११७ ॥
इरिमेदखदिरकट्फल लाक्षान्यग्रोधमुस्तसूक्ष्मैला।
कर्पूरागुरुपद्मकलवङ्गकङ्कोलजातीनाम् ॥ ११८ ॥
फलपतङ्गगैरिकवराङ्गगजकुसुमधातकीनाञ्च।
सिद्धं भिषक् विदध्यादिदं मुखोत्थेषु रोगेषु ॥ ११९ ॥

परिशीर्णदन्तविद्रधि शौषिरशीतादृदन्तहर्षेषु।
क्रमिदन्तदरणचलित प्रदुष्टमांसावशीर्णेषु ॥ १२० ॥
मुखदौर्गन्ध्येषु च कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम्।

इति इरिमेदाद्यं तैलम्।

खदिरस्य तुलां सम्यग् जलद्रोणे विपाचयेत्।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥ १२१ ॥
जातिकर्पूरपूगानि कङ्कोलकफलानि च।
इत्येषा गुटिका कार्य्या मुखसौभाग्यवर्धिनी ॥
दन्तौष्ठगलरोगेषु जिह्वा ताल्वामयेषु च ॥ १२२ ॥

इति स्वल्पखदिरवटिका।

गायत्रिसारतुलयारिमवल्कलानां
सार्द्धं तुलायुगलमम्बुघटैश्चतुर्भिः।
निःक्वाथ्य पादमवशेष सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन ॥ १२३ ॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
स्लक्ष्णं क्षिपेच्च कवलग्रहभागिकानाम्।
एलामृणालसितचन्दनचन्दनानां
श्यामातमालविकसानललोहयष्टी ॥ १२४ ॥
लज्जाफलत्रयरसाञ्जनधातकीनां
श्रीपुष्पगैरिककटाह्वयकट्फलानाम्।
पद्माह्वलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥ १२५ ॥
कङ्कोलजातिफलकोशलवङ्गकानां
चूर्णीकृतानि विदधीत पलांशकानाम्।
शीतेऽवतार्य्य घनसारचतुष्पलञ्च
क्षिप्त्वा कलायसदृशीं गुटिकां प्रकुर्य्यात् ॥ १२६ ॥

शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाधरतालुजातान्।
कुर्य्यान्मुखे सुरभितां पटुतां रुचिञ्च
स्थैर्य्यान्वितञ्च दशनं रसनालघुत्वम् ॥ १२७ ॥

इति महाखदिरवटिका।

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ १२८ ॥

इति दन्तरोगोपक्रमः।

अथ जिह्वारोगनिदानमाह।

जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा।
पित्तेन दह्यत्युपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ॥१२९॥
कफेन गुर्वी बहुला चिता च
मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ॥ १३० ॥
जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः।
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम्१३[illegible]
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा मुन्नम्य जातः कफरक्तमूलः।
लालाकरः कण्डूयुतः स चोषः सातूपजिह्वा कथिता भिषग्भिः१३[illegible]

अथ चिकित्सामाह।

जिह्वागतविकाराणां शस्तं शोणितमोक्षणम्।
गुडूचीपिप्पलीनिम्ब कवलः कटुभिर्युतः ॥ १३३ ॥
पटोलकटुकव्योष पाठासैन्धवगर्भिभिः।
चूर्णैर्मधुयुतैर्लेपः कवलो मधुतैलिकः ॥ १३४ ॥
विड़ङ्गपिप्पलीभ्यां तु धावनं सरसाञ्जनम् ॥ १३५ ॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत्कार्य्यं भिषजा खलु ॥ १३६ ॥
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते।

प्रतिसारणगण्डूषं नस्यञ्च मधुरं हितम् ॥ १३७ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे ॥ १३८ ॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकु क्षारयूषैश्च भोजयेत् ॥ १३९ ॥
उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥ १४० ॥
व्योषक्षाराभयावह्निश्चूर्णमेतत्प्रघर्षणम्।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥ १४१ ॥
वासाक्काथो माक्षिकसैन्धवगृहधूममालतीयुक्तः।
कुलत्थकेन निहन्यादुपजिह्विकां कण्ठघर्षणतः ॥ १४२ ॥

इति जिह्वारोगः।

अथ तालुरोगनिदानमाह।

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना १४३

शोथः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डीकेरी मता तु।
शोथो मन्दो लोहितः शोणितोत्थो
ज्ञेयोऽध्रूषः सज्वरस्तीव्ररुक् च ॥ १४४ ॥

कूर्म्मोत्सन्नो वेदनो शीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणा वा।
पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्वुदं पित्तलिङ्गम् ॥१४५॥
दुष्टं मांसं नीरुजं तालुमध्ये श्लेष्मावद्धं मांससंघातमाहुः।
नीरुक् स्थायी कोलमात्रः कफेन मेदोयुक्तः पुप्पुटस्तालुदेशे॥१४६॥
शोथोऽत्यर्थं दीर्य्यते चापि तालु श्वासश्चोग्रस्तालुशोषोऽनिलाच्च।
पित्तं कुर्य्यात् पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति ॥१४७॥

अथ चिकित्सामाह।

युञ्ज्यात् कफहरं शुण्ठ्या रसं गण्डूषधारणे ॥ १४८ ॥
कुष्ठोषणा वचासिन्धु कणापाठाप्लवैः सह।
सक्षौद्रैर्भिषजा कार्य्यं गलशुण्डीप्रघर्षणम् ॥ १४९ ॥
अङ्गुष्ठाङ्गुलीसन्दंशेनाकृष्य गलशुण्डिकाम्।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥ १५० ॥
नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद्भिषक् ॥ १५१ ॥
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च।
हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा ॥ १५२ ॥
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः।
गलशुण्डीं छेदयित्वा कुर्य्यात्प्राप्तमिमं क्रमम् ॥ १५३ ॥
नातिमूलेन चाप्यग्रे सम्यक् छेदं समाचरेत्।
छित्वा तां व्योषसिन्धूग्रासक्षौद्रैः प्रतिसारयेत् ॥ १५४ ॥
गलशुण्डी शमं याति वज्रीक्षीरेण लेपनात् ॥ १५५ ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।
निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत् ॥ १५६ ॥
क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ॥ १५७ ॥
इङ्गुदी किण्ही दन्ती सरलं देवदारु च।
पञ्चाङ्गां कारयेद्वर्त्तिमेतां गन्धोत्तरां भिषक् ॥
तस्या धूमं पिबेज्जन्तुर्हिरङ्गः कफनाशनम् ॥ १५८ ॥
तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्मणि ॥ १५९ ॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम्।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ १६० ॥

इति तालुरोगोपक्रमः।

अथ गलरोगनिदानमाह।

गलेऽनिलः पित्तकफौ च मूर्च्छितौ
प्रदूष्य मांसं च तथैव शोणितम्।
गलोपसंरोधकरैस्तथाङ्कुरै-
र्निहन्त्यसून् व्याधिरयं हि रोहिणी॥ १६१॥

जिह्वासमन्ताद्भृशवेदनास्तु मांसाङ्कुराः कण्ठनिरोधनाः स्युः।
सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढ़युक्ता॥१६२॥
क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजा तु।
स्रोतोनिरोधन्यचलोन्नता च स्थिराङ्कुरा या कफसम्भवा सा॥१६३॥
गम्भीरपाकिन्यनिवार्य्यवीर्या त्रिदोषलिङ्गा त्रितयोत्थिता तु॥१६४
स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु॥१६५

सद्यस्त्रिदोषजा हन्ति त्र्यहाच्छ्लेष्मसमुद्भवा।
पञ्चाहात्पित्तसम्भूता सप्ताहात्पवनान्विता॥ १६६॥

कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः।
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति॥१६७
जिह्वाग्ररूपः श्वयथुः कफाच्च जिह्वोपरिष्टादपि रक्तमिश्रात्।
ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम्॥१६८॥
वलास एवायतमुन्नतञ्च ग्रन्थिं करोत्यन्नगतिं निवार्य्य।
तं सर्वथैवाप्रतिवार्य्यवीर्यं विवर्जनीयं वलयं वदन्ति॥ १६९॥
गलोपरोधं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्।
मर्मच्छिदं दुस्तरमेतदाहुर्वलाससंज्ञं निपुणा विकारम्॥१७०॥
वृत्तोन्नतोऽन्तः श्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च।
नाम्नैकवृन्दः परिकीर्त्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः॥१७१॥
समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति।
तच्चापि पित्तक्षतजप्रकोपात् ज्ञेयं सतोदं पवनात्मकन्तु॥१७२॥
वर्त्तिर्घना कण्ठनिरोधिनी तु चितातिमात्रं पिशितप्ररोहैः।

अनेकरुक् प्राणहरी त्रिदोषात् ज्ञेया शतघ्नी तु शतघ्निरूपा॥१७३
ग्रन्थिर्गलेत्वामलकास्थिमात्रः स्थिरोऽल्परुक् यः कफरक्तमूर्त्तिः।
संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः॥१७४॥
सर्वं गलं प्राप्य समुत्थितो यः शोथो रुजः सन्ति च यत्र सर्वाः।
स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजश्च॥१७५॥
शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्तितोऽसौ॥१७६

यस्ताम्यमानः श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः।
कफोपदुष्टेष्वनिलायनेषु
ज्ञेयो स तोदः श्वसनात् स्वरघ्नः॥ १७७॥

प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण।
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः॥१७८॥
सदाहतोदं श्वयथुं सुताम्रमन्तर्गले पूतिविशीर्णमांसम्।
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते॥१७९॥

अथ चिकित्सामाह।

साध्यानां रोहिणीनाञ्च हितं शोणितमोक्षणम्।
छर्दनं धूमपानञ्च गण्डूषो नस्यकर्म च॥ १८०॥
तथान्तर्बाह्यतः स्विन्नां वातरोहिणिकां लिपेत्।
अङ्गुलीशस्त्रकेणाशु स्वटुचुक्रेण स्वेनवा॥ १८१॥
वातकी तु हृते रक्ते लवणैः प्रतिसारयेत्।
सुखोष्णान् स्नेहकवलान् धारयेच्चाप्यभीक्ष्णशः॥ १८२॥
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः।
घर्षयेत् क्षौद्रपतङ्गैः शर्कराभिस्तथायुतैः॥ १८३॥
द्राक्षापरुषकक्वाथो हितश्च कवलग्रहे।
सुधाकरैरेवमेतां सुवैद्यः पित्तसम्भवाम्॥ १८४॥

आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ १८५ ॥
श्वेताविड़ङ्गदन्तीभिस्तैलं सिद्धं ससैन्धवम्।
नस्यकर्मणि दातव्यं कवलञ्च कफोच्छ्रये ॥ १८६ ॥
रोहिणीकण्ठशालूक तुण्डिकेरी गलायुषु।
विद्रधौ वृन्दके श्रेष्ठं रोचना तार्क्ष्यगैरिकाः ॥
सलोध्रमधुपतङ्गक्षौद्रैर्गण्डूषधारणम् ॥ १८७ ॥
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ १८८ ॥
उपजिह्वकवच्चापि साधयेदधिजिह्विकाम्।
उन्नाम्य जिह्वामाकृष्य वड़िशेनाधिजिह्विकाम् ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥ १८९ ॥
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत्।
गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥ १९० ॥
अमर्मस्थन्तु सम्पक्वं छेदयेद्गलविद्रधिम्।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादिकर्म च ॥ १९१ ॥
क्वाथं पिबेच्च दार्वीं त्वक् निम्बतार्क्ष्यकलिङ्गजम्।
हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥ १९२ ॥
कटुकातिविषा दारु पाठामुस्तकलिङ्गकाः।
गोमूत्रक्वथिताः पीताः कण्ठरोगविनाशनाः ॥ १९३ ॥
मृद्वीका कटुका व्योषं दार्वीं त्वक् त्रिफलाघनम्।
पाठा रसाञ्जनं मूर्वा तेजोह्वेति सुचूर्णितम् ॥ १९४ ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे भिषग्‌वरम्।
योगाश्चैते त्रयः प्रोक्ता वातरक्तकफापहाः ॥ १९५ ॥
सितातमालपत्राभ्यां मरिचं द्विगुणं न्यसेत्।
तेन सर्पिर्विपक्वन्तु नस्याद्धन्याद्गलग्रहान् ॥ १९६ ॥

इति सितादिघृतनस्यम्।

गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम्।
तेजोह्वा त्रिफला लोध्रं चित्रकश्चेति चूर्णितम् ॥ १९७ ॥
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥ १९८ ॥

इति कालकं चूर्णम्।

मनःशिला यवक्षारो हरितालं ससैन्धवम्।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥ १९९ ॥
मूर्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम् ॥ २०० ॥

इति पीतकं नामचूर्णम्।

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारु निशाञ्च कृष्णाम्।
क्षौद्रेण कुर्य्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥२०१॥

इति यवक्षारादिगुटिः।

पञ्चकोलकतालीश पत्रैलामरिचत्वचः।
पलाशमुष्ककक्षार यवक्षाराश्च चूर्णिताः ॥ २०२ ॥
गुड़े पुराणे द्विगुणे क्वथिते गुटिकाः कृताः।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥ २०३ ॥
कण्ठरोगेषु सर्वेषु धार्य्याः स्युरमृतोपमाः।

इति क्षारगुटिका। इति कण्ठरोगः॥

अथ सर्वमुखगतरोगनिदानमाह।

स्फोटैः सतोदैर्वदनं समन्तात् यस्याऽऽचितं सर्वसरः स वातात्।
रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितञ्चापि स पित्तकोपात्२०
अवेदनैः कण्डुयुतैः सवर्णैर्यस्याचितञ्चापि सवै कफेन ॥ २०६ ॥

अथ चिकित्सामाह।

वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ २०७ ॥

ततोऽस्मै स्नैहिकं धूममिमं दद्याद्विचक्षणः।
शालराजादनैरण्डसारेङ्गुदिमधूकजाः ॥ २०८ ॥
मज्जानो गुग्गुलुध्याम मांसीकालानुशारिवा।
श्रीसर्जरसशैलेय मधूच्छिष्टानि वा हरेत् ॥ २०९ ॥
तत्सर्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः।
टुण्टूकत्वक्तं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥ २१० ॥
एष सर्वसरे धूमः प्रशस्तः स्नैहिको मतः।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥ २११ ॥

इति स्नैहिको धूमः।

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥ २१२ ॥
प्रतिसारणगण्डूषधूमसंशोधनानि च।
कफात्मके सर्वसरे क्रमं कुर्य्यात् कफापहम् ॥ २१३ ॥

इति सर्वसरोपक्रमः।

मुखपाके शिरावेधः शिरःकायविरेचनम्।
मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ १४ ॥
जातीपत्रामृता द्राक्षा यासदार्वीफलत्रिकैः।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ २१५ ॥
कार्य्यश्च बहुधा नित्यं जातीपत्रस्य चर्वणम्।
कृष्णजीरककुष्ठेन्द्र यवचर्वणतस्त्र्यहात्।
मुखपाकव्रणक्लेद दौर्गन्ध्यमुपशाम्यति ॥ २१६ ॥
पटोलनिम्बजम्ब्वाम्र मालतीनवपल्लवैः।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ २१७ ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥ २१८ ॥
सप्तच्छदोशीरपटोलमुस्ताहरीतकी तिक्तकरोहिणीभिः।

यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य ॥ २१९ ॥

पटोलशुण्ठीत्रिफला विशाला
त्रायन्ति तिक्ताद्विनिशासृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चास्य गदानशेषान् ॥ २२० ॥

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
क्षौद्राढ्यो दग्धवक्त्रस्य गण्डूषो मुखपाकनुत् ॥ २२१ ॥

आस्वादिता च सकृदपि मुखगन्धं सकलमपनयति ।
त्वग्बीजपूरफलजा पवनसुपक्वं च नाशयति ॥ २२२ ॥

जातीफलजातिपत्री फणिज्जवाह्लीककुष्ठसञ्चरिता ।
अपहरति पूतिगन्धं मुखविवरे संस्थिता गुटिकाः ॥२२३॥

कुष्ठैलवालुकैला मुस्ताधान्यकयष्टीमधुकवलाः ।
हरन्ति मुखपूतिगन्धं रसोनमदिरादिगन्धञ्च ॥ २२४ ॥

हरिद्रानिम्बपत्राणि मधुकं नीलमुत्पलम् ।
तैलमेभिः विपक्वव्यं मुखपाकहरं परम् ॥ २२५ ॥

यष्टीमधुपलमेकं त्रिंशन्नीलोत्पलस्य तैलस्य ।
प्रस्थञ्च द्विगुणं पयो विधिना पक्वन्तु नस्येन ॥ २२६ ॥

निशिवदनस्य स्रावं क्षपयति गात्रस्य दोषसङ्घातम् ।
वपुः सवर्णत्वमवश्यं क्रमशोऽभ्यङ्गेन जन्तूनाम् ॥ २२७ ॥

इति यष्टीतैलम् ।

अथ मुखरोगेषु असाध्यमाह ।

ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ।
दन्तमूलेषु वर्ज्यौ च त्रिलिङ्गगतिशौषिरौ ॥ २२८ ॥

दन्तेषु च न सिध्यन्ति श्यावदानलभञ्जनाः ।
जिह्वागतेष्वलासस्तु तालुजेष्वर्बुदं तथा ॥ २२९ ॥

स्वरघ्नो वलयो वृन्दो वलासः सविदारिकः ।

गलौघो मांसतानश्च शतघ्नी रोहिणीगले ॥ २३० ॥
असाध्याः कीर्त्तिता ह्येते रोगा नवदशैव तु।
तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ २३१ ॥

इति वङ्गसेनसङ्कलितः मुखरोगचिकित्साधिकारः समाप्तः।

---

## अथ कर्णरोगनिदानमाह।

समीरणः श्रोत्रगतोऽन्यथा चरन् समन्ततः शूलमतीव कर्णयोः।
करोति दोषैश्च यथा स्वमावृतः स कर्णशूलः कथितो दुराचरः॥१॥
कर्णस्रोतः स्थिते वाते शृणोति विविधान् स्वरान्।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥
यदा शब्दवहो वायुः स्रोत आहृत्य तिष्ठति।
शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यन्तेन जायते ॥ ३ ॥
वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम्।
करोति कर्णयोः क्ष्वेड़ः कर्णक्ष्वेड़ः स कीर्त्तितः॥ ४ ॥
शिरोऽभिघातादथवा निमज्जनाज्जले प्रपातादथवापि विद्रधेः।
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्त्तितः॥५॥
मारुतः कफसंयुक्तः कर्णकण्डूं करोति च।
पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः ॥ ६ ॥
सकर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते।
तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽर्द्धभेदकृत्॥७॥
यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तदञ्जनत्वाच्छ्रवणो निरुध्यते भिषग्भिराद्यैः क्रिमिकर्णको गदः॥८॥
पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि।
अरतिं व्याकुलत्वञ्च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥
कर्णो निस्तुद्यते तस्य तथा फुरफुरायते।

कीटे चरति रुक्तीव्रा निस्पन्दे मन्दवेदना ॥ १० ॥
क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तया दोषकृतोऽपरः पुनः ।
सपीतनीलारुणमस्रमास्रवेत्प्रतोदधूमायनदाह चोषवान् ॥११॥
कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ।
कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥
पूयं स्रवति वा पूति स ज्ञेयः पूतिकर्णकः ।
कर्णशोफार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥
नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात् ।
शोथः सरागोदरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् ॥१४॥
वैश्रुत्यकण्डुस्थिरशोथयुक्ता स्निग्धा स्रुतिः श्लेष्मभवेऽल्परुक् च ।
सर्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥१५
सौकुमार्य्याच्चिरोत्सृष्टे सहसैवातिवर्द्धिते ।
कर्णे शोथो भवेत्पाल्यां सरुजः परिपोटवान् ॥
कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ॥ १६ ॥
गुर्वाभरणसंयोगात्ताड़नात् घर्षणादपि ।
शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजान्वितः ॥
रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदो मतः ॥ १७ ॥
कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकुप्यति ।
कफं संगृह्य कुरुते शोफं स्तब्धमवेदनम् ॥
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १८ ॥
संवर्द्धमाने दुर्विद्धे कण्डूदाहरुजान्वितः ।
शोथो भवति पाकश्च त्रिदोषो दुःखवर्द्धनः ॥ १९ ॥
कफासृक् क्रिमयः क्षुद्राः सर्षपाभा विसर्पिणः ।
कुर्वन्ति पीड़िकाः पाल्यां कण्डूदाह समन्विताः ॥ २० ॥
कफासृक् कृमिसम्भूतः स विसर्पन्नितस्ततः ।
लिहेच्च सकलां पालीं परिलेहीति स स्मृतः ॥ २१ ॥

अथ चिकित्सामाह।

कर्णशूले कर्णनादे वाधिर्य्ये च्वेड़ एव च।
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः॥ २२॥
स्निग्धं वातहरैः स्नेहैः नरं वापि विरेचयेत्।
भुक्तोपरिहितं सर्पिर्वस्तिकर्म च पूजितम्॥ २३॥
कोष्णं पयोऽनुपानञ्च त्रिरात्रं पाययेद् घृतम्॥ २४॥
अश्वत्थपत्र खल्लं वा विधाय बहुपत्रकम्।
तैलाक्तमङ्गारपूर्णं निदध्याच्छ्रवणोपरि॥ २५॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारतापितात्।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम्॥ २६॥
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च।
कटूष्णं कर्णयोर्देयमेतद्वा वेदनापहम्॥ २७॥
कपित्थमातुलुङ्गाम्ल शृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये॥ २८॥
लशुनार्द्रकशिग्रूणां मुरङ्ग्यामूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कटूष्णं कर्णपूरणे॥ २९॥
कर्णं कोष्णेन शुक्तेन पूरयेत्कर्णशूलिनः।
समुद्रफेनचूर्णेन शुक्त्या वाप्यवचूर्णयेत्॥ ३०॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान्।
सन्निदध्यात् स्नुहीकाण्डे कोरिते तच्छदावृते॥ ३१॥
पुटपाकक्रमात् स्विन्नं पीड़येदारसागमात्।
सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये॥ ३२॥
महतः पञ्चमूलस्य काष्ठान्यष्टाङ्गुलानि च।
क्षौमेनावेष्ट्य संसिच्य तैलेनादीपयेत्ततः॥ ३३॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत्प्रदापयेत्।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम्॥ ३४॥

एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारने।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ३५ ॥

इति दीपिकातैलम्।

अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनावतप्तम्।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनञ्च ॥ ३६ ॥
तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि।
छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ॥ ३७ ॥
एरण्डपत्र पुटपाकविपाचिताम्बु-
तुल्यार्द्रकस्य सलिलं मधुकेन मिश्रम्।
पक्वा च तैललवणेन युतं सुखोष्णं
कर्णे रुजं हरति तत्क्षणमेव दत्तम् ॥ ३८ ॥
बिल्वैरण्डार्कवर्षाभूदधित्थोन्मत्तशिग्रुभिः।
वत्सगन्धाश्वगन्धाभ्यां तर्कारीयवरेणुभिः ॥ ३९ ॥
आरनालस्रुतैरेभिर्नाड़ीस्वेदः प्रयोजितः।
कफवातसमुत्थानं कर्णशूलं निवारयेत् ॥ ४० ॥
रास्नामृतैरण्डसुराह्वविश्वं तुल्यं गुड़ेनापि विमृद्य खादेत्।
वातामयी कर्णशिरोगदी च नाड़ीव्रणी चैव भगन्दरी च ॥४१॥

इति रास्नागुग्गुलुः।

वंशावलेखसंयुक्ते मूत्रे वाऽऽजाविके भिषक्।
तैलं पचेत्तेन कर्णं पूरयेत्कर्णशूलिनः ॥ ४२ ॥
धारयेत् पूरणं कर्णे कर्णशूलं विमर्दयेत्।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदनम् ॥ ४३ ॥
यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम्।
निमिषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ४४ ॥
तैलं श्योनाकमूलेन मन्दाग्नौ परिसाधितम्।

हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥ ४५ ॥

इति श्योनाकतैलम्।

हिङ्गुतुम्बुरुशुण्ठिभिः साध्यं तैलं ससार्षपम्।
कर्णशूले प्रधानं तत् पूरणं हितमुच्यते ॥ ४६ ॥

इति हिङ्ग्वाद्यं तैलम्।

देवदारुवचाशुण्ठिशताह्वाकुष्ठसैन्धवैः।
तैलं सिद्धं हि गोमूत्रे कर्णशूलनिवारणम् ॥ ४७ ॥

इति देवदार्वादितैलम्।

पिप्पल्यो विल्वमूलञ्च कुष्ठं मधुकमेव च।
सूक्ष्मैलादेवदारूणि मांसीव्याघ्रीनखोऽगुरु ॥ ४८ ॥
वर्गेणानेन तैलस्य प्रस्थं मृद्वग्निना पचेत्।
केयूरमूलकरसौ दद्यात् स्नेहेन संयुतौ ॥ ४९ ॥
तेन कर्णे पिचुं दद्याद्वस्तिकर्म च कारयेत्।
तेनोपशाम्यते क्षिप्रं कर्णशूलं सुदारुणम् ॥ ५० ॥

इति पिप्पल्याद्यं तैलम्।

वातरोगे च निर्दिष्टा क्रिया चात्र प्रयोजयेत्।
स्नानं शीताम्बुसम्पानं मैथुनञ्च विवर्जयेत् ॥ ५१ ॥
पित्तजे शर्करायुक्तं घृतस्निग्धं विरेचनम्।
द्राक्षायष्टीशृतं क्षीरं शस्यते कर्णपूरणम् ॥ ५२ ॥
पित्तवद्रक्तजे कुर्य्याच्छिराया रक्तमोक्षणम्।
कफजे मागधीसिद्धं हविर्दुग्धं प्रपीय च ॥
कुर्य्याद्गण्डूषसंस्वेदं धूपनं कफनाशनम् ॥ ५३ ॥
कर्णक्ष्वेड़े कर्णनादे कटुतैलेन पूरयेत्।
नादबाधिर्य्ययोः कुर्य्यात् कर्णशूलोक्तमौषधम् ॥ ५४ ॥
कफजे चाचरेत् पूर्वं वमनाद्यैः क्रियाक्रमम्।
वातजे कुष्ठजं वापि लाङ्गलीक्षीरमिश्रितम् ॥ ५५ ॥

दलेनाश्वत्थवृक्षस्य वेष्टितं सुविपाचितम् ।
सतैललवणं कोष्णं वाधिर्य्ये कर्णपूरणम् ॥ ५६ ॥
एरण्डशिग्रुवरुण मूलिकापत्रजे रसे ।
चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणान्विते ॥ ५७ ॥
यष्ट्याह्वक्षीरकाकोली कल्कयुक्तं निहन्ति तत् ।
नादवाधिर्य्यशूलानि नावनाभ्यङ्गपूरणैः ॥ ५८ ॥

इति एरण्डादितैलं कर्णपूरणे ।

कल्कक्वाथैश्च यष्ट्याह्व काकोलीद्वयमाषकैः ।
शूकरस्य वसा पक्वा कर्णनादातिनाशिनी ॥ ५९ ॥

इति सूकरवसा ।

स्वर्जिकामूलकं शुष्कं हिङ्गु कृष्णामहौषधम् ।
शतपुष्पा च तैस्तैलं पक्वं शुक्ते चतुर्गुणे ॥ ६० ॥
प्रणादशूलवाधिर्य्यं स्रावं चाशु व्यपोहति ॥ ६१ ॥

इति स्वर्जिकातैलम् ।

मयूरनालगोमांसं लशुनं शुष्कमूलकम् ।
सशुक्तं साधितं तैलं कर्णनादार्त्तिनाशनम् ॥ ६२ ॥

इति मयूरनालाद्यं तैलम् ।

गवां मूत्रेण विल्वानि पिष्ट्वा तैलं विपाचयेत् ।
सजलञ्च सदुग्धञ्च वाधिर्य्ये कर्णपूरणम् ॥ ६३ ॥

इति विल्वतैलम् ।

अपामार्गक्षारजले तत् कृतकल्केन साधितं तैलम् ।
अपहरति कर्णनादं वाधिर्य्यं चापि पूरणतः ॥ ६४ ॥

इति अपामार्गतैलम् ।

वालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥ ६५ ॥

सौवर्चलं यवक्षारः स्वर्जिकोद्भिदसैन्धवम्।
भूर्जग्रन्थिविड़ं मुस्तं मधुशुक्तं चतुर्गुणम्॥ ६६॥
मातुलुङ्गरसश्चैव कदल्या रस एव च।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्॥ ६७॥
वाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः।
पूरणादस्य तैलस्य क्रमयः कर्णमाश्रिताः॥ ६८॥
क्षिप्रं विनाशमायान्ति कृष्णात्रेयस्य शासनात्।
क्षारतैलमिदं श्रेष्ठं सुखं कर्णामयापहम्॥ ६९॥

इति क्षारतैलम्।

जम्बीराणां फलरसः प्रस्थैकः कुड़वोन्मितम्।
माक्षिकं तत्र दातव्यं पिप्पली च पलोन्मिता॥ ७०॥
घृतभाण्डे विनिःक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम्॥ ७१॥
एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि॥ ७२॥
कर्णस्रावे पूतिकर्णे तथैव क्रमिकर्णके।
सामान्यं कर्म कुर्वीत योगान् वैशेषिकानपि॥ ७३॥
शिरोविरेचनं चैव धूपनं पूरणं तथा।
प्रमार्जनं धावनञ्च वीक्ष्य वीक्ष्यावचारयेत्॥ ७४॥
राजवृक्षादितोयेन सुरसादिजलेन च।
कर्णप्रक्षालनं कार्य्यं चूर्णैरेतैस्तु पूरणम्॥ ७५॥
चूर्णं पञ्चकषायाणां कपित्थरससंयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह॥ ७६॥
तिन्दुकान्यभया लोध्रं समङ्गा चामलक्यपि।
पञ्चकषायशब्देन ग्राह्यमेतद्धि बोधितम्॥ ७७॥

इति पञ्चकषायः।

सर्जत्वक् चूर्णसंयुक्तं वीजपूररसं क्षिपेत् ।
कर्णस्रावे रुजा दाहाः प्रणश्यन्ति न संशयः ॥ ७८ ॥
सर्जत्वक् चूर्णसंयुक्तः कार्पासीफलजो रसः ।
योजितो मधुना वापि कर्णस्रावे प्रशस्यते ॥ ७९ ॥
पुटपाकक्रमस्विन्नो हस्तिविड्जातच्छत्रजः ।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ ८० ॥
जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सान्द्रम् ।
क्षुत्त्वा रसं तन्मधुना विमिश्रं स्रावापहं तं प्रवदन्ति तज्ज्ञाः ।
एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ ८१ ॥

इति जम्ब्वाद्यं तैलम् ।

अर्कस्य पत्रस्वरसं निर्गुण्डीस्वरसं तथा ।
राजवृक्षादितोयेन सूर्य्यावर्त्तरसं तथा ॥ ८२ ॥
चित्रकोद्भवसंमिश्रं वज्रीक्षीरं तथैव च ।
तथा हुलहुलतोयेन प्रत्येकेन क्रमेण तु ॥ ८३ ॥
तैलप्रस्थं पचेत्तस्मिन् हरितालपलद्वयम् ।
सैन्धवञ्च पलं योज्यं विषं पादांशकं तथा ।
एतत्तैलं हरेत् क्षिप्रं कर्णशूलञ्च दुस्तरम् ॥ ८४ ॥

इति विषगर्भतैलम् ।

मुसलीवाकुचीचूर्णं खादेद्वाधिर्य्यशान्तये ॥ ८५ ॥

इति ग्रन्थान्तरादत्रोक्तम् ।

विल्वोदुम्बरजम्बूदधित्थचूतानां वल्कलैः सिद्धम् ।
श्रुतिरोधञ्च निहन्ति तैलं प्रपाकपूतिस्रुतिं जयति ॥ ८६ ॥

इति पञ्चवल्कलतैलम् ।

आम्रजम्बूप्रवालानि मधुकस्य वटस्य च ।
एभिः सुसाधितं तैलं पूतिकर्णोपशान्तये ॥ ८७ ॥

इति चतुष्पर्णतैलम् ।

वरुणार्ककपित्थाम्र जम्बूपल्लवसाधितम्।
पूतिकर्णापहं तैलं जातीपत्ररसोऽथवा ॥ ८८ ॥

इति चतुष्पल्लवतैलम्।

निर्गुण्डीस्वरसे तैलं सिन्धुधूमरजो गुड़ः।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ॥ ८९ ॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ९० ॥
घृष्टं रसाञ्जनं नार्य्याः क्षीरेण मधुसंयुतम्।
प्रशस्यते चिरोत्थेषु सस्रावे पूतिकर्णके ॥ ९१ ॥
कुष्ठं हिङ्गुवचादारु शताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥ ९२ ॥

इति कुष्ठाद्यं तैलम्।

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ ९३ ॥

इति शम्बूकतैलम्।

चूर्णेन गन्धकशिलारजनीभवेन
मुञ्चंशकेन कटुतैलपलाष्टकञ्च।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाड़ीं जयेच्चिरभवामपि कर्णजाताम् ॥ ९४ ॥
गन्धकादीनामत्र मिलित्वा पलं ग्राह्यम्।

इति गन्धकाद्यं तैलम्। इति कर्णनाड़ीचिकित्सा।

क्रिमिकर्णविनाशाय क्रिमिघ्नां कारयेत् क्रियाम्।
वार्त्ताकुधूमश्च हितः सर्षपस्नेह एव च ॥ ९५ ॥
पूरणं हरितालेन गवां मूत्रयुतेन च।
धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ९६ ॥
सूर्य्यावर्त्तस्य स्वरसं सिन्धुवाररसं तथा।
लाङ्गलीमूलजरसं त्र्यूषणं चूर्णितं तथा।

पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ॥ ९७ ॥

इति योगचतुष्टयम् ।

हलिरविभक्तिव्योषानेकीकृत्य प्रगालयेद् बद्धा ।
वसनेन तस्य रसेन श्रवणे परिपूरयेत् सुतराम् ॥ ९८ ॥
कर्णजलौकानियतं क्रिमिकीटपिपीलिकास्तथान्येऽपि ।
निपतन्ति निरवशेषाः कारण्डाश्चापि मुण्डस्थाः ॥ ९९ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्रोक्तां समाचरेत् ॥ १०० ॥
विद्रधौ चापि कुर्वीत विद्रध्युक्तं चिकित्सितम् ।
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ॥ १०१ ॥
प्रक्लिद्य धीमान् तैलेन प्रविलाय्य च शोधयेत् ।
कर्णगूथन्तु मतिमान् भिषक् सम्यक् शलाकया ॥ १०२ ॥
स्नेहस्वेदौ च वमनं धूमो मूर्ध्नि विरेचनम् ।
विधिश्च कफहृत्सर्वः कर्णकण्डूमपोहति ॥ १०३ ॥
वाधिर्य्यं बालवृद्धोत्थं चिरोत्थञ्च विवर्जयेत् ॥ १०४ ॥

इति कर्णरोगचिकित्सा ।

अथ कर्णपालीचिकित्सामाह ।

पालीसंशोषणे कुर्य्याद्वातकर्णरुजः क्रियाम् ।
स्वेदयेद् यत्नतस्ताञ्च स्विन्नां सम्बर्द्धयेत्तिलैः ॥ १०५ ॥
माहिषनवनीतयुतं सप्ताहं धान्यराशिपर्य्युषितम् ।
नवमूसलिकन्दचूर्णं वृद्धिकरं कर्णपालिनाम् ॥ १० ॥
शतावरीवाजिगन्धा पयस्यैरण्डवीजकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥ १०७ ॥

इति शतावरीतैलम् ।

कल्केन जीवनीयेन तैलं पयसि पाचितम् ।
आनूपमांसक्वाथेन पालीशोषणवर्द्धनम् ॥ १०८ ॥

एतेनैव हि तैलेन चिकित्सेद्भिषजां वरः।
क्षतास्रं परिपोटञ्च चन्द्रिकाञ्च प्रयत्नतः॥ १०९॥

इति जीवनीयतैलम्।

शीतैर्लेपैर्जलौकाभिरुत्पातं समुपाचरेत्॥ ११०॥
गोपनीया बलायष्टी जम्ब्वाम्रपल्लवोत्पलैः।
सधान्याम्लैः समञ्जिष्ठैः स्विन्नैर्लोध्रान्वितैः समैः।
तैलमभ्यञ्जतः सिद्धं कर्णोत्पातहरं परम्॥ १११॥
त्रायन्त्यश्वगन्धार्क वाकुचीबीजसिन्धुजैः।
फलिनीसुरसाभ्याञ्च गोधाकङ्कवसान्वितैः॥
तैलमभ्यञ्जतः पक्वमुत्पातं नाशयेद्ध्रुवम्॥ ११२॥
दुःखवर्द्धनकं सिक्ता जम्ब्वाम्राश्वत्थपत्रजैः।
क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णैरवचूर्णयेत्॥ ११३॥
बहुशो गोमयपिण्डैः स्वेदितं परिलेहिकम्।
मेषसारैः समालिम्पेद्दधिमूत्रेण कल्कितैः॥ ११४॥

इति वङ्गसेनसङ्कलितः कर्णरोगनिदानचिकित्साधिकारः समाप्तः।

---

## अथ नासारोगाधिकारः।

आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चैव नासा।
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येदिह पीनसेन॥
तच्चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम्॥१॥
दोषैर्विदग्धैर्गलतालुमूले संमूर्च्छितो यस्य समीरणस्तु।
निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम्॥२॥
घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन् विकारे बलवांश्च पाकः।
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावथवापि यत्र॥३॥
दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः।

नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयवक्तं प्रवदन्ति रोगम् ॥४॥
घ्राणाश्रितो मर्मणि सम्प्रदुष्टो यस्यानिलो नालिकया निरेति।
कफानुयातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥५॥
तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा।
सूत्रादिभिर्वा तरुणास्थिमर्माण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥६॥
प्रभ्रश्यते नासिकयैव यस्य सान्द्रो विदग्धो लवणः कफस्तु।
प्राक् सञ्चितो मूर्धनि सूर्य्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥७॥
घ्राणे भृशं दाहसमन्विते तु विनिश्चरेद्धूम इवोर्ध्ववायुः।
नासाप्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति ॥८॥
उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात्प्रतीनाह मुदाहरेत्तम्।
घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत्तम् ॥९॥

घ्राणात् सपिच्छिलः श्लेष्मा अवलोद्रव उष्मणा।
अजरः स्यन्दते घ्राणान्नासास्रावं तमादिशेत् ॥ १० ॥

घ्राणाश्रिते श्रोतसि मारुतेन पित्तेन गाढ़ं परिशोषिते च।
कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः ॥११॥
दोषैस्त्रिभिर्वा पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोषान्।
शालाकसिद्धन्तमवेक्ष्य चापि सर्वात्मकं सर्वगमर्वुदं स्यात् ॥१२॥

शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः।
क्षामः ष्ठीवत्यथोऽभीक्ष्णं मामपीनसलक्षणम् ॥ १३ ॥
आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति।
स्वरवर्णविशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १४ ॥

अथ चिकित्सामाह।

सर्वेषु पीनसेष्वादौ निवातागारगो भवेत्।
शिरसोऽभ्यञ्जनैः स्वेदैर्नस्यैः कट्वम्लभोजनैः॥
वमनैर्घृतपानैश्च नासारोगानुपाचरेत् ॥ १५ ॥
पञ्चमूलीशृतं क्षीरं चित्रकञ्च हरीतकी।

सर्पिर्गुड़ः षड़ङ्गश्च यूषः पीनसशान्तये ॥ १६ ॥
सर्व्वेषु सर्व्वकालं पीनसरोगेषु जातमात्रेषु।
मरिचं गुड़ेन दध्ना भुञ्जीत नरः सुखं लभते ॥ १७ ॥
कटुत्रिकं चित्रकतिन्तिड़िकं तालीशपत्रं चविकाम्लसंज्ञम्।
विचूर्णितं जीरकचूर्णयुक्तमेलात्वचा तत्सुरभीकृतं च ॥
मिश्रं पुराणेन गुड़ेन दद्यात्तत्पीनसानां परिपाचनार्थम् ॥१८॥

इति कटुत्रिकादिचूर्ण गुटिका च।

कट्फलं शृङ्गवेरं च पिप्पलीमरिचानि च।
शटी पुष्करमूलञ्च भार्गीमधुरसा वरा ॥ १९ ॥
अभया कृष्णलवणं शृङ्गीकर्कटकस्य च।
एतच्चूर्णवरं प्रोक्तं क्वाथो वा मूत्रमूर्च्छितः ॥ २० ॥
पीनसे स्वरभेदे च तमके सहलीमके।
सन्निपातेऽनिलकफे कासे श्वासे च शस्यते ॥ २१ ॥

इति कट्फलादिचूर्णम्।

पूर्वोद्दिष्टे पूतिनस्ये च कुर्य्यात् स्नेहस्वेदौ छर्दनं स्रंसनं वा।
युक्तं भुक्तं तीक्ष्णमल्पं लघु स्यादुष्णं तोयं धूमपानञ्च कार्य्यम्॥२२॥
स्निग्धस्य छर्दनैर्दोषान् निर्हरेद्वातपीनसे।
पित्ते सर्पिः पिबेत्सिद्धं शृङ्गवेरेण वा पयः ॥ २३ ॥
देयं कफघ्नमुष्णञ्च भोजनं रूक्षणं हितम्।
विरेकं वमनं ह्यादौ लङ्घनं कफपीनसे ॥ २४ ॥
स्नेहसेकश्च वा कार्य्यो लिप्ते शिरसि सर्षपैः।
लशुनं मुद्गचूर्णैश्च व्योषक्षारयुतैर्हितः ॥ २५ ॥
सकासे पीनसे पूतिघ्राणे स्रावे सकण्डुरे।
धूमः शस्तोऽवपीतश्च कटुभिः कफपीनसे ॥ २६ ॥
कफघ्नमन्नं वार्त्ताकु कुलत्थाढ़किमुद्गजाः।
यूषाः प्रशस्ताः सव्योषास्तथा तोयोष्णसेवनम् ॥ २७ ॥

कलिङ्गहिङ्गुमरिचं लाक्षासुरसकट्फलैः।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीड़ः प्रशस्यते ॥ २८ ॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत्।
अपीनसे पूतीनस्ये शमनं कीर्त्तितं परम् ॥ २९ ॥
व्योषचित्रकतालीश तिन्तिड़िकाम्लवेतसम्।
सचव्याजाजीतुल्यांश मेलात्वक् पत्रपादिकाम् ॥ ३० ॥
व्योषादिकमिदं चूर्णं पुराणगुड़संयुतम्।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ३१ ॥

इति व्योषाद्यं चूर्णम्।

व्याघ्रीदन्तीवचाशिग्रु सुरसाव्योषसिन्धुजैः।
पाचितं नावनं तैलं पूतिनासागदापहम् ॥ ३२ ॥

इति व्याघ्रीतैलम्।

त्रिकटुकविड़ङ्गसैन्धव बृहतीफलशिग्रुसुरसदन्तीभिः।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ३३ ॥

इति त्रिकटुकाद्यं तैलम्।

शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः।
विल्वपत्ररसे तैलं नावनं पूतिनस्यजित् ॥ ३४ ॥

इति शिग्रुतैलम्।

चित्रककषायपलशतममृताजातीरसञ्च तुल्यांशम्।
प्रक्षिप्य गुड़शतञ्च द्विपञ्चमूलीकषायेण ॥ ३५ ॥
तत्तुल्येन च हरितक्याढ़कमेकं विपाच्य गुड़पाकम्।
अर्द्धप्रस्थं मधुनस्तस्मिन् दद्यात्ततो वैद्यः ॥ ३६ ॥
द्वे द्वे पले च दद्यादेलात्वक् पत्रत्रिकटुकानाम्।
यवक्षारादर्द्धपलं प्रयोजयेदग्निवर्द्धनं पुंसाम् ॥ ३७ ॥
एतद्रसायनोत्तममश्विभ्यां निर्मितं सुविख्यातम्।
उपयुक्तवतां पुंसां पाषाणकाष्ठान्यपि च जीर्य्यति ॥ ३८ ॥

अजितमपि भेषजशतैः पीनसरोगं त्वरह्वाज्जयति।
नृपतिरसायनमेत दाहारयन्नरणारहितञ्च ॥ ३९ ॥

इति राजरसायनम्।

नासापाके पित्तहृत्संविधानं कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च।
हृत्वा रक्तं चीरवृक्षत्वचश्च योज्याः सेकाः सघृताश्च प्रदेहाः ॥४०॥
सर्जार्जुनोदुम्बरवत्सकानां त्वचां कषायैः परिधावनीयः।
कषायकल्कैरपि चैभिरेव सिद्धं घृतं घ्राणविपक्वनुत्परम् ॥४१॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च।
पाकदाहादिरोगेषु शीतलेपादिकाः क्रियाः ॥ ४२ ॥
वान्ते सम्यक् चावपीड़ं विदध्यात्तीव्रं धूमं शोधनं चात्र नस्यम्।
देयं नस्यं मूर्द्धवैरेचनीयैर्नाड्या चूर्णं क्षुद्रदे भ्रंशथौ वा ॥ ४३ ॥
घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः।
धूमः क्षवथुरोगघ्नो भ्रंशथुघ्नश्च निर्द्दिशेत् ॥ ४४ ॥
सपिप्पलीकुष्ठमहौषधानां विड़ङ्गमृद्वीककषायकल्कैः।
तैलं विपक्वं क्षवथौ च नस्यं वसां पचेत्तैलमधो घृतञ्च ॥ ४५ ॥

इति पिप्पलीतैलम्।

द्रव्याणि यानि क्षवथौ प्रदिष्टान्येतानि सर्वाणि सकट्फलानि।
चूर्णानि कृत्वा प्रधमेत नस्ये शस्तञ्च दत्तं क्षवथुं निहन्यात् ॥४६॥
शुण्ठिकुष्ठकणाविल्व द्राक्षाकल्ककषायवत्।
साधितं तैलमाज्यञ्च स्याद्धि क्षवथुरुग्जये ॥ ४७ ॥

इति शुण्ठीतैलं घृतं च।

दीप्ते रोगे पित्तहृत् संविधानं कार्य्यं सर्वं माधुरं शीतलञ्च ॥४८॥
नस्यं हितं निम्बरसाञ्जनाभ्यां दीप्ते शिरः स्वेदनमल्पशस्तु।
नस्ये कृते चीरजलावसेकान् शंसन्ति भुञ्जीत च मुद्गयूषैः ॥४९॥
नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्द्धवस्तिश्च नित्यम्।
बलातैलं सर्वथैवापि युञ्ज्याद्वातव्याधावन्यदुक्तं च यद्यत् ॥५०॥

नासास्रावे घ्राणतश्चूर्णमुक्तं
नाद्या द्रेयं येऽवपीड़ाश्च पथ्याः ।
तीक्ष्णान् धूमान् देवदार्व्यग्निकाभ्यां
मांसं लाजं पथ्यमत्रादिशन्ति ॥ ५१ ॥

नाशाशोषे चीरसर्पिः प्रधानं सिद्धं तैलं चाणुकल्पेन नस्ये ।
सर्पिः पीतं भोजनं जाङ्गलैश्च स्नेहस्वेदौ स्नैहिकश्चापि धूमः ॥५२

इति पीनसोपक्रमः ।

अथ प्रतिश्यायनिदानमाह ।

सन्धारणाजीर्णरजोऽतिभाष्यक्रोधर्त्तुवैषम्य शिरोऽभितापैः ।
प्रजागरात्तिस्वपनाम्बुशीतावश्यायकैर्मैथुनवाष्पसेकैः ॥
संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु ॥५३॥
चयङ्गता मूर्द्धनि मारुतादयः पृथक् समस्ताश्च तथैव शोणितम् ।
प्रकुप्यमाना विविधैः प्रकोपनैर्नृणां प्रतिश्यायकरा भवन्ति हि॥५४
चयप्रवृत्तिः शिरसोऽतिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः ॥५५॥

आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ।
भवेत् स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ ५६ ॥
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ।
कृशोऽतिपाण्डुः सन्तप्तो भवेदुष्णाभिपीड़ितः ॥
सधूममग्निं सहसा वमतीव च नासया ॥ ५७ ॥
घ्राणात्कफः कफकृते श्वेतः पाण्डुः स्रवेद्बहुः ।
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरा नरः ।
कण्ठताल्वोष्ठशिरसां कण्डुभिरतिपीड़ितः ॥ ५८ ॥
भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्त्तते ।
संपक्वो वाप्यपक्वो वा स सर्वप्रभवः स्मृतः ॥ ५९ ॥

प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति।
पुनरानह्यते वापि पुनर्विव्रियते तथा ॥ ६० ॥
निःश्वासे वाति दौर्गन्ध्यं नरो गन्धान्न वेत्ति च।
एवं दुष्टप्रतिश्यायं जानीयात् कष्टसाधनम् ॥ ६१ ॥
रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते।
ताम्राक्षस्तु भवेज्जन्तु रुरोघातप्रपीड़ितः ॥
दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः ॥ ६२ ॥
सर्वे एव प्रतिश्याया नरस्याप्रतिकारिणः।
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति च ॥ ६३ ॥
मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धास्तथाणवः।
क्रिमिजो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम् ॥ ६४ ॥
बाधिर्य्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान्।
शोथाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः ॥ ६५ ॥
अर्बुदं सप्तधा शोथश्चत्वारोऽर्शश्चतुर्विधम्।
चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः ॥ ६६ ॥
अर्शसामर्बुदानाञ्च दोषकोपाकृतिः समा ॥ ६७ ॥
अर्शांसि गोस्तनाकाराण्यर्बुदं कोलसन्निभम् ॥ ६८ ॥

अथ चिकित्सामाह।

प्रतिश्यायेषु सर्वेषु गृहं वातविवर्जितम्।
वस्त्रेण गुरुणोष्णेन शिरसो वेष्टनं हितम् ॥ ६९ ॥
विड़ङ्गं सैन्धवं हिङ्गु गुग्गुलुः समनःशिलाः।
प्रतिश्यायो वचायुक्तं चूर्णमाघ्राय नश्यति ॥ ७० ॥
अथवा सघृतान्सक्तून् कृत्वामलकसम्पुटे।
नवप्रतिश्यायवतां धूमो वैद्यः प्रयोजयेत् ॥ ७१ ॥
घृततैलेन संयुक्तं शक्तुधूमं पिबेन्नरः।
प्रतिश्यायहरं प्रोक्तं कासहिक्कानिवारणम् ॥ ७२ ॥

प्रतिश्याये पिवेडूमं सर्वगन्धसमायुतम्।
चातुर्जातकचूर्णं वा घ्रेयं वा कृष्णजीरकम् ॥ ७३ ॥
पुटपाकं जयापत्रं सिन्धुतैलसमन्वितम्।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ ७४ ॥
भक्षयति भुक्तमात्रे सलवणं सुस्विन्नमाषमत्युष्णम्।
शमयति सर्वसमुत्थं चिरजातं च प्रतिश्यायम् ॥ ७५ ॥
शटी तामलकीव्योषचूर्णं सर्पिर्गुड़ान्वितम्।
हन्ति घोरं प्रतिश्यायं पार्श्वहृद्वस्तिशूलनुत् ॥ ७६ ॥
कुलत्थयवधान्याम्लयूषं तिन्तिड़िपत्रजम्।
स्वेदोष्णञ्च हिमं भोज्यं पाचनाय प्रशस्यते ॥ ७७ ॥
गुड़ान्वितं चार्द्रमथादिशन्ति शुष्कोषितं तत्परिपाचनाय ॥७८॥
त्र्यूषणं गुड़संयुक्तं स्निग्धं दुग्धाम्लभोजनम्।
प्रतिश्यायहरं प्रोक्तं विशेषात्कफनाशनम् ॥ ७९ ॥
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः।
पिप्पल्यः शिग्रुवीजानि विड़ङ्गं मरिचानि च ॥
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ ८० ॥
शिरसोऽभ्यञ्जनं स्वेदो नस्यं कट्वम्लभोजनैः।
वमनैः कृतपानैश्च नान्यथा समुपाचरेत् ॥ ८१ ॥
वातके तु प्रतिश्याये पिवेत्सर्पिर्यथाबलम्।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ ८२ ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ॥ ८३ ॥
रक्तपित्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम्।
परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥ ८४ ॥
युञ्ज्यात कवलांश्चात्र विरेको मधुरैरपि ॥ ८५ ॥
हितं पित्तप्रतिश्याये पाचनार्थं शृतं पयः।
शृङ्गवेरेण पयसा शृङ्गवेरमथापि वा ॥ ८६ ॥

धवत्वक् त्रिफला श्यामा तिल्वकैर्मधुकेन च।
श्रीपर्णी रजनीमिश्रैः क्षीरे दशगुणे पचेत्॥
तैलं कालोपयुक्तं तु नस्यं स्यादनयोर्हितम्॥ ८७॥

इति धवाद्यं तैलम्।

कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया।
यवाग्वा वामयित्वा च श्लेष्मघ्नं क्रममाचरेत्॥ ८८॥
उभे बले बृहत्यौ च विड़ङ्गं सविकङ्कतम्।
श्वेतामूलं महाभद्रां वर्षाभूं चापि संहरेत्॥ ८९॥
तैलमेभिर्विपक्वन्तु नस्यमस्योपकल्पयेत्॥

इति बलाद्याद्यं तैलम्।

दार्वीङ्गुदिनिकुम्भैश्च किणिह्या सरलेन च।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथा विधिः॥ ९०॥
सर्पींषि कटुसिद्धानि तीक्ष्णधूमाः कटूनि च।
भेषजान्युपयुक्तानि हन्युः सर्वप्रकोपजम्॥ ९१॥
रसाञ्जने सातिविषे मुस्तायां देवदारुणि।
तैलं विपक्वं नस्यार्थे विदध्याच्चात्र बुद्धिमान्॥ ९२॥

इति रसाञ्जनाद्यं तैलम्।

मुस्ता तेजोवती पाठा कट्फलं कटुका वचा।
सर्षपाः पिप्पलीमूलं पिप्पलीसैन्धवाग्निकौ॥ ९३॥
तुल्यं करञ्जबीजञ्च लवणं भद्रदारु च।
एतैः कृतं कषायञ्च कवले तच्च धारयेत्॥ ९४॥
हितं शिरोविकारे च तैलमेभिर्विपाचयेत्।

इति मुस्तकादितैलम्।

चोरमर्द्दजलं क्वाथ्यं जाङ्गलैर्मृगपक्षिभिः।
पुष्पैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि॥ ९५॥

हिमे क्षीरावशिष्टेऽस्मिन् घृतमुत्पाद्य यत्नतः ।
सर्वगन्धासितानन्ता मधुकं चन्दनं तथा ॥ ८६ ॥
अवाप्य विपचेत् भूयो दशक्षीरञ्च तद्घृतम् ।
नस्यप्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ॥ ८७ ॥
गोमूत्रपिष्टाश्चोद्दिष्टा क्रियाः क्रमिषु योजयेत् ।
धावानि क्रमिघ्नानि भेषजानि च बुद्धिमान् ॥ ८८ ॥
शेषाणान्तु विकाराणां स्वयं कुर्य्याच्चिकित्सितम् ।
प्राणार्बुदेऽधिमांसे च क्रियां शेषेषु वीक्ष्य च ॥ ८९ ॥
गृहधूमकणादारु चारनक्ताह्वसैन्धवैः ।
सिद्धं शिखरिवीजैश्च तैलं नासार्शसां हितम् ॥ १०० ॥

इति गृहधूमतैलम् ।

शिग्रुकान्तावचाव्योषद्राक्षासुरससैन्धवैः ।
नस्यदानाज्जयेत्सिद्धं तैलं नासागदे नृणाम् ॥ १०१ ॥

इति शिग्रुतैलम् ।

रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च ।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥ १०२ ॥

इति करवीराद्यं तैलम् ।

व्योषं धान्यककुसुमं गण्डीरकमवल्गुजं वीजम् ।
एभिस्तैलं पक्कं नासार्शोनाशनं सिद्धम् ॥ १०३ ॥

इति व्योषाद्यं तैलम् ।

इति वङ्गसेनसङ्कलितः नासारोगनिदानचिकित्साधिकारः समाप्तः ।

---

# अथ नेत्ररोगनिदानमाह ।

उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्य्ययाच्च ।
स्वेदाद्रजोधूमनिषेवणाच्च छर्द्देर्विघाताद्वमनातियोगात् ॥ १ ॥
द्रवात्तथान्नान्निशिसेवनाद्वा विण्मूत्रवातक्रमनिग्रहाच्च ।
प्रसक्तसंरोदनशोककोपाच्छिरोऽभिघातादतिमद्यपानात् ॥ २ ॥
तथा ऋतूनाञ्च विपर्य्ययेण क्लेशाभिघातादतिमैथुनाच्च ।
बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः३
वातात्पित्तात्कफाद्रक्तादभिष्यन्दश्चतुर्विधः ।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः ॥ ४ ॥
निस्तोदनस्तम्भनरोमहर्षसंहर्षपारुष्यशिरोऽभितापाः ।
विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥५॥
दाहप्रपाकौ शिशिराभिनन्दो धूमायनं वाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ ६ ॥
उष्णाभिनन्दो गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च ।
स्रावो बहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥७॥
ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च ।
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥८॥

इति अभिष्यन्दचतुष्टयम् ।

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ ९ ॥
उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ।
शिरसोऽर्द्धञ्च तं विद्यादधिमन्थं स्वलक्षणैः ॥ १० ॥
हन्याद् दृष्टिं श्लैष्मिकः सप्तरात्रात्तद्वन्मन्थो रक्तजः पञ्चरात्रात् ।
षड्रात्राद्वा वातिको वै निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव११
उदीर्णवेदनं नेत्रं रोगोद्रेकसमन्वितम् ।

घर्षनिस्तोदशूलास्रु युक्तमामान्वितं विदुः ॥ १२ ॥
मन्दवेदनताकण्डूः संरम्भास्रुप्रशान्तता ।
प्रसन्नवर्णता चाक्ष्णोः सम्यक्कं दोषमादिशेत् ॥ १३ ॥
कण्डूपदेहास्रुयुतः पक्कोदुम्बरसन्निभः ।
संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ॥ १४ ॥
शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे ॥ १५ ॥
उपेक्षणादक्षि यदाधिमन्थो वातात्मकः सादयति प्रसह्य ।
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥१६॥
वारंवारं च पर्य्येति भ्रुवौ नेत्रे च मारुतः ।
रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्य्ययः ॥ १७ ॥
यत् कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनञ्च ।
सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं वदन्ति ॥१८॥
यस्यावटुः कर्णशिरो हनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा ।
कुर्य्याद्रुजं वै भ्रुवि लोचने च तमन्यतो वातमुदाहरन्ति ॥१९॥
श्यावं लोहितपर्य्यन्तं सर्वं चाक्षि प्रपच्यते ।
सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥ २० ॥
अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः ।
मुहुर्विरज्यन्ति च याः स तादृग्व्याधिः शिरोत्पात इति प्रदिष्टः॥२१॥
मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगः सशिराप्रहर्षः ।
ताम्राश्रुमच्छं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च ॥२२॥

अथ चिकित्सामाह ।

अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण रोगाः शाम्यन्ति लङ्घनैः ॥ २३ ॥
लङ्घनालेपनस्वेद शिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ २४ ॥
स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।

लङ्घनं चाक्षिरोगाणामामानां पाचनानि षट् ॥ २५ ॥
मारुतानशनास्वप्नक्रोधशोकसमुद्भवान् ।
न लङ्घयेदभिष्यन्दान् वातव्याधिपरांस्तथा ॥ २६ ॥
अभिष्यन्देऽधिमन्थे च वातोत्थे वातपर्य्यये ।
शुष्कपाकेऽन्यतो वाते सामान्यो वक्ष्यते विधिः ॥ २७ ॥
स्नेहस्वेदविधिः कृत्स्नो ग्राम्यानूपोदकामिषम् ।
नस्यं क्षीरघृताभ्याञ्च शिरावेधश्च शस्यते ॥ २८ ॥
अथवा वेदनार्त्तस्य न शिराव्यधनक्रमः ॥ २९ ॥
तत उपाचरेद्वैद्यः सामान्यविधिना नरम् ।
पुराणसर्पिषा चैव सम्यक् स्नेहविरेचनैः ॥ ३० ॥
तर्पणैः पुटपाकैश्च धूमैराश्चोतनैस्तथा ।
नस्यैः स्नेहपरिषेकैः शिरोवस्तिभिरेव च ॥ ३१ ॥
कुरण्टपुष्पयष्ट्याह्व सिताविश्वैः समस्तुभिः ।
शुण्ठीसैन्धवयष्ट्याह्व लोध्रभृष्टैर्घृतैरपि ॥ ३२ ॥
श्रीवासद्विनिशालोध्रैश्चूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगते कार्य्यं प्रोतस्थैर्गुण्डनं बहिः ॥ ३३ ॥
धात्रीफलनिर्य्यासो नवष्टकोपं निहन्ति पूरणतः ।
एरण्डपत्रसप्तकरसोऽथवा सैन्धवसंयुक्तः ॥ ३४ ॥
नवष्टकोपशमनः क्षौद्रयुतः शिग्रुमूलरससेकः ।
नश्यत्यवश्यमथवा काञ्जिकपुनर्नवासैन्धवैर्विहितैः ॥ ३५ ॥
वातपित्तकफसन्निपातजां नेत्रयोर्बहुविधामपि व्यथाम् ।
शीघ्रमेव विनिहन्ति योजितः शिग्रुपल्लवरसः समाक्षिकः ॥३६॥

गोमूत्रे छगलरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्य्याद्गरुड़समं नरस्य चक्षुः ॥ ३७ ॥

सूर्य्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादियोज्यं तथाञ्जनं माक्षिकहेमघृष्टम्॥३८॥
करवीरतरुणकिसलयच्छिन्नोद्भवरसातिसम्पूर्णम् ।
नयनयुगं भवति दृढ़ं सहसैव तत्क्षणात् कुपितम् ॥ ३९ ॥

सैन्धवदारुहरिद्रागैरिकपथ्या रसाञ्जनैः पिष्टैः ।
दत्तो बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥ ४० ॥
वहिरवलिप्तं लोचनमभिकुपितमपि प्रसीदति क्षिप्रम् ।
लोध्ररसाञ्जनचन्दनमनःशिला कुष्ठपथ्याभिः ॥ ४१ ॥
भूम्यामलकीपिष्टासैन्धवगृहवारियोजिता ताम्रे ।
जाता घनत्वमक्ष्णोर्जयति वहिर्लेपतः पीड़ाम् ॥ ४२ ॥
अर्कञ्च मूलमापोत्थ्य मुहूर्त्तं वारिणि न्यसेत् ।
एतदाश्च्योतनं दृष्टं नयनामयनाशनम् ॥ ४३ ॥

निम्बस्य चोदुम्बरवल्कलस्य एरण्डयष्टीमधुचन्दनस्य ।
पिण्डी विधेया नयने प्रकोपिते कफेन पित्तेन समीरणेन॥४४॥

यद्यक्षिशूलं मन्येत सरुजं व्यक्तलक्षणम् ।
वेदनानिग्रहार्थञ्च कुर्य्यादाश्च्योतनं तदा ॥ ४५ ॥
आश्च्योतनमभिष्यन्दौ युञ्जीतार्वाक् दिनत्रयम् ।
अञ्जनं पक्वदोषस्य नेत्ररोगेऽनिलात्मके ॥ ४६ ॥
शोथञ्च दाहरोगञ्च क्लेदकण्डू तथारुणम् ।
अक्ष्णोरस्रप्रसेकञ्च क्षिप्रमाश्च्योतनं हरेत् ॥ ४७ ॥
ग्रीष्मे वर्षाशरत्काले ह्यस्रपित्तामयेषु च ।
मुहुर्मुहुः स्वादुशीतं क्रमादाश्च्योतनं तथा ॥ ४८ ॥
वातश्लेष्मणि हेमन्ते वसन्ते शिशिरेषु च ।
तीक्ष्णोष्णमम्लशश्चैव कार्य्यमाश्च्योतनं बुधैः ॥ ४९ ॥
पक्वे च श्लैष्मिके व्याधौ पाणिः शुक्तिश्च वातिके ।
आश्च्योतने प्रमाणं स्याद् द्वे शुक्ती चाशु पैत्तिके ॥ ५० ॥

अष्टौ दश द्वादशविन्दवस्तु संलेखनस्नेहनरोपणेषु।
आश्च्योतने च क्रमशो विधेया मात्रास्तु तिस्रो नयनामयेषु॥५१॥

इति आश्च्योतनमात्राविधिः।

आश्च्योतने मारुतजे क्वाथो विल्वादिभिर्हितः।
कोष्णः सैरण्डवृहती तर्कारीमधुशिग्रुभिः॥ ५२ ॥
शूलघ्नं वारुणीटीच्य यष्टीसैन्धवसाधितम्।
ह्रीवेरचक्रमञ्जिष्ठोदुम्बरत्वक्षु साधितम्।
साम्भसा पयसा तेन शूले चाश्च्योतनं परम्॥ ५३ ॥
सर्पिषाश्च्योतनं श्रेष्ठं सर्पिषा चोपनाहनम्।
परिषेकः सुखोष्णेन मूर्ध्नि तैलविधारणम्॥ ५४ ॥
पूर्वभक्तं हितं सर्पिः चीरञ्चाप्यथ भोजनम्।
जातीपुष्पं घृते भृष्टं चक्षुष्यमुपनाहनम्॥ ५५ ॥
तथा शावरकं लोध्रं घृतभृष्टं विड़ालकः।
कार्य्यो हरीतकी तद्वद् घृतयुक्ता रुजापहा॥ ५६ ॥
सुखाम्बुपिष्टैः संयुक्तं शर्करालोध्रसैन्धवैः।
दग्ध्वा ससैन्धवं लोध्रं मधुच्छिष्टयुते घृते।
पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजापहम्॥ ५७ ॥
ततः सम्यक्कदोषस्य प्राप्तमञ्जनमाचरेत्॥ ५८ ॥
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते।
पूर्वाह्णे चापराह्णे च ग्रीष्मे शरदि चेष्यते॥ ५९ ॥
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि।
प्रातः सायं च तत् कुर्य्यान्न च कुर्य्यात्सदैव हि॥ ६० ॥
हरेणुमात्रां कुर्वीत वर्त्तिंस्तीक्ष्णाञ्जने भिषक्।
प्रमाणं मध्यमे सार्द्धं द्विगुणं तु मृदौ भवेत्॥ ६१ ॥
विड़ङ्गमात्रं त्वधमं मध्यं द्विश्च्योतनन्त्रयम्।
रसक्रियाणां वर्त्तीनां प्रमाणं परिकीर्त्तितम्॥ ६२ ॥

वैरेचनिकचूर्णन्तु द्विशलाका विधीयते।
मृदौ तु त्रिशलाका स्याच्चतस्रः स्नैहिकेऽञ्जने ॥ ६३ ॥
सुवर्णरूप्यताम्राय: कांस्या श्मास्थिमया: शुभा:।
शलाकाश्चाञ्जने कार्य्या अष्टाङ्गुलमिता बुधैः ॥ ६४ ॥
बृहत्यैरण्डमूलत्वक् शिग्रुमूलं ससैन्धवम्।
अजाक्षीरेण पिष्टं स्या द्वर्त्तिर्वाताक्षिरोगनुत् ॥ ६५ ॥
हरिद्रां मधुकं पथ्यां देवदारु च पेषयेत्।
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥ ६६ ॥
सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम्।
स्तन्योदकार्द्रं कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥ ६७ ॥
शुष्काक्षिपाके हविषः पान मक्ष्णोश्च तर्पणम्।
घृतेन जीवनीयेन नस्यं तैलेन चाम्बुना ॥ ६८ ॥
यावन्मज्जति पक्ष्माग्रं भ्रुवोरन्तरनेत्रयो:।
तावच्च पूरयेन्नेत्रे तत उन्मीलयेच्छनैः ॥ ६९ ॥
मारुते दश धार्य्याणि पित्तेऽष्टौ वा शतानि च।
निर्दिष्टानि कफे षड्वा व्याधौ व्याधिवशेन वा ॥ ७० ॥

इति तर्पणमात्रा।

परिषेके हितं चात्र पय: कोष्णं ससैन्धवम्।
रजनीदारुसिद्धं वा सैन्धवेन समायुतम् ॥ ७१ ॥
सर्पिर्युक्तं स्तन्यघृष्टमञ्जनं च महौषधम्।
वाताभिष्यन्दशमनं हितं मारुतपर्य्यये ॥ ७२ ॥
वाताभिष्यन्दवच्चात्र वाते मारुतपर्य्यये।
पूर्वं तत्र हितं सर्पिः क्षीरं वाप्यथ भोजनम् ॥ ७३ ॥
वृक्षादन्यद्वया चैव पञ्चमूली महत्यपि।
सक्षीरं कर्कटरसे सिद्धं वापि पिबेद् घृतम् ॥ ७४ ॥

इति वृक्षादन्याद्यं तैलम्। इति वाताभिष्यन्दः।

अनेनैव विधानेन भिषक् तमपि साधयेत् ।
अभिष्यन्दमधिमन्थ मन्थानपि च पित्तजान् ॥ ७५ ॥
व्याधीनुपाचरेद्वीमां स्तोच्णैः सुस्निग्धशीतलैः ।
आश्चोतनैः परिषेकैः पुटपाकैः सतर्पणैः ॥ ७६ ॥
स्नेहैर्विरेचनैर्लेपै रक्तस्य च विमोचणैः ।
प्रपुण्डरीकयष्ट्याह्व निशामलकपद्मकैः ॥
सितामधुसमायुक्तैः सकपित्थैश्च रोगनुत् ॥ ७७ ॥
निम्बस्य पत्रैः परिलिप्य लोध्रं स्वेदाग्निना चूर्णमथापि कल्कम् ।
आश्चोतनं मानुषदुग्धमिश्रं पित्तास्रवातापहमग्र्यमुक्तम् ॥७८॥
द्राचामधुकमञ्जिष्ठा जीवनीयैः शृतं पयः ।
प्रातराश्चोतनं पथ्यं शोथशूलाचिरोगनुत् ॥ ७९ ॥
चन्दनारिष्टपत्राणि यष्टीं दार्वीं ससैन्धवम् ।
पिष्टाम्भसा भवेत्सेकः पित्तचौद्रसमन्वितः ॥ ८० ॥
पैत्तिके चन्दनानन्ता मञ्जिष्ठाभिर्विड़ालकः ।
कार्य्यः सपद्मयष्ट्याह्व मांसीकालीयकैस्तथा ॥ ८१ ॥
धात्रीलोध्रं घृते भृष्टं शिलायुक्तं सुवर्त्तितम् ।
प्रमृज्येद् गुटिकां कृत्वा कुपिते लोचने वहिः ॥ ८२ ॥
उदुम्बरफलं लोध्रं घृष्ट्वा चात्यन्तधूपितम् ।
साज्यं समाचिकं दारु शूलरोगास्रुजिद्भवेत् ॥ ८३ ॥
चन्दनं मधुकं लोध्रं जातिपत्राणि गैरिकम् ।
प्रलेपो दाहरोगघ्नस्तोदाभिष्यन्दनाशनः ॥ ८४ ॥
भृष्ट्वा घृतेन नागरतिरीटधात्रीमनःशिलागुटिका ।
उपर्य्युपरिमार्जनेन चपयति शूलं चणेनाच्णोः ॥ ८५ ॥
गुन्द्रां शालिं सैन्धवं शैलभेदं दर्भामिक्षुं लोध्रकं वेतसञ्च ।
दार्वीं द्राचां चन्दनं चोत्पलं वा स्त्रीणां स्तन्यं शर्करां चौद्रकञ्च ८६
पद्मात्पत्रं यष्टिकाह्वं हरिद्रा तालानन्ते चापि संहृत्य सर्वान् ।

सिद्धं सर्पिः तर्पणे नावने च शस्तं चौरं श्चोतने चैव सेके ॥८७॥
क्रियाः सर्वाः पित्तहर्य्यः प्रशस्तास्त्र्यहादूर्द्धं चौरसर्पिश्च नस्यम् ।
पालाशं स्याच्छोणितञ्चाञ्जनार्थं शल्लक्या वा शर्कराचौद्रयुक्तम्८८

तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम् ।
श्रम्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥ ८९ ॥
तैल्वकं त्रैफलं सर्पिर्जीर्णं वा केवलं पिबेत् ।
शिराव्यधं विना कार्य्यः पित्तष्यन्दहरो विधिः ॥ ९० ॥
कोष्णस्य सर्पिषः पानं विरेकासेकलेपनैः ।
स्वादुशीतैः प्रशमयेच्छुक्तिकमञ्जनैस्ततः ॥ ९१ ॥
प्रवालमुक्तावैदूर्य्य शङ्खस्फटिकचन्दनम् ।
सुवर्णरजतचौद्रमञ्जनं शुक्तिकापहम् ॥ ९२ ॥
धूमदर्शी पिबेत्सर्पिः सर्वपित्तामयं जयेत् ॥ ९३ ॥
अभिष्यन्दमधिमन्थं रक्तोत्थमथवार्जुनम् ।
शिरोत्पातं शिराहर्षमन्यान् वातोद्भवान् गदान् ।

इति पित्ताभिष्यन्दः ।

स्निग्धस्य कोष्णेनाज्येन शिरावेधैः शमं नयेत् ॥ ९४ ॥
तिरीटत्रिफलायष्टी शर्कराभद्रमुस्तकैः ।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ ९५ ॥
लोध्रचूर्णं घृते भृष्टं रुजमाश्चोतनं हरेत् ।
शर्करात्रिफलाचूर्णमिदमाश्चोतनं परम् ॥ ९६ ॥
लाक्षामधुकमञ्जिष्ठा लोध्रं कालानुशारिवा ।
प्रशीण्डरीकसंयुक्तः सेको रोगहरो हितः ॥ ९७ ॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंभृतम् ।
न्यस्तमप्स्वन्तरिक्षेषु हितमाश्चोतनं भवेत् ॥ ९८ ॥
नीलोत्पलोशीरकटङ्कटेरीकालीययष्टीमधुमुस्तलोध्रैः ।
सपद्मकैर्धौतघृतप्रदिग्धैस्त्रिसः प्रसेकाः प्रहिता प्रयुक्तान् ॥ ९९ ॥

रुजायाञ्चातितीव्रायां स्वेदाश्च मृदवो हिताः।
अक्ष्णोः समन्ततः कार्य्यं पातनञ्च जलौकसाम् ॥ १०० ॥
घृतस्य महतीं मात्रां पीत्वा चार्त्तिं नियच्छति।
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ १०१ ॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंभृतम्।
छागीक्षीरे घृते सेकः पित्तरक्ताभिघातजित् ॥ १०२ ॥
श्रीपर्णी पाटला धात्री धातकी तिल्वकार्जुनात्।
पुष्पाण्यथ बृहत्याश्च विम्बीलोध्रञ्च तुल्यशः ॥ १०३ ॥
समञ्जिष्ठानि मधुना पिष्टानीक्षुरसेन वा।
रौधिरस्यन्दशान्त्यर्थं मेतदञ्जनमिष्यते ॥ १०४ ॥
मृणालचन्दनोशीरपद्मकोत्पलयष्टिभिः।
परिषेकं प्रकुर्वीत रक्तजेऽप्येतदेव तु ॥ १०५ ॥
सुमनःक्षारकं शङ्खं त्रिफलां मधुकं बलाम्।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥ १०६ ॥
दार्वीपटोलं मधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीकं चैतानि पचेत्तोये चतुर्गुणे ॥ १०७ ॥
विपाच्य पादशेषन्तु तत् पुनः कुड़वं पचेत्।
शीते तस्मिन्मधुसिते दद्यात्पादांशिके ततः।
रसक्रियैषा दाहाश्रुरोगरक्तरुजापहा ॥ १०८ ॥
सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत्सैन्धवकासीसं स्तन्यपिष्टञ्च पूजितम् ॥ १०९ ॥
शिराहर्षेऽञ्जनं कार्य्यं फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ॥
वेतसाम्लं स्तन्ययुक्तं फाणितं तु ससैन्धवम् ॥ ११० ॥

इति रक्ताभिष्यन्दः।

कफजे लङ्घनं स्वेदो नस्यं तिक्तादिभोजनम्।

तीक्ष्णैः प्रधमनं कुर्य्यात्तीक्ष्णैरेवोपनाहनम् ॥ १११ ॥

उष्णैस्तथाश्चोतनसंविधानैस्तथैव तीक्ष्णैः पुटपाकयोगैः ॥११२॥

अभिष्यन्देऽधिमन्थे च सञ्जाते श्लेष्मसम्भवे ।
स्निग्धस्विन्नोत्तमाङ्गस्य स्निग्धतीक्ष्णैर्विरेचयेत् ॥ ११३ ॥
स्रावैः प्रपीड़ैः प्रधमैर्धूमैश्च विविधैर्मुहुः ।
रूक्षैस्तीक्ष्णविरेकैश्च मलं सम्यग्विनिर्हरेत् ॥ ११४ ॥
रसाञ्जनेन वा लेपः पथ्याविश्वदलैरपि ।
वचाहरिद्राविश्वाभिस्तथा नागरगैरिकैः ॥ ११५ ॥
शिलाह्वा श्वेतमचिरं लोध्रञ्च परिपूरितम् ।
सितवस्त्रेण संबद्धं शस्तमक्ष्णोः प्रघर्षणात् ॥ ११६ ॥
निम्बपत्रैः कृतं चूर्णं लोध्रचूर्णसमन्वितम् ।
वस्त्रबद्धं जले क्षिप्तं पूरणं नेत्ररोगनुत् ॥ ११७ ॥
फणिज्जकास्फोतकपित्थविल्वधत्तूरपीलुसुरसार्ज्जभृङ्गैः ।
स्वेदं विदध्यादथवा प्रलेपं वर्हिष्टशुण्ठीसुरदारुकुष्ठैः ॥११८॥
शुण्ठीनिम्बदलैः पिण्डः सुखोष्णः स्वल्पसैन्धवः ।
धार्य्यश्चक्षुषि संक्षेपाच्छोथकण्डूव्यथापहः ॥ ११९ ॥

ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ।
आश्चोतनं तन्नयनस्य कुर्य्यात्सर्वाक्षिरोगप्रशमार्थमेतत् ॥१२०॥

द्वौ द्वौ भागौ रजन्योश्च भागिकौ धूमसर्षपौ ।
कफाभिष्यन्दजिद् भृष्टं पिष्टमाश्चोतमम्भसा ॥ १२१ ॥
लोध्रं संपिष्य सम्पक्वं खदिराजाजिसर्षपैः ।
नागरारिष्टसिन्धूत्थैर्युक्तं दृषदि चूर्णितम् ॥ १२२ ॥
सिते वाससि तद्बद्धं न्यसेत् स्वच्छाम्लकाञ्जिके ।
तदक्ष्णोः पूरणं कार्य्यं चक्षुसंवर्त्मरोगजित् ॥ १२३ ॥
वल्कलं पारिजातस्य तैलसैन्धवकाञ्जिकम् ।
कफवाताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा ॥ १२४ ॥

सौवीरं सैन्धवं तैलं मूर्वामूलं तथैव च।
कांस्यपात्रे विघृष्टं स्यादक्ष्णोः शूलनिवारणम्॥ १२५॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिसमुद्रजः।
फेनोग्रलेपकः सर्जो वर्त्तिः श्लेष्माक्षिरोगनुत्॥ १२६॥
निम्बार्कपत्रसम्पक्कं लोध्रं भागचतुष्टयम्।
धूमसर्षपयोर्भागैः कफसेकः सुखाम्बुना॥ १२७॥
नागरं त्रिफलानिम्ब वासानिम्बरसः कफे।
साज्यं विल्वच्छदं घृष्टं पात्रे ताम्रमये दृढ़े॥
शोथहृद्वह्निना धूमं छागक्षीरपरिप्लुतम्॥ १२८॥
विल्वपत्ररसः पूतः साज्यः सिन्धुभवान्वितः।
शुल्वे वराटिकां घृष्ट्वा धूपितो गोमयाग्निना॥ १२९॥
पयसा लोड़ितश्चाक्ष्णोः पूरणाच्छोथशूलजित्।
अभिष्यन्देऽधिमन्थे च रक्तस्रावे च शस्यते॥ १३०॥

इति विल्वाञ्जनम्।

सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम्॥ १३१॥

इति कफाभिष्यन्दः।

कोष्णमाश्चयोतनं मिश्रैर्भेषजैः सान्निपातिके।
यष्टीं गुड़ूचीं त्रिफलां सदार्वीं मक्ष्यामये सर्वगते पिबेद्वा।
आश्चयोतनं सर्वरसेन दार्व्याः शस्तं सदा क्षौद्रयुतं नराणाम्॥ १३२
गुड़ूचीत्रिफलाक्काथो मधुना सह योजयेत्।
पीतः सर्वाक्षिरोगघ्नः कृष्णाचूर्णावचूर्णितः॥ १३३॥
प्रपौण्डरीकयष्ट्याह्वदार्वीलोध्रैः सचन्दनैः।

ऐरण्डाम्बुयुतैः सेकः सर्वनेत्ररुजापहः ॥ १३४ ॥
श्वेतलोध्रं घृते भृष्टं चूर्णितं ताप्यतुल्यकम् ।
उष्णाम्बुना विमृदितं सेकः शूलहरः परः ॥ १३५ ॥
पिष्टैर्निम्बस्य पत्रैरतिविमलतरैः जातिसिन्धूत्थमिश्रा ।
अन्तर्गर्भं दधाना पटुतरगुटिका पिष्टरोध्रेण भृष्टा ॥
तूलैः सौवीरकार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात् ।
चक्षुः कोपोपशान्तिं चिरमुपरि दृशो भ्राम्यमाणा करोति ॥१३६॥
यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः
जलपिष्टैर्बहिर्लेपः सर्वनेत्ररुजापहः ॥ १३७ ॥
शिग्रुपल्लवनिर्यासः सुपिष्टस्ताम्रसम्पुटे ।
घृतेन शोधुना पीतो हन्ति शोथास्रवेदनाः ॥ १३८ ॥
षोड़शभिः सलिलपलैस्तथैव कण्टकार्य्याः पयः सिद्धाम् ।
शिलां चिरं विमृद्य तद्रसः सर्वनेत्ररोगहरः ॥ १३९ ॥
एरण्डपत्रवेष्टितविल्वच्छदकल्कनिक्षिप्तः लोध्रः ।
कुकूनपक्वः पिष्टः सुसिन्धूद्भवेन संयुक्तः ॥ १४० ॥
घनतरवस्त्रपरिस्रुतदारुहरिद्राकषायमध्यगतः ।
आश्च्योतनेन हन्यात्सर्वाण्येवाक्षिशूलानि ॥ १४१ ॥
अयमेव विधिः सर्वो मन्यादिष्वपि शस्यते ।
अधिमन्थेषु सर्वेषु ललाटे व्यधयेच्छिराम् ॥
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ १४२ ॥

इति सर्वाभिष्यन्दः ।

जलौकापातनं शस्तं नेत्रपाके विरेचनम् ।
शिराव्यधं वा कुर्वीत सेको लेपस्तु शुक्रनुत् ॥ १४३ ॥
विभीतकशिवाधात्री पटोलारिष्टवासकैः ।
क्वाथो गुग्गुलुना पेयः शोथाक्षिपाकरोगनुत् ॥ १४४ ॥
पिल्लञ्च सव्रणं शुक्ररागादींश्च विनाशयेत् ।

एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ १४५ ॥

इति षड़ङ्गगुग्गुलुः क्वाथः घृतञ्च।

आटरूषाभयानिम्ब धात्रीमुस्तकवल्कलैः।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ १४६ ॥

इति वासकादिः क्वाथः।

वासाघनं निम्बपटोलपत्रतिक्तामृताचन्दनवत्सकत्वक्।
कलिङ्गधात्रीदहनं च शुण्ठी भूनिम्बधात्रीविजयाविभीतम्॥१४७
पीतः समांशैः क्वथितैः कषायो नृभिस्तु मुख्यानखिलाच्चिरोगान्।
तैमिर्य्यकण्डूपटलार्व्वुदञ्च शुक्रं तथा सव्रणमव्रणं च ॥ १४८ ॥
सदाहरागं सरुजं सपिल्लं हन्यात्समस्तानपि नेत्ररोगान्।
वातामयान् पित्तकफामयांश्च वासादिकोऽयं मुनिभिः प्रदिष्टः१४९

पथ्यास्तिस्रो विभीतक्यः षट्धात्र्यो द्वादशैव तु।
प्रस्थार्द्धे सलिले क्वाथ्यमष्टभागावशेषितम् ॥ १५० ॥
पित्ताभिष्यन्दमास्रावं रोगं वा तिमिरं जयेत्।
संरम्भदाहशूलासृङ् नाशनं दृक् प्रसादनम् ॥ १५१ ॥

इति नेत्रपाकः। इति सर्व्वनेत्ररोगाः।

अथ कृष्णगतरोगनिदानमाह।

निमग्नरूपन्तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यच्च।
स्रावं स्रवेदुष्टमतीव यच्च तत्सव्रणं शुक्रमुदाहरन्ति ॥ १५२ ॥
दृष्टेः समीपे न भवेत् तु यच्च न चावगाढ़ं न च संस्रवेच्च।
अवेदनं वा न च युग्मशुक्रं तत्सिद्धिमायाति कदाचिदेव ॥१५३॥
स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासम्।
वैहायसाभ्रप्रतनुप्रकाशमथाऽव्रणं साध्यतमं वदन्ति ॥ १५४ ॥
गम्भीरजातं बहुलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम्॥१५५
विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च।
द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम् ॥१५६

उष्णाश्रुपातः पिड़िका च नेत्रे यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम्।
तदप्यसाध्यं प्रवदन्ति केचिदन्ये तु यत्तित्तिरिपक्षतुल्यम् ॥१५७॥
श्वेतः समाक्रामति सर्वतो हि दोषेण यस्याऽसितमण्डलन्तु।
तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ॥१५८॥

मिथ्योपचाराद्रोगाणां दोषादाघाततोऽपि च।
अजका जायते नेत्रे कृष्णाद्दृष्टिसमाऽसृजा ॥ १५९ ॥

अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रु।
विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत्१६०

अजापुरीषसङ्काशा मृद्वीका फलसन्निभा।
वातरक्तसमुत्थाना प्रायशस्त्वजका हि सा ॥ १६१ ॥
मूर्द्धाक्षिकर्णभ्रूगण्ड शङ्खचर्माश्रिताजका।
जायते व्यथते नेत्रं मथ्यमानमिवान्तरा ॥ १६२ ॥
उष्णमसृक् स्रवत्यक्षि दूयते क्लिद्यते भृशम्।
असाध्यरोगसम्भूतां दृष्टिजाञ्च विवर्जयेत्।
स्वप्रभिन्नां च कठिनां चिरकालोत्थितामपि ॥ १६३ ॥

अथ चिकित्सामाह।

साध्यरोगसमुत्पन्नां कृष्णजान्त्वजकां जयेत् ॥ १६४ ॥
साध्यान्यवेक्ष्य शुक्राणि स्निग्धस्याऽसृग्विमोक्षणैः।
आश्च्योतनमुखालेप घर्षणाञ्जनवस्तिभिः।
पुटपाकैश्च नस्यैश्च सामान्यं शुक्रभेषजम् ॥ १६५ ॥

धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरं तिलाश्च।
क्वाथः सशीतो नयने निषिक्तः सर्वप्रकारं विनिहन्ति शुक्रम्१६६

फणिज्जकरसे वीजं पलाशस्य विभावितम्।
शोषयित्वा सुपिष्टं तत् चाञ्जनाच्छुक्रहृत्परम् ॥ १६७ ॥

जात्याः प्रवालं मधुकं ससर्पिर्भृष्टं सुखोष्णाम्बु सुशीतरश्मिः।
आश्च्योतनं शुक्रहरं प्रदिष्टं शुक्रापहं स्त्रीपयसा महार्हम् ॥१६८॥

सैन्धवं बृहतीमूलं ताम्रचूर्णं सनागरम्।
धात्रीरसेन पिष्ट्वा च ताम्रपात्रं प्रलेपयेत्।
तत्पूते धूमयेच्चैनं शुद्धशुक्रं व्यपोहति॥ १६९॥
शुद्धशुक्रे निशायष्टी शारिवाशावराम्भसा।
सेचयेन्नेत्रयोर्दृष्टीं कृष्णाम्भोमग्नजां तथा॥ १७०॥
क्षुण्णपुन्नागपर्णेन परिभावितवारिणा।
श्यामाक्राथाम्बुना वाथ सेवनं शुक्रनाशनम्॥ १७१॥
सैन्धवं त्रिफला कृष्णा कटुकाशङ्खनाभयः।
सताम्ररजसो वर्त्तिः शुद्धशुक्रविनाशिनी॥ १७२॥
स्थिरशुक्रे घने चैव बहुशोऽपहरेदसृक्।
शिरः कायविरेकांश्च पुटपाकांश्च कारयेत्॥ १७३॥
समुद्रफेनसिन्धूत्थ शङ्खदत्ताण्डवल्कलैः।
शिग्रुबीजयुतैर्वर्त्तिः शुक्रादीञ्छस्त्रवल्लिखेत्॥ १७४॥
वटक्षीरेण संयुक्तं श्लक्ष्णकर्पूरजं रजः।
क्षिप्रमञ्जनतो हन्ति शुक्रं वापि घनोन्नतम्॥ १३५॥
शिरीषबीजनिम्बैश्च पिप्पलीसैन्धवैरपि।
शुक्रे प्रघर्षणं कार्य्यमथवा सैन्धवेन च॥ १७६॥
वंशजारुष्करौ तालं नारिकेलञ्च तद्दहेत्।
विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम्।
बहुशोऽञ्जनमेतत्स्याच्छुक्रवैवर्ण्यनाशनम्॥ १७७॥
बहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात्।
नक्ताह्वबीजवर्त्तिः कुसुमचयं दृष्टु चिरजमपि॥ १७८॥
स्फटिकोषणयष्ट्याह्व शङ्खगोदन्तसैन्धवैः।
पिष्टैः सचन्दनैर्वर्त्तिः शुक्रघ्नी शिग्रुवारिणा॥ १७९॥
संघृष्य पिप्पलीचूर्णं सफेनं कांस्यभाजने।
स क्षौद्रं सैन्धवोपेत मञ्जनं शुक्रनाशनम्॥ १८०॥

समुद्रफेनमभयां ह्रीवेरं सकुटन्नटम् ।
पिष्ट्वा धात्रीफलक्काथे वर्त्तिः स्याच्छुक्रनाशिनी ॥ १८१ ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्रनाशनाः ॥ १८२ ॥
त्रिफला चन्दनं व्योषं मञ्जिष्ठा नागरं निशा ।
प्रियङ्गु शारिवानन्ता यष्ट्यादाजश्च चूर्णितम् ॥ १८३ ॥
क्षौद्रसैन्धसर्पिर्भिः संयोज्य विधिवत्पचेत् ।
पुटपाकः प्रशस्तोऽयं शुक्राणां लेखनः परः ॥ १८४ ॥

इति त्रिफलादिपुटपाकाञ्जनम् ।

लामज्जकोत्पलसिता चन्दनद्वयकार्षिकान् ।
छित्त्वा च शारिवाप्रस्थं क्वाथयेत्सलिलाढ़कम् ॥ १८५ ॥
पादशेषं परिस्राव्य पचेदादर्विलेपनात् ।
भाजने लोहशैले वा तत्प्रातः सायमञ्जनम् ॥ १८६ ॥
प्रधानमेतच्छुक्रघ्नं व्रणशुक्रं शमं नयेत् ॥ १८७ ॥

इति लामज्जकाद्यमञ्जनम् ।

व्रणशुक्रप्रशान्त्यर्थं षड़ङ्गं गुग्गुलुं पिबेत् ।
शिरसो वा हरेद्रक्तं जलौकाभिश्च लोचनात् ॥ १८८ ॥
ससैन्धवत्रिवृत्क्वाथे त्रीन् वारान् पाचितं घृतम् ।
पीत्वा सर्वेषु शुक्रेषु शीघ्रं कुर्य्याच्छिराव्यधम् ॥ १८९ ॥
यष्ट्याह्वदार्व्युत्पलपद्मलाक्षा प्रपौण्डरीकं नलदं लता च ।
आश्चोतनं स्त्रीपयसा विपक्वं निहन्ति तत्सव्रणदाहशुक्रम्॥१९०॥
श्यामामूलं कषायं वा मधुना व्रणशुक्रिणाम् ।
रत्नानि दन्ताः शृङ्गाणि धातवश्च फलत्रुटिः ।
करञ्जबीजं लशुनो व्रणघ्नादि च भेषजम् ॥ १९१ ॥
सव्रणा व्रणगम्भीर त्वक् शुक्रघ्नमथाञ्जनम् ।
हितान्येतानि सर्वाणि नराणां व्रणशुक्रिणाम् ॥ १९२ ॥

कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च।
कांस्ये निघृष्य स्तन्येन चतशुक्रार्त्तिरोगजित्॥ १९३॥
चन्दनं गैरिकं लाचा मालतीकलिकाः समाः।
व्रणशुक्रहरी वर्त्तिः शोणितस्य प्रणाशनी॥ १९४॥

इति चन्दनादिवर्त्तिः।

दन्तैर्दन्तिवराहोष्ट्रगजाश्वाजखरोद्भवैः।
सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः॥ १९५॥
जलपिष्टैः कृता सर्वैर्दन्तवर्त्तिरिति स्मृता।
तिमिरार्वुदकाचार्मव्रणशुक्रविनाशिनी॥ २९६॥

इति दन्तवर्त्तिः।

ताम्रे च मस्तुनोद्घृष्टं तुत्थकं श्यावतां गतम्।
सर्वाभिष्यन्दशुक्रार्म शिराशूलजिदञ्जनात्॥ १९७॥
दन्ताण्डत्वक् शिलाशङ्ख रक्तचन्दनसैन्धवैः।
तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः॥ १९८॥
गोशकृत्क्वमयः सप्त पीताभाः चौद्रसंयुताः।
घृष्टाः शुक्रहरा दृष्टाः चतजस्य विशेषतः॥ १९९॥
एकं वा पुण्डरीकञ्च गवां चीरावशेषितम्।
रागाद्यग्वेदनां हन्यात् चतपाकाजकास्तथा॥ २००॥
सौवीरमञ्जनं तुत्थं ताप्यं धात्री मनःशिला।
चतुर्हरेणुमधुकं लोहं शुक्रघ्नमञ्जनम्॥ २०१॥

इति पेष्यमञ्जनम्।

कुक्कुटाण्डकपालानि शङ्खकाचोऽपि चन्दनम्।
सैन्धवार्द्धांशसंयुक्त मञ्जनं शुक्रलेखनम्। २०२॥
शङ्खस्रोतोऽञ्जनं लाचा मरिचं समनःशिलम्।
यवान्युदधिजं फेनं ताम्रचूर्णं समाचिकम्।
श्यामावर्त्तिर्लिखत्येव शुक्रकाचार्मपिष्टकम्॥ २०३॥

रसाञ्जनं सशैलेयं कुङ्कुमं सुमनःशिला ।
शङ्खञ्च श्वेतमचिरे शर्करा चेति सप्तमम् ॥ २०४ ॥
एषा चन्द्रोदया नाम्ना वर्त्तिर्वैद्येन निर्मिता ।
हन्यात् पिल्लञ्च कण्डूञ्च शुक्रं सतिमिरार्वुदम् ॥ २०५ ॥
अयः सयष्टित्रिफला कणानां चूर्णानि तुल्यानि पुरेण नित्यम् ।
सर्पिर्मधुभ्यां सह भक्षितानि सर्वाणि शुक्राणि निहन्ति शीघ्रम्२०६
शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥ २०७ ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।
पिच्चटे मधुना योज्यमर्वुदे मस्तुना तथा ॥ २०८ ॥

इति चूर्णाञ्जनम् ।

स्नेहनस्याञ्जनैः शुक्रं निम्नमाशु समुद्धरेत् ।
शुक्रं करोति निर्मूलं पुटपाकैः सलेखनैः ॥ २०९ ॥
पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥ २१० ॥
प्रस्थमामलकानान्तु क्वाथयेदुल्वणेऽम्भसि ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २११ ॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥ २१२ ॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्पगण्डमालापहं परम् ॥ २१३ ॥

इति पटोलाद्यं घृतम् ।

द्राक्षाचन्दनमञ्जिष्ठा काकोलीद्वयजीरकैः ।
सिता शतावरी मेदा पुण्ड्रमधुकोत्पलैः ॥ २१४ ॥
पचेज्जीर्णं घृतप्रस्थं समक्षीरं विचूर्णितैः ।

हन्ति तच्छुक्रतिमिरं रक्तराजीं शिरोरुजम् ॥ २१५ ॥

इति द्राचाद्यं तैलम्।

कृष्णाविड़ङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः।
तैलं नृणां तिमिरशुक्रशिरोऽच्चिशूल-
पाकात्ययान् जयति नस्यविधौ सुयुक्तम् ॥ २१६ ॥

इति कृष्णाद्यं तैलम्।

न विना शोणितं शुक्रचतपाकात्ययोऽजकाः।
भवन्ति रुधिरं तेन जलौकाभिरतो हरेत् ॥ २१७ ॥

इति व्रणशुक्रम्।

अजकायां शिरां मुक्ता स्निग्धचूर्णैर्विरेचयेत्।
घृतवातहरैः सिद्धमजकायां प्रयोजयेत्।
सेके पाने तथाऽभ्यङ्गे भोज्ये दृष्टिविदांवरः ॥ २१८ ॥
पक्कवटपत्रपुटके विधाय मांसं वल्लूरकर्कट्योः।
पुटवद्विदध्याद् बद्धा तद्रससेको जयेदजकाम् ॥ २१९ ॥
गवामस्थित्वचं कांस्ये विनिघृष्य सुखाम्बुना।
पूरयेदच्चि तेनाशु प्रशाम्यत्यजकामयः ॥ २२० ॥
सैन्धवं वाजिपादञ्च गोरोचनसमायुतम्।
शैलत्वग्रससंयुक्तं पूरणं वाजकापहम् ॥ २२१ ॥
शशकस्य कषायेण घृतप्रस्थं विपाचयेत्।
कल्कं दद्यात्तु सचीरं यथोक्तान् कर्षसम्मितान् ॥ २२ ॥
शारिवा मधुकं लाचा चन्दनं नीलमुत्पलम्।
बला चातिबला चैव मृणालं पद्मकं तथा ॥ २२३ ॥
कार्षिकं सविषालोध्रं जीवनीयगणान्वितम्।
घृतमेतत्प्रयोक्तव्यं पाने नस्ये च पूरणे ॥ २२४ ॥
अजकामर्जुनं काचं पटलं शुक्रमेव च।

तथाक्षिरोगान् सकलान् वातपित्तोत्तरं जयेत् ॥ २२५ ॥

इति वृहच्छ्रकाद्यं घृतम्। इति कृष्णगतरोगाः।

अथ दृष्टिगतरोगनिदानमाह।

प्रथमे पटले दोषो यस्य दृष्ट्यां व्यवस्थितः।
अव्यक्तानि च रूपाणि कदाचिदथ पश्यति ॥ २२६ ॥
दृष्टिर्भृशं विह्वलति द्वितीयं पटलङ्गते।
मक्षिकान् मशकान् केशान् जालकानि च पश्यति ॥२२७॥
मण्डलानि पताकांश्च मरीचीन् कुण्डलानि च।
परिप्लवांश्च विविधान् वर्षमभ्रतमांसि च ॥ २२८ ॥
दूरस्थानि रूपाणि मन्यते स समीपतः।
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥ २२९ ॥
यत्नवानपि चात्यर्थं सूचीपाशञ्च पश्यति ॥२३०॥
ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते।
महान्त्यपि च रूपाणि छादितानीव चाम्बरैः ॥ २३१ ॥
कर्णनासाक्षिहीनानि विकृतानीव पश्यति।
यथा दोषञ्च रज्येत दृष्टिर्दोषे बलीयसि ॥ २३२ ॥
अधःस्थे तु समीपस्थं दूरस्थं चोपरिस्थिते।
पार्श्वस्थिते तथा दोषे पार्श्वस्थान्नैव पश्यति ॥ २३३ ॥
समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति।
दृष्टिमध्यस्थिते दोषे महद्ध्रस्वञ्च पश्यति ॥ २३४ ॥
दोषे दृष्ट्या स्थिते तिर्य्यगेकं वै मन्यते द्विधा।
द्विधा स्थिते द्विधा पश्ये द्बहुलञ्चानवस्थिते ॥ २३५ ॥
तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः।
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतःपरम् ॥ २३६ ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे।
चन्द्रादित्यौ सनक्षत्रा वन्तरिक्षे च विद्युतः ॥ २३७ ॥

निर्मलानि च रूपाणि भ्राजिष्णूनि च पश्यति।
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः॥ २३८ ॥
वातेन चात्र रूपाणि भ्रमन्तीव च पश्यति।
आविलान्यरुणाभानि व्याविद्धानीव मानवः॥ २३९ ॥
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान्।
नृत्यन्तश्चापि शिखिनः सर्वं नीलञ्च पश्यति॥ २४० ॥
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च।
सलिलप्लावितानीव जालकानीव मानवः॥ २४१ ॥
पश्येद्रक्तेन रक्तानि तमांसि विविधानि च।
हरितान्यथ कृष्णानि पीतान्यपि च मानवः॥ २४२ ॥
सन्निपातेन चित्राणि विप्लुतानीव पश्यति।
बहुधा च द्विधा वापि सर्वाण्येव समन्ततः॥
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च भूयसा॥ २४३ ॥
पित्तं कुर्यात्परिम्लावि मूर्च्छितं रक्ततेजसा।
पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति॥
विकीर्य्यमाणा खद्योतैर्वृक्षांस्तेजोभिरेव च॥ २४४ ॥
वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतःपरम्॥ २४५ ॥
रागारुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात्।
कफात्सितः शोणितजश्च रक्तः समस्तदोषप्रभवे विचित्रः॥२४६॥
अरुणं मण्डलं दृष्ट्योः स्थूलकाचारुणप्रभम्।
परिम्लायिनि रोगे स्यात् म्लायि नीलञ्च मण्डलम्॥
दोषक्षयात् क्षयं चात्र कदाचित् स्यात्सुदर्शनम्॥ २४७ ॥
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा।
पित्ततो मण्डलं नीलं कांस्याभं पीतमेव च॥ २४८ ॥
श्लेष्मणा बहुलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम्।
चलत्पद्मपलाशस्थः शुक्लो विन्दुरिवाम्भसः॥ २४९ ॥

सृज्यमाने तु नयने मण्डलं तद्विसर्पति ।
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥ २५० ॥
दृष्टिरोगो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ।
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ २५१ ॥
यथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्विह धूमदर्शी ।
यो ह्रस्वजात्यो नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः ॥२५२
षड्लिङ्गनाशाः षड़िमे च रोगाः
दृष्ट्याश्रयाः षट् च षडेव च स्युः ॥ २५३ ॥
पित्तेन दुष्टेन यदा च दृष्टिः पीता भवेद्यस्य नरस्य किञ्चित् ।
पीतानि रूपाणि च मन्यते यः स वै नरः पित्तविदग्धदृष्टिः ॥२५४॥
प्राप्ते तृतीयं पटलं च दोषे दिवा न पश्येन्निशि वीक्ष्यते सः ।
रात्रौ च शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् २५५
तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि च मन्यते तु ॥२५६॥
त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ।
दिवा स सूर्य्यानुगृहीतदृष्टिः पश्येत रूपाणि कफाल्पभावात् ॥२५७
शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः ।
स धूमकान् पश्यति सर्वभावान् स धूमदर्शीति नरः प्रदिष्टः॥२५८
यो ह्रस्वजात्यो दिवसेऽतिकृच्छ्राद्‌ह्रस्वानि रूपाणि च तेन पश्येत्
रात्रौ पुनर्यः प्रकृतानि पश्येत्स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ॥२५९
विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् ।
चित्राणि रूपाणि दिवा स पश्येत्स वै विकारो नकुलान्ध्यसंज्ञः२६०
दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कोच्यतेऽभ्यन्तरतस्तु याति ।
रुजावगाढं च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः॥२६१॥
बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च ।
निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनः सः॥२६२
सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य ।

न्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥२६३॥
त्राच्चिविस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः ।
भिद्यते सीदति हीयते च नृणामभीघातहता च दृष्टिः ॥२६४॥

इति द्वादशदृष्टयः ।

अथासाध्यानाह ।

वर्जयेदुपसर्गोत्थं गम्भीरं ह्रस्वसंज्ञितम् ।
काचांस्तु याप्यते सर्वान्नकुलान्ध्यं तथैव च ॥ २६५ ॥
तिमिरं नेत्ररोगेषु कष्टं तद्यत्नतो हरेत् ॥

अथ चिकित्सामाह ।

मूलं दृष्टिविनाशस्य तिमिरं समुदाहृतम् ।
ऋषिभिस्तूदितं तस्मात्तस्य कुर्य्याच्चिकित्सितम् ॥ २६६ ॥
द्वे पादमध्ये पृथुसन्निवेशे शिरे गते ते बहुधा च नेत्रे ।
तन्म्रक्षणाच्छादनलेपनादीन् पादप्रयुक्तान्नयनं नयन्ति ॥२६७॥
मलोष्णसङ्घट्टनलेपनाद्यैस्ता दूषयन्ते नयनानि दुष्टाः ।
भजेन्नरो दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि ॥२६८॥
त्रिफलाघृतमधुयवाः पादाभ्यङ्गः शतावरीमुद्गाः ।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम् ॥ २६९ ॥
जीवन्ति शाकं सुनिषण्णकञ्च सतण्डुलीयं वरवास्तुकञ्च ।
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलञ्च॥२७०॥
पटोलकर्कोटककारवेल्लवार्ताकतर्कारिकरीरजानि ।
शाकानि शिग्र्वार्त्तगलानि चैव हितानि दृष्टेर्घृतसाधितानि॥२७१
कट्वम्लगुरुतीक्ष्णोष्णमाषनिष्पावमैथुनम् ।
मद्यं वल्लूरपिण्याकं मत्स्यं शाकं विरूढकम् ॥
विदाहीन्यन्नपानानि नेत्ररोगी विवर्जयेत् ॥ २७२ ॥
स्निग्धानि नस्याञ्जनशोधनानि पाकाः पुटानामथ तर्पणञ्च ।
घृतस्य पानान्यथ वस्तिकर्म कुर्य्यादभीक्ष्णं तिमिरेऽनिलोत्थे॥२७३

रास्नाफलत्रयक्काथे दशमूलरसे शृतम्।
कल्केन जीवनीयानां घृतं तिमिरनाशनम्॥ २७४॥
वातिके तिमिरे पक्वं दशमूलरसे घृतम्।
त्रिवृच्चूर्णसमायुक्तं वैरेकार्थं प्रयोजयेत्॥ २७५॥
त्रिफलादशमूलानां निर्यूहं दुग्धमिश्रितम्।
गन्धर्वतैलसंयुक्तं प्रयुञ्जीत विरेचनम्॥ २७६॥

इति वाततिमिरम्।

शीताञ्जनाश्चशीतनतर्पणैश्च नस्यैर्विरेकैर्मृदुभिर्घृतैश्च।
तिक्तप्रधानैस्तिमिरं निहन्यात्पित्तात्मकं शोणितमोक्षणैश्च॥२७७॥
पित्तजे तिमिरे सर्पिर्जीवनीयवरा शृतम्।
पाययित्वा शिरां विध्येत्सितैलाकुम्भसम्भवैः॥ २७८॥
चूर्णैर्माक्षिकसंयुक्तैः रेचनं कारयेत्तराम्।
शीतलान् लेपसेकांश्च शिरोवदनचक्षुषु॥ २७९॥
बलाशतावरीवीरा सितासैरेयकैः पचेत्।
त्रिफलासहितं सर्पिस्तिमिरघ्नमनुत्तमम्॥ २८०॥
शारिवाशावरीशीरमुक्तापद्मकचन्दनम्।
पिष्टं वर्त्तिकृतं हन्ति पित्तोत्थं तिमिरं नृणाम्॥ २८१॥

इति पित्ततिमिरम्।

तीक्ष्णानि नस्याञ्जनशोधनानि पाकाः पुटानामथ तर्पणानि।
घृतानि वासात्रिफलापटोलसंज्ञानि कुर्य्यात्तिमिरे कफोत्थे॥२८२॥
कफोद्भवे वरा चव्या मृताक्काथशृतं हविः।
पाययित्वा शिरां विध्येद्रेचनं तिमिरे भिषक्॥ २८३॥
यूथी पथ्या कणा शुण्ठी कुसुम्भस्याम्बुनिर्झरः।
गोमूत्रक्वथिता शुण्ठी त्रिवृल्लिङ्गं विरेचयेत्॥ २८४॥
नस्यं मरिचयष्ट्याह्व विड़ङ्गामरदारुभिः।
नैपालत्रिफलाशङ्खकान्ताव्योषञ्च पेषिताः॥

वर्त्तीः कृत्वा बलासोत्थमञ्जनं तिमिरं हरेत् ॥ २८५ ॥
संसर्गे सन्निपाते च यथा दोषोदयक्रिया ।
धात्रीरसाञ्जनं चौद्रं सर्पिर्भिस्तु रसक्रिया ॥
पित्तानिलाच्चिरोगघ्नी तैमिर्य्यपटलापहा ॥ २८६ ॥
दद्यान्मसूरनिर्यूहं चूर्णितं कणसैन्धवम् ।
तच्छृतं सघृतं भूयः पचेत् चौद्रं घने ततः ॥
शीते चास्मिन् हितमिदं सर्वजे तिमिरे हितम् ॥ २८७ ॥
मधुकामलकस्नानं पित्तघ्नं तिमिरापहम् ।
वचाद्यैः स्नानमिच्छन्ति श्लेष्मघ्नं तिमिरापहम् ॥ २८८ ॥
स्नानं कृष्णतिलैश्चापि चचुष्यं तिमिरापहम् ।
आमलैः सततं स्नानं परं दृष्टिबलावहम् ॥ २८९ ॥
चित्रकमूलत्रिफला पटोलयवसाधितं पिबेदम्भः ।
सघृतं निशि चचुष्यं तिमिराणि विशेषतो हन्ति ॥२९०॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम् ।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥ २९१ ॥
त्रिफलालोहचूर्णं वा माक्षिकं मधुयष्टिका ।
सायं मध्वान्वितं भुक्तं सद्यस्तिमिरनाशनम् ॥ २९२ ॥

इति सप्तामृतागुटिका ।

कुष्ठमुत्पलयष्टी च पिप्पलीरक्तचन्दनम् ।
अञ्जनञ्चन्दनञ्चैव सद्यस्तिमिरनाशनम् ॥ २९३ ॥
धात्रीसैन्धवकृष्णाभिस्तुल्याभिर्मरिचं समम् ।
चौद्रयुक्तं निहन्त्याशु पटलञ्च रसक्रिया ॥ २९४ ॥

लिह्यात्सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे ।
समीरणे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीत युक्तितः ॥ २९५ ॥

सघृतं वा वराक्वाथं पीलयेत्तिमिरामये ।
पायसं वा वरीयुक्तं पीतं समधुशर्करम् ॥ २९६ ॥
शतावरीपायस एव केवलस्तथा कृतो वामलकेषु पायसः ।
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिरं व्यपोहति॥२९७
त्रिफलाया कषायस्तु धावनान्नेत्ररोगजित् ।
कवलान्मुखरोगघ्नः पानतः कामलापहः ॥ २९८ ॥
अयस्थं त्रिफलाक्वाथं सर्पिषा सह योजितम् ।
भुक्तोपरि पिबेत्सायं मासेनान्धोऽपि पश्यति ॥ २९९ ॥
पुराणसर्पिस्तिमिरेषु सर्वतो हितं भवेदायसभाजनस्थितम् ।
हितञ्च विद्यात्त्रिफलाघृतं सदा कृतञ्च यन्मेषविषाणनामभिः ॥३००
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन ॥ ३०१ ॥
जलगण्डूषैः प्रातर्भूयोऽम्भोभिः प्रपूर्य्य सुखरन्ध्रम् ।
निर्दयमुत्क्षिप्तचक्षुर्णि क्षपयति तिमिराणि ना सद्यः ॥ ३०२ ॥
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ ३०३ ॥
त्रिफलाक्वाथयुक्तेन क्षौद्रमिश्रेण गुग्गुलुम् ।
युक्त्वा गन्धर्वतैलेन रेचनं तिमिरापहम् ॥ ३०४ ॥
अञ्जनं गैरिकं पत्रं कर्पूरं नीलमुत्पलम् ।
सनागपुष्पं मधुकमञ्जनं तिमिरापहम् ॥ ३०५ ॥
कतकस्य फलं घृष्टं मधुना सह योजयेत् ।
प्रभूततिमिरस्रावे धूपितञ्च प्रशाम्यति ॥ ३०६ ॥
त्रिफलापायसं चूर्णं क्वाथयित्वा विचक्षणः ।
घृतत्रिभागसंयुक्तमभयाकर्षमेव च ॥ ३०७ ॥
भक्तस्योपरि पानं स्यादथ मांसेन भोजनम् ।
पटलं तिमिरं काचमर्वुदं कण्डुवेदनम् ॥

सप्तरात्रोपयोगेन अन्धोऽपि तेन पश्यति ॥ ३०८ ॥
कृष्णापथ्ये क्रमाद्दृडे भृङ्गराजरसप्लुते।
छायाशुष्के हतः सद्यस्तिमिरं वापि योजिते ॥ ३०९ ॥
त्रिंशद्भागन्तु नागस्य गन्धपाषाणपञ्चकम्।
शुल्वतालकयोः द्वौ द्वौ वङ्गस्यैकोऽञ्जनत्रयम् ॥ ३१० ॥
अधोमूषागतं ध्मातं पक्वं विमलमञ्जनम्।
तिमिरान्तककल्लोके द्वितीयो भास्करो यथा ॥ ३११ ॥

इति भास्करवर्त्तिः।

सलिलमकरन्दसर्पिस्तैलैः प्रत्येकशस्तु सप्ताहम्।
विनिहन्ति तिमिरमचिरादञ्जनतश्चन्दनं रक्तम् ३१२ ॥
कृष्णसर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान्।
क्षीरकुम्भे त्रिसप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ ३१३ ॥
तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम्।
अन्धस्तस्य पुरीषेण पश्यति ध्रुवमञ्जनात् ॥ ३१४ ॥

इत्यन्धसुदर्शकमञ्जनम्।

कतकस्य फलं शङ्खं त्रूषणं सैन्धवं सिता।
फेनो रसाञ्जनं क्षौद्रं विड़ङ्गानि मनःशिला ॥ ३१५ ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काच मर्मशुक्रं सुखावती ॥ ३१६ ॥

इति सुखावती वर्त्तिः।

शाणार्द्धं मरिचं द्वौ च पिप्पल्यर्णवफेनयोः।
शाणार्द्धं सैन्धवाच्छोणात् सौवीरस्य जलेन च ॥ ३१७ ॥
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम्।
काचकण्डूकफार्त्तानां मलानाञ्च विशोधनम् ॥ ३१८ ॥
कृष्णसर्पवसाक्षौद्रं रसो धात्र्या रसक्रिया।
शस्ता सर्वाक्षिरोगेषु वैदेहपतिनिर्मिता ॥ ३१९ ॥

मुक्ताकर्पूरकाचा गुरुमरिचकणा सैन्धवैलाप्रवाला ।
शुण्ठीकङ्कोलकांस्य त्रपु रजनि शिला शङ्खनाभ्यभ्रतुल्यम् ॥
दद्याच्छ्लक् च साद्यचतजयुतशिवाक्लीतकं राजवर्त्तम् ।
जातीपुष्पं तुलस्याः कुसुममभिनवं बीजमस्यास्तथैव॥३२०॥
पूतीकनिम्बाञ्जनभद्रमुस्तं सताम्रसारं रसगर्भयुक्तम् ।
प्रत्येकमेषां खलु माषकैकं पाषाणपिष्टं मधुना च सूक्ष्मम्॥३२१॥
भवन्ति रोगा नयनाश्रिता ये नितान्तमात्रोपचिताश्च तेषाम् ।
विधीयते शान्तिरवश्यमेव मुक्तादिनानेन महाञ्जनेन ॥३२२॥

इति मुक्तादिमहाञ्जनम् ।

हरीतकी वचा कुष्ठं पिप्पलीमरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ ३२३ ॥
सर्वमेतत्समं कृत्वा त्वजाक्षीरेण पेषयेत् ।
नाशयेत्तिमिरं कण्डू पटलान्यर्वुदानि च ॥ ३२४ ॥
अधिकानि च हीनानि यश्च रात्रौ न पश्यति ।
अपि द्विवार्षिकं पुष्पं मासेनैकेन शाम्यति ॥ ३२५ ॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिविशोधिनी ॥

इति चन्द्रोदयावर्त्तिः ।

हरीतकी हरिद्रा च पिप्पलीलवणानि च ।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित्प्रतिहन्यते ॥ ३२६ ॥

इति हरीतक्यादिवर्त्तिः ।

त्रिफलाकुक्कुटाण्डत्वक् काशीशमयसोरजः ।
नीलोत्पलं विडङ्गानि फेनश्च सरितां पतेः ॥ ३२७ ॥
आज्येन पयसा पिष्ट्वा भावयेत्ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥ ३२८ ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥

इति त्रिफलाद्या वर्त्तिः ।

शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम्॥ ३२९॥
वारिणा तिमिरं हन्ति चार्बुदं हन्ति मस्तुना।
पिच्चटं मधुना हन्ति स्त्रीक्षीरेण तथार्जुनम्॥ ३३०॥

इति शङ्खादिवटी।

कतकं चन्दनं लाक्षा मधुकं मरिचोत्पलम्।
तुल्याक्षामलकावीजं मनोह्वा सुमनासिता॥ ३३१॥
विड़ङ्गोदधिफेनैला शङ्खनाभिरसाञ्जनम्।
एषा दृष्टिप्रदा नाम्ना वर्त्तिर्वैद्येन निर्मिता॥ ३३२॥
नित्योपयोगात्पटलं तिमिरं शुक्रराजिकाम्।
शुक्रं शुक्राक्षिरोगञ्च विट्टङ्कं वाऽर्म्म एव च।
निहन्ति सहसा रोगान् त्रिदोषानपि दुस्तरान्॥ ३३३॥
अशीतिस्तिलपुष्पाणि षष्टिर्मागधितण्डुलाः।
जातीकुसुमपञ्चाशन्मरिचानि च षोड़श॥ ३३४॥
एषा कुसुमिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत्॥

इति कुसुमिका वर्त्तिः।

चन्दनत्रिफलापूग पलाशतरुशोणितैः।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा॥ ३३५॥

इति चन्दनाद्यावर्त्तिः।

व्योषोत्पलाभया कुष्ठतार्क्ष्यैर्वर्त्तिः कृता हरेत्।
अर्बुदं पटलं काचं तिमिरार्मास्रुनिस्रुतिम्॥ ३३६॥

इति व्योषाद्यावर्त्तिः।

त्रिफलाव्योषसिन्धूत्थ यष्टीतुत्थरसाञ्जनम्।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश॥ ३३७॥
द्रव्याण्येतानि संचूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके॥ ३३८॥

नाशनी तिमिराणाञ्च पटलानां तथैव च ।
सद्यः कोपश्च स्तन्येन स्त्रिया विजयते ध्रुवम् ॥ ३३९ ॥
किंशुकस्वरसेनाथ पिलुपुष्पकरक्तता ।
अञ्जनाल्लोध्रतोयेन आसन्नतिमिरं जयेत् ॥ ३४० ॥
चिरसंछादिते नेत्रे वस्तमूत्रेण संयुता ।
उन्मूलयत्य कृच्छ्रेण प्रसादं वाधिगच्छति ॥ ३४१ ॥

इति नागार्जुनाञ्जनम् ।

वर्त्यार्कतूलैः कृतया शशचर्मगर्भया ।
प्रदीप्तया मषी ग्राह्या सर्वनेत्रामयान्तकी ॥ ३४२ ॥

इति शशचर्मगर्भा मषी ।

त्रपुगैरिककर्पूर यष्टीनीलोत्पलाञ्जनम् ।
नागकेसरसंयुक्तमशेषतिमिरान्तकृत् ॥ ३४३ ॥
शतावरीसूर्य्यसमा प्रदेया एला तथा वारणमूर्द्धतुल्या ।
देयं विड़ङ्गं वसुभिः समानस्ततः समं चामलकाख्यबीजम्॥३४४
विष्णोर्भुजैस्तुल्यगुणं मरीचं तद्विक्रमैर्मागधिका प्रदेया ।
चूर्णं समध्वाञ्जनकर्षमर्द्दमच्यामयानां विनिवारणार्थम् ॥३४५॥
कण्डूं सधूमं तिमिरं सुघोरं मर्माणि काचं पटलं त्रिदोषम् ।
ये चापरे रक्तभवा विकारास्तांश्चामयांश्चूर्णवरो निहन्ता ॥३४६

इति शतावर्य्यादिचूर्णाञ्जनम् ।

रसेन्द्रभुजगौ तुल्यौ ताभ्यां तुल्यमथाञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं नयनामृतम् ॥ ३४७ ॥

इति नयनामृताञ्जनम् ।

मनोह्वा तुल्यकस्तूरी मांसीमलयनागरम् ।
समांशं शङ्खकर्पूरमशीतिगुणमञ्जनम् ।
एतच्चूर्णीकृतं सर्वं षड्विधे तिमिरे हितम् ॥ ३४८ ॥
कृष्णसर्पवदने सहविष्कं दग्धमञ्जनमनिर्गतधूमम् ।

चूर्णितं नलदपत्रविमिश्रं भिन्नसारमपि रक्षति चक्षुः ॥३४९॥

त्र्यूषणं त्रिफलाचुक्रं सैन्धवालमनःशिला।
क्लेदोष्णदाहकण्डूघ्ना वर्त्तिः शस्ता कफापहा॥ ३५० ॥
सौवीरमञ्जनं नित्यं पथ्यमक्ष्णोस्ततो भजेत्।
पञ्चरात्राष्टरात्रं वा स्रावणार्थं रसाञ्जनम्।
चक्षुस्तेजोमयं तेन भवेन्न श्लेष्मतो भयम्॥ ३५१ ॥
सूतकं गन्धकोपेतं चाङ्गेरीरससूर्च्छितम्।
अञ्जनं दृष्टिदं नृणां नेत्रामयविनाशनम्॥ ३५२ ॥
त्रिफलाभृङ्गमहौषध सर्पिर्गोमूत्रमध्वजाक्षीरे।
नागं सप्त निषिक्तं करोति गरुड़ोपमं चक्षुः॥ ३५३ ॥

त्रिफलाम्भसि भृङ्गरसे च हविषि मधुनि अजादुग्धे च पक्केन सप्तकृत्वः सीसेनोत्पादितमञ्जनं कार्य्यं प्रत्यहमञ्जनतश्चक्षुषा जिताशेषरोगेण वर्षायामपि पश्येत्पिपीलिकादृष्टमयनमिति।

त्रिफलसलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूग्रे।
प्रतिपदमभितप्तं सप्तधा सीसमेकं
प्रणिहितगति पश्चात्कारयेत्तच्छलाकाम्॥ ३५४ ॥
तिमिरपटलकण्डूस्रावरक्तप्रकोपान्
उपचितबहुरोगान् सन्धिवर्त्माभिजातान्।
सवितुरुदयकाले साञ्जना व्यञ्जना वा
हरति नयनरोगाञ्छोध्यमाना शलाका॥ ३५५ ॥

इति सीसकशलाका।

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम्॥ ३५६ ।
पिण्डीततरुमूलन्तु क्षौद्रेण सह योजयेत्।
अपक्वं पटलं हन्यात् पक्वञ्च परिशोधयेत्॥ ३५७ ॥

दिवा तु न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्।
विरेकदुर्बलाद्दृष्टिरादित्यं प्राप्य सीदति ॥ ३५८ ॥
तस्मात्साध्यं निशायान्तु ध्रुवमञ्जनमिष्यते।
रात्रस्वप्नगुणितं चापि पुष्यत्यञ्जनकर्षितम् ॥ ३५९ ॥
दोषः प्रतिनिवृत्तस्तु हन्याद् दृष्टिबलं तथा।
अधावनाद्वहिस्तिष्ठन् भूयः सञ्जनयेद्भयम् ॥ ३६० ॥
श्रान्ते भीते प्ररुदिते मद्यपीते नवज्वरे।
उष्णे वेगविघाते च अञ्जनं न प्रशस्यते ॥ ३६१ ॥
वैमल्यार्थं यथा दर्शे सतैलमवधारणम्।
तद्वदञ्जनसंयोगा दृष्णोर्मलनिवर्हणम् ॥ ३६२ ॥
प्रसन्ना विमला शुद्धा स्थिरा दृष्टिर्भवेदतः।
प्रातःकुर्य्यात्सदैवैतदञ्जनं व्याधिनाशनम् ॥ ३६३ ॥

अथ नेत्रनिर्माणप्रकारमाह।

पुत्रिणी लिङ्गिनी लिङ्गं तन्नाशो लिङ्गनाशनः।
सर्वेषु लिङ्गनाशेषु वेध्य एकः कफात्मकः ॥ ३६४ ॥
नोनविंशतिवर्षस्य नाशीत्यभ्यधिकस्य च।
नाश्रुपूर्णस्य नोष्णे च लिङ्गनाशन्तु वेधयेत् ॥ ३६५ ॥
कासश्वासक्षतक्षीण कर्णशूलाच्छिरोगिणाम्।
गर्भिणीक्षामभीरूणां तृष्णाभुक्तवतोऽन्यथा ॥ ३६६ ॥
मद्यतैलज्वराजीर्ण क्षयशुक्रविकारिणाम्।
पटोलाद्येन संस्निह्य त्रिफलाद्येन सर्पिषा ॥ ३६७ ॥
लिङ्गनाशे समुद्भूते यथावद्विधिपूर्वकम्।
विद्धा दैवकृते छिद्रे नेत्रं स्तन्येन सेचयेत् ॥ ३६८ ॥
ततो दृष्टेषु रूपेषु शलाकामपहेच्छनैः।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥ ३६९ ॥
ततो गृहे निरावाधे शयीतोत्तान एव च ॥ ३७० ॥

उद्गारकासः चवथुः ष्ठीवनं कम्पनानि च।
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणास्नेहपीतवत्॥ ३७१॥
अग्रहात्तग्रहाच्च धावेत कषायैरनिलापहैः।
वायोर्भयात्तग्रहादूर्द्ध्वं स्वेदयेदक्षि पूर्ववत्॥ ३७२॥
दशरात्रस्थितं सम्यग् घृतं दृष्टिप्रसाधनम्।
पश्चात्कर्म च संसेव्यं लघ्वन्नं चापि न स्त्रियः॥ ३७३॥
रागः शोथोऽर्वुदश्चोषं बुद्बुदं केकराक्षिता।
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः॥ ३७४॥
अहिताचारतो वापि यथास्वन्तानुपाचरेत्।
रुजायामक्षिरोगे वा भूयो योगान्निबोध मे॥ ३७५॥
सदुग्धा सघृता दूर्वा यवगैरिकशारिवाः।
सुखालेपः प्रयोक्तव्यो रुजारागोपशान्तये॥ ३७६॥
पयस्या शारिवापत्रैर्मञ्जिष्ठा मधुकैरपि।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते॥ ३७७॥
लोध्रसैन्धवमृद्वीका मधुकैः छागलं पयः।
शृतमाश्चोतने पथ्यं रुजारोगविनाशनम्॥ ३७८॥
वातघ्नासिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।
काकोल्यादिप्रतिवापं प्रयुञ्ज्यात् सर्वकर्मसु॥ ३७९॥
शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत्।
ततः शिरां दहेद्वापि मतिमान् कीर्त्तितं यथा॥ ३८०॥
दृष्टेरतः प्रसादार्थमञ्जनं शृणु मे शुभम्।
मेषभृङ्गस्य पुष्पाणि शिरीषधवयोरपि।
मालत्याश्चैव तुल्यानि मुक्ता वैदूर्य्यमेव च॥ ३८१॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत्।
प्रणिधाय च तद्वर्त्तीं योजयेदञ्जने भिषक्॥ ३८२॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला।

मरिचानि च तावन्ति कारयेद्वापि पूर्ववत् ॥ ३८३ ॥
मासैकेन समालिप्य पटलं गृध्रदृष्टिकृत्।
शम्बूकमांससञ्जातो रसः पीतोऽनुवासनम् ॥ ३८४ ॥
आढ़कीमूलमरिचहरितालरसाञ्जनैः।
विद्धेऽक्ष्णि सगुड़ावर्त्तिर्योज्या दिव्याम्बुपेषिता ॥ ३८५ ॥
त्रिफलाव्योषसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः।
चक्षुष्यं भेदनं हृद्यं दीपनं कफनाशनम् ॥ ३८६ ॥

इति त्रिफलाद्यं घृतम्।

फलत्रिकाभीरुकषायसिद्धं दुग्धेन यष्टीमधुकल्कयुक्तम्।
सर्पिः समं क्षौद्रचतुर्थभागं हन्यात्त्रिदोषं तिमिरं सुदारुणम्॥३८७

इति फलत्रिकाद्यं घृतम्।

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी।
प्रपौण्डरीकं सूक्ष्मैला विड़ङ्गं नागकेसरम् ॥ ३८८ ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम्।
कार्षिकैः पयसातुल्यैः त्रिगुणं त्रिफलारसम् ॥ ३८९ ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम्।
तिमिरं दोषमास्रावं कामलां काचमर्वुदम् ॥ ३९० ॥
विसर्पं पटलं कण्डूं तोदनं श्वयथुं तथा।
खालित्यं पलितञ्चैव केशानां पतनं तथा ॥ ३९१ ॥
अन्ये च बहवो रोगा नेत्रजा वर्त्मजाश्च ये।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ॥ ३९२ ॥
न चैवास्मात्परं किञ्चिद्भेषजं काश्यपादिभिः।
दृष्टिप्रसादनं दृष्टं यथा स्यात्त्रिफलाघृतम् ॥ ३९३ ॥

इति मध्यमत्रिफलाद्यं घृतम्।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥ ३९४ ॥

अजाक्षीरं गुडूच्याश्च ह्यामलक्या रसं तथा।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत्॥ ३९५॥
कल्कैः कणासिता द्राक्षा त्रिफला नीलमुत्पलम्।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका॥ ३९६॥
तत्साधु सिद्धं विज्ञाय शुभे भाण्डे निधापयेत्।
ऊर्ध्वपानमधःपानं मध्ये पानञ्च शस्यते॥ ३९७॥
यावन्तो नेत्ररोगास्तान् पानादेवापि कर्षयेत्।
सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च॥ ३९८॥
नक्तान्ध्ये तिमिरे काचे नीलिका पटलार्वुदे।
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे॥ ३९९॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च।
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम्॥ ४००॥
स्रवतो वातपित्ताभ्यां सकण्डूासन्नदूरकृत्।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम्॥
सर्वनेत्रामयं हन्यात् त्रिफलाद्यं महाघृतम्॥ ४०१॥

इति महात्रिफलाद्यं घृतम्।

शतमेकं हरीतक्या त्रिगुणञ्च विभीतकम्।
धात्रीफलानां चत्वारि वृषमार्कवयोः समम्॥ ४०२॥
चतुर्गुणोदकं दत्त्वा शनैर्मृदग्निना पचेत्।
चतुर्भागस्थितं ज्ञात्वा तदेवमवतारयेत्॥ ४०३॥
शर्करा मधुकं द्राक्षा मधुयष्टी निदिग्धिका।
काकोली क्षीरकाकोली त्रिफला नागकेसरम्॥ ४०४॥
पिप्पली चन्दनं मुस्तं त्रायमाणा तथोत्पलम्।
घृतप्रस्थं समं क्षीरं कल्कैरेतैर्विपाचयेत्॥ ४०५॥
हन्यात् सतिमिरं काचं नक्तान्ध्यं शुक्रमेव च।
तथा स्रावञ्च कण्डूञ्च शयथुञ्च कषायताम्॥ ४०६॥

कलुषत्वञ्च नेत्रस्य विन्दूर्म्मपटलापहम् ।
बहुनात्र किमुक्तेन सर्व्वान् नेत्रामयान् हरेत् ॥ ४०७ ॥
यस्य चोपहता दृष्टिः सूर्य्याग्निभ्यां प्रशस्यते ।
तस्मै तद्भेषजं प्रोक्तमूर्द्ध्वजत्रुगदापहम् ॥ ४०८ ॥
यथादर्शो मले नीते निर्म्मलत्वं नियच्छति ।
तद्वदेतेन पीतेन दृष्टिर्निर्म्मलतां व्रजेत् ॥ ४०९ ॥
वारिद्रोणद्वयञ्चैव वृषभृङ्गकयोस्तुले ॥ ४१० ॥

इति द्वितीयं महात्रिफलाद्यं घृतम् ।

कृष्णा सशर्क्करा द्राक्षा चतुर्म्मधुकयष्टिका ।
एकद्वित्रिचतुर्थांश भागाः सर्व्वेषु कल्पिताः ॥ ४११ ॥
मृद्वग्निना पचेद्धीमान् बहुदर्व्व्या विघट्टयन् ।
भास्कराख्यमिदं सर्पिर्ब्रह्मणा निर्म्मितं पुरा ॥ ४१२ ॥
तिमिरं शुक्तिकं हन्ति पिल्लं वाध्युषितानि च ।
अदृष्टिं मन्ददृष्टिञ्च दिवा नक्तान्ध्यमेव च ॥ ४१३ ॥
अस्योपयोगादत्यन्तं संहारादतिवर्त्तयेत् ।
वयस्तम्भनमायुष्यं बलीपलितनाशनम् ॥
प्रदरञ्च क्षयं श्वासं शुक्रमूत्रमलार्त्तिनुत् ॥ ४१४ ॥

इति भास्कराद्यं घृतम् ।

पटोलं कटुकं दार्व्वी निम्बवासा फलत्रिकम् ।
दुरालभा पर्पटकं त्रायन्ती घनचन्दनम् ॥ ४१५ ॥
किराततिक्तयष्ट्याह्वे पिप्पली कौटजं फलम् ।
लामज्जकं मृणालञ्च तत्फलं च समं भवेत् ॥ ४१६ ॥
एतैस्तु कार्षिकैः कल्कैर्व्विपचेत् सर्पिरुत्तमम् ।
आमलक्या रसं देयं शतावर्य्याः समन्वितम् ॥ ४१७ ॥
सुरदारुकषायञ्च भृङ्गराजरसं तथा ।
प्रस्थं प्रस्थञ्च गृह्णीयात् द्विप्रस्थं सर्पिषः पचेत् ॥ ४१८ ॥

पाने च भोजने दद्यात् सर्वमूर्द्धामयापहम्।
विशेषादक्षिरोगघ्नं तिमिरं च त्रिदोषजम्॥ ४१९॥
पटलं रक्तराजिञ्च व्रणशुक्रहरं तथा।
काचार्म नात्क्यमाभ्यञ्च कण्डूपिल्लामयान् हरेत्॥ ४२०॥
वर्त्मशोथहरं चैव दृष्टिरोगकुलापहम्।
आसन्नतिमिराणाञ्च यश्च दूरान्न पश्यति॥
अदृष्टिं मन्ददृष्टिञ्च सर्वनेत्रामयापहम्॥ ४२१॥
बलवर्णकरं धन्यं दृष्टिपुष्टिविवर्द्धनम्।
महापटोलाद्यमिदं ख्यातं वैदेहनिर्मितम्॥ ४२२॥

इति महापटोलाद्यं घृतम्।

रास्नाफलत्रयक्वाथे दशमूले च तत्कृते।
कल्के च जीवनीयानां घृतं तिमिरनाशनम्॥ ४२३॥

इति रास्नाद्यं घृतम्।

विभीतकशिवाधात्री पटोलारिष्टवासकैः।
आढ़कीरससंसिद्धं तैलं तिमिरनुत्तमम्॥ ४२४॥

इति विभीतकाद्यं तैलम्।

सम्पिष्य त्रिफलालोध्र मुशीराणि प्रियङ्गुकम्।
तैलमेतैर्विपक्कं स्याच्छ्लैष्मिके नस्यमुत्तमम्॥ ४२५॥

इति त्रिफलाद्यं तैलम्।

गवां शकृत् क्वाथविपक्क मुत्तमं हितञ्च तैलं तिमिरे च नस्यतः।
घृतं हितं केवलमेव पैत्तिके तथाणुतैलं पवनासृगुत्थयोः॥४२६॥

इति गोमयतैलम्।

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुड़वं पक्कं सद्यो दृष्टिं प्रसादयेत्॥
नस्याद्वलीपलितघ्नं मासेनैतन्न संशयः॥ ४२७॥

इति भृङ्गराजतैलम्।

भृङ्गप्रस्थं तैलात् कुड़वं तथा पलञ्च मधुकस्यापि।
क्षीरप्रस्थविपक्वं गतमपि चक्षुर्विनिवर्त्तयेत्॥ ४२८॥

इति द्वितीयभृङ्गराजतैलम्।

तैलस्य पचेत् कुड़वं मधुकस्य पलेन कल्कपिष्टेन।
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुतं कृत्वा॥ ४२९॥
अजितं नाम्ना तैलं तिमिरं हन्यान्निमिप्रोक्तम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेन्नयने॥ ४३०॥

इति अजितं तैलम्।

नीलोत्पलं मधुकनागरपुण्डरीक-
द्राक्षासुयष्टीमधुकांशुमतीकणाश्च।
कण्टारिकामलकशावर चोग्रगन्धाः
कासीसशर्करबलावृषभाश्च रास्नाः॥ ४३१॥
मञ्जिष्ठया सह समैरपि सूक्ष्मपिष्टैः
तैलं पचेत्तु पयसा च चतुर्गुणेन।
नस्यं नृणां तिमिरकाचनिशान्ध्ययुक्तान्
पाकात्ययान् सपटलार्ज्जुननीलिकांश्च॥ ४३२॥
पिल्लार्वुदार्मरुधिरस्नुतिवर्त्मकण्डून्
स्यन्दं जयेद्विहितभोजनभङ्गुराणाम्।
बाधिर्य्यमर्दितहनुग्रहदन्तचालं
नासास्यपूयगलगण्डकृकाटिकार्त्तान्॥ ४३३॥
कर्णाक्षिशूलदशनामयशीर्षरोगां
जिह्वामयान् जयति कण्ठगतांश्च सर्वान्।
अभ्यञ्जनेन नियतं शिरसि प्रयत्नात्
सर्वान्निहन्ति वदनाक्षिशिरोविकारान्॥ ४३४॥

इति नीलोत्पलाद्यं तैलम्।

जीवकर्षभकौ मेदा द्राक्षांशुमती निदिग्धिकावृहती।

मधुकं बलाविड़ङ्गं मञ्जिष्ठा शर्करारास्ना ॥ ४३५ ॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवालवणम्।
पिप्पल्यः सर्वेषां भागैरर्द्धांशिकैः पिष्टैः ॥ ४३६ ॥
तैलं वा यदि सर्पिर्दत्वा चीरं चतुर्गुणं पक्वम्।
आत्रेय निर्मितमिदं तैलं नृपवल्लभं नाम्ना ॥ ४३७ ॥
तिमिरं पटलं काचं नक्ताम्ध्यमर्वुदं तथाम्ध्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति नीलिकाव्यङ्गम् ॥ ४३८ ॥
मुखनासादौर्गन्ध्यं पलितञ्च कालजं हनुस्तम्भम्।
श्वासं कासञ्च हिक्कां शोषं स्तम्भं तथान्यांश्च ॥ ४३९ ॥
मुखजाम्ध्यमर्द्धभेदं रोगं बाहुग्रहं शिरः स्तम्भम्।
रोगानथोर्ध्वजत्रोः सर्वानचिरेण नाशयति ॥ ४४० ॥

इति नृपवल्लभं तैलम्।

पिप्पलीमधुकं द्राक्षा शुभ्राजीवककर्षभौ।
सोत्पलं पुण्डरीकञ्च मधुपर्णीफलत्रयम् ॥ ४४१ ॥
धावनी चीरकाकोली मञ्जिष्ठा वृहती बला।
पुनर्नवा शताह्वा च विड़ङ्गं गोक्षुरुस्थिरा ॥ ४४२ ॥
एतान्यर्द्धपलानीह श्लक्ष्णपिष्टानि पाचयेत्।
त्रिफलाभृङ्गवासानां प्रपीड्य प्रस्थसम्मितान् ॥ ४४३ ॥
वीजसारोवरस्तस्य प्रस्थमेकं तु दापयेत्।
गव्यक्षीरस्य प्रस्थौ च द्वौ द्वौ तस्य प्रदापयेत् ॥ ४४४ ॥
मृदग्निना पचेत्पात्रे शनैः सम्यक् पचेद्भिषक्।
त्रिफलाद्येन पयसा सम्यग् दृष्टन्तु मानवम् ॥ ४४५ ॥
मोदकेनाभयाद्येन कृत्वा संशोधनं ततः।
यथोक्तेन विधानेन भिषग्वश्यं प्रदापयेत् ॥ ४४६ ॥
तिमिरे च सनक्ताम्ध्ये शुक्रे काचे चतुर्विधे।
आसन्नं यो न पश्येत यश्च दूरान्न पश्यति ॥ ४४७ ॥

प्रकाशमायतं वा यो नष्टदृष्टिश्च मानवः ।
मन्ददृष्टिः स्तब्धदृष्टि रधोदृष्टिश्च यो भवेत् ॥ ४४८ ॥
अतिरिक्ते प्रदुष्टे च रक्ते वाताश्रिते तथा ।
वातपित्तप्रदुष्टेऽच्णि पित्तश्लेष्मप्रदूषिते ॥ ४४९ ॥
कण्डूयते च स्रवति पित्तेनात्याकुलाच्चिता ॥ ४५० ॥
विद्युत् खद्योतवत्पश्येत् सूर्य्यचन्द्रसमप्रभाम् ।
सर्वदा चञ्चता दृष्टिः सर्वनेत्रविकारनुत् ॥ ४५१ ॥

इति महापिप्पल्याद्यं तैलम् । इति तिमिरोपक्रमः ।

अथ क्रमेण काचचिकित्सामाह ।

काचे रक्तं जलौकाभिः हृत्वा पूर्वोक्तमाचरेत् ॥ ४५२ ॥
शाणार्द्धं मरिचं द्वौ च पिप्पल्यर्णवफेनयोः ।
शाणार्धं सैन्धवाच्छाणं नवसौवीरकाञ्जनात् ॥ ४५३ ॥
पिष्टं सूक्ष्मं शिलायाञ्च चूर्णाञ्जनमिदं शुभम् ।
कण्डूकाचकफार्त्तानां मलानाञ्च विशोधनम् ॥ ४५४ ॥

इति मरिचादिचूर्णाञ्जनम् ।

समेषशृङ्गाञ्जनभागसम्मितः शङ्खाञ्जनः काचमलं व्यपोहति॥४५५

इति मेषशृङ्गाद्यञ्जनम् ।

शिलासैन्धवकासीस शङ्खव्योषरसाञ्जनैः ।
सक्षौद्रैः काचशुक्रामं तिमिरघ्नो रसक्रिया ॥ ४५६ ॥
दोषान्ध्ये तिमिरान्ध्ये च तिमिरोक्तं क्रमं हितम् ॥ ४५७ ॥
वचा त्रिवृच्चन्दनकुण्डली च भूनिम्बनिम्बे रजनी सवासा ।
प्रस्थं जलस्य क्वथिताष्टभागं पिबेत्सुजीर्णे नकुलान्ध्यरोगे ॥४५८॥
काचं निशान्ध्यं तिमिरं तथान्यान्नेत्रामयांस्तस्य च वर्त्मसन्धौ ।
चिरप्रवृत्तानचिरेण हन्ति वज्रो यथाद्रीन् सुरराजमुक्तः ॥४५९॥

अथ नक्तान्ध्यचिकित्सामाह ।

करञ्जपद्मकिञ्जल्कं चन्दनोत्पलगैरिकैः ।

गोशकृद्रससम्पिष्टैः नक्ताम्ध्येऽञ्जनमिष्यते ॥ ४६० ॥
रसाञ्जनं निशादारु जातिपत्ररसो मधु।
नक्ताम्ध्यतां जयेदेतदञ्जनं साधु योजितम् ॥ ४६१ ॥
रसाञ्जनं हरिद्रे द्वे मालतीमधुपल्लवाः।
गोशकृद्रससंयुक्ता वर्त्ती रात्र्यन्ध्यनाशिनी ॥ ४६२ ॥
जातीपत्ररसक्षौद्र निशाद्वयरसाञ्जनैः।
नक्ताम्ध्यमञ्जनं हन्यात् कृष्णायागोमयान्वितम् ॥ ४६३ ॥
दध्ना विघृष्टं मरिचं रात्र्यन्ध्याञ्जनमिष्यते।
पिप्पल्योऽपि हितास्तद्वद्गोशकृद्रसभाविताः ॥ ४६४ ॥
कृष्णाच्छागयकृन्मध्ये पक्का तत्राणुपेषिता।
अचिराद्धन्ति नक्ताम्ध्यं तद्वत्सक्षौद्रमूषणम् ॥ ४६५ ॥
चैव गोधायकृदर्द्धपाटितं सुपूरितं मागधिकाभिरग्निना।
नषेवितं तद्यकृदञ्जनेन निहन्ति नक्ताम्ध्यमसंशयं खलु ॥४६६॥

इति रात्र्यन्धोपक्रमः।

अथ दृष्टिरोगचिकित्सामाह।

नीलोत्पलस्य किञ्जल्कं गैरिकञ्च शकृद्रसम्।
गुटिकाञ्जनमेतत्स्याद्दिनरात्र्यन्धयोर्हितम् ॥ ४६७ ॥

नदीजशङ्खत्रिकटून्यथाञ्जनं
मनःशिलार्द्धे च निशे गवां शकृत्।
सचन्दनेयं गुटिकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥ ४६८ ॥

सूर्य्यदर्शनदग्धायां क्रियां शीतां प्रयोजयेत्।
हिमं घृष्टं घृतोपेत मञ्जनञ्चोपशस्यते ॥ ४६९ ॥
रसाञ्जनं घृतं क्षौद्रं तालीसं स्वर्णगैरिकम्।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥ ४७० ॥
काश्मरीपुष्पमधुक दार्व्वीलोध्ररसाञ्जनैः।

सक्षौद्रमञ्जनं कुर्य्यात् पित्तव्याधिप्रशान्तये ॥ ४७१ ॥

इति दृष्टिगतरोगोपक्रमः ।

अथ शुक्लगतरोगनिदानमाह ।

प्रस्तार्य्यर्मतनुस्तीर्णं श्यावं रक्तं निभं सिते ।
सश्वेतं मृदुशुक्लार्म शुक्ले तद्वर्द्धते चिरात् ॥ ४७२ ॥
पद्माभं मृदुरक्तार्म यन्मांसञ्चीयते सिते ।
पृथुमृद्वधिमांसार्म बहुलञ्च यकृन्निभम् ॥ ४७३ ॥
स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नायुर्मपञ्चमम् ॥ ४७४ ॥
श्यावाः स्युः पिशितनिभास्तु विन्दवो ये ।
शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः ।

एको यः शशरुधिरोपमश्च विन्दुः
शुक्लस्थो भवति तदर्जुनं वदन्ति ॥ ४७५ ॥

श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम् ।
पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ४७६ ॥

जालाभः कठिनशिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितस्तु ।
शुक्लस्थाः सितपिड़िकाः शिरावृता या
स्ता ब्रूयादसितसमीपजाः शिराजाः ॥ ४७७ ॥
कांस्याभोऽमृदुरथ वारिविन्दुकल्पो
विज्ञेयो नयनसिते बलाससंज्ञः ॥ ४७८ ॥

अथ चिकित्सामाह ।

प्रस्तार्यर्म च स्नायुर्म तथैवार्माधिसंज्ञकम् ।
लोहितार्म च शुक्लार्म क्रमशः प्रशमानि छेदयेत् ॥ ४७९ ॥
अर्मवाल्पं दधिनिभं नीलं रक्तमथापि वा ।
धूसरं तनु यच्चापि शुक्लवत्समुपाचरेत् ॥ ४८० ॥
कृष्णलोहरजस्ताम्र शङ्खविद्रुमसिन्धुजैः ।

समुद्रफेनकाशीश स्रोतोऽञ्जनसुमस्तुभिः ।
लेपनं वा कृतं नस्यं परमुत्तमममर्मणि ॥ ४८१ ॥
पिप्पलीत्रिफलालाचा लोहचूर्णं ससैन्धवम् ।
भृङ्गराजरसे पिष्टं गुटिकाञ्जनमिष्यते ॥ ४८२ ॥
अर्मं सतिमिरं काचं कण्डूं शुक्रं तथार्जुनम् ।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥ ४८३ ॥
सञ्चूर्ण्य मरिचाद्ये च रजन्या रसमर्दिते ।
लेपनादर्मणां नाशं करोत्येष प्रयोगराट् ॥ ४८४ ॥

पुष्पाचताद्म्यंजसितोदधिफेनशङ्ख
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैस्तु माचिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥ ४८५ ॥

क्रियां शुक्त्यामये कुर्य्यात्पित्ताभिष्यन्दजिच्छुभाम् ॥ ४८६ ॥
बलासाह्वयपिष्टे तु कार्य्यं शोणितमोचणम् ।
कफाभिष्यन्दवत्सर्वं क्रमं कुर्य्याद्विचचणः ॥
अञ्जनं कट्फलं व्योष बीजपूररसाञ्जनैः ॥ ४८७ ॥
अर्जुने शर्करामस्तु चौद्रैराश्चयोतनं हितम् ।
शङ्खः चौद्रेण संयुक्तः कतकः सैन्धवेन वा ॥
सितयार्णवफेनो वा पृथगञ्जनमर्जुने ॥ ४८८ ॥

इति शुक्लजाः ।

अथ सन्धिजानां निदानमाह ।

पक्वः शोथः सन्धिजो यः सतोदः पूयस्रावी सोऽत्र पूयालसाख्यः ।
ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः ४८९
गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्य्युःस्रावाल्लचणैः स्वैरुपेतान् ।
तं हि स्रावं नेत्रनाड़ीति चैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा ४९०
पाकात्सन्धौ संस्रवेद्यस्तु पूयं पूयस्रावोऽसौ गदः सर्वजस्तु ।

श्वेतं सार्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मास्रावः सविकारो मतस्तु४९१
रक्तास्रावः शोणितोत्थो विकारः रक्तं चोष्णं संस्रवेत्तत्प्रभूतम् ।
हारिद्राभं पीतमुष्णं जलाभं पित्तात् स्रावः संस्रवेत्सन्धिमध्यात्४९२
ताम्रा तन्वी दाहशूलोपपन्ना रक्तात् ज्ञेया पर्वणीवृत्तशोथा ।
जाता सन्धौ कृष्णशुक्ले ऽलजी स्यात्तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः४९४
कृमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्य्युः कृमयः सन्धिजाताः ।
नानारूपावर्त्मशुक्लान्तसन्धौ चरत्यन्तर्लोचनं दूषयन्तः ॥ ४९४ ॥

अथ चिकित्सामाह ।

पूयालसे शिरां भित्वा ततस्तमुपनाह्य वा ।
नेत्रपाकविधिं कुर्य्यात् परं मुक्ताञ्जनं हितम् ॥ ४९५ ॥
भित्वोपनाहं कफजं पिप्पली मधु सैन्धवैः ।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ ४९६ ॥
त्रिफलामृतकासीस सैन्धवैः सरसाञ्जनैः ।
रसक्रिया कृमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम् ॥ ४९७ ॥
पर्वणीं पिटिकां सन्धिभागे छिन्द्यादसंशयम् ।
हितं चाभ्यधिके छिन्ने चोतनं मधुसैन्धवैः ॥ ४९८ ॥
स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत् ।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥ ४९९ ॥
पथ्याचधात्रीफलमध्यवीजैस्त्रिद्व्येकभागैर्विदधीत वर्त्तिम् ।
तयाञ्जयेदश्रुमतिप्रवृद्धमक्ष्णोर्हरेत्कष्टमपि प्रकोपम् ॥ ५०० ॥
समाह्वा शारिवानन्ता कालीयागरुचन्दनैः ।
शतपुष्पाश्वगन्धानां चूर्णैस्तैलं विपाचयेत् ॥ ५०१ ॥
पयस्यष्टगुणे नस्यमेतदश्रुहरं परम् ॥ ५०२ ॥
चक्षुःस्राव प्रशान्त्यर्थं कार्य्यमेतन्महौषधम् ।
हिज्जलस्य फलं घृष्ट्वा पानीये नित्यमञ्जनम् ॥ ५०३ ॥
कर्पासी फलजम्ब्वाम्र जलैर्घृष्टं रसाञ्जनम् ।

मधुयुक्तं चिरोत्थञ्च चक्षुःस्रावमपोहति ॥ ५०४ ॥

इति सन्धिगतरोगोपक्रमः।

अथ वर्त्मजानां निदानमाह।

अभ्यन्तरमुखी ताम्रा वाह्यतो वर्त्मनश्च या।
सोत्सङ्गोत्सङ्गपीड़िका रक्तजा स्थूलकण्डूरा ॥ ५०५ ॥
वर्त्मान्ते पीड़िकाध्माता भिद्यन्ते च स्रवन्ति च।
भिषग्भिराद्यैस्ताः प्रोक्ताः कुम्भिकाः सन्निपातजाः ॥ ५०६ ॥
स्राविण्यः कण्डूरा गुर्व्यो रक्तसर्षपसन्निभाः।
रुजावत्यश्च पीड़िकाः पोथक्य इति कीर्त्तिताः ॥ ५०७ ॥
पीड़िका या स्थिरा स्थूला सूक्ष्माभिरभिसंवृता।
वर्त्मस्था शर्करा नाम स रोगो वर्त्मदूषकः ॥ ५०८ ॥
एर्वारुबीजप्रतिमाः पीड़िका मन्दवेदनाः।
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्त्यते ॥ ५०९ ॥
दीर्घाङ्कुरः खरस्पर्शो दारुणोऽभ्यन्तरोद्भवः।
व्याधिरेषोऽतिविख्यातः शुष्कार्श इति कीर्त्त्यते ॥ ५१० ॥
दाहतोदवती ताम्रा पीड़िका वर्त्मसम्भवा।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥ ५११ ॥
वर्त्मोपचीयते यस्य पीड़िकाभिः समन्ततः।
सवर्णाभिः स्थिराभिश्च विद्याद्बहुलवर्त्म तत् ॥ ५१२ ॥
कण्डूमताल्पतोदेन वर्त्मशोथेन यो नरः।
न समं छादयेदक्षि स भवेद्वर्त्मबन्धकः ॥ ५१३ ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सम मेव च।
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥ ५१४ ॥
क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा।
ततः क्लिन्नत्वमापन्नं मुच्यते वर्त्म कर्दमम् ॥ ५१५ ॥

वर्त्म यद्वाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् ।
तदाहुः श्याववर्त्मेति वर्त्मरोगविशारदाः ॥ ५१६ ॥
अरुजं वाह्यतः शूनं वर्त्म यस्य नरस्य हि ।
प्रक्लिन्नवर्त्म तद्विद्यात् क्लिन्नमत्यर्थमन्ततः ॥ ५१७ ॥
यस्य धौतान्यधौतानि सम्बध्यन्ते पुनः पुनः ।
वर्त्मान्युपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ ५१८ ॥
विमुक्तसन्धिनिश्चेष्टं वर्त्म यस्य न मील्यते ।
एतद्वातहतं वर्त्म सरुजं यदि वा रुजम् ॥ ५१९ ॥
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ।
विज्ञेयमर्वुदं पुंसां सरक्तमवलम्बि च ॥ ५२० ॥
निमेषिणीः शिरावायुः प्रविष्टो वर्त्म संश्रयः ।
चालयत्यथ वर्त्मानि निमिष इति तद्विदुः ॥ ५२१ ॥
वर्त्मस्थो यो विवर्द्धेत लोहितो मृदुरङ्कुरः ।
तद्रक्तजं शोणितार्शः छिन्नं छिन्नं विवर्द्धते ॥ ५२२ ॥
अपाकी कठिनः स्थूलो ग्रन्थिवर्त्मभवो रुजः ।
सकण्डूः पिच्छिलः कोल संस्थानो लगणस्तु सः ॥ ४२३ ॥
त्रयो दोषा वहिः शोथं कुर्य्युश्छिद्राणि वर्त्मनोः ।
प्रस्रवन्त्यन्तरुदकं विसवद्बिसवर्त्म तत् ॥ ५२४ ॥
वाताद्या वर्त्मसङ्कोचं जनयन्ति यदा मलाः ।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥ ५२५ ॥
प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥ ५२६ ॥
असिते च सिते भागे मूलकोशात्पतन्त्यपि ।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ ५२७ ॥
वर्त्म पक्ष्माशयगतं पित्तं रोमाणि शातयेत् ।
कण्डूं दाहञ्च कुरुते पक्ष्मशातं तमादिशेत् ॥ ५२८ ॥

अथ चिकित्सामाह।

उत्सङ्गिनी बहलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितं त्विह बद्धवर्त्म।
क्लिष्टञ्च पोथकियुतं खलु वर्त्म यच्च
कुम्भीकिनी च सह शर्करया च लेख्या॥ ५२९॥
श्लेष्मोपनाहलगणौ च विसं च भेद्यम्
ग्रन्थिश्च यः क्रमिकृतोऽञ्जननामिका च॥ ५३०॥

खिन्नां भित्वा विनिष्पीड्य भिन्नामञ्जननामिकाम्।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्॥ ५३१॥
रसाञ्जनमधुभ्यां वा भित्वा शस्त्रेण कर्मवित्।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः॥ ५३२॥
स्वेदयेद् घृष्टयाङ्गुल्या हरेद्रक्तं जलौकसा।
करे सङ्घृष्य दुर्वर्णं मञ्जयेल्लोचनं मुहुः॥
द्वित्रिवारं शमयति कण्डूं दोषान्वितान्ञ्जनम्॥ ५३३॥
रसाञ्जनं व्योषयुतं सम्पिष्य वटकीकृतम्।
कण्डूपाकान्वितां हन्ति नूनमञ्जननामिकाम्॥ ५३४॥
रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च।
प्रतिसारणमेकैकं भिन्ने लगणे इष्यते॥ ५३५॥
निमेषं नाशमायाति सर्पिस्तेन च पूरणम्॥ ५३६॥
स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयः।
पक्वं भित्वा तु शस्त्रेण सैन्धवेन च पूरयेत्॥ ५३७॥
शालदारुवचा पिष्टा सुरसापत्रवारिणा।
छायाशुष्कीकृता वर्त्तिः क्लिन्नवर्त्मनिवारिणी॥ ५३८॥
रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला।
समुद्रफेनो लवणं गैरिकं मरिचानि च॥ ५३९॥
एतत्समांशं मधुना पिष्टा प्रक्लिन्नवर्त्मनि।

अञ्जनं लोदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ ५४० ॥

अथ पिल्ललक्षणमाह।

पित्तश्लेष्मप्रकोपेण वर्त्मान्तः सम्प्रकुप्यति।
नाम्नातिलोमशं वापि विक्लिष्टं पिल्लमेव च ॥ ५४१ ॥

तस्य चिकित्सामाह।

वर्त्मावलेखं बहुशस्तथा शोणितमोक्षणम्।
पुनः पुनर्विरेकञ्च पिल्लरोगातुरो भजेत् ॥ ५४२ ॥
पिल्लोस्निग्धो वमेत्पूर्वं शिरया च स्रुतेऽसृजि।
शिलारसाञ्जनव्योषगोपित्तैर्वर्त्तिरञ्जनम् ॥ ५४३ ॥
पिल्लघ्नं छागमूत्रेण भावितं देवदारु च ॥ ५४४ ॥
हरितालवचादारु सुरसारसपेषितम्।
अभयारससम्पिष्टं तमरं पिल्लनाशनम् ॥ ५४५ ॥
काकमाचीफलेकेन घृतयुक्तेन बुद्धिमान्।
धूपयेत्पिल्लरोगार्त्तं पतन्ति क्रमयोऽचिरात् ॥ ५४६ ॥
तुत्थकस्य पलं श्वेतमरीचानि च विंशतिः।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ ५४७ ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि।
तल्लेकेनोपदेहाश्रु कण्डूशोथांश्च नाशयेत् ॥ ५४८ ॥
सैन्धवं गुहाम्बुयुक्तमपामार्गजटया ताम्रे घृष्ट्वा।
वर्त्म विलेखनं विधिना सप्ताहाच्चिपिटपिल्लहरम् ॥ ५४९ ॥
कासीशजातिकलिका रसाञ्जनक्षौद्रमरिचतुल्यांशैः।
अपनयति पिल्लकत्वं पिष्टैः पयसाञ्जनं सद्यः ॥ ५५० ॥
ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम्।
आरनालेन संघृष्ट मञ्जनं पिल्लनाशनम् ॥ ५५१ ॥
पुष्पकासीशचूर्णं वा सुरसारसभावितम्।
ताम्रे दशाहं तत्पिल्ल पक्ष्मशातनमञ्जनम् ॥ ५५२ ॥

प्रलेपाच्छमयेन्नूनं चिपिटाख्यं गदं नृणाम् ।
शटीपत्रकनिर्य्यासं रसघृष्टं हरीतकी ॥ ५५३ ॥

लाचानिर्गुण्डीभृङ्गदार्वीरसेन
श्वेतं कर्पासं भावितं सप्त कृत्वः ।
दीपं प्रज्वाल्य सर्पिषा तत्समुत्था
श्वेता पिल्लानां रोपणार्थे मषी सा ॥ ५५४ ॥

याप्यः पक्ष्मोपरोधस्तु रोमोद्धरणलेखनैः ।
वर्त्म न्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥ ५५५ ॥

अथ उपपक्ष्मलक्षणमाह ।

अन्तर्मुखानि पक्ष्माणि जनयन्ति मलास्त्रयः ।
बाधां कुर्वन्ति रोमाणि तमाहुरुपपक्ष्मकम् ॥ ५५६ ॥

अथ तस्य चिकित्सामाह ।

प्रवृद्धान्तर्मुखं रोम सहिष्णोरुद्धरेच्छनैः ।
सन्दंशेनोद्धरेद् दृष्ट्यां पक्ष्मरोमाणि बुद्धिमान् ॥ ५५७ ॥
सर्पिषा शतधौतेन सेचयेद्व्रणरोपणैः ।
यष्टीसिद्धं घृतं सेकात् सद्यो हरति वेदनाम् ॥ ५५८ ॥
सेचनात् पाचितं कृत्वा गैरिकेणावचूर्णयेत् ।
रसाञ्जनाम्बुना सेकान् कुर्य्याल्लाचारसेन तु ॥ ५५९ ॥
द्वौ च भ्रुवोरधोभागौ पक्ष्मान्तादेकमेव च ।
भागं त्यक्त्वा तु शस्त्रेण व्यध्येत्तिर्य्यग्गदं स्थितम् ॥ ५६० ॥
रक्तं वस्त्रेण गृह्णीयात् स्थिते रक्ते च सेचयेत् ।
मुद्गमात्रान्तरैर्भागैर्बध्यात्पट्टं ललाटतः ॥ ५६१ ॥
सूच्यग्रेणाग्निवर्णेन रोमकूपाणि निर्दहेत् ।
प्रदेहाः शीतलाः कार्य्याः क्रिया पक्ष्मोपरोधनी ॥ ५६२ ॥
रचयन्नक्षि दहेत्पक्ष्म तप्तलोहशलाकया ।

पक्ष्मकोपे पुनर्नैव कदाचिद्रोमसम्भवः ॥ ५६३ ॥

इति वर्त्मपक्ष्मरोगोपक्रमः ।

अथ सशैल्यनेत्रलक्षणमाह ।

स्रवत्यस्रुचयं नेत्रं वृत्तं लोहितराजिभिः ।
निमिषोन्मेषणाशक्तिं सशैल्यं तं विनिर्दिशेत् ॥ ५६४ ॥

तस्य चिकित्सामाह ।

नेत्रे त्वभिहते कुर्य्याच्छीतमाश्चोतनं हितम् ।
अन्तःक्षीरस्तन्यसेकश्च रक्तमोक्षश्च शस्यते ॥ ५६५ ॥

दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभिघातैः
अव्याहतामपि तथैव भिषक् चिकित्सेत् ॥ ५६६ ॥

आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वक्त्रोष्मणा स्वेदनमादितस्तु ।
आश्चोतनं क्षीरपयसा तु सद्यो यच्चापि पित्तक्षतजापहं स्यात्५६७
सूर्य्योपरागाम्बरविद्युदादि विलोड़नेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादिकार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः५६८

निशाब्दत्रिफलादार्वी सितामधुसमन्वितम् ।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥ ५६९ ॥
उत्कटाङ्कुरजैस्तद्वत् स्वरसैर्नेत्रपूरणम् ॥ ५७० ॥
वटपत्रपुटे क्षिप्तं कलिङ्गं सघृतं पचेत् ।
तद्रसस्तर्पणे चाक्ष्णो रेवं स्युर्जाङ्गला रसाः ॥ ५७१ ॥
आजं घृतं क्षीरपानं मधुकं चोत्पलानि च ।
जीवकर्षभकौ मेदां पिष्ट्वा सर्पिर्विपाचयेत् ॥ ५७२ ॥

इत्याजं घृतम् । इति नयनाभिघातः ।

सितमरिचनागरकेशर नीलोत्पलकल्कवर्त्तिता वर्त्तिः ।
शमयति सततं निद्रां सूर्य्यस्तमसां चयमिव क्षणात् ॥५७३॥

बृहतीफलसैन्धव यष्टीमधुकल्कीकृतैर्नस्यम्।
अतिविततामपि सततां निद्रामिव सततं हन्यात्॥ ५७४॥
क्षौद्राश्वलालासंघृष्टैर्मरिचैर्नेत्रमञ्जयेत्।
अतिनिद्रा शमं याति तमः सूर्य्योदयादिव॥ ५७५॥

इति श्रीवङ्गसेनसङ्कलितः नेत्ररोगनिदानचिकित्साधिकारः समाप्तः।

---

## अथ शिरोरोगनिदानमाह।

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा॥ १॥
सूर्य्यावर्त्तानन्तवात शङ्कोर्द्धावभेदकैः।
एकादशविधस्यास्य लक्षणानि प्रचक्ष्यते॥ २॥
यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम्।
बन्धोपतापैश्च भवेद्विशेषः शिरोऽभितापः स समीरणेन॥ ३॥
यस्योष्णमङ्गारचितं तथैव धूप्येच्छिरो दह्यति चाक्षिनासा।
शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात् ४
शिरो भवेद्यस्य कफोपदिग्धं गुरुप्रतिष्टब्धमथो हिमञ्च।
शूनाक्षिनासा वदनञ्च यस्य शिरोऽभितापः स कफप्रकोपात्॥५॥
शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति।
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च॥६॥
असृग्वसा श्लेष्मसमीरणानां शिरोगतानामिह सङ्क्षयेण।
क्षयः प्रवृत्तिः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम्॥
संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति॥ ७॥
निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः।
घ्राणाच्च गच्छेद्रुधिरं सपूयं शिरोऽभितापः क्रिमिभिः स घोरः॥८॥
सूर्य्योदये या प्रतिमन्दमन्द मक्षि भ्रुवोः रुक्समुपैति गाढम्।

विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च ॥ ९ ॥
शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाद्वा ।
सर्वात्मकं कष्टतमं विकारं सूर्य्यापवृत्तं तमुदाहरन्ति ॥ १० ॥
दोषाः प्रदुष्टास्त्रय एवमन्यां सम्पीड्य गाढ़ं सरुजां सुतीव्राम् ।
कुर्वन्ति चाक्षिण भ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु॥११
गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ।
अनन्तवातं समुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥१२॥

रूक्षाशनाध्यशनप्राग् वातावश्याय मैथुनैः ।
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥ १३ ॥
केवलः सकफो वार्द्धं गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षि ललाटार्द्धेऽतिवेदनाम् ॥
शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोऽर्द्धावभेदकः ।
नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥ १५ ॥
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ १६ ॥
सशिरो विषवद्वेगी निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नामतः परम् ।
त्र्यहाज्जीवति भेषज्यं प्रत्याख्यायास्य कारयेत् ॥ १७ ॥

अथ चिकित्सामाह ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानाहारोपनाहांस्तु कुर्य्याद्वातामयापहान् ॥ १८ ॥
पिण्डोपनाहस्वेदश्च धन्वमांसकृतो हितः ।
वातघ्नदशमूलादि सिद्धक्षीरेण सेचनम् ॥ १९ ॥
धूमं चास्य यथाकालं योजयेत् स्नैहिकं भिषक् ॥ २० ॥
पानाभ्यञ्जननस्येषु वस्तिकर्मणि सेचने ।
विदध्यात् वैहृतं तैलं बलातैलमथापि वा ॥ २१ ॥

मुद्गान् माषान् कुलत्थांश्च खादेच्च निशि केवलान्।
कटुकोष्णान् ससर्पिष्कानुष्णं वापि पिबेत् पयः॥ २२॥
पिबेद्वा पयसा तैलं तत्कालं चाति मानवः।
पञ्चमूलीशृतं क्षीरं नस्ये दद्याच्छिरो गदे॥ २३॥
कुष्ठमैरण्डमूलञ्च लेपात् काञ्जिकपेषितम्।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम्॥ २४॥
देवदारुनतं कुष्ठं नलदं विश्वभेषजम्।
लेपः काञ्जिकसंपिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत्॥ २५॥
वातकोपभयादत्र नोक्तं रक्तावसेचनम्।
आशिरोव्यापनश्चर्मं कृत्वाष्टाङ्गुलमुच्छ्रितम्।
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत्॥ २६॥
निश्चलस्योपविष्टस्य तैलैः कृष्णैः प्रपूरयेत्।
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा॥ २७॥
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम्।
हनुमन्याक्षिकर्णार्त्तिमर्दितं मूर्द्धकम्पनम्॥ २८॥
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च।
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगते॥ २९॥
एष एव विधिः कार्य्यः तथा कर्णाक्षिपूरणे।
विना भोजनमेवैष शिरोवस्तिः प्रयुज्यते॥ ३०॥
घटिकाधिकयामैकं वृद्धवैद्योपदेशतः।
प्रयोज्यस्तु शिरोवस्तिः पञ्चाहं सप्त एव च॥ ३१॥

ततः स्नेहमपनीय कर्णतो वस्तिबन्धनं विमोच्य शिरःस्कन्धग्रीवापृष्ठललाटान् मुखञ्च पाणिभ्यां मृद्नीयात्। ततः सुखोष्णजलेन परिषिक्तगात्रः शालिषष्टिकादिभिर्जाङ्गलानूपरसैर्दाड़िमाम्लैर्मात्रया भोजयेत्। इति शिरोवस्तिः।

हेमन्तकाले शिशिरे वसन्ते सेव्यं हि मायूरमुशन्ति सर्पिः।

उष्णो हि वर्ज्यो विषभोजनश्च वर्षाशरद्ग्रीष्मसुखेष्वपथ्यः ॥३२॥

दशमूलबलारास्ना मधुकैस्त्रिफलैः सह ।
मयूरं पक्षपित्तान्त्रशकृत्पादास्यवर्जितम् ॥ ३३ ॥
जले पक्का घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् ॥ ३४ ॥
कर्णनासाक्षिजिह्वास्य गलरोगविनाशनम् ।
मायूरमितिविख्यातं मूर्द्धजत्रुगदापहम् ॥ ३५ ॥
दशमूलादिना तुल्यो मयूर इह गृह्यते ।
अन्येत्वाऽऽकृतिमानेन मयूरग्रहणं विदुः ॥ ३६ ॥

एषां जलद्रोणे पादावशेषः क्वाथः
कर्त्तव्यः मधुराणि च जीवनीयानि दश ।

इति मयूरघृतम् ।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ॥ ३७ ॥
समङ्गा चविका भार्गी काश्मरीकुक्कुटाह्वयैः ।
आत्मगुप्ता महामेदा तालखर्जूरमस्तुकैः ॥ ३८ ॥
मृणालविश्वखर्जूर मधुकैश्च सजीवकैः ।
शतावरीविदारीक्षु बृहतीशारिवायुगैः ॥ ३९ ॥
मूर्वा श्वदंष्ट्रा शार्दूल शृङ्गाटककशेरुकैः ।
स्थिरामलकरास्नाभिः सूक्ष्मैलाशटिपौष्करैः ॥ ४० ॥
पुनर्नवातुगाक्षीरी काकोलीद्वयवासकैः ।
मधुकाक्षोटवाताम गुञ्जानाभिशुकैरपि ॥ ४१ ॥
द्रव्यैरेतैर्यथा लाभं पूर्वकल्केन साधितम् ।
पाने वस्तौ तथाभ्यङ्गे नस्ये चैव प्रयोजयेत् ॥ ४२ ॥
शिरोरोगेषु सर्वेषु कासे श्वासेऽतिदारुणे ।
मन्याहृष्टिग्रहे शोषे स्वरभेदे तथार्दिते ॥ ४३ ॥

योन्यसृक् शुक्रदोषेषु शस्तं बन्ध्यासुतप्रदम्।
महामायूरमित्येतद् घृतमात्रेय पूजितम्॥ ४४॥

इति महामायूरघृतम्।

बलाविल्वशृते क्षीरे घृते मण्डं विपाचयेत्।
तस्य शुक्तिं प्रकुञ्चं वा नस्यं शीर्षगतेऽनिले॥ ४५॥

इति बलादिघृतमण्डः। इति वातशिरोरोगः

पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत्।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि॥ ४६॥
शर्कराक्षीरसलिलैः शिरश्च परिषेचयेत्।
सर्पिषः शतधौतस्य शिरसा धारणं हितम्॥ ४७॥
निमज्जनञ्च शिरसः शीतले शस्यते मुहुः॥ ४८॥
कमलोत्पलपद्मानां शीतानां चन्दनाम्बुभिः।
स्पर्शः स्निग्धश्च पवनः सेव्यो दाहार्त्तिनाशनः॥ ४९॥
चन्दनोशीरयष्ट्याह्व बलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्याच्छीतैर्वा परिषेचनम्॥ ५०॥
मृणालबिसशालूक चन्दनोत्पलकेशरैः।
स्निग्धैः शीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः॥ ५१॥
यष्ट्याह्वचन्दनानन्ता क्षीरसिद्धं हितं घृतम्।
नावनं शर्करा द्राक्षा मधुकेश्चापि पित्तजे॥ ५२॥
त्वक्पत्रशर्करा पिष्टा नावनं तण्डुलाम्बुना।
क्षीरसर्पिर्हितं नस्यं जाङ्गला वा शुभा रसाः॥ ५३॥
पद्मचन्दनकर्पूरं नागरं नीलमुत्पलम्।
प्रदेहः सघृतः कार्य्यः शिरःशूलहरो नृणाम्॥ ५४॥

इति पित्तशिरोरोगचिकित्सा।

रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम्।

शीतोष्णयोश्च विन्यासो विशेषाद्रक्तमोक्षणम् ॥ ५५ ॥

इति रक्तशिरोरोगचिकित्सा ।

कफजे लेपनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ।
तीक्ष्णावपीड़ा धूमाश्च तीक्ष्णाश्च कवला हिताः ॥ ५६ ॥
भुञ्जीत कटुतीक्ष्णोष्णै र्यूषैस्तिक्तोपसंभृतैः ।
पुराणयवगोधूमा न्क्षुष्कमूलकसंयुतान् ॥ ५७ ॥
अच्छञ्च पाययेत्सर्पिः पुराणं स्वेदयेत्ततः ।
मधूकसारेण शिरः स्विन्नञ्चास्य विरेचयेत् ॥ ५८ ॥
हरेणुनतशैलेय मुस्तैलागुरुदारुभिः ।
रास्नास्थौणेयनलदै रूक्षोष्णैर्लेपयेच्छिरः ॥ ५९ ॥
सरलागुरुशार्ङ्गेष्टा देवकाष्ठैः सरोहिषैः ।
क्षीरपिष्टैः सलवणैः सुखोष्णैर्लेपयेच्छिरः ॥ ६० ॥
कृष्णाब्दशुण्ठीमधुका शताह्वोत्पलपावकैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ६१ ॥
यवषष्ठिकयोष्टान्नं व्योषं क्षारसमन्वितम् ।
पटोलमुद्गकौलत्थै र्मात्रावद्भोजयेद्रसैः ॥ ६२ ॥
उभे हरिद्रे पिप्पल्यः सरलं देवदारु च ।
विड़ङ्गं चित्रको विल्वं रोहिषस्य च पल्लवाः ॥ ६३ ॥
मन्थं सौवर्चलं द्राक्षा मञ्जिष्ठामधुकं बला ।
वेतसस्य च मूलानि पद्मकोशीरचन्दनम् ॥ ६४ ॥
एभिर्विल्वप्रमाणैस्तु तैलप्रस्थं विपाचयेत् ।
द्विगुणञ्च पयो दद्यात् सिद्धं तन्नस्यतो जयेत् ॥ ६५ ॥
श्लेष्मजं सन्निपातञ्च शीर्षरोगं नियच्छति ।
उपजिह्विकां गण्डमालां कण्ठशालूकमर्वुदम् ॥ ६६ ॥
विदारिकां मांसपाकं मुखशीर्षगलग्रहम् ।

दन्तचालं हनोःकम्पं तैलमेतन्नियच्छति ॥ ६७ ॥

इति हरिद्राद्यं तैलम्। इति कफशिरोरोगचिकित्सा।

सन्निपातभवे कार्य्या सन्निपातहरी क्रिया।
पुराणसर्पिषः पानं विशेषेणादिशन्ति हि ॥ ६८ ॥
श्यामानागरमिश्रेण श्वेतस्यन्देन तत्क्षणात्।
नाशयन्ति त्रिदोषोत्था शिरोऽर्त्तिः सम्प्रलेपनात् ॥ ६९ ॥
त्रिकटुकपुष्कररजनी रास्नासुरदारुतुरगगन्धानाम्।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥ ७० ॥
नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥ ७१ ॥
सक्तुनाः शर्करार्द्धांशा दाड़िमीकलिकाः शुभाः।
नश्यन्ति योजिताः सद्यः शिरःशूलहराः पराः ॥ ७२ ॥
करञ्जशिग्रुबीजानि पत्रकं शर्करा वचा।
सर्वेषां शीर्षरोगाणा मेतच्छीषविरेचनम् ॥ ७३ ॥
नावनं सगुड़ं विश्वं पिप्पली वा ससैन्धवम्।
भुजस्तम्भादिरोगेषु सर्वमूर्द्धगदेषु च ॥ ७४ ॥
यष्टीमधुकविड़ङ्गैः सभृङ्गराजनागरैर्घृतं सिद्धम्।
षड्‌विन्दुनस्यदानादेतच्छीर्षामयं हन्यात् ॥ ७५ ॥
पततां शिरोरुहाणां दन्तानां भ्रंशतां दृढ़ीकरणम्।
नेत्रसुपर्णप्रतिमं करोति वै दृढ़ं बलञ्चापि ॥ ७६ ॥

इति षड्‌विन्दुघृतम्।

एरण्डमूलं तगरं शताह्वा जीवन्तीरास्ना सह सैन्धवेन।
भृङ्गं विड़ङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम्॥७७॥
अजापयस्तैलविमिश्रितञ्च चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्‌विन्दवो नासिकया विधेयाः सर्वाणि हन्युः शिरसो विकारान्‌७८
च्युतांश्च केशांश्चलितांश्च दन्तान् निर्बन्धमूलान् सुदृढ़ीकरोति।

सुपर्णदृष्टिप्रतिमं च चक्षुर्वाह्वोर्बलञ्चाप्यधिकं करोति ॥ ७९ ॥

इति षड्बिन्दुतैलम् ।

शताह्वैरण्डमूलोग्राचक्रव्याघ्रीफलैः शृतम् ।
तैलं न स्यान्मरुच्छ्लेष्मतिमिरोर्द्ध्वगदापहम् ॥ ८० ॥

इति शताह्वातैलम् ।

जीवकर्षभकौ द्राक्षा सितायष्टीबलोत्पलैः ।
तैलं नस्यं पयः पक्वं वातपित्तशिरोगदे ॥ ८१ ॥

इति जीवकाद्यं तैलम् ।

बलाजीवन्तिनिर्यासैः पयोभिर्यमकं पचेत् ।
जीवनीयैश्च नस्यैश्च सर्वजत्रूर्द्ध्वरोगजित् ॥ ८२ ॥

इति बलाद्यं तैलम् ।

क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः ।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥
क्षयकासापहं चात्र सर्पिः पथ्यतमं सदा ॥ ८३ ॥
क्रमिजे व्योषनक्ताह्व शिग्रुबीजैश्च नावनम् ।
अजामूत्रयुतं नस्यं कर्त्तव्यं क्रमिजित्परम् ॥ ८४ ॥
शोणितं नस्यतो दद्यात्तेन मूर्च्छन्ति जन्तवः ।
मताः शोणितगन्धेन समायान्ति यतस्ततः ॥ ८५ ॥
सुतीक्ष्णधूमनस्याभ्यां कुर्य्यान्निर्हरणं भृशम् ।
पूतिमांसकृतान् धूमान् क्रमिघ्नांश्च प्रयोजयेत् ।
भोजनानि क्रमिघ्नानि पानानि विविधानि च ॥ ८६ ॥
कृष्णशिग्रुकबीजैर्वा कांस्यनीलीसमायुतैः ।
क्रमिघ्नैरवपीड़ैश्च मूत्रपिष्टैः समाचरेत् ॥ ८७ ॥
विड़ङ्गस्वर्जिकादन्ती हिङ्गुगोमूत्रसंयुतम् ।
विपक्वं सार्षपं तैलं क्रमिघ्नं नस्य मुत्तमम् ॥ ८८ ॥

इति विड़ङ्गतैलम् ।

अपामार्गफलं व्योषं निशाक्षारकरामठैः।
सविड़ङ्गं शृतं मूत्रे तैलं नस्यं क्रमिं जयेत् ॥ ८९ ॥

इति अपामार्ग तैलम्।

सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम्।
पाययेत्सगुड़ं सर्पि घृतपूरांश्च भक्षयेत् ॥ ९० ॥
सूर्य्यावर्त्ते शिरावेधो नावनं क्षीरसर्पिषा।
हितः क्षीरघृताभ्यास स्ताभ्याञ्चैव विरेचनम् ॥ ९१ ॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ९२ ॥
महौषधस्य स्वरसं वचापिप्पलिभिर्युतम्।
अवपीड़ं प्रयोक्तव्यं सूर्य्यावर्त्तविभेदनम् ॥ ९३ ॥
भृङ्गराजरसश्छागक्षीरतुल्योऽर्कतापितः।
सूर्य्यावर्त्तं निहन्त्याशु नस्येनैव प्रयोजितः ॥ ९४ ॥
जाङ्गलानि च मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यते व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥ ९५ ॥
मयूरान् कुक्कुटान् हंसान् क्षीरेणैव विपाचयेत्।
तत्क्षीरात्तसमुद्भूतं नवनीतमथोद्धरेत् ॥ ९६ ॥
तत्क्षीरे षड्गुणे साध्यं जीवनीयौषधैः सह।
तस्य नस्यं प्रदातव्यं सूर्य्यावर्त्तविनाशनम् ॥ ९७ ॥
कृतमालपल्लवरसैः खरिमञ्जरीमूलकल्कनवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदारुणं पुंसाम् ॥ ९८ ॥
अर्द्धावभेदके पूर्वं स्नेहस्वेदो हि योजितः।
विरेकः कायशुद्धिश्च धूमः स्निग्धोष्णभोजनम् ॥ ९९ ॥
तिलकल्करसं तैलं सक्षौद्रलवणान्वितम्।
तैलस्य लेपनं शीर्षे मर्द्धभेदं व्यपोहति ॥ १०० ॥
विड़ङ्गानि तिलान् कृष्णान् समं कृत्वा तु पेषयेत्।
नस्यकर्मणि दातव्य मर्द्धभेदं व्यपोहति ॥ १०१ ॥

शालिपर्ण्यम्भसा पिष्टा नस्यमर्द्धविभेदजित्।
चक्रमर्दकवीजैर्वा लेपः काञ्जिकपेषितः ॥ १०२ ॥

यद्यस्ति ते शिरसि शूलमतीवगाढ़ं
सूर्य्योदये समसितञ्च पयःपिव त्वम्।
नासापुटेन परमार्थमचिन्त्यशक्तिं
दृष्टाऽऽमये तदनुभूतफलं सदैव ॥ १०३ ॥

शारिवोत्पलयष्ट्याह्व कुष्ठैर्लेपोऽम्बुसंयुतैः।
घृतपूराश्च सेव्या वा सूर्य्यावर्त्तार्द्धभेदयोः ॥ १०४ ॥
दशमूलीकषायन्तु सर्पिः सैन्धवसंयुतम्।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥ १०५ ॥
भृष्टाज्ये कुङ्कुमं किञ्चित् पिष्टितं सितया समम्।
पिष्टं कृगल्या चीरेण भुक्तं पित्तविनाशकम्।
एतदर्द्धावभेदघ्नं सूर्य्यावर्त्तं शिरोऽर्त्तिनुत् ॥ १०६ ॥
अपामार्गस्य वीजानि विश्वं सचौद्रशर्करम्।
नस्यं प्रयोजयेन्नित्यं सूर्य्यावर्त्तार्द्धभेदयोः ॥ १०७ ॥
एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥ १०८ ॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तेरितो विधिः।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥ १०९ ॥
आहारश्च विधातव्यो वातपित्तविनाशनः।
मधुमिश्रकसंयाव घृतपूरैश्च भोजनैः ॥ ११० ॥
सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्ककर्णाक्षिशिरोऽर्द्धशूले सूर्य्योदये शङ्ककसार्द्धभेदे ॥१११॥
शिरीषमूलकफलैरवपीड़ञ्च योजयेत्।
अवपीड़ो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ ११२ ॥
पीत्वा शशमुण्डरसं मरिचैरवचूर्णितं समभ्यस्तम्।
सप्ताहं भक्तादौ सूर्य्यावर्त्तार्द्धभेदकौ हन्यात् ॥ ११३ ॥

धात्रग्रक्षपथ्या सनिशा गुड़ूची भूनिम्बनिम्बैः क्वथितः षड़ङ्गः।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धशूले सूर्य्योदये शङ्खकमर्द्दभेदे॥ ११४॥
नक्तान्ध्यकाचे पटले सशुक्रे पाकेऽश्रुपाते तिमिरेऽक्षिरोगे।
पक्ष्मप्रकोपे विनिहन्ति चैष सद्यो गदं वायुरिवाभ्रवृन्दम्॥११५

शर्करा कुङ्कुमं द्राक्षा चतुर्थांशेन निक्षिपेत्।
नवनीते ततस्तेन कृत्वैक्यं नस्यमाचरेत्॥ ११६॥
नस्यमेतत्प्रशंसन्ति सूर्य्यावर्त्तार्द्धभेदके।
शिरोरोगे परं वापि वातपित्तसमुद्भवे॥ ११७॥
सूर्य्यावर्त्तहरः कल्पो विधिरप्यत्र शस्यते॥ ११८॥
जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा॥ ११९॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु॥ १२०॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम्।
वाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम्॥ १२१॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति।
दन्तचालं शिरश्चाल मर्दितञ्चापकर्षति॥ १२२॥

इति जीवकाद्यं तैलम्।

सूर्य्यावर्त्ते हितं यत् तच्छङ्खके स्वेदवर्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके॥ १२३॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
दूर्वां पुनर्नवां वापि लेपे साध्ववचापयेत्॥ १२४॥
भद्रश्रियं पुण्डरीकं मधुकं नीलमुत्पलम्।
पद्मकं चेतसं दूर्वा लामज्जकमथापि वा॥ १२५॥
दार्वीहरिद्रामञ्जिष्ठा फेनिलोशीरमेव च।
एतदालेपनं कुर्य्यात् शङ्खकस्य प्रशान्तये॥ १२६॥

सूर्य्यावर्त्तापहं चास्मिन्नवपीड़ं प्रयोजयेत् ॥ १२७ ॥
क्रौञ्चकादम्बहंसानां शराय्याः कच्छपस्य च ।
रसैः संबृंहितस्याथ तस्य शङ्खस्य सन्धिजाः ॥ १२८ ॥
शङ्खकस्य शिरां प्राज्ञो विध्येदेव न ताड़येत् ।
सर्पिषा चीरपानन्तु नस्येनापि मुखेन वा ॥ १२९ ॥
एष एव विधिः श्रेष्ठः शङ्खके शर्करान्वितः ।
शर्कराचीरसलिलैः शिरश्च परिषेचयेत् ॥ १३० ॥
वातोरूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत् ॥ १३१ ॥
तत्रामृताबलारास्ना महास्नेहातिगन्धकैः ।
स्नेहस्वेदोऽतिवातघ्नं शस्तं नस्यञ्च तर्पणम् ॥ १३२ ॥
दग्धमत्स्यं विनिष्पीड्य निर्द्रवीकृत्य यत्नतः ।
कण्डुरामूलनिर्य्यासो माषयूषावलोड़ितम् ॥ १३३ ॥
भक्षितं शमयेत् तूर्णं शिरःकम्पमसंशयम् ।
नस्यकर्म च कुर्वीत शिरोरोगेषु शास्त्रवित् ॥ १३४ ॥
कम्पदाहार्दिते कुर्य्यात् वातव्याधिक्रियाविधिः ॥ १३५ ॥

इति श्रीवङ्गसेनसङ्कलितः शिरोरोगनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ स्त्रीरोगाधिकारमाह ।

अथ प्रथमं नष्टकुसुमस्य प्रतिक्रियामाह ।

गृहचिरस्थितमङ्गल चूतदलैः संस्कृतं जलं पेयम् ।
मरिचासनोग्रमदिरा पानस्तारसलिलस्य ॥ १ ॥
इक्ष्वाकुबीजदन्ती चपलागुड़मदनकिण्वयावशूकैः ।
सस्नुक् चीरैर्वर्त्तियोनिगता कुसुमसञ्जननी ॥ २ ॥
सलिलनिपतितं कुसुमं रक्तजवाया गुहाम्बुसम्पीतम् ।
जनयति कुसुमं नार्य्या भ्रष्टं ज्योतिष्मतीपत्रम् ॥ ३ ॥

पङ्केरुहाणां मूलं पिष्टकमशितं तथा सुराबीजम्।
हिमसलिलेन निपीतं भवतीह कुसुमाय नारीणाम्॥ ४॥

इति कुसुमजननविधिः।

अथ स्त्रीरोगनिदानमाह।

विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रतापादतिमैथुनाच्च।
यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च॥५॥
असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम्॥ ६॥
तस्यातिवृद्धौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः॥ ७॥
तं श्लेष्मपित्तानिलसन्निपातैश्चतुःप्रकारं प्रदरं वदन्ति।
आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु॥८॥
सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्।
रूक्षारुणं फेनिलमल्पमल्पं वातार्त्ति वातात्पिशितोदकाभम्॥९॥
सक्षौद्रसर्पिः हरितालवर्णं
मज्जः प्रकाशं कुणपं त्रिदोषम्।
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्वीत भिषक् चिकित्साम्॥ १०॥
शश्वत् स्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम्।
क्षीणरक्तां दुर्बलाञ्च तामसाध्यां विनिर्दिशेत्॥ ११॥
मासान्निःपिच्छदाहार्त्तिः पञ्चरात्रानुबन्धि च।
नैवातिबहुलात्यल्प मार्त्तवं शुद्धमादिशेत्॥ १२॥
शशासृक् प्रतिमं यच्च यद्वा लाक्षारसोपमम्।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत्॥ १३॥

अथ चिकित्सामाह।

असृग्दरः प्राणहरः स्त्रीणां सर्वत्र कीर्त्तितः।
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत्॥ १४॥

नारीणां प्रदरार्त्तानां योगान् वक्ष्याम्यतःपरम्।
योनिशूलापहान् सिद्धान् गर्भसंस्थापनान् परान् ॥ १५ ॥
सर्वेषु पूर्वं वमनं प्रशस्तं रसेक्षुद्राक्षोदकतर्पणैश्च।
सपिप्पलीभिर्मधुमण्डकल्कैर्मुस्ता यवानाश्च गुड़ाम्बुमिश्रैः ॥१६॥
पद्मकोत्पलबीजानि त्रापुसानि शतावरी।
विदारी चेक्षुमूलञ्च पिष्ट्वा धौतघृतायुतम् ॥
योन्यां शिरसि गात्रे च प्रदेहोऽसृग्दरापहः ॥ १७ ॥
मुद्गपर्णीविपक्केन तैलेन पिचुधारणम्।
कर्त्तव्यं रक्तनाशाय मार्दवाय सुखाय च ॥ १८ ॥
दध्ना सौवर्चलाजाजी मधुकं नीलमुत्पलम्।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता ॥ १९ ॥
तिलचूर्णं दधिघृतं फाणितं शौकरीं वसाम्।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम् ॥ २० ॥
वाराहस्य रसो मेध्यः सकौलत्थो निशाधिकः।
वातासृग्दरशान्त्यर्थं पिबेत् दध्ना वराङ्गना ॥ २१ ॥
पित्तासृग्दरशान्त्यर्थं पिबेदिक्षुरसेन वा ॥ २२ ॥

इति वातासृग्दरः।

पिबेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥ २३ ॥
चन्दनोशीरपत्तङ्ग मधुकं नीलमुत्पलम्।
त्रपुसैर्वारुबीजानि धातकीकदलीफलम् ॥ २४ ॥
कोललाक्षावटारोह पद्मकं पद्मकेशरम्।
एतान् कल्कान् मधुयुतान् पाययेत्तण्डुलाम्बुना ॥ २५ ॥
त्र्यहाच्छमयेदेतत् योषितां पैत्तिकं रजः ॥ २६ ॥

इति चन्दनादिकल्कम्।

शर्कराक्षौद्रसंयुक्तं यष्ट्याह्वं नागरं दधि।

पयस्योत्पलशालूक विसकालीयजं रजः॥
पयसा शर्कराक्षौद्रयुतेनासृग्दरे पिबेत्॥ २७॥
कपित्थवेणुपत्रञ्च सममेकत्र पेषयेत्।
मधुना सह दातव्यं तीव्रप्रदरनाशनम्॥ २८॥
अशोकवल्कलक्वाथं शृतं दुग्धं सुशीतलम्।
यथा बलं पिबेत्प्रात स्त्रीव्रासृग्दरनाशनम्॥ २९॥
क्षौद्रयुक्तं फलरसं काकोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक्॥ ३०॥

इति पित्तासृग्दरः।

मधुकं त्रिफलालोध्र मुस्तं सौराष्ट्रिकां मधु।
मद्यैर्निम्बगुडूच्यौ तु कफजेऽसृग्दरे पिबेत्॥ ३१॥
रोहितकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
जलेनामलकीवीजकल्कं वा ससितामधु॥
पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम्॥ ३२॥
काकजङ्घाकमूलं वा मूलं कार्पासमेव वा।
पाण्डुप्रदरनाशाय पिबेत्तण्डुलवारिणा॥ ३३॥
तक्राशनरता सम्यक् संपिबेन्नागकेशरम्।
त्र्यहं तक्रेण संपीड्य श्वेतप्रदरशान्तये॥ ३४॥
फलत्रिकं दारुवचा सवासा लाजा सदूर्वा कलशीसमङ्गा।
क्षौद्रान्वितं क्वाथमिदं सुशीतं सर्वात्मके पेयमसृग्दरे हि॥३५॥

दार्वीरसाञ्जनवृषाब्दकिरातविल्व-
भल्लातकैरवकृतो मधुना कषायः।
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम्॥ ३६॥

लिप्ते ललाटपट्टे बलतरखञ्जनेत्रकल्केन।
प्रदरः शाम्यति नित्यं विचित्रिता द्रव्यशक्तिरियम्॥ ३७॥

आखोः पुरीषं पयसा निषेव्यं वङ्केर्बलादेक महद्दग्रहं वा ।
स्त्रियो महाशोणितवेगनद्याः चणेन पारं परमाप्नुवन्ति ॥ ३८ ॥

मधुना तार्च्यसंयुक्तं मूलं स्यात्तण्डुलीयकम् ।
तण्डुलाम्बुयुतं पानात् सर्वप्रदरनाशनम् ॥ ३९ ॥
कुशमूलं समाहृत्य पाययेत्तण्डुलाम्बुना ।
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ ४० ॥
प्रदरं शमयति नार्य्याः क्वथितः सलिलेन वा पयसा ।
मूलं वास्तुकाञ्जयोः पीतं दिवसत्रयेणैव ॥ ४१ ॥
भूम्यामलकीवीजन्तु पीतं तण्डुलवारिणा ।
दिनद्वयत्रयेणैव स्त्रीरोगं नाशयेद् ध्रुवम् ।
दिनद्वयत्रयेणैव स्त्रीरोगं नाशयेद् ध्रुवम् ।
मेढ्रगं रुधिरस्रावं रक्तातिसारमुल्वणम् ॥ ४२ ॥
असितोत्पलशालूकं निस्तुषा रक्तशालयः ।
यवानीगैरिकं यासाः समभागेन चूर्णिताः ।
चौद्रेण तांश्च संयोज्य लिह्यात् प्रदरपीड़िता ॥ ४३ ॥
तण्डुलीयकमूलञ्च सचौद्रं तण्डुलाम्बुना ।
रसाञ्जनञ्च लाक्षाञ्च छागेन पयसा पिबेत ॥ ४४ ॥
प्रदरं हन्ति बलाया मूलं दुग्धेन समधुना पीतम् ।
कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम् ॥ ४५ ॥
दग्ध्वा मूषिकविष्ठान्तु लोहिते प्रदरे पिबेत् ॥ ४६ ॥
शर्करायाः पलं पिष्ट्वा मधुकस्य चतुष्पलम् ।
तण्डुलोदकसंयुक्तं लोहितप्रदरे पिबेत् ॥ ४७ ॥
काश्मर्य्यवटशुङ्गानि पृथग्दन्त्यास्तथैव च ।
घृतं सिद्धं भवेच्छ्रेष्ठं शोणितप्रदरे पिबेत् ॥ ४८ ॥

इति काश्मर्य्यादिघृतं त्र्यम् ।

तरुण्याहितसेविन्यास्तदल्पोपद्रवं भिषक् ।

रक्तपित्तविधानेन यथावत् समुपाचरेत् ॥ ४९ ॥
हितस्त्वत्र विशेषेण लेह्योयं कुटजाष्टकः ॥ ५० ॥
पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदं रसाञ्जनम्।
अम्बष्टकीमोचरसः समङ्गापद्मकेसरम् ॥ ५१ ॥
वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम्।
कट्फलं मरिचं शुण्ठी मृद्वीका रक्तचन्दनम् ॥ ५२ ॥
कट्वङ्गवत्सकानन्ता धातकीमधुकार्जुनम्।
पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत् ॥ ५३ ॥
तानि क्षौद्रेण संयुज्य पाययेत्तण्डुलाम्बुना।
असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते ॥ ५४ ॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतनीलं सपीतकम् ॥ ५५ ॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत्।
चूर्णं पुष्यानुगं नाम हितमात्रेय पूजितम् ॥ ५६ ॥

इति पुष्यानुगं चूर्णम्।

अशोकवल्कलप्रस्थं तोयाढकविपाचितम्।
चतुर्भागावशिष्टेन घृतप्रस्थं विपाचयेत् ॥ ५७ ॥
तण्डुलाम्बु त्वजाक्षीरं घृततुल्यं प्रदापयेत्।
जीवकस्य रसश्चापि केशराजोद्भवस्तथा ॥
जीवनीयैः प्रियालैश्च परुषैः सरसाञ्जनैः ॥ ५८ ॥
यष्ट्याह्वाशोकमूलञ्च मृद्वीका च शतावरी।
तण्डुलीयकमूलञ्च कल्कैरेभिः पलार्द्धिकैः ॥ ५९ ॥
शर्करायाः पलान्यष्टौ गर्भं दत्त्वा सुचूर्णितम्।
पुष्ययोगेन तत्सर्पिः शनैर्मृद्वग्निना पचेत् ॥ ६० ॥
पीतमेतद् घृतं हन्यात्सर्वदोषसमुद्भवम्।
श्वेतं नीलं तथा कृष्णं प्रदरं हन्ति दुस्तरम् ॥ ६१ ॥

कुक्षिशूलं कटिशूलं योनिशूलञ्च सर्व्वगम्।
मन्दाग्निमरुचिं पाण्डुं कृशत्वं श्वासकासकम्॥ ६२॥
आयुः पुष्टिकरं धन्यं बलवर्णप्रसादनम्।
देयमेतद्वरं सर्पिर्विष्णुना परिकीर्त्तितम्॥ ६३॥

इति फलघृतम्।

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका॥ ६४॥
बलातिबलयोर्मूलमुत्पलं तालमस्तुकम्।
विदारीशतमूली च शालपर्णी सजीवका॥ ६५॥
फलं त्रपुसबीजानि प्रत्यग्रं कदलीफलम्।
एषामर्द्धपलान् भागान् गवां क्षीरं चतुर्गुणम्॥ ६६॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके॥ ६७॥
बहुरूपञ्च यत्पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे॥ ६८॥
तरुणी चाल्पपुष्पा या या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम्॥ ६९॥

इति शीतकल्याणकघृतम्।

शतावरीरसप्रस्थं क्षोदयित्वा च पीडयेत्।
घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं तथा॥ ७०॥
अन्तः कल्कानिमान्दद्यात् कार्षिकान् श्लक्ष्णपेषितान्।
जीवनीयानि यान्यष्टौ यष्टी चन्दनपद्मके॥ ७१॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम्॥ ७२॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।

सम्यक् सिद्धन्तु विज्ञाय तदेतदवतारयेत् ॥ ७३ ॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च।
वातरक्तं क्षयं श्वासं हिक्कां कासञ्च दुस्तरम् ॥ ७४ ॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम्।
असृग्दरं सर्व्वभूतं मूत्रकृच्छ्रञ्च दारुणम् ॥
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ ७५ ॥

इति शतावरीघृतम्।

मुद्गमाषस्य निर्यूहे रास्नाचित्रकनागरैः।
सिद्धं सपिप्पलीविश्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ ७६ ॥

इति मुद्गघृतम्।

शाल्मलीपुष्पनिर्यासः पृश्निपर्ण्यस्तथैव च।
काश्मर्यं चन्दनञ्चैषां कल्केन स्वरसेन च ॥ ७७ ॥
एभिः पचेद् घृतप्रस्थमवतार्य्य सुशीतलम्।
पिबेत्सर्पिरिदं नारी सर्व्वप्रदरशान्तये ॥ ७८ ॥

इति शाल्मलीघृतम्।

काश्मरीवदरानन्ता गुडूचीमधुकैः शृतम्।
आजेन पयसा सिद्ध मेतद् घृतमसृग्दरे ॥ ७९ ॥

इति काश्मरीघृतम्। इति असृग्दरनिदानचिकित्सा।

स्त्रीणामतिप्रसङ्गाद्वा शोकाद्वापि श्रमादपि।
अतिसारकरोगाद्वा गरदोषात्तथैव च ॥ ८० ॥
आपः सर्व्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ ८१ ॥
प्रसन्ना निर्मलाः शीता निर्गन्धा नीरुजाः सिताः।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्ब्बला ॥ ८२ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित्।
शिरसः शिथिलत्वञ्च मुखतालुकशोषणम् ॥

मूर्च्छा जृम्भा प्रलापश्च त्वग्रूचा चातिमात्रतः ॥ ८३ ॥
भक्ष्यैर्भोज्यैश्च पेयैश्च तृप्तिं न लभते सदा ।
सोमरोग इति ज्ञेयो देहे सोमक्षयात् स्त्रियाः ॥ ८४ ॥
शरीरधारणाच्चापि सोमद्रव्याभिशब्दितः ।
तस्मात्सोमक्षयाद्देहो निश्चेष्टश्च भवेत्सदा ॥ ८५ ॥

अथ सोमरोगचिकित्सामाह ।

कदलीनां फलं पक्वं धात्रीफलरसं मधु ।
शर्करासहितं खादेत् सोमधारणमुत्तमम् ॥ ८६ ॥
माषचूर्णं समधुकं विदारीं मधुशर्कराम् ।
पयसा पाययेत् प्रात स्त्वपां धारणमुत्तमम् ॥ ८७ ॥
कदलीनां फलं पक्वं विदारीञ्च शतावरीम् ।
क्षीरेण पाययेत् प्रात स्त्वपां धारणमुत्तमम् ॥ ८८ ॥
स एव सरुजः सोमो मूत्रेण स्रवते मुहुः ।
तत्रैलापत्रचूर्णेन पाययेत्तरुणीं सुराम् ॥ ८९ ॥

अथ मूत्रातिसारमाह ।

सोमलक्षणसंसृष्टा कालातिक्रान्तयोगतः ।
साऽतिक्रान्तक्रमेणैव स्रवेन्मूत्रमभीक्ष्णशः ॥ ९० ॥

इति स्त्रीणां सोमोपक्रमः ।

अथ स्त्रीणां विद्वेषमभिधास्ये स त्रिविधो विद्वेषः तद्यथा दैवकृतः अदक्षपुरुषत्वयोगकृतः सपत्नीकृतश्चेति । तत्र प्रथमो विरुद्धनक्षत्रकृतपरिणयतादिदोषात् आदित एव जायते । द्वितीयश्च विदग्धपुरुषसंयोगात् । तृतीयस्त्वौषधकृत अनियत एव काले प्रजायते । तत्र प्रथमे विवाहकालक इति तद्धोमः कर्त्तव्यः । ततः प्रदोषे भक्तपुत्तलिकां कृत्वा गन्धधूपादिपूजितां वस्त्रावृतजीवन्तिकां दीपसहितां शुक्लपुष्पमालार्चितां कुशचण्डिकां कोणेषु च चतुर्वर्णध्वजायुक्ताम् ।

तस्या दर्शनं पूजनञ्च कृत्वा विनयान्वितो मन्त्रं जपेत्, ततः कुमारीश्च पूजयेद्भोजयेच्च। ततः संपद्यते सुखं ओं ह्रूं ह्रं वं वशीकरणं कुरुष्व स्वाहा। इति वशीकरणमन्त्रः।

द्वितीये च लज्जालुमूलेन गजान्वितेन कर्पूरमिश्रितेन वराङ्गे प्रलेपं कृत्वा प्रसिद्धनरनारीविभ्रमधूमधूपेन कृताङ्गधूपः। समालम्बनादिकृतशृङ्गारकावेशः। नारीं गृहसम्बन्धबद्धस्त्रियं चाटुवचनां विषयोचितां समाहितः पुरुषोऽनिच्छन्तीमभिगच्छेत् कुमारीणाञ्च भोजनमुत्सृजेत्। ततः सम्पद्यते शुभम्।

तृतीये प्रियङ्गुकमयूरशिखाश्वेतपुनर्नवामूलं पिष्ट्वा छागलपयसालोड्य योनिं प्रक्षालयेत्। पिष्टसूकरमांसेन रचितां स्त्रीप्रमाणां पुत्तलिकां कृत्वा गन्धादिना समालभ्य पूजयित्वा स्त्रियं निर्मथयित्वा श्मशाने रात्रिप्रहरैकगते दापयेत्। कुमारीञ्च पूजयेत् ततः सम्पद्यते शुभम्। ओं घोराख्यै प्रियजननि ह्रं स्वाहा। इत्यपि वशीकरणमन्त्रः। इति नागार्जुनकृतौ योगसारे स्त्रीदोषचिकित्सा परिच्छेदः।

अथ निदानमाह।

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे।<br>
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च॥ ८१॥<br>
जायन्ते वीजदोषाच्च दैवाच्च शृणु ताः पृथक्॥ ८२॥<br>
सा फेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति।<br>
वन्ध्यां नष्टार्त्तवां विद्या द्विप्लुतां नित्यवेदनाम्॥ ८३॥<br>
परिप्लुतायां भवति ग्राम्यधर्मेण रुग्भृशम्।<br>
वातला कर्कशा स्तब्धा शूलनिस्तोदपीड़िता।<br>
चतसृष्वपिचाद्यासु भवन्त्यनिलवेदनाः॥ ८४॥<br>
सदाहं चीयते रक्तं यस्यां सा लोहितक्षया।

सवातमुद्गिरेद्वीजं कामिनी रजसायुतम् ॥ ९५ ॥
प्रस्रंसिनी स्रंसते तु क्षोभिता दुःप्रजायिनी ।
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसङ्क्षयात् ॥ ९६ ॥
अत्यन्तपित्तला योनिर्दाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ९७ ॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ।
कर्णिन्यां कर्णिकायोनौ श्लेष्मासृग्भ्याञ्च जायते ॥ ९८ ॥
मैथुनाचरणात्पूर्वं पुरुषादतिरिच्यते ।
बहुशश्चातिचरणा तयोर्वीजं न विन्दति ॥ ९९ ॥
श्लेष्मलापिच्छिलायोनिः कण्डूयुक्तातिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १०० ॥
अनार्त्तवाऽस्तनीषण्ढी खरस्पर्शा च मैथुने ।
अतिकायगृहीताया स्तरुण्यास्त्वण्डिनी भवेत् ॥ १०१ ॥
विवृतातिमहायोनिः सूचीवक्त्रा तिसंवृता ।
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १०२ ॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ।
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १०३ ॥

अथ योनिरोगचिकित्सा ।

योनिव्यापत्सु भूयिष्ठं कर्त्तव्यं कर्म वातजित् ।
स्नेहस्वेदनवस्त्यादि विशेषाद्वातजासु च ॥ १०४ ॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेच्च ताम् ।
मधुरौषधसंसिद्धान् वेसवारांश्च योनिषु ॥ १०५ ॥
निक्षिप्य धारयेच्चापि पिचुतैलं यथा वलम् ।
योनिशूलरुजादीःस्य शोफस्रावप्रशान्तये ॥ १०६ ॥
कर्णिन्यां वर्त्तयो देया शोधनद्रव्यसंयुता ॥ १०७ ॥
स्रंसनीं च घृताभ्यक्तां क्षीरस्विन्नां प्रशान्तयेत् ।

विधाय वेशवारैश्च ततो बन्धं समाचरेत्॥ १०८॥
पाणिना नामयेज्जिह्मां संवृतां वर्द्धयेत् पुनः।
प्रवेशयेन्निःसृताञ्च विच्छिन्नां परिवर्जयेत्॥ १०९॥
वचोपकुञ्चिकाजाजी कृष्णावृषकसैन्धवम्।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम्॥ ११०॥
पिष्ट्वा प्रसन्नयालोड्य खादेत्तद् घृतभर्जितम्।
योनिपार्श्वार्त्तिहृद्रोग गुल्मार्शोविनिवृत्तये॥ १११॥
सुखं नारी पिबेत्काले योनिशूलनिपीड़िता।
रास्नाश्वगन्धावृषकैः शृतं शूलहरं पयः।
गुड़ूचीत्रिफलादन्ती क्वाथैश्च परिषेचनम्॥ ११२॥
सुषवीमूलविलेपात् प्रविष्टयोनेस्तु भवति निःसरणम्।
मूषकवसयाभ्यङ्गो निःसृतयोनेः प्रवेशाय॥ ११३॥
गुड़ूचीत्रिफलाभीरु शुष्कनासानिशाह्वयैः।
श्रीपर्णीशैयकद्राक्षा कासमर्दकविल्वकैः॥ ११४॥
परूषकान्वितैरक्षसमैः प्रस्थो घृतः शृतः।
योनिवातविकारघ्नो गर्भदः परमो भवेत्॥ ११५॥

इति गुड़ूच्यादिघृतम्।

तैलप्रस्थं गवां मूत्रे क्षीरे द्विगुणिते पचेत्।
गुड़ूच्यादेस्तु कल्केन तद्युक्तञ्च भिगग्वरः॥
वातार्त्तायां पिचुं दद्याद्योनौ सञ्चारयेत्सदा॥ ११६॥

इति गुड़ूच्यादितैलम्।

नतवार्त्ताकिनीकुष्ठ सैन्धवामरदारुभिः।
तैलप्रसाधितो धार्य्यः पिचुर्योनौ रुजापहः॥ ११७॥

इति नताद्यं तैलम्।

पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च॥ ११८॥

वरीघृतं बलातैलं युञ्ज्यात्पित्तविकारनुत्।
दोषं ज्ञात्वासृजं योज्यं प्रदरघ्नं क्रियाक्रमम्॥ ११९॥
काश्मरीकुटजक्वाथे सिद्धमुत्तरवस्तिना।
रक्तयोन्यरजस्का याऽपुत्रा तासां हितं घृतम्॥ १२०॥
योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम्।
तैलं सिन्धुयवान्नञ्च यथारिष्टञ्च योजयेत्॥ १२१॥
पिप्पल्याः मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधिनी॥ १२२॥
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत्।
पञ्चकल्कस्य पित्तार्त्ता श्यामादीनां कफार्दिता॥ १२३॥
स्तब्धायां कर्कशायाञ्च कुर्य्यान्मार्दवकारकम्।
सन्निपातसमुत्थायां क्रमं साधारणं हितम्॥ १२४॥
एला सधातकीजम्बू समङ्गामोचसर्जकम्।
दुर्गन्धे पिच्छिले स्विन्ने स्तम्भिते चूर्णमिष्यते॥ १२५॥
दुर्गन्धानां कषायं स्यात् तैलं तु कल्क एव च।
चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणम्॥ १२६॥

अथ गर्भप्रदयोगानाह।

लक्ष्मणाचन्दनं लोध्रं सुशीरं पद्मकं शटी।
द्वे हरिद्रे वचा कुष्ठं पद्मकेशरमुत्पलम्॥ १२७॥
शारिवे द्वे विडङ्गानि सुमनः कुसुमानि च।
मांसीदारु श्वदंष्ट्रा च रेणुकं चोत्पलं तथा॥ १२८॥
मधुकं शतपुष्पा च मात्रैषां कार्षिका भवेत्।
एभिर्वाजघृतप्रस्थं क्षीरं दत्त्वा चतुर्गुणम्।
तत्कषायं दशगुणं स्नेहपाकविधौ पचेत्॥ १२९॥
गुणांस्तस्य प्रवक्ष्यामि घृतस्यास्य महात्मनः।
गर्भिणीनाञ्च नारीणां पानाभ्यञ्जनभोजनैः॥ १३०॥

बालानां ग्रहजुष्टानां घृतमेतत् प्रशस्यते।
बन्ध्यापुष्टिप्रदं पौष्य मपुत्राणाञ्च पुत्रदम्॥ १३१॥
श्रेष्ठं वा योनिरोगे स्या दसृग्दरविनाशनम्।
यन्मया निर्मितं ह्येत लक्ष्मणाद्यं घृतं महत्॥ १३२॥

इति लक्ष्मणाद्यं घृतम्।

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम्॥ १३३॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरचतुर्गुणम्।
तत्सिद्धं प्रपिबेन्नारी योनिशूलनिपीड़िता॥ १३४॥
पीड़िता चलिता योनि र्निःसृता विवृता च या।
पित्तयोनिश्च विस्रस्ता षण्डयोनिश्च या स्मृता॥ १३५॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहरं परम्॥ १३६॥

इति फलघृतम्।

एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।
अदुष्टे प्राकृते वीजे वीजोपक्रमणे सति॥ १३७॥
वीजस्य प्लवनं न स्यात् हृदि मूत्रञ्च फेनिलम्।
पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्डकः॥ १३८॥
शिशुः स्याच्छुक्रबाहुल्याद् दुहित्री चार्त्तबाधिके।
नपुंसकं तयोः साम्ये यथेच्छा परमेश्वरी॥ १३९॥
सक्षीरशाल्यन्नभुजा तिलमाषोत्तराशना।
प्रमदा समुदा सेव्या चेमे ह्युच्चार्य्य मन्त्रके॥ १४०॥

ओं अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वादधातु ब्रह्मवर्चसे भवेदिति। ओं ब्रह्माप्रजापतिर्विष्णुः सोमः सूर्य्यस्तथाश्विनौ। भगोऽथ मित्रावरुणौ वीरं दधतु मे सुतमितीमे द्वे मन्त्रे।

उच्चित्ताननदेहा स्त्री तिष्ठेद्रत्याः श्रमं त्यजेत् ।
एवं सा सुतमाप्नोति रूपायुर्बलशालिनम् ॥ १४१ ॥
पुष्ये पुत्तलिकां कृत्वा हैमां वह्निप्रतापिताम् ।
क्षीरे निर्वाप्य सन्तप्तं पिवेद्दुग्धं पलाष्टकम् ॥ १४२ ॥
लक्ष्मणां वटशुङ्गान् वा पिष्ट्वा क्षीरेण विन्दुकाम् ।
सवर्त्तिं पुत्रकामायै सव्येतरपुटे क्षिपेत् ॥
सव्ये नासापुटे कन्यां लभेन्नारीमसंशयम् ॥ १४३ ॥
बलामतिबलां चैव शर्करां मधुयष्टिकाम् ।
क्षीरं मधुघृतं चैव पीतं गर्भप्रदं भवेत् ॥ १४४ ॥
नागकेसरपूगास्थिचूर्णं वा गर्भदं परम् ॥ १४५ ॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः ।
ऋतुस्नाताऽबला पीत्वा गर्भं धत्ते न संशयः ॥ १४६ ॥
पिप्पलीशृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं बन्ध्यागर्भप्रदं परम् ॥ १४७ ॥
तिलतैलदुग्धफाणित दधिघृतमेकत्र पाणिना मथितम् ।
पीतं सपिप्पलीकं जनयति बन्ध्याप्यपत्यमाशु ॥ १४८ ॥
पत्रमेकं पलाशस्य गर्भिणीपयसान्वितम् ।
पीत्वा च लभते पुत्रं वीर्य्यवन्तमसंशयम् ॥ १४९ ॥
पुष्योद्धृतं लक्ष्मणाया मूलं पिष्टञ्च कन्यया ।
ऋत्वन्ते घृतदुग्धाभ्यां पीत्वाऽप्नोत्यबला सुतम् ॥ १५० ॥
तिलतैलकुड़वमेकं वृषसलिलसंयुतं पक्वम् ।
ऋतुकालान्ते पीत्वा गर्भं विदधाति बन्ध्यापि ॥ १५१ ॥
जीवकपुत्रकबीजं क्षीरेण पिबेत्सपत्रमूलञ्च ।
दारकनष्टा वनिता जनयति दीर्घायुषं पुत्रम् ॥ १५२ ॥
क्षीरेण श्वेतबृहतीमूलं नासिकया पिबेत् ।
दक्षिणयात्मजार्थं वा कन्यार्थं वामया तथा ॥ १५३ ॥

पुष्योद्धृतं लक्ष्मणायाश्वक्राङ्गायास्तु कन्यया।
पिष्टं मूलं हविर्दुग्ध पीतमृतौ तु पुत्रदम्॥ १५४॥
न्यग्रोधशुङ्गासनकं प्रबालचूर्णञ्च सवर्णवत्सायाः।
गोक्षीरं परिपीतं पुत्रं प्रकरोति पुष्यर्क्षे॥ १५५॥
रोमराजिर्भवेद्यस्या वामपार्श्वेऽति मूर्च्छिता।
कन्यां तस्या विजानीयाद्दक्षिणे च तथा सुतम्॥ १५६॥

इति गर्भोत्पादनविधिः।

मुस्ता कुष्ठं हरिद्रे द्वे पिप्पली कटुरोहिणी।
काकोली क्षीरकाकोली विड़ङ्गं त्रिफला वचा॥ १५७॥
मेदा रास्नाश्वगन्धा च विशाला च प्रियङ्गुका।
द्वे शारिवे शताह्वा च दन्तीमधुकमुत्पलम्॥ १५८॥
अजमोदा महामेदा चन्दनं रक्तचन्दनम्।
जातीपुष्पं तुगाक्षीरी शर्करा हिङ्गु कट्फलम्॥ १५९॥
चतुर्गुणेन पयसा विपचेद् गोमयाग्निना।
नक्षत्रे पुष्यसम्पन्ने भाण्डे ताम्रमये दृढ़े॥ १६०॥
कलिशे वापि कल्याणे कृतकौतुकमङ्गलः।
सर्पिरेव नरः पीत्वा स्त्रीषु नित्यं वृषायते॥ १६१॥
एतद्रम्या पिबेन्नारी या च कन्याप्रजायिनी।
या चैवास्थिरगर्भा स्यात् या च सूता पुनः स्थिता॥१६२॥
अनायुषं वा जनयेत् या वा जनयते मृतम्।
सा नारी जनयेत्पुत्रं वेदवेदाङ्गपारगम्॥ १६३॥
रूपलावण्यसम्पन्न मजरञ्च शतायुषम्।
वृहत्कल्याणकं सर्पिर्भारद्वाजेन भाषितम्॥ १६४॥
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः॥

इति वृहत्कल्याणकघृतम्।

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला।

मेदा पयस्या काकोली मूलं चैवाश्वगन्धजम् ॥ १६५ ॥
अजमोदा हरिद्रे द्वे हिङ्गु कटुकरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥ १६६ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥ १६७ ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्रं जनयते नारी मेधाढ्यं प्रियदर्शनम् ॥ १६८ ॥
या चैवास्थिरगर्भा स्याद्या वा जनयते मृतम् ।
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ॥ १६९ ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥ १७० ॥
नाम्ना फलघृतञ्चैतदश्विभ्यां परिकीर्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सिकाः ॥ १७१ ॥

इति बृहत्फलघृतम् ।

शतावर्य्या विदार्य्याश्च तथा माषात्मगुप्तयोः ।
श्वदंष्ट्रायाश्च निःक्वाथेऽनुल्वणे च पृथक् पृथक् ॥ १७२ ॥
साधयित्वा घृतप्रस्थं पयश्चतुर्गुणे पचेत् ।
शर्करामधुसंयुक्तं मिलित्वा तत् प्रयोजयेत् ॥ १७३ ॥

इति शतावरीघृतम् ।

वृद्धदारुकमूलेन घृतं पक्वं पयोन्वितम् ।
एतद्वृष्यतमं सर्पिः पुत्रकामः पिबेन्नरः ॥ १७४ ॥

अथ संजातगर्भलक्षणमाह ।

छर्दिरम्ले रुचिर्नित्यं ष्ठीविका रोमराजिका ।
अरुचिस्तनयोः कार्ष्ण्यं ग्लानिराटोपवर्जितम् ॥
कुक्षेरक्ष्णोः पक्ष्मलत्वं गर्भिणी स्फुटलक्षणम् ॥ १७५ ॥
तस्याः कुक्षौ भवेद् ग्लानिः पुनराध्मानमेव च ।

गर्भिण्या दृश्यते नार्य्याः तस्याः नागोदरं विदुः॥ १७६॥
व्यवायखेदवर्जिन्या स्तस्या स्याद्दौहृदं हितम्॥ १७७॥

अथ गर्भस्रावपातयोरवधिपूर्वकलक्षणमाह।

भयाभिघातात्तीक्ष्णोष्ण पानाशननिषेवणात्।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत्॥ १७८॥
आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः॥ १७९॥

अथ स्रावपातयोः चिकित्सामाह।

सेकावगाहना लेपाः शस्यन्ते तत्र शीतलाः।
जीवनाद्यैः शृतक्षीरं पानञ्चैव सशर्करम्॥ १८०॥

अकालपाते निदानपूर्वकं मूढ़गर्भलक्षणमाह।

गर्भोऽभिघातविषमाशनपीड़नाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन॥ १८१॥

अथ उचितकाले मूढ़गर्भलक्षणमाह।

मूढ़ः करोति पवनः खलु मूढ़गर्भं
शूलञ्च योनिजठरादिषु मूत्रसङ्गम्।
भुग्नोऽनिलेन विगुणेन ततः स गर्भः
संख्यामतीत्य बहुधा समुपैति योनिम्॥ १८२॥
द्वारं निरुध्य शिरसा जठरेण कश्चित्
कश्चिच्छरीरपरिवर्त्तनकुब्जदेहः।
एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः॥ १८३॥
पार्श्वापवृत्तगतिरेति तथैव कश्चित्
इत्यष्टधा गतिरियं ह्यपरा चतुर्धा॥ १८४॥
सङ्कीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्द्ध्वबाहुचरणैः शिरसा च योनौ।

सङ्गी च यो भवति कीलकवत् स कीलो
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी ॥ १८५ ॥
गच्छेद्भुजद्वयशिराः स च बीजकाख्यो
योनौ स्थितः सपरिघः परिघेन तुल्यः ॥ १८६ ॥

अथ असाध्यमूढ़गर्भगर्भिण्योर्लक्षणमाह ।

अपविद्धशिरा या तु शीताङ्गी निरपत्रया ।
नीलोद्भूतशिरा हन्ति सा गर्भं च स तां तथा ॥ १८७ ॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।
भवेदुच्छ्वासपूतित्वं शूलतान्तर्मृते शिशौ ॥ १८८ ॥
मानसागन्तुभिर्मातु रुपतापैः प्रपीड़ितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च निपीड़ितः ॥ १८९ ॥
योनिसंवरणं सङ्गः कुक्षौ मारुत एव च ।
हन्युः स्त्रियं मूढ़गर्भा यथोक्ताश्चाप्युपद्रवाः ॥ १९० ॥

इति मूढ़गर्भनिदानमाह ।

गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः ।
तत्रानल्पमतिर्वैद्यो वर्त्तेत मतिपूर्वकम् ॥ १९१ ॥
मृतं गर्भं भिषक् प्राज्ञः छित्वा कर्षेत्प्रयत्नतः ।
धान्वन्तरिमतात्प्राज्ञः साध्यज्ञातश्च शल्यवित् ॥ १९२ ॥
अभिघातान्मृतायास्तु गर्भः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ १९३ ॥
गर्भाशयं परिहरन्नथ गर्भिणीञ्च
यत्नं करोति सहसा महदाशुकर्मा ।
वैद्यस्तु चेद्भवति शास्त्रगतिप्रवीणः
प्राप्नोति मित्रधनधान्ययशांसि लोके ॥ १९४ ॥
गर्भस्य सन्ति गतयोऽष्टविधाः पुरोक्ताः
भ्राम्यन्ति वैरतिषु वातगतिस्वभावात् ।

अंसे त्रिके शिरसि भूयसि तस्य शङ्का
उत्तानकाय विनिकुञ्चितसक्थिदेशे ॥ १९५ ॥
कस्यांसमुन्नमित वाससि सन्निषस-
स्फिग्देशसंस्थमथ पाणितले निजे च।
वृच्छाल्मलैर्घृतयुतैः परिमार्जयित्वा
गर्भं समानयति रक्षति योषिताञ्च ॥ १९६ ॥
सक्थ्या गतं सततमुन्नतमंसदेशं
स्निग्धे समागतकपूर्वनिपीड़ितेन।
सक्थि प्रसार्य्य परिधाय तथैव तिर्य्य-
गुत्क्षिप्य यत्पथगतं ननु योनिमार्गम् ॥ १९७ ॥
पार्श्वागतस्य परिवृत्य शिरो निपीड्य
पूर्वं समुन्नतिशिरोपरिणीय योन्याम्।
हस्तेन तं सपदि तं परिलभ्य शस्त्रैः
छित्वा हरेन्मृतकगर्भशरीरदेशान् ॥ १९८ ॥

यद्यदङ्गं हि गर्भस्य तत्तत्सज्जति सद्भिषक्।
सम्यग्विनिर्हरेच्छित्वा रक्षेन्नारीञ्च यत्नतः ॥ १९९ ॥
सचेतनं तु शस्त्रेण न कथञ्चन दारयेत्।
आत्मानं जननीञ्चैव हन्यादाशु ह्यचेतनः ॥ २०० ॥
नचोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः।
स ह्याशु जननीं हन्ति निरुच्छासं पशुं यथा ॥ २०१ ॥
मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता।
वृद्धिपत्रन्तु तीक्ष्णाग्रं न योनाववचारयेत् ॥ २०२ ॥

अथ प्रतिमासं सवेदनागर्भिणीचिकित्सामाह।

प्रथमाद्द्वादशं यावत् मासं गर्भच्युतौ रुजि।
जानीयात् क्रमसञ्जातयोगानेतान् भिषग्वरः ॥ २०३ ॥
मधुकं शाकबीजन्तु पयस्या सुरदारु च।

अश्मन्तकः कृष्णतिला स्ताम्रवल्ली शतावरी ॥ २०४ ॥
वृक्षादनी पयस्या च लता सोत्पलशारिवा ।
अनन्तशारिवा रास्ना पद्माऽथ मधुयष्टिका ॥
शृङ्गाटकं विसं द्राक्षा कशेरुमधुकं सिता ॥ २०५ ॥
सप्तैतान् पयसा योगानर्द्धश्लोकसमापनान् ।
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ॥ २०६ ॥
कपित्थविल्वबृहती पटोलेक्षुनिदग्धिका ।
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ॥ २०७ ॥
संप्राप्ते चाष्टमे मासि मैथुनं परिवर्जयेत् ।
यदि गच्छति दुर्मेधाः काममोहादचेतनात् ॥ २०८ ॥
विपद्यते तदा गर्भं पतते नात्र संशयः ।
अन्धमूकादिवधिरो जायते कुब्ज एव च ॥ २०९ ॥
नवमे मधुकानन्तापयस्याशारिवाः पिबेत् ।
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ॥ २१० ॥
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ॥ २११ ॥
क्षीरिकामुत्पलं दुग्धं समङ्गामूलकं शिवाम् ।
पिबेदेकादशे मासि गर्भिणीशूलशान्तये ॥ २१२ ॥
सिताविदारीकाकोली क्षीरे चैव मृणालिका ।
गर्भिणीद्वादशे मासि पिबेच्छूलघ्नमौषधम् ॥
एवमाप्यायते गर्भः स्त्रियोरुक् चोपशाम्यति ॥ २१३ ॥
कुशकाशोरुबूकानां मूलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ २१४ ॥
कशेरुशृङ्गाटकजीवनीयैः पद्मोत्पलैरण्डशतावरीभिः ।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम्२१५
कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गपर्णीमधुकं सशर्करम् ।
सशूलगर्भस्रुतिपीड़िताङ्गना पयोविमिश्रं पयसान्नभुक् पिबेत्२१६

व्यवस्थिते च गर्भे गव्येनोदुम्बरशलाटुसिद्धेन पयसा भोजयेद्गर्भे पतिते तीक्ष्णं मद्यं पेयं तस्योपद्रवशान्त्यै। त्यागोपवशाद्वा न पिबति मद्यं या तु सा च कोलसाधितां पेयामेवाश्नातु अतीते स्नेहलवणवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत्। यावन्तो मासा गर्भस्य तावन्त्यहानीति। इति गर्भशूलम्।

अथ गर्भिणीज्वरचिकित्सामाह।

मधूकचन्दनोशीरशारिवापद्मयष्टिकैः।
शर्करामधुसंयुक्तः कषायो गर्भिणीज्वरे॥ २१७॥
चन्दनं शर्करालोध्रं मृद्वीकाशर्करान्वितम्।
क्वाथं कृत्वा प्रदातव्यं गर्भिणीज्वरशान्तये॥ २१८॥
पिबेद्विश्वमजाक्षीरं नाशयेद्विषमज्वरम्॥ २१९॥
आम्रजम्बूत्वचं क्वाथ्य लेहयेल्लाजसक्तुभिः।
अनेन लीढ़मात्रेण गर्भिणीग्रहणीं जयेत्॥ २२०॥
ह्रीवेराऽरलुरक्तचन्दनबला धान्याकवत्सादनी
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गर्भिणी।
नानावर्णरुजातिसारकगदे रक्तस्रुती वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये सत्तमः॥२२१॥
गोधामांसं प्रयत्नेन गर्भिणीञ्च प्रदापयेत्।
वातपित्तकफोद्रिक्ता ग्रहोत्था येऽप्युपद्रवाः॥
गर्भिण्युपद्रवान् सर्वान् गोधामांसं विनाशयेत्॥ २२२॥
समधुक्छागदुग्धेन कुलालकरमृत्तिका।
अवश्यं स्थापयेद्गर्भं बलिनं पानयोगतः॥ २२३॥
पारावतशकृत्पीतं शालितण्डुलवारिणा।
गर्भपातान्तरोत्थे च गर्भस्रावनिवारणम्॥ २२४॥

अथ गर्भिणीप्रसवविलम्बे चिकित्सामाह।

जीवति गर्भे सूतिका गर्भनिर्हरणे प्रयतेत। निर्हर्त्तुमशक्ये।
च्यवनान्मन्त्रानुपशृणुयात्। तान्वक्ष्यामः॥ २२५॥
इहामृतञ्च सोमञ्च चित्रभानुश्च भामिनि!।
उच्चैः श्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥ २२६॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं विमुञ्चतुस्त्रि।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् २२७
मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्य्येण रश्मयः।
मुक्तः सर्व्वभयाद्गर्भः एह्येहि माचिरं स्वाहा॥ २२८॥
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम्।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम्॥ २२९॥

इति च्यवनमन्त्राः।

नाड़ी १६, ऋतु ६, वसुभिः ८, सहपक्ष २, दिग१०, ष्टादश१८, भिरेव च। अर्क १२, भुवन १४, वेद ४, सहितैरुभयत्रिंशकमाश्चर्य्यम्॥२३०

| १६ | २ | १२ |
|---|---|---|
| ६ | १० | १४ |
| ८ | १८ | ४ |

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः।
ते गर्भं पातु नैरुज्यं वै शल्यञ्च दधत्वपि॥ २३१॥
प्रसूयत्वमविक्लिष्टमविक्लिष्टे शुभानने!।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम्॥ २३२॥
प्रसवकाले गर्भिण्याः कर्णे एतत् सप्तवारान् जप्तव्यम्॥
परुषकशिफालेपः स्थिरामूलकृतोऽपि वा।
नाभिवस्तिभगे लेपः सुखं नारी प्रसूयते॥ २३३॥
तुषाम्बुपरिपुष्टेन कन्देन परिलेपयेत्।
लाङ्गल्याश्चरणौ सूते क्षिप्रमापन्नगर्भिणी॥ २३४॥
सितया चर्व्वणं कृत्वा कोकिलाक्षस्य मूलकम्।
तत्कर्णपूरणेनाशु सुखं नारी प्रसूयते॥ २३५॥

श्यामासन्दर्शनाभ्यान्तु लताभ्यां परिकल्पितम्।
क्षिपेत् कुड़वकं मूर्ध्नि यावत्पादतलं व्रजेत्॥
उद्धृत्य गात्रपीड़ायाः सुखप्रसवकारकम्॥ २३६॥
अपामार्गशिखां योनिमध्ये निःक्षिप्य धार्य्यते।
सुखं प्रसूयते नारी भेषजस्यास्य योगतः॥ २३७॥
पाठामूलन्तु तद्दद्यादाटरूषकमूलकम्।
लेपनाद्धारणाद्वापि सुखप्रसवकारकम्॥ २३८॥
मूलञ्च शालिपर्ण्यास्तु पिष्टं वा तण्डुलाम्बुना।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते॥ २३९॥
सितपिकलोचनवर्णं चर्वणपूर्वञ्च कर्णपूरतः।
अपि विषमगर्भपीड़ितवनिता सुखं सूतिमभितनुते॥२४०॥
पिष्ट्वा पाठापत्रं नारीक्षीरेण या पिबेदबला।
सा गर्भमूढ़जनितव्यथया प्रविमुच्यते झटिति॥ २४१॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्।
घृतेन सह पातव्यं सुखं नारी प्रसूयते॥ २४२॥
इक्षोरुत्तरदिङ्मूलं स्त्रीप्रमाणेन तन्तुना।
बद्ध्वा कट्याञ्च नियतं सुखं नारी प्रसूयते॥ २४३॥
तालस्य चोत्तरं मूलं स्त्रीप्रमाणेन तन्तुना।
बद्ध्वा कट्याञ्च नियतं सुखं नारी प्रसूयते॥ २४४॥
पञ्चाङ्गं हास्तिशौण्डं लोध्रपत्राभ्यां विमिश्रितं कृत्वा।
सर्पिषि विपाच्य पिष्टं भक्षितमात्रेण सूतिर्वनितायाः॥
गङ्गाप्रवाहतुल्यं रक्तं वै स्वास्थ्यमति कुरुते॥ २४५॥
वेगाघाताद्वायुर्योनिं सन्धार्य्य वेदनां कुरुते।
तत्र विधेयः कल्कः शतपुष्पायाः सलिलेन लेपेन॥ २४६॥
करङ्कीभूतगोमूर्द्ध सूतिकाभवनोपरि।
स्थापितस्तत् क्षणान्नार्य्याः सुखं प्रसवकारकः॥ २४७॥

गोशिर: करङ्कीभूत मस्थिमात्रमेव स्थितम्।

इति मूढगर्भम्।

कटुतुम्ब्यहिनिर्मोक कृतवेधन सर्षपै:।
कटुतैलान्वितैर्योनेर्धूम: पातयतेऽपराम्॥ २४८॥
भूर्जगुग्गुलुधूपेन श्रोण्याश्चास्या: प्रधूपनम्।
अपरा पातनं शस्तं सद्य: शूलनिवारणम्॥ २४९॥
कचवेष्टतयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यपरा।
मूलेन लाङ्गलक्या: संलिप्ते पाणिपादे वा॥ २५०॥
कुष्ठं सशालिमूलञ्च सगोमूत्रञ्च पाययेत्।
अपरा पतिता क्षिप्रं छिन्नं पत्त्रं वको यथा॥ २५१॥

इति अपरापातनविधि:।

हिङ्गुपिप्पलीपाटल्यौ भार्गी मेदा महौषधम्।
रास्नामतिविषाचव्य मेभिर्दोष: प्रशाम्यति।
योनिश्च शुद्धो भवति योनिशूलञ्च शाम्यति॥ २५२॥
विल्वमार्कवजं मूलं कल्कं मद्येन पाययेत्।
तेन योनिगतं शूलमाशु शाम्यति योषिताम्॥ २५३॥
शालिमूलाक्षमात्रन्तु मूत्रेणाम्लेन वा युतम्।
सोपकुञ्चिकां पिप्पलीं मदिरां लाभत: पिवेत्॥
सौवर्चलेन संयुक्तं योनिशूलनिवारणम्॥ २५४॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक्।
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा॥ २५५॥
धुनुयाद्वा मुहुर्नारीं पीड़येद्वा सपिण्डिकाम्।
तैलाक्तयोनेरेवं तां पातयेन्मतिमान् भिषक्॥ २५६॥
प्रसूतिकुशला योषिद्विधिमेनं करोति या।
एवं निर्हृतशल्यां तां सिञ्चेदुष्णेन वारिणा॥ २५७॥
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत्।

एवं मृद्वी भवेद्योनि स्तच्छूलं चोपशाम्यति ॥ २५८ ॥

अथ मक्कल्लशूलस्य लक्षणमाह।

वायुः प्रकुपितः कुर्य्यात् संरुध्य रुधिरं स्नुतम्।
सूताया हृच्छिरोवस्ति शूलमक्कल्लसंज्ञितम् ॥ २५९ ॥
पृथिव्यां पतिते गर्भे योनौ पीड़नमीष्यते।
अप्रवेशो यथा वायोस्तस्य संरक्षणक्रिया ॥
हृद्वस्तिशूलमाध्मानं प्रविष्टे तत्र जायते ॥ २६० ॥

अथ चिकित्सामाह।

सच्चूर्णितयवक्षारं पिबेत्कोष्णेन वारिणा।
सर्पिषा वा पिबेन्नारी मक्कल्लस्य निवृत्तये ॥ २६१ ॥
त्रिकटुचातुर्जातक कुस्तुम्बरीचूर्णसंयुक्तम्।
खादेद् गुड़ं पुराणं नित्यं नारी मक्कदलनाय ॥ २६२ ॥
मातुलुङ्गस्य मूलन्तु मल्लिकामूलमेव च।
विल्वमुस्तमिदं लेपात् शिरोरोगविनाशनम् ॥ २६३ ॥
व्यूषणं पिप्पलीमूलं दारुचव्यं सचित्रकम्।
रजन्यौ हपुषाजाजी सक्षारलवणत्रयम् ॥
कल्कमुष्णाम्बुना पीत्वा सुखेनाशु विरिच्यते ॥ २६४ ॥

इति मक्कल्लशूलम्।

अथ सूतिकारोगनिदानमाह।

प्रलापो वेपथुर्यस्याः सूतिका सा उदाहृता ॥ २६५ ॥
अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ २६६ ॥
मिथ्योपचारात्संक्लेशाद्विषमाजीर्णभोजनात्।
सूतिकायास्तु जायन्ते ये रोगास्ते सुदारुणाः ॥ २६७ ॥
ज्वरातिसारशोफाश्च शूलानाहबलक्षयाः।
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ २६८ ॥

कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः।
ते सर्वे सूतिका नाम्ना रोगास्ते चाप्युपद्रवाः॥ २६९॥

अथ चिकित्सामाह।

दशमूलकृतं तोयं कोष्णञ्च हविषान्वितम्।
पथ्याशिन्या द्रुतं नार्य्या पीतं सूतीरुजं जयेत्॥ २७०॥

कृत्वोपवासमबला सुतजन्मघस्रे
प्रातर्निपीय कृमिशत्रुभवं हि मूलम्।
वासाम्भसा किमथवा हविषापि पीत्वा
सूती जयेत् षड़िति रोगसमूहमुग्रम्॥ २७१॥

क्षुद्रैरण्डजटाशृङ्गी कणाशुण्ठी सुखस्पृशा।
सूतिका च प्रशान्त्यर्थं निःक्वाथ्य मधुना पिबेत्॥ २७२॥

निम्बवल्कलवल्कस्तु सर्पिषा काञ्जिकेन तु।
पीतः प्रशान्तयेन्नून मचिरात् सूतिकागदम्॥ २७३॥

पञ्चमूलकषायन्तु सूतिका लवणान्वितम्।
सुखोष्णं पाययेत् पूतं सूतिकारोगनाशनम्॥ २७४॥

सूतिकारोगशान्त्यर्थं कार्य्यैर्वातहरा क्रिया।
स्वेदोपनाहनाभ्यङ्गैः सावगाहैः प्रशस्यते॥ २७५॥

पञ्चमूलस्य वा क्वाथं तप्तलौहेन सङ्गतम्।
सूतिकारोगनाशाय पिबेद्वातहरां सुराम्॥ २७६॥

सुतप्तलौहमाकृष्य वारुण्यान्तु निधापयेत्।
सूतिकोपद्रवान् सर्वान् हन्ति पीत्वा न संशयः॥ २७७॥

वह्नौ तप्तेन लौहेन मुद्गयूषं सुवापितम्।
पीत्वैव सूतिकानारी सर्वव्याधीन् व्यपोहति॥ २७८॥

अमृतानागरसहचर भद्रोत्कटपञ्चमूलजलदजलम्।
शीतं पीतं मधुना सह शमयति सूतिकातङ्कम्॥२७९॥

सहचरकुलत्थपुष्कर वैकङ्कतदारुवेतसः क्वाथः।

पीतः सहिङ्गुलवणः शमयति शूलज्वरौ सूत्याः ॥ २८० ॥
सहचरमुस्तगुडूची भद्रोत्कटविश्वबालकैः क्वथितम्।
पेयमिदं मधुमिश्रं सद्योज्वरशूलनुत् सूत्याः ॥ २८१ ॥
देवदारुवचाकुष्ठं पिप्पलीविश्वभेषजम्।
कट्फलं मुस्तभूनिम्ब तिक्ताधान्यहरीतकी ॥ २८२ ॥
गजकृष्णा च दुस्पर्शा गोत्तुरं धन्वयासकम्।
बृहत्यतिविषाच्छिन्ना कर्कटं कृष्णजीरकम् ॥ २८३ ॥
समभागान्वितैरेतैः सिन्धुरामठसंयुतम्।
क्वाथमष्टावशेषन्तु प्रसूतां पाययेत् स्त्रियम् ॥ २८४ ॥
शूलकासज्वरश्वास मूर्च्छाकम्पशिरोऽर्त्तिनुत्।
युक्तं प्रलापतृड्दाह तन्द्रातीसारवान्तिभिः ॥
निहन्ति सूतिकारोगं वातपित्तकफोत्थितम् ॥ २८५ ॥
सिद्धं द्विपञ्चमूलाभ्यां पयः शर्करया युतम्।
सूतिकोपद्रवान् हन्ति पीतमात्रं न संशयः ॥ २८६ ॥
कृष्णातन्मूलशुण्ठ्येला हिङ्गुभार्गी सदीप्यकम्।
वचामतिविषां रास्नां चव्यं संचूर्ण्य पाययेत् ॥ २८७ ॥
स्नेहेन दोषशान्त्यर्थं वेदनोपशमाय च।
क्वाथश्चैषां तथा कल्कं चूर्णं वा स्नेहभर्जितम् ॥ २८८ ॥
शाकत्वग्घिङ्गुतिविषा पाठाकट्करोहिणी।
तथा तेजोवती चापि पाययेत् पूर्ववद्भिषक् ॥ २८९ ॥
दशाहं भोजने देयं चीरं वातहरैः शृतम्।
रसेनान्नं दशाहञ्च शिरीषो धावने हितः ॥ २९० ॥
प्राजापत्येन विधिना जातकर्मादि कारयेत्।
पञ्चमेऽह्नि तृतीये वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ २९१ ॥
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी।
अनन्तामिश्रिते मन्त्री पाययेत्प्रेरिते शिशुम् ॥ २९२ ॥

चत्वारः सागराः पुण्याः स्तनयोः क्षीरवाहिनः।
भवन्तु सुभगे! नित्यं बालस्यायुर्बलप्रदाः॥ २९३॥
पिवन्बालोऽमृतसमं पयस्तव शुभानने!।
दीर्घमायुरवाप्नोति देवाः प्राश्यामृतं यथा॥ २९४॥

इति स्तनाभिमन्त्रणम्।

षष्ठीनिशाविशेषेण कृतरक्षोवलिक्रियाः।
जगर्जुर्बान्धवास्तस्य दधन्तः परमां मुदम्॥ २९५॥
दशमे दिवसे पूर्णे विधिभिः कुशलोचितैः।
कारयेत् सूतिकोत्थानं नाम बालस्य चार्चितम्॥ २९६॥
तुम्बीपत्रं तथा लोध्रं समभागानि कारयेत्।
दद्याल्लेपं भगस्येदं प्रसूताप्यक्षता भवेत्॥ २९७॥
वेतसस्य तु मूलानि क्वाथयेत् मृदुवह्निना।
भगः प्रक्षालितस्तेन गाढत्वमुपगच्छति॥ २९८॥
मूषिकाणां वसायाश्च वल्गुलीनां तथैव च।
योनिषु म्रक्षणं श्रेष्ठं कल्याणकरमुत्तमम्॥ २९९॥
पलाशोदुम्बरफलं तिलतैलसमन्वितम्।
मधुना योनिमालिप्य गाढीकरणमुत्तमम्॥ ३००॥

इति योनिगाढीकरणम्।

प्रसूतवनिता वृद्धिकुक्षिक्षामाय सम्पिबेत्।
प्रातर्मथितसम्मिश्रं त्रिसप्ताहं कणायुगम्॥ ३०१॥
सूतायाः कुम्भमुदरं पीतं तक्रेण मालतीमूलम्।
घृतमधुलीढा सहसा करोति धात्रीसमं निशा च॥ ३०२॥
एकेन्दुचन्द्रानलवाणकुम्भी कलैकभागं क्रमशो विमिश्रम्।
सूताभ्रगन्धोषणलोहशङ्खवनोत्पलाभस्म विषं सुपिष्टम्॥ ३०३॥
प्रसूतचापानलदन्तबन्धान् पुरामृताब्दत्रिफलायुतोऽयम्।
आर्द्राम्बुना वा किल सन्निपातान् गुदाङ्कुरान् वल्लमितो निहन्ति ३०४

निजानुपानैर्निजपथ्यभुक्तान् सर्वातिसारग्रहणी गदांश्च।
प्रतापलङ्केश्वरनामधेयोरसश्च प्रोक्तो गिरिराजपुत्रया ॥३०५॥

इति प्रतापलङ्केश्वरी रसः।

शुण्ठ्यग्निमूलं निर्गुण्डीमेषशृङ्गीप्रसारिणी।
स्वरसः परिभृष्टः स्या द्धिङ्गुजीरकसंस्कृतः ॥ ३०६ ॥
कटुतैलेन या नारी नक्तं भुञ्जीत वा पिबेत्।
निहन्ति सूतिकारोगान् वलमग्नेर्लभेत सा ॥ ३०७ ॥
यवकोलकुलत्थांश्च मुद्गमाषसमन्वितान्।
द्विपञ्चमूलसहितान् क्वाथयेत्सलिलाढ़के ॥ ३०८ ॥
तत्क्वाथे तक्रसंयुक्ते यूषं कृत्वा सजीरकम्।
घृतं घृताक्षमात्रेण सैन्धवेन च योजितम् ॥ ३०९ ॥
एष यूषः प्रदातव्य श्चतुर्भागावशेषितः
एतेनैव समश्नीयात् पुराणाञ्छालिषष्टिकान् ॥ ३१० ॥
वातशूलं सविष्टम्भं हन्ति मक्कल्लसंज्ञितम्।
सूतिकारोगशमनो यूषोऽयं परिकीर्त्तितः ॥ ३११ ॥

इति यवादियूषः।

यवकोलकुलत्थानां शालिमूलं तथैव च।
शस्तोऽयं सूतिकातङ्के यूषः सर्वज्वरापहः ॥ ३१२ ॥

इति यवादिर्द्वितीयोयूषः।

पिप्पलीदेवकाष्ठञ्च भद्रमुस्तकमेव च।
अगुरुपिप्पलीमूलं श्लक्ष्णपिष्टञ्च कारयेत् ॥ ३१३ ॥
तक्रेण सह संयुक्तं पचेद्यूषं विचक्षणः।
अयन्तु घृतसंयुक्तः पीतमात्रो न संशयः ॥ ३१४ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
सूतिकोपद्रवं हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ३१५ ॥

इति पिप्पल्यादियूषः।

यवकोलकुलत्थानां शालिमूलं तथैव च।
क्वाथयेदप्रमत्तस्तु सुपूते सलिलाढ़के ॥ ३१६ ॥
तत्पादावस्थितं क्वाथं सर्पिर्युक्तं सजीरकम्।
पक्वं घृताच्चमात्रेण सैन्धवेन समायुतम् ॥ ३१७ ॥
एतेनैव च यूषेण चाश्नीयाच्छालिषष्टिकम्।
सूतिकोपद्रवं हन्ति भुक्तमात्रन्न संशयः ॥ ३१८ ॥

इति यवाद्यं घृतम्।

पिप्पलीदेवकाष्ठञ्च आर्द्रकं गजपिप्पली।
चित्रकं सैन्धवञ्चैव पिप्पलीमूलमेव च ॥ ३१९ ॥
सुखोष्णं योजयेदेतत् सूतिकारोगशान्तये।
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान् ॥
सूतिकोपद्रवान् हन्ति पीतं ह्येतन्न संशयः ॥ ३२० ॥

इति पिप्पल्यादिक्वाथः।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
चव्यञ्च रजनी देया भद्रमुस्तवचाभयाः ॥ ३२१ ॥
धान्याकमजमोदा च सपञ्चलवणानि च।
भद्रदारुयवानी च भार्गीकुटजतण्डुलाः ॥ ३२२ ॥
कण्टकार्य्याश्च मूलं वै वृहतीविल्वपेशिका।
मरिचानि विड़ङ्गानि कल्कैरेतैश्च पादिकैः ॥ ३२३ ॥
यवकोलकुलत्थानां निर्यूहे च चतुर्गुणे।
दधिप्रस्थं पयःप्रस्थं दत्त्वा प्रस्थं घृतं पचेत् ॥ ३२४ ॥
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्।
सूतिकोपद्रवान् सर्वानभ्यङ्गादेव नाशयेत् ॥ ३२५ ॥

इति पिप्पल्याद्यं घृतम्।

समूलपत्रशाखन्तु शतं भद्रोत्कटस्य च।
वारिद्रोणेन साध्यं स्यात् स्थाप्यं पादावशेषितम् ॥ ३२६ ॥

घृतप्रस्थं विपक्तव्यं गर्भं दत्त्वा च कार्षिकम्।
सव्योषं पिप्पलीमूलं चित्रको जीरकं तथा ॥ ३२७ ॥
पञ्चमूलं कनिष्ठन्तु रास्नैरण्डसमायुतम्।
बलासिन्धुयवक्षारं स्वर्जिकाकृष्णजीरकम् ॥ ३२८ ॥
सिद्धमेतद् घृतं सद्यो निहन्यात् सूतिकागदान्।
ग्रहणीं पाण्डुरोगञ्च अर्शांसि जठरं तथा ॥
अग्निञ्च कुरुते दीप्तं स्त्रीणां स्तन्यस्य शोधनम् ॥ ३२९ ॥

इति भद्रोत्कटाद्यं घृतम्।

जीरकं हपुषा धान्यं शताह्वा वदराणि च।
यवानीमेथिकाहिङ्गु पत्रिकाकासमर्दकम् ॥ ३३० ॥
पिप्पली पिप्पलीमूल मजमोदाथ वाष्पिका।
चित्रकञ्च पलांशानि तथा धान्यञ्चतुष्पलम् ॥ ३३१ ॥
कसेरुकं नागरञ्च यष्टीदीप्यकमेव च।
गुड़स्य च शतं दद्याद् घृतप्रस्थं तथैव च ॥ ३३२ ॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरकमित्येतत् सूतिकानां प्रशस्यते ॥ ३३३ ॥
गर्भार्थिनीनां नारीणां बृंहणीये समारुते।
विंशतिं व्यापदो योनेः श्वासं कासं स्वरक्षयम् ॥ ३३४ ॥
हलीमकं पाण्डुरोगं दौर्बल्यं मूत्रकृच्छ्रताम्।
हन्ति पीतोन्नतकुचाः पद्मपत्रायतेक्षणाः ॥
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः ॥ ३३५ ॥

इति पञ्चजीरकगुड़ः। इति सूतिकारोगाः।

अथ स्तनरोगनिदानमाह।

सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः।
प्रदूष्य मांसं रुधिरं स्तनरोगाय कल्पते ॥ ३३६ ॥
पक्वरक्तं तनुस्रावं रुधिरामिषगन्धकम्।

शोथवृद्धिसमायुक्तं सरुजञ्च पयोधरम् ॥ २३७ ॥
पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना ।
लक्षणानि समानानि वाह्यविद्रधिलक्षणैः ॥ २३८ ॥

अथ स्तनरोगचिकित्सामाह ।

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितं बहुधा विधानम् ।
आमे विदाहिनि तथैव गते च पाकं
तस्याः स्तनौ सततमेव विनिर्दुहीत ॥ २३९ ॥

जलौकोभिर्हरेद्रक्तं न स्तनावुपनायेत् ।
दुःखस्तना तु या नारी सा शीघ्रं सुस्तनी भवेत् ॥ २४० ॥
लेपो विशालमूलेन हन्ति पीड़ां स्तनोत्थिताम् ।
निशाकनककल्काभ्यां लेपश्चापि स्तनार्त्तिहा ॥ २४१ ॥
लेपो निहन्ति मूलं बन्ध्याकर्कोटीभवं शीघ्रम् ।
निर्वाप्य तप्तलोहं सलिले तद्वा पिवेत्तत्र ॥ २४२ ॥
यष्टिनिम्बं हरिद्रा च निर्गुण्डीधातकीसमम् ।
चूर्णं स्तनव्रणे देयं रोपणं कुरुते भृशम् ॥ २४३ ॥

इति स्तनरोगचिकित्सा ।

अथ स्तन्यरोगनिदानमाह ।

गुरुविदग्धाहारैस्तु दुष्टैर्दोषैः प्रदूषितम् ।
क्षीरं धात्र्याः कुमारस्य नानारोगाय कल्पते ॥ २४४ ॥
लवणं तनु चाम्लञ्च कटुकं फेनिलं तथा ।
मांसधावनसङ्काशं पीतकञ्च तथैव वा ॥ २४५ ॥
एतत्सप्तविधं क्षीरमशुद्धं जीवकोऽब्रवीत् ।
करोति लवणं क्षीरं बालस्य मलनिर्गमम् ।
तनु क्षीरं कफं कुर्य्यादम्लञ्च मुखपाकताम् ॥ २४६ ॥
मांसधावनसङ्काशं छर्दिञ्च कुरुते शिशोः ।

फेनिलं श्वासकासन्तु मूत्रलं कटुपीतकम् ॥ ३४७ ॥
कषायं सलिलप्लावि स्तन्यं मारुतदूषितम्।
कट्वम्ललवणं पीतराजिमत् पित्तसंयुतम् ॥ ३४८ ॥
कफदुष्टं घनं तोये निमज्जति सपिच्छिलम्।
द्विलिङ्गं द्वन्दजं विद्यात् सर्वलिङ्गं त्रिदोषजम् ॥ ३४९ ॥
अदुष्टं चाम्बुनि क्षिप्तमेकीभवन्ति पाण्डुरम्।
मधुरञ्च विवर्णञ्च प्रसन्नं तत्प्रशस्यते ॥ ३५० ॥

अथ स्तन्यरोगचिकित्सामाह।

तत्र वातात्मके स्तन्ये दशमूलत्र्यहं पिबेत्।
वातव्याधिहरं सर्पिः पीत्वा मृदु विरेचयेत् ॥ ३५१ ॥
वस्तिकर्म ततः कुर्य्यात् स्नेहादींश्चानिलापहान् ॥ ३५२ ॥
पित्तदुष्टेऽमृताभीरु पटोलं निम्बचन्दनम्।
धात्री कुमारश्च पिबेत् क्राथयित्वा सशर्करम् ॥ ३५३ ॥
अथवा त्रिफलोशीर निम्बं कटुकरोहिणी।
शारिवादिगणैः सिद्धं घृतं पीत्वा ततोऽनु च ॥
पित्तघ्नं रेचनं कुर्य्याच्छीतं चाभ्यङ्गलेपनम् ॥ ३५४ ॥
कफदुष्टे घृतं पीत्वा यष्टीसैन्धवसंयुतम्।
रामपुष्पैः स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ ॥
सुखमेवं वमेद्बाल स्त्रीच्चैर्धात्रीञ्च वामयेत् ॥ ३५५ ॥

अथ अन्यदपिलक्षणमाह।

स्तन्ये त्रिदोषसंदुष्टे शकृदामं जलोपमम्।
नानावर्णरुजं चार्द्धं विबद्धमुपवेक्ष्यते ॥ ३५६ ॥
भ्रमारोचकवम्यास्यपाकस्तृष्णाज्वरादयः।
स्युर्यत्र तं विजानीयात् क्षीरालसकसंज्ञितम् ॥ ३५७ ॥
बालं तत्र च धात्रीञ्च मृदुरेकैर्विरेचयेत् ॥ ३५८ ॥
क्रमं पेयादिकञ्चैव मुस्तादि सम्प्रयोजयेत्।

पेयादिकं क्रमं कृत्वा मुस्तादि पाययेद् घृतम् ॥ ३५९ ॥
धात्रीक्षीरविशुद्ध्यर्थं मुद्गयूषरसाशिनी ।
भार्गीदारुवचापाठाः पिबेत्सातिविषाः शृताः ॥ ३६० ॥
पाठामूर्वा च भूनिम्बदारुशुण्ठी कलिङ्गकाः ।
शारिवामृततिक्ताख्याः क्वाथः स्तन्यविशोधनः ॥ ३६१ ॥
हरिद्राद्यं वचाद्यं वा पिबेत् स्तन्यविशुद्धये ॥ ३६२ ॥
पटोलनिम्बासनदारुपाठाः मूर्वां गुडूचीं कटुरोहिणीञ्च ।
सनागरं वा क्वथितञ्च तोये धात्री पिबेत् स्तन्यविशुद्धिहेतोः ३६३

इति स्तन्यविशुद्धिः ।

भूमिकूष्माण्डमूलं पिबति क्षीरेण या नारी ।
सशर्करेणैव पुष्टा ह्यतिशयदुग्धवती सा भवति ॥ ३६४ ॥
कमलस्य तण्डुलानां कल्कं क्षीरेण दधि पिबेदबला ।
सा भवति प्रचुरक्षीरा घनकुचयुगलापि वार्द्धक्ये ॥ ३६५ ॥
वनकर्पासिकेक्षूणां मूलं सौवीरकेण च ।
विदारीकन्दस्वरसं पिबेद्वा स्तन्यवर्द्धनम् ॥ ३६६ ॥
पिप्पली पिप्पलीमूलं चव्यशुण्ठियवानिका ।
क्षीरके द्वे हरिद्रे च विड़ं सौवर्चलं तथा ॥ ३६७ ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥ ३६८ ॥
वज्रकं काञ्जिकं नाम स्त्रीणामग्निप्रवर्द्धनम् ।

इति वज्रकाञ्जिकम् ।

स्वर्णशेफालिकापत्रं स्नुहीपत्रं तथैव च ।
चित्रकस्य च पत्राणि पत्रं शाखोटकस्य च ॥ ३६९ ॥
वासितं काञ्जिकाम्लेन वातश्लेष्मगदापहम् ।
पत्रकाञ्जिकमाख्यातं स्त्रीणां क्षीरविवर्द्धनम् ॥ ३७० ॥

इति पत्रकाञ्जिकम् । इति क्षीरवर्द्धनविधिः ।

अलम्बुषाकणाकल्कैः सिद्धं तैलं करोति वनितायाः।
पिचुधारणनस्यदानात् कुचद्वयं श्रीफलाकारम्॥ ३७१॥

इति अलम्बुषाद्यं तैलम्।

श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम्।
तत्तैलं तूलके न्यस्य स्तनयोः परिधारयेत्॥ ३७२॥
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ।
गजकुम्भसमाकारौ उत्पन्नौ परिमण्डलौ॥ ३७३॥

इति श्रीपर्णीतैलम्।

शङ्खचूर्णस्य भागौ द्वौ हरितालस्य भागिकम्।
शुक्तेन सह संयुक्तं लोमशातनमुत्तमम्॥ ३७४॥
तैलं कुसुम्भकस्याथ स्नुहीक्षीरं तथैव च।
प्रशस्तैकत्र मतिमांल्लोमशातनमुत्तमम्॥ ३७५॥
कदलीदीर्घवृन्तानां भस्मालं लवणं शमी।
वीजं शीताम्भसा पिष्टं लोमशातनमुत्तमम्॥ ३७६॥
कासीसतुरगगन्धा सावरगजपिप्पली विपक्केन।
तैलेन यान्ति वृद्धिं स्तनकर्णपालिलिङ्गानि॥ ३७७॥

इति कासीसाद्यं तैलम्।

हरितालभाग एको भागाः पञ्चैव शङ्खचूर्णस्य।
भागः पलाशभस्मत एतल्लेपात् कचा न स्युः॥ ३७८॥
करवीरशिखादन्ती त्रीणि कोशातकानि च।
रम्भाक्षारोदके तैलं प्रशस्तं लोमशातनम्॥ ३७९॥

इति करवीराद्यं तैलम्।

कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानां सुमनःशिला च।
तैलं विपक्कं हरितालमिश्रं लोमानि निर्मूलयति क्षणेन॥३८०॥

इति कर्पूराद्यं तैलम्। इति लोमशातनप्रकारः।

अथ योनिकन्दनिदानमाह ।

दिवास्वप्नादतिक्रोधा द्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ॥ ३८१ ॥
पूयशोणितसङ्काशो लकुचाकृतिसन्निभः ।
उत्पद्यते तदा योनौ नाम्ना कन्दस्तु योनिजः ॥ ३८२ ॥
रूक्षं विवर्णं स्फुटितं वातिकन्तु विनिर्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तत् ॥ ३८३ ॥
नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् ॥ ३८४ ॥

अथ योनिकन्दचिकित्सामाह ।

स्वेदयेद्वातिकं कन्दं पैत्तिकन्तु विरेचयेत् ।
कफजे वमनं भूयः सर्वजे सर्वमर्हति ॥ ३८५ ॥
त्रिफलायाः कषायेण मधुयुक्तेन सेचयेत् ।
प्रमदा योनिकन्देन व्याधिना परिमुच्यते ॥ ३८६ ॥
गैरिकाञ्जनजन्तुघ्न कट्फलाम्राखिचूर्णितैः ।
पूरयेत् सततं योनिं निशाक्षौद्रसमायुतैः ॥ ३८७ ॥
पूरयेच्चाभयारिष्टं सध्वारिष्टमथापि वा ।
महामायूरमथवा वस्तौ पाने प्रयोजयेत् ॥ ३८८ ॥
कोलभिकस्य मांसेन कन्दः शाम्यति योषिताम् ।
मूषिकामांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गाद्धन्ति कन्दं वा स्वेदं तन्मांससैन्धवैः ॥ ३८९ ॥
आखोर्मांसं सपदि बहुधा सूक्ष्मखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतेन सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीड़ाकरभगफलं नात्र सन्देहबुद्धिः ॥ ३९० ॥
पिष्टं शम्बूकमांसञ्च पक्वं तिन्तिड़िसंयुतम् ।

लेपमात्रेण नारीणां योनिकन्दहरं परम् ॥ ३८१ ॥
घोषकस्वरसः पीतो मस्तुना च समन्वितः ।
योनिकन्दं निहन्त्याशु तन्नाड़ी चैव धूपतः ॥ ३८२ ॥
सद्यो व्रीड़ाकरं कन्दं योनेर्बहुविकारजम् ।
शलाकया तप्तया वा दहते कुशलो भिषक् ॥ ३८३ ॥
एतत्कन्दस्य निर्दिष्टं समासेन चिकित्सितम् ॥

इति वङ्गसेनसङ्कलितः स्त्रीरोगनिदानचिकित्साधिकारः समाप्तः ।

---

## अथ बालरोगनिदानमाह ।

त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तकः ।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः ॥ १ ॥
दन्तोद्भेदस्तु सर्वेषां रोगाणामपि कारणम् ।
विशेषाज्ज्वरविड्भेद कासच्छर्दिशिरोरुजः ।
अभिष्यन्दश्च शोथश्च विसर्पश्चापि जायते ॥ २ ॥
पृष्ठभङ्गे विड़ालानां बर्हिणाञ्च शिखोद्गमे ।
दन्तोद्भेदे च बालानां न ते किञ्चिन्न दूयते ॥ ३ ॥
वातदुष्टं शिशुः स्तन्यं पिबन्वातगुदातुरः ।
क्षामस्वरः कृशाङ्गः स्यात् बद्धविण्मूत्रमारुतः ॥ ४ ॥
स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् ।
तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ ५ ॥
कफदुष्टं पिबेत् क्षीरं लालालुः श्लेष्मरोगवान् ।
निद्रार्दितो जड़ः शूनः शुक्लाक्ष्यः छर्दनः शिशुः ॥ ६ ॥
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ।
शिशोस्तीव्रामतीव्राञ्च रोदनाल्लक्षयेद्रुजम् ॥ ७ ॥
क्षुद्ररोगे च कथिते ह्यजगल्लग्रहिपूतने ।

ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः ॥ ८ ॥
बालदेहेऽपि ते तद्वद्विज्ञेयाः कुशलैः सदा ।
अनुबन्धे यथा व्याधिं प्रतिकुर्वीत कालवित् ॥ ९ ॥
यथा दोषं यथा रोगं यथोद्रेकं यथा बलम् ।
विभज्य देशकालादीं स्तत्र युञ्ज्याद् भिषग् हितम् ॥ १० ॥
भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु ।
कार्य्यं तदेव भैषज्यं तेषु दाहादिकं विना ॥ ११ ॥
त एव दुष्या दोषाश्च ज्वराद्या व्याधयश्च ये ।
अतस्तदेव भैषज्यं मात्रास्तस्य कनीयसी ॥ १२ ॥
एकोऽधिकश्चर्मगतो विकारः कुकूणको नाम शिशोः प्रदिष्टः ।
नन्दिग्रहो नाम महानिहास्ति विज्ञाय तं वै शमयेद्यथावत्॥१३

अथ बालरोगचिकित्सामाह ।

विड़ङ्गफलमात्रन्तु जातमात्रस्य भेषजम् ।
मासि मासि प्रयोक्तव्यं विड़ङ्गानां प्रवर्द्धनम् ॥ १४ ॥
अब्दादूर्ध्वं कुमारस्य दद्यात् कोलास्थिमात्रकम् ।
क्षीरान्नादः शिशोः कोलमन्नादो बदरोपमम् ॥ १५ ॥
क्षीरपस्यौषधं धात्र्याः क्षीरान्नादस्य चोभयोः ।
आत्मन्यन्नाशनैर्देय मौषधं भेषजं सदा ॥ १६ ॥
यथारोगं स्तनौ लिम्पेत्तैषधैः पाययेच्छिशुम् ।
मात्रया लङ्घयेद्धात्रीं शिशोर्नोक्तं विलङ्घनम् ॥ १७ ॥
सर्वं निवार्य्यते बाले स्तन्यं न प्रतिवार्य्यते ।
स्तन्याभावे पयः छागं गव्यं वा तद्गुणं पिबेत् ॥ १८ ॥
मृत्पिण्डेनाग्निवर्णेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥ १९ ॥
दग्धेन छागशकृता नाभिपाकेऽवचूर्णनम् ।
त्वक्चूर्णैः क्षीरिणां वापि कुर्य्याच्चन्दनरेणुना ॥ २० ॥

नाभिपाके निशालोध्र प्रियङ्गु मधुकैः शृतम्।
तैलमभ्यञ्जने शस्तमेभिर्वा ह्यवचूर्णनम्॥ २१॥

बालो यः चिराज्जातः स्तन्यं न गृह्णाति तस्य सैन्धवधात्री-मधुघृतपथ्या कल्केनोद्वर्षयेज्जिह्वाम्।

कुष्ठाभया वचा ब्राह्मी कनकं चौद्रसर्पिषा।
सपाठा मधुना लीढ़ा स्तन्यदोष निवर्हणा॥ २२॥
प्रियङ्गु खर्जिका सिन्धु मधुना लेहयेच्छिशुम्।
चीरामयं निहन्त्याशु विड़ङ्गेन युतं क्रमीन्॥ २३॥
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत्॥ २४॥
शर्करा चौद्रसंयुक्ता तिक्ता लीढ़ा ज्वरं जयेत्।
लिम्पेन्मुहुर्मुहुर्बालं तत्कल्केन च बुद्धिमान्॥ २५॥
भद्रमुस्ताभया निम्ब पटोला मधुकैः क्रतः।
क्वाथः सोष्णस्तु बालानामशेषज्वरनाशनः॥ २६॥
पलङ्कषा वचा कुष्ठं गजचर्म विचर्म च।
निम्बस्य पत्रं माच्चीकं सर्पिर्युक्तन्तु धूपनम्॥
ज्वरवेगं निहन्त्याशु बालानान्तु विशेषतः॥ २७॥

इति पलङ्कषादिधूपः।

सर्पत्वक् सर्षपारिष्टपल्लवं तेजनी वचा।
रसो न हिङ्गुजा लोम शृङ्गी मरिचमाच्चिकैः॥
धूपः सर्वग्रहघ्नोऽयं कुमाराणां ज्वरापहः॥ २८॥

इति सर्पत्वगादिधूपः।

मध्वरिष्टदलश्वेतसर्षपैर्योजितो ज्वरम्।
बालानां शमयेद्धूपो मृतगोक्षुच्चिरोमजः॥ २९॥
आम्रत्वक् काञ्चजम्बूत्थकषाये पादशेषिते।
शालिसिद्धां यवागूञ्च भुक्ता कुच्यामयं जयेत्॥ ३०॥

समङ्गा शाल्मलीवेष्टं धातकी पद्मकेसरैः।
पिष्टैरेतैर्यवागूः स्यादतीसारविनाशिनी ॥ ३१ ॥
विल्वञ्च पुष्पाणि च धातकीनां गजं सलोध्रं गजपिप्पली च।
क्वाथावलेहौ मधुना विमिश्रौ बाल्येषु योज्यावतिसारितेषु॥३२॥

इति बालविल्वादि क्वाथोऽवलेहश्च ।

नागरातिविषा मुस्ता बालकेन्द्रयवैः शृतम्।
जलं हन्ति कुमाराणां कुक्षिरोगमसंशयम् ॥ ३३ ॥
अङ्कोटमूलधातक्यौ विल्वपेशी महौषधम्।
क्वथितं शीतलं पेयं कुक्षिरोगविनाशनम् ॥ ३४ ॥
समङ्गा धातकी लोध्रं शारिवाभिः शृतं जलम्।
विवृद्धेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥ ३५ ॥
पिष्ट्वा पटोलमूलञ्च शृङ्गवेरं वचामपि।
विड़ङ्गान्यजमोदाश्च पिप्पली तण्डुलानि च ॥ ३६ ॥
एतान्यालोड्य सर्वाणि सुखतप्तेन वारिणा।
आमप्रवृत्तेऽतीसारे कुमारं योजयेद्भिषक् ॥ ३७ ॥
पीड़िताम्रास्थिकल्कोत्थ स्वरसं मधुना सह।
कोष्ठभेदी शिशुः शीर्णो न चिरात् स्वस्थतां व्रजेत् ॥३८॥
शालिपर्णी पृश्निपर्णी घोषात्वक् क्वथितं जलम्।
क्षौद्रयुक्तं त्रिदोषघ्नं सर्वातिसारनाशनम् ॥ ३९ ॥
हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः शृतम्।
शिशोर्ज्वरातिसारघ्नं श्वासकासवमीहरम् ॥ ४० ॥
धातकीविल्वधान्याक लोध्रेन्द्रयवबालकैः।
लेहः क्षौद्रेण बालानां ज्वरातीसारवातनुत् ॥ ४१ ॥
लोध्रेन्द्रयवधान्याक धात्रीह्रीवेरमुस्तकम्।
मधुना लेहयेद्बालं ज्वरातिसारनाशनम् ॥ ४२ ॥
मधुसर्पिर्विड़ङ्गानि सरलं देवदारु च।

पटोलकुटजारिष्ट सप्तपर्णयवानिका ॥
ज्वरं छर्दिमतिसारं शमयेच्चूर्णकं त्विदम् ॥ ४३ ॥
कल्कः प्रियङ्गुकोलास्थि मधुमुस्ताञ्जनैः कृतः।
चौद्रलीढ़ः कुमारस्य छर्दितृष्णातिसारनुत् ॥ ४४ ॥
बृहतीफलमूलत्वक् कृष्णाग्रन्थिकसम्भवः।
तुगाक्षीरीयुतः क्वाथः पीतो हन्ति शिशोर्वमिम्।
मूर्च्छां श्वासं ज्वरं कासमतिसारञ्च पीनसम् ॥ ४५ ॥
धान्यमतिविषाशृङ्गी गजाह्वाश्लक्ष्णचूर्णितम्।
बालानां छर्द्यतीसारं मधुना हन्ति लेहनात् ॥ ४६ ॥
ह्रीवेरशर्कराक्षौद्रं पीतं तण्डुलवारिणा।
शिशोः सर्वातिसारघ्नं तृट्छर्दिज्वरनाशनम् ॥ ४७ ॥
श्वेतकमलकिञ्जल्कं सम्पिष्टं तण्डुलाम्बुना।
मत्स्यण्डिमधुसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥ ४८ ॥
विल्वमूलकषायेण लाजाश्चैव सशर्कराः।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशनम् ॥ ४९ ॥
फलिन्यञ्जनमुस्तानां चूर्णं पीतं समाक्षिकम्।
तृष्णां छर्दिमतीसारं शिशूनामुद्धतं हरेत् ॥ ५० ॥
आम्रजम्बूप्रबालानि शालूकातिविषाणि च।
क्षीरिणाञ्च प्रबालानि यष्टीमधुकमेव च ॥ ५१ ॥
दर्भमूलीगिरिक्षुक्र क्वथितानि जलेन तु।
शर्करामधुसंयुक्तं तृष्णाछेदनमुत्तमम् ॥ ५२ ॥
दाड़िमस्य तु वीजानि जीरकं नागकेशरम्।
चूर्णः सशर्कराक्षौद्रो लेहस्तृष्णाविनाशनः ॥ ५३ ॥
हिङ्गुसैन्धवपालाश चूर्णं माक्षिकसंयुतम्।
लीढ़ं निवारयत्याशु शिशूनामुद्धतां तृषाम् ॥ ५४ ॥
शृङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम्।

कासज्वरच्छर्दिभिरर्दितानां समाक्षिकां चातिविषां तथैकाम्॥५५॥

मुस्तकातिविषावासकणाशृङ्गीरजो लिहन्।
मुच्यते मधुना बालः कासैः पञ्चभिरुत्थितैः ॥ ५६ ॥

चीरादस्य शिशोः कासं शुष्कं दृष्ट्वा सुदारुणम्।
माषयूषं पिबेद्धात्री पिप्पलीघृतभर्जितम् ॥ ५७ ॥

द्राक्षां पिप्पलीशुण्ठीनां चूर्णं माक्षिकसर्पिषा।
लीढं निवारयेच्छीघ्रं कासं पञ्चविधं शिशोः ॥ ५८ ॥

व्याघ्रीकुसुमसञ्जात केशरैरवलेहिका।
जग्ध्वापि चिरजं जातं शिशोः कासं व्यपोहति ॥ ५९ ॥

धान्यं शर्करया युक्तं तण्डुलोदकसंयुतम्।
पानमेतत्प्रदातव्यं कासश्वासापहं शिशोः ॥ ६० ॥

गुड़ोदकञ्च क्वथितं व्योषसैन्धवसंयुतम्।
सुखोष्णं पाययेद्बालं कासरोगप्रशान्तये ॥ ६१ ॥

कुलीरशृङ्गीचूर्णञ्च मूलकस्य फलं तथा।
युक्तोयं मधुसर्पिभ्यां लेहः श्वासापहः शिशोः ॥ ६२ ॥

कृष्णादुरालभाद्राक्षा कर्कटाख्या तुगाह्वया।
चूर्णिता मधुसर्पिभ्यां लीढ़ा हन्ति शिशोर्गदान् ॥
श्वासं कासं सतमकं ज्वरं वापि नियच्छति ॥ ६३ ॥

द्राक्षादुरालभा चैव पिप्पल्योऽथ हरीतकी।
एतानि कृत्वा चूर्णानि योजयेन्मधुसर्पिषा ॥ ६४ ॥

त्रिरात्रं पञ्चरात्रं वा चूर्णमेतन्निषेवितम्।
कासः श्वासश्च बालानां तमकश्चोपशाम्यति ॥ ६५ ॥

हिङ्गुकर्कटशृङ्गी च गैरिकं मधुयष्टिका।
त्रुटिः चौद्रं नागरञ्च हिक्काश्वासविनाशनम् ॥ ६६ ॥

चातुर्जातकसंयुक्तो गव्यस्य शकृतो रसः।
लेहोऽयं मधुना देयः छर्दिप्रशमनः परः ॥ ६७ ॥

नागरं पिप्पलीपाठा भार्गी च,मरिचानि च।
लेहोऽयं मधुना कास श्लेष्मच्छर्दिनिसूदनः ॥ ६८ ॥
निशाकृष्णाञ्जनं लाजा शृङ्गीमरिचमाक्षिकैः।
लेहः शिशोर्विधातव्यः छर्दिकासरुजापहः ॥ ६९ ॥
पत्रैर्वदरचाङ्गेरी काकमाचीकपित्थजैः।
शिशोः स्रवस्यतीसार नाशनं मूर्द्धलेपनम् ॥ ७० ॥
आम्रास्थिलाजसिन्धूत्थैः लेहःक्षौद्रेण छर्दिनुत्।
शिशोर्यैस्तुषणं पीतं बीजपूररसेन वा ॥ ७१ ॥
जम्बूकतिन्दुकानाञ्च पुष्पाणि च फलानि च।
घृतेन मधुना लीढ्वा मुच्यते हिक्कया शिशुः ॥ ७२ ॥
पिप्पलीमधुकानाञ्च चूर्णं समधुशर्करम्।
रसेन मातुलुङ्गस्य हिक्काछर्दिनिवारणम् ॥ ७३ ॥
चूर्णं कटुकरोहिण्या मधुना सह योजितम्।
हिक्कां प्रशमयेत् क्षिप्रं छर्दिं चातिचिरोत्थिताम् ॥ ७४ ॥
सुवर्णगैरिकस्यापि चूर्णानि मधुना सह।
लीढ्वा सुखमवाप्नोति क्षिप्रं हि छर्दितः शिशुः ॥ ७५ ॥

अथ निदानमाह।

विसर्पस्तु शिशोः प्राणनाशनो वस्तिशीर्षजः।
पद्मवर्णो महापद्मो रोगो दोषत्रयोद्भवः ॥ ७६ ॥
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् ॥ ७७ ॥

अथ चिकित्सामाह।

पटोलं त्रिफलारिष्टं हरिद्रां त्रिफलां पिबेत्।
क्षतविस्फोटवीसर्प ज्वराणां शान्तये शिशुः ॥ ७८ ॥
शारिवोत्पलकह्लार भद्रश्रीमुस्तचन्दनैः।
प्रपौण्डरीकमञ्जिष्ठा यष्टीमधुकसर्षपैः ॥
कुमाराणां प्रशस्तोऽयं लेपो वीसर्पनाशनः ॥ ७९ ॥

अभ्यङ्गविषये कार्य्यं बालानां पञ्चकं घृतम्।
विस्फोटरोगे निर्दिष्टं नात्र कार्य्या विचारणा ॥ ८० ॥
न्यग्रोधोदुम्बरोऽश्वत्थ प्लक्षवेतसजम्बुजैः।
त्वग्भिर्यष्ट्याह्वमञ्जिष्ठा चन्दनोशीरपद्मकैः ॥ ८१ ॥
श्लक्ष्णपिष्टैः यथालाभं शिशोः कार्य्यं प्रलेपनम्।
सदाहरागविस्फोटवेदनाव्रणशान्तये ॥ ८२ ॥
गृहधूमनिशाकुष्ठ सर्जकेन्द्रयवैः शिशोः।
चन्दनोशीरपद्मैश्च सिध्मापामाविचर्चिनुत् ॥ ८३ ॥
वचाकुष्ठविड़ङ्गानां कोष्णक्काथावगाहनम्।
कच्छूविचर्चिकाकण्डू दद्रुभिर्मुच्यते शिशुः ॥ ८४ ॥
तिलतण्डुलयोर्नाड़ी मूलाभ्यां लेपनाद्द्रुतम्।
बालानां ब्राह्मणीयष्टी रोगः शाम्यति साम्प्रतम् ॥ ८५ ॥
कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतैः।
मूत्रग्रहे प्रदातव्यः शिशूनां लेह उत्तमः ॥ ८६ ॥
घृतेन हिङ्गुविश्वैला हिङ्गुभार्गीरजो लिहन्।
आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशोः ॥ ८७ ॥
पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्।
रुदते त्रस्यते वापि लेहं दद्यात् सुखावहम् ॥ ८८ ॥
कुच्छुन्दरमलो माषा हरिद्रा विल्वपत्रकम्।
द्वन्द्वं शिरीषपत्रञ्च धूमेनैतत्प्रयोजितम् ॥
निहन्ति रोदनं रात्रौ बालस्याशु न संशयः ॥ ८९ ॥

अथ कुकूणकनिदानमाह।

कुकूणकः क्षीरदोषाच्छिशूनामेव वर्त्मनि।
जायते सरुजं नेत्रं कण्डूरं प्रस्रवेन्मुहुः ॥ ९० ॥
शिशोः कुर्य्याल्ललाटाक्षि कूटनासावघर्षणम्।
न शक्तोऽर्कप्रभां द्रष्टुं न चाक्ष्युन्मीलनक्षमः ॥ ९१ ॥

अथ चिकित्सामाह।

बद्दगोशक्तोष्णेन कुकूणं स्वेदयेत्ततः॥ ९२॥
मातृस्तन्यकटुस्नेहकाञ्जिकैर्भावितो जयेत्।
स्वेदाद्दीपशिखातप्तो नेत्रामयमलक्तकः॥ ९३॥
द्विनिशालोध्रयष्ट्याह्व रोहिणी निम्बपल्लवैः।
कुकूणके हिता वर्त्तिः पिष्टैस्ताम्ररजोऽन्वितैः॥ ९४॥
फलत्रिकं लोध्रपुनर्नवे च सशृङ्गवेरं बृहतीद्वयञ्च।
आलेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्य्यमुदाहरन्ति॥ ९५॥
व्योषं सशृङ्गं समनःशिलालं करञ्जवीजञ्च सुपिष्टमेतत्।
कटूर्दितानामथ वर्त्मनान्तु श्रेष्ठं शिशूनां नयने विदध्यात्॥९६॥
स्वरसं वृद्धदारस्य माक्षिकेन समन्वितम्।
आश्च्योतनेन बालानां कुकूणामयनाशनम्॥ ९७॥
कृमिघ्नालशिलादार्वी लाक्षागैरिककाञ्जिकैः।
चूर्णाञ्जनं कुकूणे स्याच्छिशूनां पोथकीषु च॥ ९८॥
मनःशिलाशङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम्।
वर्त्तिः क्षौद्रेण संयुक्ता बालसर्वाक्षिरोगनुत्॥ ९९॥

इति कुकूणकचिकित्सा।

अथ पारिगर्भिकनिदानमाह।

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।
कासाग्निसादवमथु तन्द्राकार्श्यारुचिभ्रमैः॥ १००॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्।
रोगं परिभवाख्यञ्च युञ्ज्यात्तत्राग्निदीपकम्॥ १०१॥

तस्य चिकित्सामाह।

पारिगर्भिकरोगे तु युज्यते वह्निदीपनम्॥ १०२॥

अथ तालुकण्टकनिदानमाह।

तालुमध्ये कफः क्रुद्धः कुरुते तालुकण्टकम्।

तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १०३ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः ॥ १०४ ॥

अथ चिकित्सामाह ।

तालुपाके यवक्षारं मधुना प्रतिसारणम् ॥ १०५ ॥
हरीतकीवचाकुष्ठं कल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ १०६ ॥
शारिवातिललोध्राणां काषायो मधुकस्य च ।
विस्राविते मुखे शस्तो धावनार्थं शिशोः सदा ॥ १०७ ॥
मुखपाके तु बालानामाम्रसारमयो रजः ।
गैरिकं क्षौद्रसंयुक्तं भैषजं सरसाञ्जनम् ॥ १०८ ॥
अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ।
दार्वीयष्ट्याभयाजाजी पत्रक्षौद्रैस्तथा परम् ॥ १०९ ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ११० ॥
शङ्खयष्ट्यञ्जनैश्चूर्णं शिशूनां गुदपाकनुत ॥ १११ ॥
गोजिह्वादन्तकालेपः पेयं वा सितचन्दनम् ।
शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने ॥ ११२ ॥
गुदपाकोत्कटे कुर्य्याद्रक्तस्रावं जलौकसा ॥ ११३ ॥

अथ पश्चात्तकरोगनिदानमाह ।

दुष्टं मलादिभिर्मातुः स्तन्यं संपिबतः शिशोः ।
यदा हि कुपितं पित्तं गुदं समभिधावति ॥ ११४ ॥
तदा सञ्जायते तत्र जलौकोदरसन्निभः ।
व्रणः सदाह आरक्तो ज्वरकासकरः परः ॥ ११५ ॥
करोति पीतकञ्चापि वर्चः स्तम्भं भवेदपि ।
व्रणः पश्चात्तको नाम व्याधिः परमदारुणः ॥ ११६ ॥

अथ चिकित्सामाह।

तत्र संपातयेद्युक्त्या जलौकस उदारधीः।
क्षीरवृक्षकषायेण किञ्चिदुष्णेन धावयेत् ॥ ११७ ॥
पिष्ट्वा मधुरकं वापि लेपः पश्चात्तके हितः।
चन्दनं शारिवे द्वे च शङ्खनाभिसमायुतम् ॥
पश्चात्तके प्रलेपोऽयमेषां लेहश्च शस्यते ॥ ११८ ॥
अशनस्य तु पुष्पाणि श्लक्ष्णचूर्णानि कारयेत्।
गुटिकां कारयेद्वैद्यस्तां च भक्तस्य वारिणा ॥
एतां पश्चात्तके दद्याद्बालेषु मतिमान् भिषक् ॥ ११९ ॥
अलम्बुषा जटाकल्कः सर्जचूर्णसमन्वितः।
बहुधा कटुतैलेन मिश्रयित्वा च पाचितम् ॥
सन्दद्यात्तन्तुलीभावं गते विद्या प्रलेपनम् ॥ १२० ॥
अभ्यज्य तिलतैलेन सर्जचूर्णावचूर्णिताम्।
विच्छिन्नश्येत् स्थिरैरण्डवीजाभ्याञ्च प्रलेपनात् ॥ १२१ ॥
आमलक्याः पलान्यष्टौ गोमूत्रे सप्त भावयेत्।
भावयित्वातपे पश्चाद्विच्छिलिंशा प्रशाम्यति ॥ १२२ ॥
मरिचं नवनीताढ्यं शोथघ्नं भक्षयेच्छिशुः।
मुस्ताकूष्माण्डवीजानि भद्रदारुकलिङ्गकान् ॥
पिष्ट्वा तोयेन लेपोऽयं शोथघ्नः परमः शिशोः ॥ १२३ ॥
अम्लकाञ्जिकसम्पिष्टं शतपुष्पा ससैन्धवम्।
कुष्ठं स्नेहं तदत्युष्णं लोमशोद्वर्त्तनं शिशोः ॥ १२४ ॥
मसूरं गुडपानीये विरसं वाथ पेषितम्।
सनिशं वाथवा तद्वद्यवचूर्णं शिशोर्हरेत् ॥ १२५ ॥

अथ अन्यद्रोगविशेषाणां निदानमाह।

अङ्गुलीग्रहपादो यः स्यात्त्वाभक्तं निवेश्य तत्।
कृतमूत्रार्थभूभागे जानुभ्यां धरणीं गतः ॥

तण्डुलोत्थाय यः खादेत् स शय्यामूत्रणं त्यजेत् ॥ १२६ ॥

अथ तस्य चिकित्सामाह ।

कृतमूत्रार्थभूभागे मृदं भृष्टा तुषोदके ।
संचूर्ण्य मधुसर्पिर्भ्यां लीढ़ा तल्पविमूत्रणम् ॥
न करोति नरो जातु भृष्टमेनं निरन्तरम् ॥ १२७ ॥
इन्द्रगोपं ससिद्धार्थं मधुसर्पिः समायुतम् ।
पक्कं कच्छपतैले तु पुष्ट्यायुर्बलवर्द्धनम् ॥ १२८ ॥

अथ निदानमाह ।

कपालयोनिला दुष्टा गर्भस्तस्याश्च जायते ।
सवर्णो निर्व्यथः शोथ स्तं विद्यादुपशीर्षकम् ॥ १२९ ॥
यथा दोषोद्भवं विद्यात्पिड़िकार्बुदविद्रधीन् ।

अथ चिकित्सामाह ।

उपशीर्षे नावनं शस्तं वातव्याधिचिकित्सितम् ।
पक्के विद्रधिवत्तस्मिन् क्रमं कुर्य्याद्यथोदितम् ॥ १३० ॥
व्योषशिवोग्रारजनीकल्कं वा पीतमथ पयसा ।
हनुर्निषिक्तं कुरुते पाण्डुतावलस्य चाभ्यस्तम् ॥ १३१ ॥
स्रोतःसु कफरुद्धेषु शिशोः शीतादिरेचनात् ।
ज्वरेऽरुचौ प्रतिश्याये कासश्वसनसम्भवे ॥ १३२ ॥
प्रशुष्यति यदा बालः स्वस्थः स्निग्धमुखेक्षणः ।
पञ्चकोलकतिक्तानां चूर्णं मधुघृतं युतम् ॥
तदा तस्य प्रयोक्तव्यं ज्वरारुच्यादिशान्तये ॥ १३३ ॥
सैन्धवं व्योषशार्ङ्गेष्टा पाठागिरिकरञ्जकान् ।
शुष्यते मधुसर्पिर्भ्यां गुडूच्यादिञ्च योजयेत् ॥ १३४ ॥
यदा तु दुर्बलोबालः क्षुधया पीड़ितोऽग्निवान् ।
विदारीकन्दगोधूम यवचूर्णं घृतप्लुतम् ॥
पाययेदनु च क्षीरं शृतं समधुशर्करम् ॥ १३५ ॥

अथ निदानमाह।

दन्तमूलाश्रितो वायुर्दन्तवेष्टान् विशोषयन्।
यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति तदा द्विजाः ॥ १३६ ॥

अथ चिकित्सामाह।

दन्तपालिन्तु मधुना चूर्णेन प्रतिसारयेत्।
धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा ॥ १३७ ॥
लावतित्तिरिवल्लूररजः पुष्परसप्लुतम्।
द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ॥ १३८ ॥

अथ अकालदन्तोत्पातलक्षणमाह।

दन्तोत्पातभवे रोगे न बालमतिपीड़येत्।
पाते दन्ते हि शाम्यन्ति स्वयं तद्दन्तका गदाः ॥ १३९ ॥
सद्यो जातस्य दृश्येत यस्य दन्तस्य सम्भवः।
तं बालं राक्षसं विद्यात् सर्वलोकभयावहम् ॥
अचिरेणैव कालेन माता तस्य विनश्यति ॥ १४० ॥
एकमासे द्विमासे च त्रिमासे दन्तदर्शनात्।
पिता तस्य विनश्येत वैवस्वतसमोहि सः ॥ १४१ ॥
चतुर्थे भ्रातरं हन्याद्यदा दन्तस्य दर्शनात्।
मासि तु पञ्चमे हन्यान्मातरं भ्रातरं तथा ॥ १४२ ॥
षष्ठे मासि तु दन्तस्य दर्शनं हि यदा भवेत्।
मातापित्रोर्धनञ्चैव नष्टं भवति निश्चितम् ॥ १४३ ॥
सप्तमे यदि दृश्येत दन्तानां हि समुद्भवः।
शिशोर्वा तपते चैव दासी दासान् गुरुंस्तथा ॥ १४४ ॥
अष्टमे नवमे चैव दशमैकादशे तथा।
द्वादशे त्रयोदशे चैव तथा चैव चतुर्दशे ॥
दन्ताश्चैव हि दृश्यन्ते तदा दन्ताः शुभावहाः ॥ १४५ ॥

अथ प्रायश्चित्तम्।

सदन्तो जायते बालो जातेऽप्यस्य द्विजोद्भवः।
कुर्वन्ति तस्मिन्नुत्पाते शान्तिं च द्विजजातयः॥ १४६॥
शिशुं सदक्षिणं दद्यान्नैगमेशञ्च पूजयेत्।
वत्सस्य मधुलाजानां प्राङ्मुखं दधिदीपयोः॥
चुम्बेत्कुमारं त्रीन्वारान् प्रायश्चित्तमिदं स्मृतम्॥ १४७॥
नौकामारोहयेद्बालं सह धात्र्या गजोत्तमम्।
भोजयेद्भोजनं धात्रीं सर्पिषा पयसाऽथवा॥ १४८॥

इति अकालदन्तोत्पातशान्तिप्रकरणम्।

अथ निदानमाह।

रूक्षाश्मिनो हि बालस्य चालयत्यनिलः शिराः।
हन्वोः शय्याप्रसुप्तस्य दन्तैः शब्दं करोत्यतः॥ १४९॥

अथ चिकित्सामाह।

कर्कटशाकविपक्वं क्षीरेण चरणतललेपनादचिरात्।
दन्तदंष्ट्रागत शब्दं शमयति बहुधैव दृष्टमिदम्॥ १५०॥
योषिद्भ्यो वत्सरादूर्द्ध्वं बालो नो याति दोषताम्।
मन्दाग्निर्बहुविण्मूत्रो दृश्यमानास्थिपञ्जरः॥ १५१॥
शुष्कः स्थिरमहद्रोगः पूर्वन्तं मृदु शोध्य च।
कृष्णास्थिह्रत्पयो मांसं वस्तौ स्नेहं च योजयेत्॥ १५२॥
पादकल्कोऽश्वगन्धायाः क्षीरे दशगुणे पचेत्।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम्॥ १५३॥

इति अश्वगन्धाद्यं घृतम्।

रास्नाश्वगन्धा काकोली पयस्यामुद्गपर्णिभिः।
विडङ्गजीरकाभ्याञ्च घृतस्त्वृषभकेन च॥
शिशूत्तमाङ्गनिर्यूहे सिद्धं पुष्टिविवर्द्धनम्॥ १५४॥

इति रास्नाद्यं घृतम्।

गौरीयष्टीवचालोध्रं पथ्यौ राजादनं सिता।
चन्दनं पद्मकं लाक्षा सपद्मं कुमुदोत्पलम्॥ १५५॥
जीवकर्षभकौ मेदा काकोलीशारिवाद्वयम्।
पञ्चत्वग्दशमूलाम्बु क्षीरे प्रस्थं घृतं पचेत्॥ १५६॥
योजितं पित्तवीसर्पे मुखपाके ग्रहार्त्तिषु।
शस्तं गौर्य्यादिकं नाम बालानां सर्वरोगनुत्॥ १५७॥

इति गौर्य्याद्यं घृतम्।

लाक्षाकुष्ठविड़ङ्गानि सरलं रजनीद्वयम्।
सूक्ष्मैलापद्मकं लोध्रं पद्मकं नागकेशरम्॥ १५८॥
दधित्थतुल्यशैरीष शैरेयोद्दालपत्रकम्।
घृतप्रस्थं पचेदेतैर्यावत्पाकञ्च गच्छति॥ १५९॥
कीटाखुसर्पदष्टेषु स्फोटेषु विविधेषु च।
विसर्पेषु कुमाराणां लूतामूत्रक्षतेषु च॥
गण्डमालासु नारीषु सर्पिरेतद्यथामृतम्॥ १६०॥

इति लाक्षाद्यं घृतम्।

अजाक्षीरसमं सर्पिश्चाङ्गेरी स्वरसाढ़के।
समङ्गाधातकीलोध्रं कपित्थोत्पलसैन्धवैः॥ १६१॥
सव्योषकुष्ठविल्वाब्दैः पिष्टैः प्रस्थोन्मितं घृतम्।
पचेद् ग्रहण्यतीसारान् हन्ति पथ्यभुजः शिशोः॥ १६२॥

इति चाङ्गेरीघृतम्।

पाठामतिविषां कुष्ठं सरलं देवदारु च।
तेजोवतीं द्विपिप्पल्यौ चित्रकं विश्वभेषजम्॥ १६३॥
उभे हरिद्रे सरलं फलानि कुटजस्य च।
गण्डीरीमजमोदाञ्च विड़ङ्गं कटुरोहिणीम्॥ १६४॥
वचां सर्पसुगन्धाञ्च श्रेयसीं मरिचानि च।
मातुलुङ्गस्य मूलानि दाड़िमस्य रसेन तु॥ १६५॥

श्लक्ष्णपिष्टानि संयोज्य क्षीरे सर्पिर्विपाचयेत् ।
मृदग्निर्यः कुमारः स्यात् क्रमिकोष्टश्च यो भवेत् ॥ १६६ ॥
अरोचकग्रहीतश्च तथा यश्चातिसार्य्यते ।
एतत्सर्पिः प्रयोक्तव्यं कुमारो बलवान् भवेत् ॥ १६७ ॥
पाण्डुरोगाच्च गुल्माच्च तथा श्वयथुसञ्चयात् ।
कृशभावाच्च दैन्याच्च स्वरभेदात्तथैव च ॥ १६८ ॥
प्रज्वालावर्णभेदाच्च क्षिप्रमेव विमुच्यते ।

इति पाठाद्यं घृतम् ।

सिद्धार्थकवचाब्राह्मी शङ्खपुष्पीपुनर्नवा ।
पयस्या मधुयष्ट्याह्व कटुतैलफलत्रयम् ॥ १६९ ॥
शारिवे रजनीपाठा भृङ्गदारुसुवर्च्चला ।
मञ्जिष्ठात्रिफलाश्यामा वृषपुष्पं सगैरिकम् ॥ १७० ॥
एभिः पक्वा घृतप्रस्थं सम्यङ्मन्त्राभिमन्त्रितम् ।
द्विमासं गर्भिणीनारी षण्मासानुपयोजयेत् ॥ १७१ ॥
सर्वज्ञं जनयेत्पुत्रं सर्वामयविवर्जितम् ।
न ग्रहैरभिभूयेत बलवर्णान्वितः सुखी ॥ १७२ ॥
अस्य प्रयोगात् कुक्षिस्थः स्फुटवाग् व्याहरत्यपि ।
योनिदुष्टाश्च या नार्य्यः शुक्रदुष्टाश्च ये नराः ॥ १७३ ॥
बन्ध्यापि लभते पुत्रं शूरं पण्डितमानिनम् ।
खञ्जगद्गदमूकत्वं पानादेवापकर्षति ॥ १७४ ॥
सप्तरात्रिप्रयोगेण नरः श्रुतिधरो भवेत् ।
नाग्निर्दहति तद्वेश्म न वज्रमपहन्ति च ॥
न तत्र म्रियते बालो यत्रास्ते सोमसंज्ञकः ॥ १७५ ॥
फलत्रयमत्र द्राक्षाकाश्मर्य्यपरुषकाणि ॥

इति सोमघृतम् ।

वचाकुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि वा ।

शारिवासैन्धवं चैव पिप्पलीघृतमष्टमम् ॥ १७६ ॥
मेध्यं घृतमिदं सिद्धं पातव्यं मासमेव च।
दृढ़स्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत् ॥ १७७ ॥
न पिशाचा न रक्षांसि न दैत्या न च मानवाः।
बाधन्ते च कुमाराणां पिबतामष्टमङ्गलम् ॥ १७८ ॥

इति अष्टमङ्गलघृतम्।

शङ्खपुष्पीवचा ब्राह्मी कुष्ठं त्रिफलया सह।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥ १७९ ॥
शटी दुरालभा विल्वं दाड़िमं सुरसा तथा।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥ १८० ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्।
कषाये कण्टकार्य्याश्च क्षीरं तस्माच्चतुर्गुणम् ॥ १८१ ॥
एतत्कुमारकल्याणं घृतरत्नं सुखप्रदम्।
बलवर्णकरं धन्यं कोष्ठाग्नेरतिवर्द्धनम् ॥ १८२ ॥
छायासर्वग्रहाऽलक्ष्मी क्रमिदन्तगदापहम्।
सर्वबालामयहरं दन्तोद्भेदे विशेषतः ॥ १८३ ॥
वसामज्जाथवा तैलमेभिरेव विपाचितम्।
पूर्वार्थकृद्यथा शास्त्रे देशकालोपपादितम् ॥ १८४ ॥

इति कुमारकल्याणकं घृतम्।

खदिरार्जुनतालीस कुष्ठस्यन्दनजे रसे।
सक्षीरं साधितं सर्पिः क्षययुञ्च नियच्छति ॥ १८५ ॥

इति खदिराद्यं घृतम्।

वराहस्य, सिद्धार्थकवचापयस्याब्राह्मग्रपामार्गशतावरीशारिवापिप्पलीकुष्ठसैन्धवैः सिद्धं सर्पिः पातुं प्रयच्छति। सिद्धार्थकाद्यं घृतम्।

क्षीरान्नादस्य, मधुकवचात्रिफलासिद्धम्। इति मधुकाद्यघृतम्।

अन्नादस्य, द्विपञ्चमूलीचोरतगरभद्रदारुमरिचविड़ङ्गमधुकद्राक्षासिद्धम्। तेन बालस्यारोग्यबलमेधायूंषि भवन्ति। इति द्विपञ्चमूलाद्यं घृतम्।

वचाद्विबृहतीपाठा कटुकातिविषाघनैः।
मधुरैश्च घृतं सिद्धं शस्तं दशनजन्मनि ॥ १८६ ॥

इति वचाद्यं घृतम्।

श्यामाजयासतिक्तानां पुष्पाणां क्वाथसाधितम्।
यष्टीगर्भं घृतं पीत्वा कासश्वासौ जयेच्छिशुः ॥
रक्तपित्तं पिपासाञ्च मूर्च्छां निरवशेषतः ॥ १८७ ॥

इति श्यामाद्यं घृतम्।

नागरं सुवहाभार्गी नैचुलानि फलानि च।
कल्कैरक्षसमैरेतैः प्रस्थार्द्धं सर्पिषः पचेत् ॥ १८८ ॥
द्विगुणेन जलेनैव जीर्णाहारः पिबेन्नरः।
घृतमेतन्निहन्त्याशु कासश्वासापतन्त्रकान् ॥ १८९ ॥

इति नागराद्यं घृतम्।

चोरद्वयं देवदारु विश्वाजाजी सदीप्यकम्।
ग्रन्थिकं पिप्पलीतिक्ता द्रव्यैरेतैः समैर्घृतम् ॥ १९० ॥

इति चोरद्वयाद्यं घृतम्।

सौवीरदधिमद्यैश्च कल्कैरेतैः पचेद्भिषक्।
प्रयुक्तं हन्ति तत्सर्पिः शिशोः परिभवाख्यकम् ॥ १९१ ॥

इति चोरद्वयाद्यं घृतम्।

विभीतकं वचा कुष्ठं हरितालं मनःशिला।
एभिः तैलं विपक्वन्तु बालानां पूतिकर्णके ॥ १९२ ॥

इति विभीतकाद्यं तैलम्।

लाक्षारससमं तैलं सिद्धं मस्तुचतुर्गुणम्।
रास्नाचन्दनकुष्ठाब्द वाजिगन्धानिशा युतैः ॥ १९३ ॥

शताह्वा दारुकुष्ठाह्व मूर्वातिक्ताहरेणुभिः।
बालानां ज्वररक्षोघ्न मभ्यङ्गाद्बलवर्णकृत् ॥ १९४ ॥

इति लाक्षाद्यं तैलम्। इति बालकरोगचिकित्सा।

अथ बालग्रहनिदानमाह।

क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥ १९५ ॥
ऊर्द्ध्वं निरीक्षते दन्तान् खादेत् कूजति जृम्भते।
भ्रुवौ क्षिपति दष्टौष्ठः फेनं वमति चासकृत् ॥ १९६ ॥
क्षामोऽपि निशि जागर्त्ति शूनाङ्गो भिन्नविट् स्वरः।
मांसशोणितगन्धश्च नचाश्नाति यथा पुरा ॥ १९७ ॥
सामान्यग्रहजुष्टानां लक्षणं समुदाहृतम्।

अथ बालग्रहजुष्टचिकित्सामाह।

रसोननिम्बपत्राणि जतुवंशावलेखनम्।
सिद्धार्थनिम्बपत्राणि वंशत्वग् जतुना सह ॥ १९८ ॥
सर्पनिर्मोककोशानि निर्माल्यं गौरसर्षपाः।
धूपत्रयं ससर्पिष्क मेतत्सर्वग्रहापहम् ॥ १९९ ॥
द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः।
पूतिकरञ्जसिद्धार्थवचाभल्लातदीप्यकैः ॥
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ॥ २०० ॥
काकजङ्घामलाश्वेताकपित्थक्षीरपादिकैः।
सकरञ्जकदम्बैश्च धूपं स्नातस्य वाचरेत् ॥ २०१ ॥

अथ स्कन्दग्रहजुष्टनिदानमाह।

एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम्।
अर्द्धदृष्ट्या निरीक्षेत रक्तास्यो रक्तगन्धिकः ॥ २०२ ॥
दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति।
स्कन्दग्रहगृहीतानां रोदनं नित्यमेव च ॥ २०३ ॥

अथ स्कन्दग्रहजुष्टचिकित्सामाह।

स्कन्दोपग्रहजुष्टानां कुमाराणाञ्च शस्यते।
वातघ्नद्रुमपत्राणां निष्क्वाथः परिषेचने ॥ २०४ ॥
तेषां मूलेन सिद्धञ्च तैलमभ्यञ्जने हितम्।
सर्वगन्धसुरामण्ड कैटर्य्यावापमिष्यते ॥ २०५ ॥
देवदारुणि रास्नायां मधुरेषु गणेषु च।
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रदापयेत् ॥ २०६ ॥
सर्षपाः सर्पनिर्मोको वचाकाकादनीघृतम्।
उष्ट्राजाविगवां वापि रोमाण्युद्धूपनं शिशोः ॥ २०७ ॥
रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः।
घण्टा च देवाय वलिर्निवेद्यः सकुक्कुटः स्कन्दग्रहे हिताय ॥
स्नानं त्रिरात्रं निशि चत्वरेषु कुर्य्यात् परं शालियवैर्निवेद्यम् २०८
गायत्रिपूताभिरथाद्भिरग्निं प्रज्वालयेदाहुतिभिश्च धीमान् २०९
सोमवल्लीमिन्द्रवल्लीं वन्दाकं विल्वजं शमीम्।
मृगादन्याश्च मूलानि ग्रथितान्यथ धारयेत् ॥ २१० ॥
एलवालुकदार्व्येला कुष्ठलाक्षाहरेणुभिः।
रास्ना शिला समञ्जिष्ठा ह्रीवेरागुरुचन्दनैः ॥
स्कन्दग्रहे प्रलेपोऽयं श्लक्ष्णपिष्टैः समाहितः ॥ २११ ॥
विल्वाग्निमन्थतर्क्कारीकाश्मरीसैरण्डपल्लवैः।
पाटल्यास्फोतवासाभिः सायं पानं प्रशस्यते ॥ २१२ ॥
जीवनीयविपक्वन्तु घृतपानं प्रशस्यते।
शतपुष्पादिभिः सिद्धं तैलमभ्यञ्जने हितम् ॥ २१३ ॥
रक्षामतः प्रवक्ष्यामि बालानां ग्रहनाशिनीम्।
अहन्यहनि कर्त्तव्या याभिः षड्भिरतन्द्रितैः ॥ २१४ ॥
तपसां तेजसाञ्चैव वपुषां यशसां तथा।
विधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥ २१५ ॥

अहसेनापतिर्देवो देवसेनापतिर्विभुः।
देवसेनारिपुहरः पातु त्वां भगवान् गुहः॥ २१६ ॥
देवदेवस्य महतः पावकस्य च यः सुतः।
गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु॥ २१७ ॥
रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः।
रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः॥ २१८ ॥

इति स्कन्दग्रहजुष्टचिकित्सा।

अथ स्कन्दापस्मारजुष्टनिदानमाह।

नष्टसंज्ञो वमेत् फेनं संज्ञावानतिरोदति।
पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम्॥ २१९ ॥

अथ स्कन्दापस्मारजुष्टस्य चिकित्सामाह।

विल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः।
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये॥ २२० ॥

अथ सुरसादिगणमाह।

सुरसा श्वेतसुरसा पाठा फञ्जी फणिज्भकः।
सौगन्धिकं भूस्तृणको राजिका श्वेतवर्वरी॥ २२१ ॥
कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी।
विड़ङ्गमथ निर्गुण्डी कर्णिकार उदुम्बरः॥ २२२ ॥
बला च काकमाची च तथा च विषमुष्टिका।
कफकृमिहरः ख्यातः सुरसादिरयं गणः॥ २२३ ॥
वत्समूत्रविपक्वन्तु तैलमभ्यञ्जने हितम्॥ २२४ ॥
क्षीरवृक्षकषाये तु काकोल्यादौ गणे तथा।
विपक्तव्यं घृतञ्चापि पानीयं पयसा सह॥ २२५ ॥
उत्सादनं वचा हिङ्गु युक्तं स्कन्दग्रहे हितम्।
गृध्रोलूकपुरीषाणि केशा हस्तिनखोद्भृतम्॥
वृषभस्य तु रोमाणि योज्यान्युद्धूपनेऽपि च॥ २२६ ॥

अनन्तां कुनटीं बिम्बीं मर्कटीञ्चापि धारयेत् ।
पक्वापक्वानि मांसानि प्रसन्नं रुधिरं तथा ॥ २२७ ॥
भूतौदनो निवेद्यश्च स्कन्दापस्मारिणे वटे ।
चतुष्पथे च कर्त्तव्यं स्नानमस्य यतात्मना ॥ २२८ ॥
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ।
विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः ॥ २२९ ॥

इति स्कन्दापस्माररक्षाप्रकारः ।

अथ शकुनिग्रहजुष्टस्य निदानमाह ।

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीड़ितः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकैः
विज्ञेयो भवति शिशुर्युतः शकुन्या ॥ २३० ॥

अथ शकुनिग्रहजुष्टस्य चिकित्सामाह ।

शकुनीग्रहजुष्टस्य कार्य्यं वैद्येन जानता ।
वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ॥ २३१ ॥
कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशोः ॥ २३२ ॥
मधुकोशीरह्रीवेर शारिवोत्पलपद्मकैः ।
लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिह्येच्छिशुम् ॥ २३३ ॥
व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च ।
स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् ॥ २३४ ॥
शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाः ।
लक्ष्मणां सहदेवीञ्च बृहतीञ्चापि धारयेत् ॥ २३५ ॥
तिलतण्डुलकं माल्यं हरितालं मनःशिला ।
बलिरेष करञ्जेषु निवेद्यो नियतात्मना ॥ २३६ ॥
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि ।
श्वेतशिरीषगन्धाष्टकुष्ठगुग्गुलुसर्षपैः ॥ २३७ ॥

सिद्धमभ्यञ्जने तैलं धारणं पूर्वमेव तु।
शकुनिग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम्॥ २३८॥
स्कन्दापस्मारशमनं घृतञ्चापीह योजयेत्।
कुर्य्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः॥ २३९॥
अन्तरीक्षचरा देवी सर्व्वालङ्कारभूषिता।
अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु॥ २४०॥

इति शकुनीग्रहजुष्टचिकित्सा।

अथ रेवतीग्रहजुष्टस्य निदानमाह।

व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं सवेदरुक्।
भिन्नवर्च्चा ज्वरी दाही रेवतीग्रहलक्षणम्॥ २४१॥

अथ रेवतीग्रहजुष्टस्य चिकित्सामाह।

अश्वगन्धाजशृङ्गी च शारिवाथ पुनर्नवा।
सहा विदारी च तथा कषाये परिषेचने॥ २४२॥
तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्ज्जरसे तथा।
पलङ्कषाये नलदे तथा गिरिकदम्बके॥ २४३॥
धवाश्वकर्णककुभ धातकीतिन्दुकेषु च।
काकोल्यादौ गणे चापि पानीयं सर्पिरिष्यते॥ २४४॥
कुलत्थाः शङ्खचूर्णञ्च प्रदेहः सार्व्वगन्धिकः।
गृध्रोलूकपुरीषाणि वचा यवफलं घृतम्॥
सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः॥ २४५॥
शुक्लाः सुमनसो लाजा पयः शाल्योदनं तथा।
बलिर्निवेद्यो गोतीर्थे रेवत्यैः प्रयतात्मना॥ २४६॥
सङ्गमे च भिषक् स्नानं कारयेत् स्त्रीकुमारयोः॥ २४७॥
नानावस्त्रधरा देवी चित्रमाल्यानुलेपना।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु॥ २४८॥

इति रेवतीग्रहजुष्टचिकित्सा।

अथ पूतनाग्रहजुष्टस्य निदानमाह।

अतिसारो ज्वरस्तृष्णा तिर्य्यक् प्रेक्षणरोदनम्।
नष्टनिद्रस्तथोद्विग्नो ग्रहपूतनया शिशुः॥ २४९॥

अथ पूतनाग्रहजुष्टचिकित्सामाह।

कपोतवङ्का श्योनाको वरुणः पारिभद्रकः।
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने॥ २५०॥
वचा वयस्था गोलोमी हरितालं मनःशिला।
कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते॥ २५१॥
हितं घृतं तुगाक्षीर्य्यां सिद्धं मधुरकेऽपि च॥ २५२॥
कुष्ठ तालीश तगरं चन्दनस्यन्दने तथा।
ब्राह्मग्रस्थिमूलसंयुक्तं कुशमूलञ्च सप्तकम्॥ २५३॥
दूर्वायाः पत्रकं वापि तण्डुलांश्चाक्षतांस्तथा।
धूपनात् पूतनां हन्ति स्तम्भो वाप्युपजायते॥ २५४॥
हस्त्यस्थिशकलं गृह्य वारिणा परिपेषयेत्।
गात्रलेपात् कुमाराणां पानाद्वा पूतनां जयेत्॥ २५५॥
गन्धनाकुलीकुम्भीका मज्जानो वदरस्य च।
कुक्कुटास्थिघृतञ्चापि धूपनं सह सर्षपैः॥ २५६॥
धवः कदम्बः कुष्ठेले तथा गिरिकदम्बकः।
देवाह्वं रेणुका हिङ्गु प्रलेपः पूतनाग्रहे॥ २५७॥
मत्स्यौदनञ्च कुर्वीत कृशरां पललं तथा।
शरावसम्पुटे कृत्वा बलिं शून्यगृहे भिषक्॥ २५८॥
काकादनीं चित्रफलां विम्बीं गुञ्जाञ्च धारयेत्॥ २५९॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा।
शून्यागाराश्रया देवी दारकं पातु पूतना॥ २६०॥

इति पूतनाग्रहजुष्टचिकित्सा॥

अथ अन्धपूतनाग्रहजुष्टस्य निदानमाह।

छर्द्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम्।
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया भवेत्॥ २६१॥

अथ अन्धपूतनाग्रहजुष्टस्य चिकित्सामाह।

तिक्तद्रुमाणां पत्रैस्तु क्वाथः कार्य्योऽभिषेचने॥ २६२॥
सुरा सौवीरकं कुष्ठं हरितालं मनःशिला।
तथा सर्जरसश्चापि तैलार्थमुपसंहरेत्॥ २६३॥
पिप्पल्यः पिप्पलीमूलं वर्गो मधुरको मधु।
शालिपर्णीबृहत्यौ च घृतार्थमुपदिश्यते॥ २६४॥
सर्वगन्धैः प्रदेहश्च गात्रे च्वक्षोश्च शीतलैः॥ २६५॥
पुरीषं कौक्कुटं केशाश्चर्म्म सर्पभवन्तथा।
जीर्णश्चाभीक्ष्णशो वासो धूपनायोपकल्पयेत्॥ २६६॥
काकादनी मृगैर्वारु तुम्बी सत्रिफला वचा।
धारणं शिरसा शस्तमन्धपूतनया ग्रहे॥ २६७॥
कुक्कुटीं मर्कटीं बिम्बीमनन्ताञ्चापि धारयेत्॥ २६८॥
आममांसं तथा पक्वं शोणितञ्च चतुष्पथे।
निवेद्यमन्तश्च गृहे शिशोः रक्षानिमित्ततः॥ २६९॥
शिशोश्च स्नपनं कुर्य्यात् सर्वगन्धादिकैः शुभैः।
कुङ्कुमागुरुकर्पूर कस्तूरीचन्दनैः समैः॥
सर्वगन्ध इति ख्यातो गणो ह्युत्तमगन्धकः॥ २७०॥
कराला पिङ्गला मुण्डी कषायाम्बरवासिनी।
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना॥ २७१॥

इति अन्धपूतनाग्रहचिकित्सा।

अथ शीतपूतनाग्रहजुष्टस्य निदानमाह।

वेपते कासते क्षीणो नेत्ररोगी विगन्धिवान्।
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः॥ २७२॥

अथ शीतपूतनाग्रहजुष्टस्य चिकित्सामाह।

विम्बीं कपित्थं सुवहां तथा विल्वत्वचो वले।
नन्दीं भल्लातकञ्चैव परिषेके प्रयोजयेत् ॥ २७३ ॥
वत्समूत्रं गवां मूत्रं मुस्तञ्चामरदारु च।
कुष्ठञ्च सर्वगन्धञ्च तैलार्थमवचारयेत् ॥ २७४ ॥
रोहिणी सर्ज खदिर पलाश ककुभत्वचः।
निष्क्वाथ्य तस्मिन् निःक्वाथे सक्षीरं विपचेद् घृतम् ॥२७५॥
प्रदेहः पूतनोक्तो यः स शस्तोऽत्र यदौषधम्।
शीतपूतनया ग्रस्ते तदेव हितमुच्यते ॥ २७६ ॥
गृध्रोलूकपुरीषाणि वत्सगन्धामहित्वचम्।
निम्बपत्राणि मधुकं धूपनार्थं प्रयोजयेत् ॥ २७७ ॥
धारयेदपि लम्बाञ्च गुञ्जां काकादनीन्तथा।
नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् ॥ २७८ ॥
जलाशयान्ते बालस्य स्नपनञ्चोपदिश्यते।
देव्यै देयश्चोपहारो वारुणीरुधिरं तथा ॥ २७९ ॥
मुद्गौदनाशना देवी सुराशोणितपायिनी।
जलाशयरता देवी पातु त्वां शीतपूतना ॥ २८० ॥

इति शीतपूतनाग्रहजुष्टचिकित्सा।

अथ मुखमण्डिकाग्रहजुष्टस्य निदानमाह।

प्रसन्नवर्णवदनः शिराभिरभिसंवृतः।
मूत्रगन्धी शुष्ककासो मुखमुण्डिकया ग्रहे ॥ २८१ ॥

मुखमण्डिकाग्रह चिकित्सामाह।

कपित्थविल्वतर्कारी वासागन्धर्वहस्तकाः।
कुवेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ २८२ ॥
स्वरसैर्भृङ्गवृक्षाणां तथाजहयगन्धयोः।
तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने शिशोः ॥ २८३ ॥

मधूलिकायां पयसि तुगाक्षीर्य्यां गणे तथा।
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ २८४ ॥
वचा सर्जरसः कुष्ठं सर्पिश्चोद्धूपने हितम्।
धारयेदपि जिह्वाश्च चाषचीरल्लिसर्पजाः ॥ २८५ ॥
वर्णकं चूर्णकं माल्य मञ्जनं पारदं तथा।
मनःशिलां चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ २८६ ॥
पायसं तु पुरोडाशं बल्यर्थमुपनाहयेत्।
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ २८७ ॥
अलङ्कृता रूपवती सुभगा कामरूपिणी।
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ २८८ ॥

इति मुखमण्डिकाग्रहजुष्टचिकित्सा।

अथ नैगमेषग्रहजुष्टस्य निदानमाह।

छर्दिस्पन्दनकण्ठास्यशोषो मूर्च्छाविगन्धिता।
ऊर्द्ध्वं पश्येद्दशेद्दन्तान्नैगमेषं ग्रहं वदेत् ॥ २८९ ॥

अथ चिकित्सामाह।

विल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने।
सुरासौवीरधान्याकं परिषेके प्रशस्यते ॥ २९० ॥
प्रियङ्गुसरलानन्ता शतपुष्पा कुटन्नटैः।
पचेत्तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ २९१ ॥
पञ्चमूलद्वयक्वाथे क्षीरे च मधुके तथा।
पचेद् घृतञ्च मतिमान् खर्जूर्य्यां मस्तकेऽथवा ॥ २९२ ॥
वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत्।
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥ २९३ ॥
सिद्धार्थकं वचा हिङ्गु कुष्ठं चैवाक्षतैः सह।
भल्लातकाजमोदञ्च हितमुद्धूपनं शिशोः ॥ २९४ ॥
अधस्तात् क्षीरवृक्षस्य स्नापनं चोपदिश्यते ॥ २९५ ॥

मर्कटोलूकगृध्राणां पुरीषाणि प्रधूपयेत्।
धूपः सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥ २९६ ॥
तिलतण्डुलकं माल्यं भक्ष्याणि विविधानि च।
कुमारभृत्यै मेषाय वृक्षमूले निवेदयेत् ॥ २९७ ॥
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः।
बालं पालयिता देवो नैगमेषोऽभिरक्षतु ॥ २९८ ॥

अथ अन्यत् निदानमाह।

यः कृशः सर्वदृग्वीक्षी दृढदाहाप्रतिघातकृत्।
कुर्य्याच्च साहसं कर्म सहसा कामपीड़ितः ॥ २९९ ॥
सशब्दं वीक्ष्यते रात्रौ यो नाश्नाति बुभुक्षितः।
शुष्कास्यो बलिकामेन स गृहीतोऽपि बाध्यति ॥ ३०० ॥

अथ चिकित्सामाह।

महामुण्डितिकोदीच्य क्वाथस्नानं ग्रहापहम्।
सप्तच्छदाभयनिशा चन्दनैश्चानुलेपनम् ॥ ३०१ ॥
समूला सदला पिष्टा मूर्वा तिक्तासमन्विता।
शिशोरुद्वर्त्तनं कुर्य्यात् सर्वग्रहनिवारणम् ॥ ३०२ ॥
सर्पत्वल्लशुनं मूर्वा सर्षपारिष्टपल्लवाः।
विड़ालविड़जारोम मेषशृङ्गी वचा मधु ॥
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥ ३०३ ॥
मृतगोकुक्षिसंस्थेन गोमयेन च धूपनम्।
हन्ति सर्वग्रहांश्चाशु ज्वरघ्नन्तु न संशयः ॥ ३०४ ॥
बालकाभीष्टकर्माणि कार्य्याणि ग्रहशान्तये ॥ ३०५ ॥
ग्रहेष्वधिपतिः स्कन्दः सर्वरोगेषु रेवती।
पूजनीयौ ततस्तस्मात्तौ बालानां हितेच्छया ॥ ३०६ ॥
स्वस्ति ते षण्मुखः स्कन्दो महाभागा च रेवती।
दिशः सूर्य्योऽन्तरीक्षञ्च स्वस्ति कुर्वन्तु सर्वदा ॥ ३०७ ॥

तेजसा ब्रह्मणश्चाथ विष्णोरिन्द्रस्य तेजसा।
सिद्धानां तेजसा चैव रक्षितोऽस्मिन् सुखी भव॥ ३०८॥
मन्त्रैरेतैर्भिषक् पश्चाद्रक्षां कुर्वीत बालके।
भवन्ति निर्ग्रहा बालाः सुखिता रोगवर्जिताः॥ ३०९॥
बालरोगाधिकारोक्त मष्टमङ्गलकं घृतम्।
भिषजा तत् प्रयोक्तव्यमायुर्वेदविचारिणा॥ ३१०॥
ग्रहोपसृष्टबालास्तु दुश्चिकित्स्यतमाः स्मृताः।
वैकल्यं मरणं वापि ध्रुवं स्कन्दग्रहे नृणाम्॥ ३११॥

इति बालग्रहचिकित्सा।

इति वङ्गसेनसङ्कलितः बालरोगनिदानचिकित्साधिकारः समाप्तः।

---

## अथ विषाधिकारमाह।

कुलीनं धार्मिकं स्निग्धं सुभृतं सततोत्थितम्।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम्॥ १॥
क्रोधपारुष्य मात्सर्य्य मदालस्य विवर्जितम्।
जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम्॥ २॥
मेधाविनमविश्रान्त मनुरक्तं हितैषिणम्।
पटुं प्रगल्भं निपुणं दक्षं मायाविवर्जितम्॥ ३॥
पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम्।
महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम्॥ ४॥
प्रशस्तदिग्देशकृतं शुचिभाण्डं महाशुचि।
सजालकं गवाक्षाढ्य माप्तवर्गनिषेवितम्॥ ५॥
विकक्षसृष्टसंसृष्टं सवितानं कृतार्चनम्।
परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम्॥ ६॥
माहानसिकबोढ़ारः सौपौदनिकपौपिकाः।

भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन ॥ ७ ॥

इति माड्ानसिकस्य लक्षणम् ।

अथ विषलक्षणमाह ।

स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते ।
मूलाद्यात्मकमाद्यं स्यात् परं सर्पादिसम्भवम् ॥ ८ ॥
स्थावरञ्च ज्वरं हिक्कां दन्तघर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासं मूर्च्छाञ्च कुरुते विषम् ॥ ९ ॥
निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम् ।
शोथं चैवातिसारञ्च कुरुते जङ्गमं विषम् ॥ १० ॥

अथ विषदातुर्लक्षणमाह ।

इङ्गितज्ञो मनुष्याणां वाक् चेष्टामुखवैकृतैः ।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ११ ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहुसङ्कीर्णं भाषते चापि मूढ़वत् ॥ १२ ॥
हसत्यकस्मात् स्फोटये दङ्गुलीर्विलिखेन्महीम् ।
वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते ॥ १३ ॥
विवर्णवक्त्रोध्यामश्च नखैः किञ्चिच्छिनत्त्यपि ।
वर्त्तते विपरीतश्च विषदाता विचेतनः ॥ १४ ॥

अथ विषयुक्तान्नपरीक्षाक्रममाह ।

नृपभुक्ते भुवि न्यस्ते क्रौञ्चश्च मदमिच्छति ।
हृष्येन्मयूरस्तद्दृष्ट्वा क्रोशतः शुकशारिके ॥ १५ ॥
हंसः क्रीड़ति चात्यर्थं भृङ्गराजस्तु कूजति ।
शुनको विसृजत्यसु विष्ठां मुञ्चति मर्कटः ॥ १६ ॥
उपक्षिप्तस्य चान्नस्य वाष्पान्यूर्ध्वं विसर्पते ।
हृत्पीड़ोष्णाश्च नेत्रत्वं शिरोदुःखञ्च जायते ॥ १७ ॥

अथ चिकित्सामाह।

तत्र स्यादञ्जने कुष्ठं लामज्जं नलदं मधु।
कुर्य्याच्छिरीषरजनीचन्दनैश्च प्रलेपनम्॥ १८॥
हृदि चन्दनलेपञ्च कृत्वा वै सुखमाप्नुयात्।
प्राणिप्राप्तं पाणिदाहं नखशान्तिं करोति च॥ १९॥
तत्र प्रलेपे श्यामेन्द्र गोपी श्यामोत्पलानि च।
स चेत्: प्रभवेत् मोह स्तदान्नमुपसेवते॥ २०॥
ततोऽस्याष्ठीलवज्जिह्वा भवत्यरसवेदनी।
तुद्यते दह्यते वापि श्लेष्मा चास्ये प्रवर्त्तते॥ २१॥
तत्र वाप्यं रितं कर्म यच्च स्याद्वातुकर्षितम्॥ २२॥
मूर्च्छाछर्दिभ्रमोदाहोह्यहन्यहनि एव च।
इन्द्रियाणां च वैकृत्यं कुर्य्यादामाशये मतम्॥ २३॥
तत्राशु मदनालावु विम्बघोषवतीफलैः।
छर्दनं दध्युदश्विद्भ्या मथवा तण्डुलाम्बुना॥ २४॥
कोशातक्यग्निकः पाठा सूर्य्यवर्णास्तताभया।
शैलं शिरीषकिणही हरिद्रे वृहतीद्वयम्॥ २५॥

अथ निदानमाह।

उद्वेष्टनं मूलविषैः प्रलापो मोह एव च।
जृम्भणं वेपनं श्वासो ज्ञेयं पत्रविषेण तु॥ २६॥
मुष्कशोथः फलविषैर्दाहोऽन्नद्वेष एव च।
भवेत् पुष्पविषैः छर्दिराध्मानं श्वास एव च॥ २७॥
त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि।
आस्यदौर्गन्ध्यपारुष्य शिरोरुक् कफसंस्रवाः॥ २८॥
फेनागमः क्षीरविषे विड्भेदो गुरुजिह्वता।
हृत्पीड़नं धातुविषे मूर्च्छादाहश्च तालुषु॥ २९॥
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्॥ ३०॥

अथ विषलिप्तशस्त्रहतस्य लक्षणमाह।

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्।
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्य्यते यस्य वापि ॥३१
तृष्णा मूर्च्छा ज्वरदाहौ च यस्य दिग्धाहतं तं मनुजं व्यवस्येत्।
लिङ्गान्येतान्येव कुर्य्यादमित्रैर्व्रणे विषं यस्य दत्तं प्रमादात् ॥३२

सवातं गृहधूमाभं पुरीषं योऽतिसार्य्यते।
फेनमुद्वमते चापि विषपीतं तमादिशेत् ॥ ३३ ॥

अथ जङ्गमविषलक्षणमाह।

वातपित्तकफात्मानो भोगिमण्डलराजिलाः।
यथाक्रमं समाख्याता द्व्यन्तरा द्वन्द्वरूपिणः ॥ ३४ ॥
दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत्।
पीतो मण्डलिनो शोथो मृदुः पित्तविकारवान् ॥ ३५ ॥
राजिलोत्थो भवेद्दंशो स्थिरशोथश्च पिच्छिलः।
पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारवान् ॥ ३६ ॥
लघ्वव्यक्तरसं सूक्ष्मं रूक्षोष्णाशु व्यवायि च।
विकासि विशदं तीक्ष्णं विषं दशगुणं स्मृतम् ॥ ३७ ॥
मघार्द्राकृत्तिकाश्लेषाभरणीषु प्रयत्नतः।
पूर्वासु मर्मदष्टस्य कस्यचिज्जीवनं भवेत् ॥ ३८ ॥
नवमी पञ्चमी षष्ठी तथा कृष्णचतुर्दशी।
चतुर्थी सन्धिके द्वे च दष्टो ह्यत्र न जीवति ॥ ३९ ॥

अथ सामान्यचिकित्सामाह।

चन्दनं वृषणच्छेद दाहस्रावाः प्रकीर्त्तिताः।
पूर्वं दष्टस्य पानञ्च हृदयावरणं घृतम् ॥ ४० ॥

अथ निदानमाह।

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु।
याम्ये च दष्टाः परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः ॥

दर्वीकराणां विषमाशुघाति सर्वाणि चोष्णे द्विगुणीभवन्ति॥४१
अजीर्णपित्तश्रमपीड़ितेषु बालेषु वृद्धेषु बुभुक्षितेषु।
क्षीणे क्षते मेहनि कुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि॥ ४२॥
शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति।
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम्॥ ४३॥
जिह्मं मुखं यस्य च केशशातो नासावसादश्च सकण्ठभङ्गः।
कृष्णः सरक्तः श्वयथुश्च दंशो हन्वोः स्थिरत्वञ्च स वर्जनीयः॥४४
वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्ध्वमधश्च यस्य।
दंष्ट्राभिघाताश्चतुरश्च यस्य स चापि वैद्यैः परिवर्जनीयः॥ ४५॥
उन्मत्तमत्यर्थमुपद्रुतञ्च हीनस्वरं वाप्यथवा विवर्णम्।
सारिष्टमत्यर्थमवेगिनञ्च जह्यान्नरं तत्र न कर्म कुर्य्यात्॥ ४६॥

अथ दूषीविषलक्षणमाह।

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा।
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति॥ ४७॥
वीर्य्याल्पभावान्न निपातयेत्तत्कफान्वितं वर्षगुणानुबन्धि।
तेनार्दितो भिन्नपुरीषवर्णो विगन्धवैरस्ययुतः पिपासी॥
मूर्च्छां भ्रमं गद्गदवाग्वमित्वं विचेष्टमानोऽरतिमाप्नुयाद्वा॥४८॥
आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी।
भवेत् समुद्धस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः॥४९॥
स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान्।
कोपञ्च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम्॥५०॥
निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्दम्।
ततः करोत्यन्नमदा विपाकावरोचकं मण्डलकोठजन्म॥ ५१॥
मांसक्षयं पादकरप्रशोथं मूर्च्छां तथा छर्दिमथातिसारम्।
दूषीविषं श्वासतृषाज्वरांश्च कुर्य्यात्प्रवृद्धिं जठरस्य चापि॥५२॥
उन्मादमन्यज्जनयेत् तथान्यदानाहमन्यत् क्षयते च शुक्रम्।

गद्गदत्वमन्यज्जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान् ॥५३॥
दूषितं देशकालान्न दिवास्वप्नैरभीक्ष्णशः ।
यस्मात् सन्दूषयेद्धातून् तस्माद् दूषीविषं स्मृतम् ॥ ५४ ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोषितम् ।
दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥ ५५ ॥

अथ गरविषमाह ।

सौभाग्यार्थं स्त्रियः स्वेदरजो नानाङ्गजान् मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥ ५६ ॥
तैः स्यात्पाण्डुः कृशोऽल्पाग्निः ज्वरश्चास्योपजायते ।
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥ ५७ ॥
जठरं ग्रहणी रोगो यक्ष्मगुल्मयकृज्ज्वराः ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि निर्दिशेत् ॥ ५८ ॥

अथ लूताविषनिदानमाह ।

यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदविन्दवः ।
तस्माल्लूताः प्रभाषन्ते संख्ययास्ताश्च षोड़श ॥ ५९ ॥
ताभिर्दष्टे दंशकोऽथ प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ६० ॥
पिड़िका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ॥ ६१ ॥
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्दिशेत् ॥ ६२ ॥
शोथाः श्वेताः सिता रक्ताः पीता सपिड़िका ज्वराः ।
प्राणान्तिकाः प्रजायन्ते श्वासहिक्काशिरोग्रहाः ॥ ६३ ॥

अथ आखुविषलक्षणमाह ।

आदंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।
रोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ ६४ ॥

मूर्च्छाङ्गशोथवैवर्ण्य क्लेदशब्दाश्रुतिज्वराः।
शिरोगुरुत्वं लालासृक् छर्दिश्चासाध्यमूषिकैः॥ ६५॥

अथ कृकलासदष्टलक्षणमाह।

कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव च।
व्यामोहो वर्चसो भेदो दष्टः स्यात् कृकलासकैः॥ ६६॥

अथ वृश्चिकादिदष्टानां लक्षणमाह।

दहत्यग्निरिवादौ तु भिनत्तीवोर्द्धमाशु च।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति॥ ६७॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्॥ ६८॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते॥ ६९॥
हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान्।
दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते॥ ७०॥
एकदष्टार्पितः शूनः सरुजः पीतकः सकट्।
छर्द्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम्॥ ७१॥
मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥ ७२॥
विदाहं श्वयथुं तोदं स्वेदञ्च गृहगोधिका।
दंशे स्वेदं रुजं दाहं कुर्य्याच्छतपदी विषम्॥ ७३॥
कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः।
असाध्यकीटसदृश मसाध्यं मशकक्षतम्॥ ७४॥
सद्यः प्रस्रावणी श्यावा दाहमूर्च्छा ज्वरान्विता।
पिड़िका मक्षिका दंशे तासान्तु स्थगिकाऽसुहृत्॥ ७५॥
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तविषञ्च यत्।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि॥ ७६॥

अथ अवतरितविषलक्षणमाह ।

प्रसन्नदोषं प्रकृतिस्थ धातुमन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ७७ ॥

अथ चिकित्सामाह ।

स्थावरेण विषेणार्त्तं नरं यत्नेन वामयेत् ।
वमनेन समं नास्ति यतस्तस्य चिकित्सितम् ॥ ७८ ॥
विषमत्यर्थमुष्णञ्च तीक्ष्णञ्च कथितं यतः ।
अतः सर्वविषेषूक्तं वातशीताम्बुसेवनम् ॥ ७९ ॥
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम् ।
यष्टीक्वाथेन शीतेन घृतं वा मधुना पिबेत् ॥ ८० ॥
अथवा गोपुरीषस्य रसेन मधुना सह ।
हृदयावरणं सर्पिर्गवां चैव प्रयोजयेत् ॥ ८१ ॥
रजनी सैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम् ।
पानं मूलविषार्त्तस्य दग्धविद्धस्य चेष्यते ॥ ८२ ॥
खादिते खाद्यमाने च खादितव्ये च यो विषे ।
अश्वगन्धा जटां भुङ्क्ते तत्र नैव विषं क्रमेत् ॥ ८३ ॥
तुल्याज्यमधुपानान्ते लघुकोष्टो घृतं पिबेत् ।
ततो निम्बाम्बुपानं वा कृत्रिमन्तु विनाशयेत् ॥ ८४ ॥

अथ निदानमाह ।

प्रायो वातोल्वणा भेक मूषपिङ्गाः सवृश्चिकाः ।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः ॥ ८५ ॥
यस्य यस्य च दोषस्य लिङ्गाधिक्यं प्रवर्त्तयेत् ।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम् ॥ ८६ ॥
हृत्पीड़ा चानलस्तम्भः शिरायामोऽस्थिपर्वरुक् ।
घूर्णनोद्वेष्टनं गात्रे व्यामता वातिके विषे । ८७ ॥
संज्ञानाशस्तु निःश्वासो हृद्दाहकटुकास्यता ।

दन्तावदरणं शोथो रक्तपित्तञ्च पैत्तिके ॥ ८८ ॥
छर्द्यरोचकहृल्लासप्रसेकक्लशगौरवैः ।
सशैत्यमुखमाधुर्य्यैर्विद्याच्छ्लेष्माधिकं विषम् ॥ ८९ ॥

अथ चिकित्सामाह ।

घृतेन बहुलो लेपस्तैलाभ्यङ्गश्च वातिके ।
स्वेदनाड़ीप्रलेपाद्यैर्बृंहणश्च हितो विधिः ॥ ९० ॥
सुशीतैस्तम्भयेच्छेकैः प्रदेहैश्चापि पैत्तिके ।
लेपनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ ९१ ॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ।
भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् ॥ ९२ ॥
तण्डुलीयकजीवन्तौ वार्त्ताकुः सुनिषण्णकः ।
मण्डूकपर्णी कुलकं शाकवर्गे च शस्यते ॥ ९३ ॥
हरेणुमुद्गौ यूषार्थमम्लार्थं धात्री दाड़िमम् ।
रसार्थञ्च प्रशस्ता वा लावतित्तिरपर्वताः ॥ ९४ ॥
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः ।
अविदाहीनि चान्नानि विषार्त्तानां च दापयेत् ॥ ९५ ॥
उष्णवर्ज्यो विधिः कार्य्यो विषार्त्तानां विजानता ।
मुक्त्वा कीटविषं तद्ध शीतेनातिप्रवर्द्धते ॥ ९६ ॥
दिवास्वप्नं व्यवायञ्च व्यायामं क्रोधमातपम् ।
सुरातिलकुलत्थांश्च वर्जयेच्च विषातुरः ॥ ९७ ॥

अथ जङ्गमविषचिकित्सामाह ।

सर्वैरेवादितः सर्पैः शाखादुष्टस्य देहिनः ।
बध्नीयाद्गाढ़मुपरि दंशन्तु चतुरङ्गुलम् ॥ ९८ ॥
प्लोतचर्मान्तवल्कानां मृदुनान्यतमेन च ।
न गच्छति विषं देह मरिष्टाभिर्निवारितम् ॥ ९९ ॥
दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते ।

आचूषणच्छेददाहाः सर्वत्रैव तु पूजिताः ॥ १०० ॥
प्रतिपूर्य्य मुखं वस्त्रैर्हितमाचूषणं भवेत् ।
स दष्टव्योऽथवा सर्पो लोष्टस्यापि हि तत्क्षणात् ॥ १०१ ॥
मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवम्
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।
दर्पादेव फणी यदा दशति तं मोहान्वितो निष्पतन्
स्थाने तत्र तदेव याति नियतं वक्त्रं यमस्याचिरात् ॥१०२॥
मसूरनिम्बपत्राभ्यां योऽत्ति मेषगते रवौ ।
अब्दमेकं न भीतिः स्याद्विषार्त्तस्य न संशयः ॥ १०३ ॥
श्लेष्मणः कर्णरूढ़स्य वामनासिकया क्षतः ।
लेपं हन्याद्विषं घोरं नृमूत्रसेवितं तथा ॥ १०४ ॥
कुलकमूलनस्येन कालदष्टोऽपि जीवति ॥ १०५ ॥
पिण्डीतगरकं नेत्रे पुष्पेणोत्पाद्य योजितम् ।
चालयत्यत्र नो चित्रं पुरुषं दष्टमृतं खलु ॥ १०६ ॥
शिरीषपत्रस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां नस्यपानाञ्जनैर्हितम् ॥ १०७ ॥
बन्ध्याकर्कोटमूलञ्च छागमूत्रेण भावितम् ।
नस्यं काञ्जिकसंपिष्टं विषोपहतचेतसः ॥ १०८ ॥
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेद्दधिघृतप्लुतम् ॥ १०९ ॥
श्लेष्मातकी कट्फलमातुलुङ्गश्वेता गिरिह्वा किणही सिता च ।
सतण्डुलीयोऽगद एष मुख्यो विषेषु दर्वीकरराजिलानाम्॥११०
निर्गुण्डीसहितं पानात् सद्यः फणिविषापहम् ।
स्वरसेनैव मूलञ्च भावितं सिन्धुवारिजम् ॥ १११ ॥
सैन्धवं मरिचं तुल्यं निम्बवीजसमं कृतम् ।
मधुसर्पिर्युतं हन्ति विषं स्थावरजङ्गमम् ॥ ११२ ॥

सचतुर्मरिचः कर्षः चाङ्गेर्याः सह सर्पिषा।
हन्ति पानप्रलेपाभ्यां चोग्रसर्पविषं भयम्॥ ११३॥
पारावतामिषं शुण्ठी पुष्कराह्वं सितं हितम्।
गरतृष्णारुचिश्वास कासहिक्कापहं परम्॥ ११४॥
द्राक्षाश्वगन्धानगमृत्तिका च श्वेता च पिष्टा सदृशैः स्वभागैः।
देयो विभागः सुरसाच्छदस्य कपित्थविल्वादपि दाड़िमाच्च।
एषोऽगदः क्षौद्रयुतो निहन्ति विशेषतो मण्डलिनां विषाणि ११५
प्रपौण्डरीकं सुरदारुमुस्ता कालानुसारी कटुरोहिणी च।
स्थौणेयकं ध्यामकगुग्गुलूनि पुन्नागतालीससुवर्चिकाश्च॥११६॥
कुटन्नटैलासितसिन्धुवारशैलेय कुष्ठं तगरं प्रियङ्गु।
लोध्राञ्जनं काञ्चनगैरिकञ्च समाश्वगन्धं त्वथ सैन्धवञ्च॥११७॥
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसंयुतानि।
एषोऽगदस्तार्क्ष्य इति प्रसिद्धो विषं निहन्यादपि तक्षकस्य ११८
इति तार्क्ष्योऽगदः।

त्रिवृद्विशाले मधुकं हरिद्रे मञ्जिष्ठवर्गो लवणाश्च सर्वे।
कटुत्रिकं चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि॥ ११९
अयं गदो हन्त्युपयुज्यमानः पानाञ्जनाभ्यञ्जननस्ययोगैः।
अवार्य्यवीर्य्यो विषवेगहन्ता महागदो नाम महाप्रभावः॥१२०
इति महागदः।

विल्वपुष्पत्वचौ मांसी फलिनी नागकेसरम्।
शिरीषं तगरं कुष्ठं हरितालं मनःशिला॥ १२१॥
एतानि समभागानि पेषयेत् सलिलेन तु।
समभ्यज्य ततो गात्रं सर्पदष्टार्त्तिदारुणः॥ १२२॥
विषान् वा भक्षयेदुग्रान् गरांश्च विविधान् हरेत्।
कन्यासंवरणं गच्छेद्युद्धे देवासुरोपमः॥ १२३॥
राजद्वारेषु सर्वेषु धूपश्चैवापराजितः।

बृहस्पतिरिति प्रोक्तो ब्रह्मणा निर्मितः स्वयम् ॥ १२४ ॥
नाग्निर्दहति तद्वेश्म प्रभवन्ति न राक्षसाः ।
न म्रियन्ते तथा बाला दशाङ्गो यत्र तिष्ठति ॥ १२५ ॥

इति दशाङ्गोऽभ्यङ्गो धूपश्च ।

वटशुङ्गं समञ्जिष्ठं जीवकर्षभको सिता ।
काश्मर्य्यमुदकं चैव पानं मण्डलदष्टके ॥ १२६ ॥
कौन्ती कुष्ठं नतं व्योषं मधुकातिविषा मधु ।
गृहधूमश्च पानेन घ्नन्ति सर्पभवं विषम् ॥ १२७ ॥
मांसीचन्दनसिन्धूत्थ कृष्णा यष्ट्यूषणोत्पलैः ।
अञ्जनं स्यात् सगोपित्तं विषसुप्तस्य बोधनम् ॥ १२८ ॥
नक्तमालफलं व्योषं विल्वमूलं निशाद्वयम् ।
सौरसं पत्रमाजञ्च मूत्रं बोधनमञ्जनम् ॥ १२९ ॥
वीजकल्कं ससिन्धूत्थं मयूरकशिरीषयोः ।
नस्यं यवफलं बीजं सपाठं वा प्रबोधकम् ॥ १३० ॥
सम्यङ्मधूकसारेण गोमूत्रे भावितेन तु ।
दद्याद्विषहरं नस्यं सिध्मघ्नञ्च प्रलेपनम् ॥ १३१ ॥
मयूरपित्तेन च तण्डुलीयकं काकाण्डयुक्तं प्रपिवेदनल्पम् ।
विषाणि च स्थावरजङ्गमानि सोपद्रवाण्यप्यचिरेण हन्ति ॥१३२
शिरीषारिष्टनक्ताह्व त्वक्कोशातकीकट्फलैः ।
हन्ति गोमूत्रसंपिष्टैः विषं स्थावरजङ्गमम् ॥ १३३ ॥
वचोषणशिलादारु नक्ताह्व द्विनिशाञ्जनम् ।
शिरीषपिप्पलीयुक्तं गरदोषनिसूदनम् ॥ १३४ ॥
तिक्ततुम्बीजवीजानि गोपित्तेन प्रलेपयेत् ।
एष सर्वविषध्वंसो ब्रह्मपुत्रादिनाशनः ॥ १३५ ॥
मूलत्वक्पत्रपुष्पाणि वीजञ्चेति शिरीषतः ।
गवां मूत्रेण संपिष्टं भेषजं विषवारणम् ॥ १३६ ॥

मञ्जिष्ठैला निशा द्राक्षा मांसी यष्टी हरेणुका।
क्षौद्रं चेति विषघ्नोऽय मगदः कौशिकोऽब्रवीत्॥ १३७॥
लवणानि त्रिवृद्दन्ती विशाला त्र्यूषणं निशा।
मञ्जिष्ठा मधुकं शृङ्गं ह्यगदः सर्वकर्मकृत्॥ १३८॥
चन्दनञ्च शिलाकुष्ठ त्वक्पत्रैलाब्दसर्षपाः।
मांसी पद्मकवल्लाहक् सुरभीभवरोचना॥ १३९॥
सूक्ष्मा हिङ्गुवलामज्ज शतपुष्पा प्रियङ्गवः।
पिष्ट्वा सर्वविषोन्माथी नाम्ना चन्द्रोदयोऽगदः॥ १४०॥

इति चन्द्रोदयोऽगदः।

श्यामेभ पाटली कृष्णा मञ्जिष्ठा किणही शिला।
कोविदारोषणे चक्रं निशे दध्यपराजितम्॥ १४१॥
बृहती मधुकञ्चैव गोमूत्रेण प्रपेषयेत्।
एष सूर्य्योदयो नाम्ना विषरक्षामयोऽगदः॥ १४२॥

इति सूर्य्योदयोऽगदः।

अपामार्गस्य वीजानि शिरीषस्य तथैव च।
द्वे मेदे काकमाची च गवां मूत्रेण पेषयेत्॥ १४३॥
सर्पिरेतेषु संसिद्धं विषसंशमनं परम्।
अमृतं नाम विख्यात मपि सञ्जीवयेन्मृतम्॥ १४४॥

इति अमृतघृतम्।

नागदन्ती त्रिवृद्दन्ती स्नुक्पयः पलिकैः समैः।
गवां मूत्राढ़के सिद्धं सर्पिः सर्वविषापहम्।
सर्पकीटविषार्त्तानां गरार्त्तानाञ्च शस्यते॥ १४५॥

इति नागदन्त्याद्यं घृतम्।

तण्डुलीयकमूलेन गृहधूमेन चैकतः।
क्षीरेण सघृतं सिद्धं समस्तं विषरोगनुत्॥ १४६॥

इति तंडुलीयघृतम्।

मधुकं तगरं कुष्ठं भद्रदारु हरेणवः ।
पुन्नागमेलवालूकं नागपुष्पोत्पलं सिता ॥ १४७ ॥
विडङ्गं चन्दनं पत्रं प्रियङ्गु ध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च शारिवांशुमती बला ॥ १४८ ॥
कल्कैरेतैर्घृतं सिद्ध मजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् ॥ १४९ ॥

इति अजेयघृतम् ।

सरोध्रमभयाकुष्ठ मर्कपुष्पीं तथोत्पलम् ।
नलवेतसमूलानि सरलं सुरसां तथा ॥ १५० ॥
सकालिन्दीं समञ्जिष्ठा मनन्तां सशतावरीम् ।
शृङ्गाटकं समङ्गाञ्च पद्मकेसरमित्यपि ॥ १५१ ॥
कल्कीकृत्य पचेत्सर्पिः पयो दत्त्वा चतुर्गुणम् ।
सम्यक् पक्वेऽवतीर्णे च सृतशीते विनिक्षिपेत् ॥ १५२ ॥
सर्पिस्तुल्यं भिषक् चौद्रं कृतरक्षं निधापयेत् ।
विषाणि हन्ति दुर्गाणि जङ्गमस्थावराणि च ॥ १५३ ॥
कृत्रिमाणि च यावन्ति गरदोषकृतानि च ।
स्पर्शादेव विषं हन्ति गरैरुपहतत्वचम् ॥ १५४ ॥
योगोऽयं तमकं कण्डूं मांसादञ्च विसंज्ञताम् ।
नाशयत्यञ्जनाभ्यङ्ग पानवस्तिषु भोजने ॥ १५५ ॥
सर्पकीटाखुलूताभिदंष्टानां विषशुत्परम् ।
मृत्युपाशहरं नाम घृतमेतत् प्रकीर्त्तितम् ॥ १५६ ॥

इति मृत्युपाशापहं घृतम् ।

अथ दूषीविषचिकित्सामाह ।

दूषीविषार्त्तं सुस्विन्नमूर्द्ध चाधश्च शोधितम् ।
पाययेदगदं मुख्य मिदं दूषीविषापहम् ॥ १५७ ॥
पिप्पली ध्यामकं मांसी लोध्रमेला सुवर्चला ।

बालकं परिपेला च तथा कनकगैरिकम् ॥ १५८ ॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति।
दूषीविषारिनामायं न कैश्चिदपि बाध्यते ॥ १५९ ॥

इति दूषीविषचिकित्सा।

अन्यैरुपविषैस्तीव्रैरेकीकृत्वा तु भूरिभिः।
कालान्तरजिघांसायै क्रियते च गरस्तु तत् ॥ १६० ॥
घृणालस्यारुचिश्वासां स्ततो वै चाग्निमार्दवम्।
अविपाकाबलत्वञ्च कुर्य्यादुपचितो गरः ॥ १६१ ॥
अङ्कोटमूलं निःक्वाथ्य सफाणितघृतं लिहेत्।
तैलाक्तः स्विन्नसर्वाङ्गो गरदोषविषापहम् ॥ १६२ ॥
शर्कराक्षौद्रसंयुक्तं चूर्णं ताम्रसुवर्णयोः।
लेहः प्रशमयत्युग्रं नानायोगकृतं विषम् ॥ १६३ ॥
वृषनिम्बपटोलानां क्काथेनापि पचेद् घृतम्।
अभयागर्भितं तोय मेतदारोग्यदं परम् ॥ १६४ ॥

इति वृषाद्यं घृतम्।

रजनीद्वयमञ्जिष्ठा पतङ्गगजकेशरैः।
शीताम्बुपिष्टैरालेपः सद्यो लूतां विनाशयेत् ॥ १६५ ॥
कटभ्यर्जुनशैरीष शैलुक्षीरीद्रुमत्वचः।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ १६६ ॥
चन्दनं पद्मकं कुष्ठं नतं चोशीरपाटले।
निर्गुण्डीशारिवाशैलुलूताविषहरोऽगदः ॥ १६७ ॥
चन्दनं पद्मकोशीरं शिरीषं सिन्धुवारिणा।
क्षीरशुक्ता नतं कुष्ठं शारिवोदीच्यपाटलाः ॥
शैलुम्बरी च पिष्टोऽयं लूताया विषनाशनः ॥ १६८ ॥
फलिनीद्विनिशाक्षौद्र सर्पिर्भिः पद्मकाह्वयैः।
अशेषकीटलूताना मगदः सर्वकामिकः ॥ १६९ ॥

करञ्जार्कपयो वाजिमारकैः सविषानलैः ।
साक्षोटस्वरसैः सिद्धं तैलं लूताव्रणापहम् ॥ १७० ॥

इति लूताविषचिकित्सा ।

छर्दनं जालिनीक्वाथैः शुकाख्याङ्कोटयोरपि ।
विरेचने त्रिवृद्दन्ती त्रिफलाकल्क इष्यते ॥ १७१ ॥
शिरीषस्य च मूलं वा सक्षौद्रं तण्डुलाम्बुना ।
अङ्कोटकस्य वा मूलं वस्तमूत्रेण कल्कितम् ॥
पानालेपनयोरुक्तं सर्वाखुविषनाशनम् ॥ १७२ ॥
विशालाङ्कोटमूलञ्च तिलमूलं सितामधु ।
घृतेनाखुविषं हन्ति पीतमात्रञ्च दुस्तरम् ॥ १७३ ॥
कुसुम्भपुष्पगोदन्त स्वर्णक्षीरीकपोतविट् ।
दन्तीत्रिवृत्सैन्धवैला किणिही फाणितं तथा ॥
क्षीरेणाखुविषं हन्ति पीता तिलकमञ्जरी ॥ १७४ ॥
त्रिकटुकाद्यश्च हितो गोमयस्वरसोऽञ्जने ।
कपित्थगोमयरसो सक्षौद्रो लेह इष्यते ॥ १७५ ॥
मार्जारकस्य पित्तेन पीतो मांसरसोऽसृजा ।
सोपद्रवमपि क्षिप्रं जयेन्मूषकजं विषम् ॥ १७६ ॥
गवाक्षीविल्वकाकोल तिलमूलाः सशर्कराः ।
मध्वाज्यसंयुताः पीताः मूषिकविषनाशनाः ॥ १७७ ॥
विल्वकाकोलयोर्मूलं गिरिकर्ण्यास्तिलस्य च ।
एतेषां मधुसर्पिर्भ्यां पानमाखुविषापहम् ॥ १७८ ॥
तण्डुलीयकमूलेन सिद्धं सर्पिः पिबेन्नरः ।
मूषिकाणां विषं तेन नाशमायाति सत्वरम् ॥ १७९ ॥

इति आखुविषचिकित्सा ।

दंशस्त्वलर्कदष्टस्य दुग्धयुक्तेन सर्पिषा ।
प्रसिञ्चयादगदैस्तैस्तैः पुराणञ्च घृतं पिबेत् ॥ १८० ॥

मूलस्य शरपुङ्खायाः कर्षं धत्तूरकान्वितम्।
सतण्डुलोदकैः पिष्ट्वा छायोन्मत्तभवैर्दलैः॥
पक्कालर्कविषेणार्त्तः खादेत्तद्विषनाशनम्॥ १८१॥
पिबेद्धत्तूरकशिखां क्षीरेण परिपेषिताम्।
अङ्कोलवंशजां वापि श्वविषघ्नीं प्रयत्नतः॥ १८२॥
काकोदुम्बरमूलन्तु धत्तूरफलकान्वितम्।
पिबेत्तण्डुलतोयेन सारमेयविषापहम्॥ १८३॥
अङ्कोटोत्तरमूलोत्थं कषायस्य पलद्वयम्।
सर्पिषश्च पलं पीत मलर्कविषनाशनम्॥ १८४॥
रसेनोषणवैदेही वचागोपित्तकल्किताः।
पाननस्याञ्जनालेपैः श्वदंष्ट्राविषहाः पराः॥ १८५॥
जलवेतसवृक्षस्य मूलं कुष्ठं पचेज्जले।
सक्काथः शीतलः पेयः परश्च विषनाशनः॥ १८६॥

इति अलर्कविषचिकित्सा।

सद्यो वृश्चिकजं दंशं चुक्रतैलेन सेचयेत्।
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा॥ १८७॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा॥ १८८॥
शिखिकुक्कुटवर्हाणि सैन्धवं तिलसर्पिषा।
धूपो हन्ति प्रयुक्तस्तु कीटवृश्चिकजं विषम्॥ १८९॥
घृतेन सैन्धवं पीत्वा वृश्चिकस्य विषं जयेत्॥ १९०॥
तालनिम्बदलं केशाजीर्णाश्च लवणं घृतम्।
धूपो वृश्चिकविद्धस्य शिखिपत्रं घृतेन वा॥ १९१॥
अर्कक्षीरेण संपिष्टं लेपाद्बीजं पलाशजम्।
वृश्चिकार्त्तिं हरेत् कृष्णा सशिरीषफला तथा॥ १९२॥
मनोह्वासैन्धवं हिङ्गु जातीपत्रं सनागरम्।

गोशकृद्रससंपिष्टं गुटिका वृश्चिकार्त्तिनुत् ॥ १९३ ॥
जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो वृश्चिकार्त्तानां प्रलेपो मधुना सह ॥ १९४ ॥
गन्धमाघ्राय मृदितसूर्य्यावर्त्तदलस्य च ।
वृश्चिकैर्व्यधितो जन्तुः चणाद्भवति निर्विषः ॥ १९५ ॥
कासमर्दकपत्रञ्च मूलञ्च कुशकाशयोः ।
चर्वयित्वा च फूत्कारः कर्णे वृश्चिकजं हरेत् ॥ १९६ ॥
पारावत शकृत्पथ्या तगरं विश्वभेषजम् ।
वीजपूररसोपेतः परमो वृश्चिकागदः ॥ १९७ ॥

इति वृश्चिकविषचिकित्सा ।

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।
रजन्यौ गैरिकालेपो नखदन्तविषापहः ॥ १९८ ॥
शमीनिम्बजटापत्रवल्कलैः क्वथितैर्जलैः ।
नखदन्तचतं पुंसां नाशाय परिषेचयेत् ॥ १९९ ॥
मञ्जिष्ठापद्मकोशीरै धान्यकैः परिपेषितैः ।
सघृतैर्लेपनं दद्या न्नखदन्तविषापहम् ॥ २०० ॥
द्विनिशागैरिकालेपो नखदन्तविषापहः ।
गोजिह्वामधुना लेपो नखदन्तविषप्रणुत् ॥ २०१ ॥

इति नखदन्तजं विषम् ।

लेपः प्रदीप्ततैलेन खर्जूरविषनाशनः ।
हरिद्राद्वयलेपो वा सगैरिकमनःशिलः ॥ २०२ ॥
कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम् ।
अगदो जलपिष्टोऽयं शतपद्विषनाशनः ॥ २०३ ॥
कृष्णवेत्रस्य निःक्वाथः कल्को वा घृतमिश्रितः ।
शृङ्गीमत्स्यविषं हन्ति धूमो वा वर्हिपचजः ॥ २०४ ॥
कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥ २०५ ॥

शिरीषकटभीपार्थ शैलुच्चीरिद्रुमत्वचः।
विषं जलौकसां घ्नन्ति प्रयुक्ताः पानलेपयोः ॥ २०६ ॥
इति जलौकोविषचिकित्सा।

कीटघ्नन्तुलसीमूलं पीतं यष्टीसुकल्कितम्।
मेघनादवृहन्मूलं तथा गव्येन सर्पिषा ॥ २०७ ॥
च्चीरिवृच्चत्वचालेपः कीटदष्टविषापहः ॥ २०७ ॥
हिङ्गुकुष्ठनतव्योष 'पाठाजन्तुघ्नसैन्धवैः।
सच्चारातिविषैस्तुल्यै र्लेपः कीटविषप्रणुत् ॥ २०८ ॥
लाङ्गलीनिर्विषालावू जालिनीमूलवीजकैः।
लेपो धान्याम्बुना पिष्टः पिण्डिका कीटनाशनः ॥ २१० ॥
वचाहिङ्गुविड़ङ्गानि सैन्धवं गजपिप्पली।
पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २११ ॥
इति कीटविषचिकित्सा।

पिप्पलिकाभिर्दंष्टानां मच्चिकामशकैस्तथा।
गवां मूत्रयुतो लेपः कृष्णवल्मीकमृत्कृतः ॥ २१२ ॥
दत्त्वा गुग्गुलुधूपं कोमलरविपत्रपिण्डिका सघृता।
बद्धा च्चतेऽतिलोहितकाचण्डादंशविकृतिहरी ॥ २१३ ॥
सर्जरसेन सेको सन्दंशेनापि कण्टकोद्धरणम्।
वरटीदंष्ट्रविषस्य प्रशमनमेतद्द्वयं दृष्टम् ॥ २१४ ॥
मरिचं नागरोपेतं सिन्धुसौवर्चलान्वितम्।
फणिज्जकरसं हन्याल्लेपनाद्वरटीविषम् ॥ २१५ ॥
शतपुष्पासमायुक्तं सैन्धवं परिपेषितम्।
सघृतं लेपनं दद्यान्मच्चिकाविषनाशनम् ॥ २१६ ॥
केशरं तगरं शुण्ठी मरिचञ्च प्रलेपनात्।
मच्चिकादंशजा पीड़ा नाशं याति ध्रुवं नृणाम् ॥ २१७ ॥
इति मच्चिकविषचिकित्सा।

स्नुक्‌क्षीरपरिपिष्टेन वीजेन परिलेपनम्।
शिरीषस्य व्रजत्यस्तं विषं दर्द्दुरजं क्षणात्॥
दुर्व्वारापि व्यथा क्षिप्रं मत्स्यदंशात्तु तत्क्षणात्॥ २१८॥
अङ्कोटपत्रधूपेन धूपिता संप्रशाम्यति।
कटुतैलसक्तुकेशानां धूपाद्दंशस्य च व्यथा॥ २१९॥
यवतिक्ततैललेपान्मीनजस्य विनश्यति॥ २२०॥

इति मत्स्यविषचिकित्सा।

वृकव्याघ्रतरक्षुर्क्षं शृगालहयशृङ्गकैः।
दष्टानां तत्क्षणात्तैलमक्षणञ्च चिकित्सितम्॥ २२१॥
घण्टावीजस्य पत्रं वा मूलं पिष्टं प्रलेपनात्।
निहन्ति शूकजं घोरं विषं कूष्माण्डपत्रकम्॥ २२२॥
सेक्षुसर्जरसोपेतं सर्षपापत्रकैः सह।
सुवर्णभास्करतरोः कुसुमैरर्जुनस्य च॥
धूपो वा धूपितो हन्ति विषं स्थावरजङ्गमम्॥ २२३॥
न तत्र कीटा न विषा दर्दुरा न सरीसृपाः।
न कृत्यकर्म तत्र स्या द्धूपोऽयं यत्र दह्यते॥ २२४॥
विल्वाढ़कीयवक्षार पाटलावह्लिकोत्पलम्।
श्रीपर्णीशाल्मलीयुक्ता निःक्वाथ्य प्रोक्षणं परम्॥
नरः प्रोक्षणितस्तेन सद्यो भवति निर्विषः॥ २२५॥
छत्रीसर्जरसश्चैव भवेद्रात्रौ तथा दिवा।
तच्छाया शब्दवित्रस्ताः प्रणश्यन्ति हि पन्नगाः॥ २२६॥

असाध्यलक्षणमाह।

सोत्कम्पं पुलकावृतं प्रतिमुहुर्वक्त्रं समालोकते।
दन्तेनाधरपल्लवं दशति चेच्छीतान्वितः कूजति॥
यस्तापं जहतामुपैति नितरामन्तश्च सोत्कण्ठते।
तद्गस्मा स्थि सितामलाम्बरवती रौद्री श्मशानस्थली॥२२७॥

नेत्रे शुक्लतरे च यस्य यदि वा मृत्युं व्रजेद्दंशकः
सन्ध्यायाञ्च सुरेन्द्रगोपसदृशे रात्रौ च नीलप्रभे।
दंशे रक्तजलाविलेऽतिसुभगे भक्तं न किञ्चिद्विशो
मात्रं मालभते तदेव नियतं पित्रालयं गच्छति॥ २२८॥
नासावर्त्म विहाय यस्य पवनो वक्त्रेण याति द्रुतम्।
नेत्रे याति विकासिते वहति यो ग्रीवाञ्च वक्रामलम्॥
चन्द्रं पश्यति भानुबिम्बसदृशं सूर्य्यं शशाङ्काकृतिम्।
दष्टो याति स एव गेहमचिरात् कालाभिधानस्य वै॥ २२९॥
विरुद्धाध्यशनक्रोध क्षुद्भयायासमैथुनम्।
वर्जयेद्विषजुष्टोऽपि दिवास्वप्नं विशेषतः॥ २३०॥

इति श्रीवङ्गसेनसङ्कलित विषनिदानचिकित्साधिकारः समाप्तः।

---

## अथ जलदोषादियोगाधिकारमाह।

भोजनादौ तु सम्भुङ्क्ते शुण्ठिराज्यभयोत्थितम्।
कल्कन्तु सहते नित्यं नानादेशोद्भवं जलम्॥ १॥
महार्द्रकयवक्षारौ पीत्वा चैवोष्णवारिणा।
नानादेशोद्भवञ्चैव वारिदोषमपोहति॥ २॥
नागरङ्गफलचोचमातपे शोषितं तदनुचूर्णितमेकम्।
कर्षमात्रमुपयुज्य गुडेन वारिकर्म कुरुते न कदापि॥ ३॥
यो लेढ़ि शयनसमये मधुमिश्रं बीजपूरदलचूर्णम्।
स च पीड़ाकरवातप्रसरनिरोधात् सुखं स्वपिति॥ ४॥
दत्त्वैव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम्।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये॥ ५॥
भूयः स्वार्त्तवशोणित भावितगोरोचनरचिततिलकानि।
कृत्वा नारी यं यं पश्यति पुरुषं तं तं वशीकुरुते॥ ६॥
सुरदारुशर्वरीद्वयकमलोद्भवकेशरैः कृतो लेपः।

दुर्जययोषिद्विहितो रुचिकर इति गीयते बहुभिः ॥ ७ ॥
जम्बूधातकिपर्णैस्तद्भवकल्कैश्च धूपितो योनिः ।
त्यजति समस्तविकारं जन्मान्तरसञ्चितञ्चापि ॥ ८ ॥
नालसमेतं कमलं पिष्ट्वा क्षीरेण वर्त्तिता गुटिका ।
योषिद्योनौ विहिता तदेव कन्याकरं चित्रम् ॥ ९ ॥
तालकचन्दन सहितं कुटजकदम्बोद्भवं फलं पिबति ।
आसवमिश्रं कान्ता या सा वन्ध्या भवेन्नियतम् ॥ १० ॥
एकं माक्षिकमिश्रं लेपात्कोशातकीभवं चूर्णम् ।
योन्यां वराङ्गपाते कुरुते रेतः स्रुतिस्तस्याः ॥ ११ ॥
पथ्योपभोगविधिना परितः संवेष्ट्य वाससा त्रिवृताम् ।
विहिता जलौका योनौ पातस्तनयोः कदापि न स्यात्॥१२
चूर्णं हयगन्धाया सितया सहितञ्च सर्पिषा लीढ़म् ।
विदधाति नष्टनिद्रे निद्रामाश्वेव सिद्धमिदम् ॥ १३ ॥
किमत्र चित्रं यदि वज्रपर्णीवचाश्वगन्धा जलशूकचूर्णम् ।
अन्तर्विदग्धं नवनीतमिश्रं करोति मेढ्रं गजमेढ्रतुल्यम् ॥१४॥
शुष्कशिराजं मूलं दृढ़मङ्गुल्या निपीड्य रतिकाले ।
चिन्तान्तरनिहितमनास्तम्भी रेतः च्युतिं जयति ॥ १५ ॥
शुष्केन्दीवरकुसुमं तण्डुलसहितं सदा शितं सायम् ।
तनुते सुगन्धिवदनं विकसितनीलोत्पलामोदम् ॥ १६ ॥
कोमलवरुणजपत्रं करमृदितं सदा स्तने निहितम् ।
तद्गतपुंसां वृद्धिं हरिद्रुतसिद्धमिदं दृष्टम् ॥ १७ ॥
कच्छपमस्तकचरणं तिलजे सिद्धं विनाशयत्यचिरात् ।
धातुक्षीणं षण्ड‍ं कुरुते बलं रतौ तथोग्रम् ॥ १८ ॥
शमयति गोक्षुरचूर्णं छागक्षीरेण साधितं समधु ।
भुक्तं क्षपयति षाण्ड्यं यज्जनितं प्राक् प्रयोगेण ॥ १९ ॥
निर्गुण्डिकनकवाशा श्रीफलामलकासनोत्थपत्राणि ।

गन्धर्वहस्तमूलं दूर्वा कुसुमं तथा रजनी ॥ २० ॥
सिद्धार्थैडगजत्वगिति समभागं प्रक्षिप्य नवनीते।
उद्वर्त्तनं विधेयं सततं बलिनाशनं दृष्टम् ॥ २१ ॥

इति श्रीवङ्गसेनसङ्कलितः जलदोषवीर्य्यस्तम्भादियोगाधिकारः समाप्तः।

---

## अथ रसायनाधिकारमाह।

माषस्याढ़कमादाय जलद्रोणे विपाचयेत्।
अर्द्धांशशेषं तत्पूतं दत्त्वा चेक्षुरसं ततः ॥ १ ॥
आर्द्रकस्य रसञ्चैव प्रस्थत्रयसमन्वितम्।
संयोज्यमेकतः कृत्वा स्थापयेद्भाजने दृढ़े ॥ २ ॥
त्रिरात्रे पञ्चरात्रे वा माषचूर्णं विनिक्षिपेत्।
मासेन तज्जातरसं दशरात्रं स्थितं तथा ॥ ३ ॥
शुक्तञ्च तत्प्रयोज्यं स्यात्तैले वस्तौ घृतेऽपि वा।
एतच्छुक्तं प्रशंसन्ति मन्दाग्नेर्दीपनं परम् ॥ ४ ॥

इति शुक्तम्।

जम्बीरस्य फलरसं पिप्पलीमधुसंयुतम्।
मधुभाण्डे विनिक्षिप्य रसार्द्धं तत्पिधापयेत् ॥
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ ५ ॥

इति मधुशुक्तम्।

गुड़मधुकाञ्जिकतक्रं यथोत्तरं द्विगुणभागसंवृद्धम्।
न्यस्तन्तु धान्यराशौ त्रिदिवसमिति भवेच्छुक्तम् ॥ ६ ॥

इति गुड़तक्रम्।

पिप्पलीक्षीरसंसिद्धं सर्वरोगहरं घृतम्।
कालीयकहरिद्राभ्यां कामलामेहनुत्परम् ॥ ७ ॥
बृहतीरसकल्काभ्यां दुष्टकासक्षयापहम्।

गुडूचीरसकल्काभ्यां वातरक्तविकारनुत् ॥ ८ ॥
खदिराष्टकसंसिद्धं श्वित्रकुष्ठविसर्पनुत् ।
मृद्वीकारसकल्काभ्यां रक्तपित्तज्वरान्तकृत् ॥ ९ ॥
पिप्पल्यादिघृतं षट्कं वैदेहाधिपकीर्त्तितम् ॥ १० ॥
आनूपजो रसो मज्जा वसातैलं नवं घृतम् ।
रसक्षीरं पचेत्सम्यगवाप्य मधुरं गणम् ॥ ११ ॥
अश्वगन्धामपामार्गं तथा लाक्षारसं समम् ।
अथ सिद्धञ्च पूतञ्च स्वानुगुप्तं निधापयेत् ॥ १२ ॥
तेनाभ्यङ्ग्य सदा कर्णपालिञ्च सुप्रमर्दयेत् ।
अनेन पाल्यो वर्द्धन्ते नीरुजा निरुपद्रवाः ॥
मृदुपुष्पसमाः स्निग्धा जायन्ते भूषणक्षमाः ॥ १३ ॥

इति पालिवर्द्धनचतुःस्नेहः ।

अथ शिवगुटिका ।

शिलाजतु षोडशपलं त्रिस्त्रिवारं विभावयेत् ।
बलाया दशमूलस्य गुडूच्याः कर्कटस्य च ॥ १४ ॥
वराया मधुयष्ट्याश्च रसमध्ये च वारिणा ।
क्षीरे सकृत् क्रमेणैव सप्त कृत्वा ततो द्रुतम् ॥ १५ ॥

काकोलियुग्मघनपुष्करवह्निरास्ना
मेदायुगर्द्धिचविकागजपिप्पलीनाम् ।
पाठाद्विजीरकनिकुम्भविदारियुग्म-
वीरावरीमधुपलांशुमतीद्वयानाम् ॥ १६ ॥

पलिकानामपां द्रोणे सिद्धानां पादशेषिते ।
क्वाथे भावितमित्थं वा गिरिजं द्विपलञ्च तत् ॥ १७ ॥
युञ्ज्यात्कर्कटशृङ्गीधात्री व्योषतालीसकुड़वेन ।
चूर्णपलेन विदार्य्यास्त्वक्क्षीर्य्या वा कर्षयुग्मेन ॥ १८ ॥
द्विपलेन चतुर्जाता तैलघृतक्षौद्रशर्कराभिश्च ।

तद्विपलाद्विगुणाभिः कुर्य्याद् गुटिका ततोऽचसमाः ॥ १९ ॥
ताः सिद्धा नवकुम्भे शुष्के जातिपुष्पाधिवासिते स्थाप्याः।
तासामेकां खादेत्प्रतिदिनमनुपानं पेयञ्च ॥ २० ॥
चीररसदाड़िमाम्बः शीतजलमधुरासवान्यतमम्।
जीर्णान्ने लघु भोज्यं यूषः पयांसि पिशितनिर्यूहैः ॥ २१ ॥
सप्ताहमात्रमेवं सामान्यमतः क्रमं भवेत्परितः।
भुक्तस्यान्ते प्राग्वा गुटिका न विरुध्यते चैषा ॥ २२ ॥
निष्पापा भूरिफला परिहार सुखोपयोजिता जयति।
प्रबलवातशोणित मूरुस्तम्भं ज्वरं दीर्घम् ॥ २३ ॥
मलमूत्रशुक्रदोषान् प्लीहार्शः पाण्डुहृद्यकृद्दोषान्।
व्रध्नं वमिगुल्मपीनस हिक्काकासारुचिश्वासान् ॥ २४ ॥
विद्रधिमुदरं कृच्छ्रं श्वित्रं षण्ढं चयं मदं मूर्च्छाम्।
उन्मादमपस्मारं मुखरोगशिरोगदस्तम्भान् ॥ २५ ॥
आनाहमतीसारं हलीमककामलाग्रहणीरोगान्।
ग्रन्थ्यर्बुदांश्च पिण्डिकाभगन्दरं गण्डमालाञ्च ॥ २६ ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमतिश्लीपदं गुदे कीलान्।
दंष्ट्राविषं समूलङ्गरप्रयोगान् सुघोरांश्च ॥ २७ ॥
मन्त्रौषधिप्रयोगान् विप्रमुक्तान् भौतिकांस्तथा भावान्।
पाप्मालक्ष्मी चेयं गुटिका शिवा नाम्ना प्रथिता ॥ २८ ॥
वृष्या बल्या धन्या कान्ति यशः श्रीवर्द्धनी मेध्या।
कुरुते स्त्रीवल्लभतां जयं विवादे सुखस्याञ्च ॥ २९ ॥
वलीपलितरोगरहितो ना भवति गात्रं सुबद्धमति चैव।
वर्षद्वयप्रयोगाद्वर्षशतचतुष्टयं जीवेत् ॥ ३० ॥

इति बृहच्छिवागुटिका।

अथ गुग्गुलुरसायनमाह।

त्रिफलाशनखदिरामृतवर्षाभूभृङ्गगोक्षुरक्काथे।

साद्धाढ़के तु गुग्गुलु पलानि त्रिंशच्च लेहवद्विपचेत् ॥३१॥
मधुघृतसिताविमिश्रं लिहेन्नरः कान्तिबलबुद्धियुक्तः।
तथा गदैर्विमुक्तो जीवति संवत्सरांस्त्रिशतान् ॥ ३२ ॥

अथ गन्धककल्पमाह।

चूर्णीकृत्य पलानि पञ्च नितरां गन्धाश्मनो यत्नतः
तच्चूर्णं त्रिगुणे च मार्कवरसे छायाविशुष्कीकृतम्।
पथ्याचूर्णमथो तथा मधुघृतं प्रत्येकमेकं पलम्
वृद्धो यौवनमेति प्राश्य युगलं खादेन्नरः प्रत्यहम् ॥ ३३ ॥

अथ गन्धकरसायनम्।

गन्धकस्यार्द्धकर्षन्तु मरिचं शाणमात्रकम्।
असिताम्बरमष्टांशं शिलायां चूर्णितं शुभम् ॥ ३४ ॥
एतच्चूर्णत्रयं तैले तिलजे दिवसत्रयम्।
वर्त्तित्रयं समारभ्य घृते वा स्थापितं तथा ॥ ३५ ॥
तदुद्धृत्य चीरपात्रे दीपं प्रज्वाल्य बुद्धिमान्।
पातयेद्वर्त्तिसत्वं च तद्भवा रसरञ्जिका ॥ ३६ ॥
पर्णत्रयं समारोप्य तद्द्रवाद्गुञ्जकद्वयम्।
सम्मूर्च्छ्य भक्षयेत्प्रातः चेत्रपालवलिं ततः ॥ ३७ ॥
दत्त्वा तु विधिना कृत्वा कामचारी भवेत्सदा।
न चात्र परिहारोऽस्ति विहाराय नृणां सदा ॥ ३८ ॥
बलीपलितनाशाय वह्नेर्बलविवर्द्धनम्।
हितमेतत्सदा प्रोक्तं रसायनगुणैषिणाम् ॥ ३९ ॥

अथ गन्धकद्रुतिमाह।

पलमिह गन्धकचूर्णं राजिकातः कर्षकलितमादाय।
सिततररसननिरुद्धं ह्यविषाग्नुतशोषितं वह्नौ ॥ ४० ॥
तद्द्रवमाज्ये मग्नं त्रिकटुकचूर्णैककर्षसंयुक्तम्।
मिलितैकशाणमात्रं प्रातः खाद्यं नियततपर्णम् ॥ ४१ ॥

वर्षबलयुतमेतज्जनयति कुरुते देहसुखम्।
सतताभ्यासवशाद्दोति जनयति सुधाधामलावण्यम्॥ ४२॥

अथ गन्धकयोगमाह।

यो गन्धाश्म सुचूर्णितं पिबति ना तैलेन कर्षोन्मितम्
अभ्यङ्गोष्णजलावसेचनरतः पेयामृतं प्रत्यहम्।
सप्ताहान्नियतं निहन्ति सकलां पामादि सर्वां रुजम्
नित्याभ्यासवशाद्विनष्टसकलक्लेशोपतापः पुमान्॥ ४३॥

अथ गन्धककल्पमाह।

यो वात्युग्रमतिः सुचूर्णितमिदं गन्धाश्म कर्षासमम्।
पथ्यातुल्यमथापि पूजितगुरुः भूतेशपूजारतः॥
आहारादिषु यत्नणाविरहितः स्यात् पुष्टिशौर्य्यान्वितः।
प्रोत्फुल्लाम्बुजनेत्र एव मजरश्चामीकराभाश्रयः॥ ४४॥
भृङ्गराजरसेनैव लोहपात्रेऽग्निना पचेत्।
द्रावयित्वा विनिक्षिप्य मायूर इव जायते॥ ४५॥
जयादलरसेनापि वर्द्धमानरसेन च।
शृङ्गवेररसेनापि काकमाच्या रसेन च॥ ४६॥
रसगन्धद्वयं लब्धं लोहपात्रे प्रयोजयेत्।
एकीकृतं च तावच्च खल्लयेदपि यत्नतः॥ ४७॥
यावच्च नीलवर्णं स्यात् कोलाङ्गारैश्च पाचयेत्।
गोमयस्यालवालेन स्थापिते कदलीदले॥ ४८॥
ढालयेत्पाकवित् प्राज्ञस्ततस्तु प्राशयेन्नवम्।
एवं सति सुखार्थाय पथ्यभुग्भिः प्रसेव्यते॥ ४९॥
गन्धकपर्पटी चैषा सिद्धा कालस्य सिद्धिदा।
दुर्नामग्रहणीमामशूलञ्च ग्रहणीगदम्॥ ५०॥
कामलां पाण्डुरोगञ्च प्लीहगुल्मजलोदरम्।
भस्मकं चामवातञ्च कुष्ठानि च ध्रुवं जयेत्॥ ५१॥

एवमादीनि जित्वैव वपुषा निर्मलः सुखी।
जीवेद्वर्षशतं पूर्णं बलीपलितवर्जितः॥
सर्वव्याधिचिकित्सायां कल्कोऽयमतिदुर्लभः॥ ५२॥

इति गन्धकरसपर्पटी।

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम्।
दत्त्वा चोर्द्ध्वमधो मध्ये स्थालिकामध्यसंस्थितम्॥ ५३॥
कृत्वा स्वल्पपिधानञ्च स्थालीमध्ये निधाय च।
शर्कराभक्तलेपेन लिप्ताः सन्धीस्तदूर्द्ध्वतः॥ ५४॥
बालुकापूरितस्थालीनिहितायां पुनस्तथा।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत्॥ ५५॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना॥ ५६॥
अथ कर्षं गन्धकस्य वह्निस्थं लोहपात्रगम्।
शिलापट्टेन संमर्द्य द्रुतं घृष्टं पुनः पुनः॥ ५७॥
रसोऽम्लमथितः शुद्धस्तावन्मानः प्रदीयते।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत्॥ ५८॥
अष्टविन्दुकमानञ्च मर्दयेन्मूर्च्छितं तथा।
सर्वं स्यात्तत आकृष्य शिलापट्टादिकं दृढम्॥ ५९॥
संहृत्यालम्बुषरसप्रसृतेन विलोड़ितम्।
पुनस्तथैव वह्निस्थे लोहपात्रे विमर्दयेत्॥ ६०॥
यावद्रसक्षयः पश्चादाकृष्टं संप्रयोजयेत्।
अलम्बुषारसेनैव गोलकं संप्रकल्पयेत्॥ ६१॥
तं पिण्डं वस्त्रनिष्पीड्य पिण्डे त्रिकटुजे पुनः।
वसनान्तरिते दत्त्वा पोटलीं कारयेत् सुधीः॥ ६२॥
ततस्तां पोटलीमाज्ये मग्नां कृत्वा विधारिताम्।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक्॥ ६३॥
यदा निष्फेनता चाज्ये गुटिका च दृढ़ा भवेत्।

तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाघृतम् ॥ ६४ ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपाने तु अम्लपित्तोच्छ्रये पुनः ॥ ६५ ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ती वृद्धिस्ताम्रात्तु माषकम् ॥ ६६ ॥
यावत्प्रयोगस्तथैव ह्यपकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्म पक्तिशूलाम्लपित्तहा ॥ ६७ ॥
रसायनं समुद्दिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारः स्याद्विहाराहारकर्म्मसु ॥
ताम्ररसायनमिदं सर्वव्याधिहरं परम् ॥ ६८ ॥
घृतमधुशर्करया हि तत् लेहवन्मर्दनीयम् ।

इति ताम्ररसायनम् ।

कण्टकवेधनयोग्यं ताम्रस्य पत्रं कृतं समादाय ।
कर्षाधिकपलमात्रं भस्माग्नौ निर्दहेद्भिषक्कुशलः ॥ ६९ ॥
एवं पुनरपि वारद्वितयं विमर्द्य चातिगाढ़म् ।
प्रत्येकं मिलितेष्वपि तथैव वारत्रयं दद्यात् ॥ ७० ॥
इन्द्रस्वरसभावित गन्धकलिप्तन्तु ताम्रकं कृत्वा ।
खर्परसंपुटमध्ये विनिधाय मृदा तमुपलिम्पेत् ॥ ७१ ॥
हस्तप्रमाणवदने गर्ते चतुर्हस्तपरिमाणे ।
दत्त्वेन्धनङ्करीषन्तुषमध्ये दहनमादाय ॥ ७२ ॥
तदुपरि दत्त्वा ताम्रसंपुटं निहितं पुनश्च करीषैः ।
संछाद्य तत्र वह्निं प्रज्वालयेद्भिषग्विशङ्कः ॥ ७३ ॥
तावत् पुटं प्रदेयं यावत्ताम्रञ्च मृत्युमायाति ।
मृतमधिगम्य च भाण्डे क्वचिदपि तत् स्थापयेत् पुटितम् ॥ ७४ ॥
तदनु तावत्प्रमाणपारदमादाय खल्लयेन्निपुणः ।
खल्लशिलायां मध्ये गृहधूमनिशेष्टकाचूर्णैः ॥ ७५ ॥

पश्चाद्दारिविधानं पुनश्च त्रिकटुना खल्लयेन्निपुणः।
खल्लितसूतस्यैवं पातनयन्त्रेण चोद्धारः॥ ७६॥
समकृतगन्धकसहितं पुनरपि कृत्वा खल्लयेच्चिरदिनम्।
एवं तन्मृतसूतकमृतमात्रकमिश्रितं कुर्य्यात्॥ ७७॥
दुग्धपलाष्टकमाज्यं तत्समञ्च नारिकेलजलम्।
द्विपलं कलितत्रिफलाक्काथञ्च चतुर्गुणं दद्यात्॥ ७८॥
सुदृढके ताम्रकटाहे मार्त्ते वा स्थापयेद्विविधविधिज्ञः।
दर्व्या च ताम्रमय्याऽऽयस्या चाल्पं पुनः पचेद्वैद्यः॥ ७९॥
ज्ञात्वा पाकं भूयो झटिति कटाहमवतारयेन्निपुणः।
तदनु च तस्मिन्नष्टलक्षणांश्च विश्राम्य क्रियतेऽपि॥ ८०॥
त्रिकटुत्रिफलालोहित चित्रकविड़ङ्गकभद्रमुस्तानाम्।
जीरकयोः प्रत्येकं कर्षकलितचूर्णनिक्षेपः॥ ८१॥
पुनरैलाकङ्कोललवङ्ग जातिफलजातिकोषाणाम्।
चूर्णं गुड़त्वचोऽपि माषाष्टपरिमितं दद्यात्॥ ८२॥
ततः सुशीतं ताम्रं माषाष्टकमति विकीर्य्य घनसारम्।
ताम्रमयादिनि भाण्डे स्निग्धे मार्त्ते वा स्थाप्यम्॥ ८३॥
मनसि च विधाय सूर्य्यपूजां कृत्वा शुभे दिने चर्चे।
आदायमाषमेकं दधिमधुना सह भक्षयेत्सुचिरम्॥ ८४॥
तदनु च कण्ठप्रायः क्षीरं कार्य्यमनुपानमधिकाल्पम्।
नक्तमनल्पं पुनरपि ताम्बूलं भक्षयेत्सरुजः॥ ८५॥
रक्तीद्वयमथ त्रितयं पञ्चकं वृद्धेर्माषकं यावत।
स्थितमतश्चोपरिष्टात्प्रतिलोमं ह्रासयेत्तदनु॥ ८६॥
खादितमेतन्नियतं यस्य न ताम्रं प्रवर्त्तते प्रायः।
तत्रापि सयवक्षार स्त्रिफलाक्काथोऽत्र पानीयः॥ ८७॥
प्रारब्धेऽस्मिंस्ताम्रे कतिचिद्दिवसान्न भक्षयेन्मत्स्यान्।
क्रोधञ्च दिवानिद्रां वेगनिरोधांस्त्यजेद्वैरम्॥ ८८॥

शाकं चाम्लं वर्ज्यं दधि वह्निरम्लं भक्षयेदेव।
जह्यात्तिक्तकषायं जह्यात्तात्कालिकीं पुष्टिम्॥ ८९॥
वृष्यं मधुरं शीतलमथ शाल्यन्नं मधुघृतमश्नीयात्।
मद्गुररोहितशकुलशशमृगैणादिकं मांसम्॥ ९०॥
खादन्नेतद्भेषजमजीर्णं च न भवति न जानाति।
जयति च कफमतिगाढ़ं कासं श्वासं च निवारयति॥९१॥
विरचितमेतच्छास्त्रं धर्माध्यक्षेण धर्मपालेन।
वन्ध्यावटीयः पण्डित इव निबन्धचर्य्याभिः॥ ९२॥

इति ताम्ररसायनम्।

जातीफलं जातिपत्रं लवङ्गं केसरं तथा।
चातुर्जातकशुण्ठी च पिप्पलीत्र्यूषणानि च॥ ९३॥
चित्रकं पिप्पलीमूलं वरीमूलन्तु वंशजम्।
सर्वं पिष्ट्वा सुसूक्ष्मञ्च वाससा परिशोधयेत्॥ ९४॥
लौहचूर्णं तथाभ्रञ्च ताम्रभस्म च वङ्गकम्।
रसराजञ्च नागञ्च कल्कस्यार्द्धं प्रयोजयेत्॥ ९५॥
नागवल्लीरसेनैव अथवा माक्षिकेण च।
गुटिका तत्र संकार्य्या माषद्वयप्रमाणिका॥ ९६॥
षड्रसांश्चावभेदांश्च यथोक्तं भक्षयेद्बुधः।
गोदुग्धस्यानुपानञ्च उष्णं चैव विशेषतः॥ ९७॥
वर्द्धनं सप्तधातूनां वीर्य्यबुद्धिबलप्रदम्।
वल्लभा कान्तिरचिरमग्नेः सन्दीप्तिकारकम्॥ ९८॥
कफरोगहरञ्चैव बुद्धिज्ञानस्य कारणम्।
वन्ध्या च लभते गर्भं षण्ढोऽपि पुरुषायते॥ ९९॥
नपुंसको याति पुंस्त्वं रामाः कामायते शतम्।
वज्रकायः शुचिर्धातुर्दिव्यदृष्टिस्तु जायते॥

जराव्याधिविनिर्मुक्तो वर्षसेवी यदा भवेत् ॥ १०० ॥

इति पञ्चामृतनामरसः ।

गन्धकस्य पलं प्रोक्तं रसस्य द्विपलं तथा ।
नैपालस्य विशुद्धस्य ताम्रस्य च पलं भवेत् ॥ १०१ ॥
ततो गन्धार्द्धचूर्णेन ताम्रं संयुज्य चूर्णयेत् ।
शेषार्द्धगन्धकं कृत्वा पारदं खल्लयेद्भिषक् ॥ १०२ ॥
रसेन हस्तिशुण्ड्याश्च लोहपात्रे पचेच्छनैः ।
कृत्वा पङ्कसमं पाकं ताम्रेण सह योजयेत् ॥ १०३ ॥
तच्च गन्धकचूर्णेन संवेष्ट्य हविषा सह ।
पाचयीत भिषक् प्राज्ञः पाकविन्मृदुवह्निना ॥ १०४ ॥
आलोड्य मधुसर्पिर्भ्यां भुक्त्वा तक्रं पिबेदनु ।
अग्निमान्द्यमजीर्णञ्च ग्रहणीपाण्डुकामलाम् ॥ १०५ ॥
परिणामरुजं चाशु नाशयेत्तु प्रयोजितम् ॥

इति ताम्रकम् ।

जीर्णं ताम्ररसं चैव गन्धकञ्च सुचूर्णितम् ।
स्वर्णमाक्षीकमादाय धत्तूरकरसे पचेत् ॥ १०६ ॥
यावत्पाकं तथा कृत्वा शास्त्रविन्मन्दवह्निना ।
त्रिफलापिण्डिकावेष्ट्य विधिवत् सर्पिषा पचेत् ॥ १०७ ॥
ज्ञात्वा पाकं समुत्तार्य्य शीते निष्कास्य भक्षयेत् ।
विमर्द्य मधुसर्पिर्भ्यां नारिकेलं पिबेदनु ॥ १०८ ॥
पाण्डुरोगञ्च कासञ्च ज्वरांश्च विषमांस्तथा ।
गुल्मं प्लीहामयञ्चैव विनाशयति भक्षणात् ॥ १०९ ॥

इति द्वितीयताम्रकम् ।

गन्धकं जीर्णताम्रञ्च सूतकञ्च समांशकम् ।
तण्डुलीयकमूलस्य रसे हि लवणस्य च ॥ ११० ॥
लोहपात्रे पचेत्तावद्यावत्तद्गुलिकायते ।

तद्वस्त्रे पोटलीं बद्धा वेष्टयेत्तां सुपिष्टया ॥ १११ ॥
आमलक्या ततः पक्का सर्पिषा मृदुवह्निना।
शर्करामधुसर्पिर्भ्यां मालोड्य विधिवल्लिहेत् ॥ ११२ ॥
नारिकेलपयः पेयं तक्रं चानु यथाविधि।
आचरेद् ब्रह्मचर्य्यन्तु हितार्थं वैद्यवत्सलः ॥ ११३ ॥
दुर्नामप्लीहपाण्डुत्व ज्वरकासादिकान् गदान्।
अग्निमान्द्यक्षतान् सर्वान्निहन्यात् क्षिप्रमेव तु ॥ ११४ ॥

इति ताम्रामृताख्य रसायनम्।

रसगन्धकताम्राणां चूर्णं कृत्वा समांशकम्।
पुटपाकविधौ पक्का मधुनालोड्य संलिहेत् ॥ ११५ ॥
सर्वरोगहरञ्चैतत्पर्पटाख्यं रसायनम्।

इति पर्पटाख्यं रसायनम्।

गन्धकं त्रिफलाभृङ्गी समभागन्तु कारयेत्।
भक्षयेत्कर्षमात्रन्तु वर्षात् मृत्युजरापहः ॥ ११६ ॥
शुद्धगन्धपलान्यष्टौ मृततीक्ष्णं पलद्वयम्।
सूर्य्यपाके त्रिसप्ताहं दत्त्वा कन्याद्रवं पचेत् ॥ ११७ ॥
कर्षैकं पातयेत् क्षीरे वर्षमेकं निरन्तरम्।
दिव्यदृष्टिर्भवेन्मर्त्यो जीवेच्चन्द्रार्कतारकम् ॥ ११८ ॥
मन्त्रमत्र प्रवक्ष्यामि गन्धराजस्य भक्षणे ॥ ११९ ॥
ओं हः अमृतीय अमृतशक्तीय अमृतगन्धोपजीवनिष्पन्न-
चन्द्रामृते आप्यापनममृतत्वं कुरु स्वाहा।

इति मन्त्रः।

कुर्य्याद्गन्धकयोगानां क्षीरशाल्यन्नभोजनम्।
केवलं वा पिबेत् क्षीरमन्यत् सर्वं विवर्जयेत् ॥ १२० ॥

इति गन्धकरसायनम्।

अतितीक्ष्णमतिस्निग्धं वज्रमञ्जनसन्निभम्।

सर्वदोषपरित्यक्तं विशेषोपलवर्जितम् ॥ १२१ ॥
गिरिदोषोज्झितं शुद्धं प्रयुञ्ज्यात्सर्वकर्मसु ।
विहितं मस्तके नित्यं रसं रसायनादिषु ॥ १२२ ॥
एतद्वज्राख्यमाख्यातं सर्वदेवनमस्कृतम् ।
सर्वव्याधिहरं नूनमजरामरकारकम् ॥ १२३ ॥
तद्वत्तेनैव पञ्चत्वं कृत्वा च सुविचक्षणः ।
कृत्वाथ मृण्मये भाण्डे दृढ़े संस्थाप्य बुद्धिमान् ॥ १२४ ॥
यथोक्तं मेघनादस्य निर्य्यासे याति संप्लुतम् ।
स्थापयेद्दिवसं पञ्च चतुष्टयमथापि वा ॥ १२५ ॥
स्थापयेद्रससंछन्नं छायया दिव्यमौषधम् ।
सतीक्ष्णमसृणायाञ्च शिलायां पेषयेत्ततः ॥ १२६ ॥
पिष्ट्वा तथैव संस्थाप्य संस्थानीपरिसंवृतः ।
अतः पुनः पञ्चदिने पुटयेत्सुदृढ़ं तदा ॥ १२७ ॥
बलवांस्तद्रसेनैव पिष्ट्वा संस्थापयेत्ततः ।
एवमादिक्रमेणैव पेषणं क्रियते सदा ॥ १२८ ॥
पूर्वोक्तक्रमयोगेन धात्रीव्योषविड़ङ्गकैः ।
संमिश्रं पेषयेद्धीरो यावन्निश्चन्द्रको भवेत् ॥ १२९ ॥
निश्चन्द्रकेऽतिसंपीड्य अङ्गुष्ठाग्रप्रमाणतः ।
गुटिकां कारयेत्सर्वां छायायाञ्चैव शोषयेत् ॥ १३० ॥
एकैकां भक्षयेत्प्राज्ञो वर्षमेकं निरन्तरम् ।
द्वितीये च पुनर्वर्षे भक्षयेद्द गुटिकाद्वयम् ॥ १३१ ॥
एवं संवत्सरेणैव एकैकां वर्द्धयेद्द गुटीम् ।
अनेनैव विधानेन व्योम्नः शतपलं नरः ॥ १३२ ॥
अद्याद्भवेन्न सन्देहो वज्रकायो महाबलः ।
मासत्रयेण रक्ताख्यं क्षयं कासं सुदारुणम् ॥ १३३ ॥
पञ्चकासञ्च हृच्छूलं ग्रहण्यर्शो गदांस्तथा ।

आमवातं तथा शोथं पाण्डुरोगं सुदारुणम् ॥ १३४ ॥
मृत्युकल्पं महाव्याधिं वातपित्तकफोद्भवम्।
हन्त्यष्टादशकुष्ठानि यथोक्तपथ्यसेवनात् ॥ १३५ ॥

इति अभ्रककल्पः।

गगनं कज्जलसन्निभं स्निग्धमदोषं वियोजितम्।
बहुशो दूर्वालम्बुषमूलैर्युक्तं वस्त्रे विबद्धञ्च ॥ १३६ ॥
दत्त्वा सलिलं तावत्करेण घर्षन् च पङ्कतां नीतम्।
निपुणं गृहीतमुदकादञ्जनपुञ्जघनीभूतम् ॥ १३७ ॥
द्वित्रिवारपरिपुटितं रवितरुमथिताल्पदुग्धकादिरसे।
चूर्णितमथितं शिलायां कुड़वमेकं तदादाय ॥ १३८ ॥
प्रथमं चतुरष्टगुणे गोमूत्रे वा पचेन्मृदुज्वालम्।
निपुणमनलं दत्त्वा समुद्रयाभ्रं तथा दुग्धे ॥ १३९ ॥
स्नत्यां विड़ङ्गचूर्णं गगनार्द्धं त्रिकटुसम्भवञ्च रजः।
त्रिकटुसमं त्रिफलोत्थं पृथक् तदर्द्धञ्च बन्ध्यायाः ॥ १४० ॥
नतकरिकर्णीव्रद्धदारुक रक्तानलनीलकानाञ्च।
मूलस्य तालमूलीरक्ताश्वमारहपुषाणाञ्च ॥ १४१ ॥
पत्रक सवाजिगन्धाशतावरीमूलसम्भवञ्चापि।
अमलिन पुनर्नवार्क तर्कारी सवाद्यालमूलस्य ॥ १४२ ॥
चूर्णं कण्टकपर्णी भवसमस्ताभृङ्गराजस्य।
त्रिव्रताख्यायास्त्रिभुवनविजयस्य केशराजस्य ॥ १४३ ॥
सुविदितपाकं शीतं गगनचूर्णञ्च भाजने सर्वम्।
समधुसितैरनुरूपैः सम्मिश्र्य मध्वाज्यकर्षेण ॥ १४४ ॥
पिष्टं तदनुशिलायां स्निग्धभाण्डे निधाय सुविधिज्ञः।
सोत्साहः सुविनीतो गृह्णीयाद्दराभ्रकं कल्पम् ॥ १४५ ॥
मृदुकृतं वमनविरेकं वैद्य प्रदृष्टेन सात्मयोगेन।
याति शरीरविशुद्धिर्दीपितदेहानलो नीरुक् ॥ १४६ ॥

पूजितगुरुदेवानलातिथिसिद्धसाधुमान्यजनः ।
स्निग्धोदनपरितृप्तः दीनग्लानिरहितः सतृक्षतः ॥ १४७ ॥
स्थिरसङ्कल्पो विनीतसर्वेन्द्रियः प्रशान्तसर्वात्मा च ।
परिक्षतपरोपकारः वासः समुज्झितो जितक्रोधः ॥ १४८ ॥
श्रद्धावानश्नीयाद्भेषजराजस्य माषकान्नष्टौ ।
पुण्ये दिवसे कृत्वा गुटिकां तथा भक्षयेत् प्रातः ॥ १४९ ॥
अनुपानं शीतजलं सततमन्नातिभोजनं नात्र ।
हिताहिताद्यं सुखदं शाकाम्लदधिपरिहीनञ्च ॥ १५० ॥
अतितिक्तकटुकषायक्षाराभिष्यन्दि तीक्ष्णरूक्षाणि ।
वातलविदाहिदुर्जरगुरूण्यसेव्यानि वस्तूनि ॥ १५१ ॥
पानं दूराध्ययनं रतिमतिशीतलं दिवास्वप्नञ्च ।
प्रत्युपदेशं द्वेषं वातातपजागरणोद्गतान् ॥ १५२ ॥
चिन्ताशोकविषादव्यायाम मदकरोन्मादकरान् ।
पिशितञ्चानूपदेशं शीतपानं वर्जयेदनिशम् ॥ १५३ ॥
कुक्करमयूरकलावक तित्तिरिशशकाजमेषसारङ्गम् ।
जाङ्गलं पिशितं श्यामं माषं पटोलञ्च वार्त्ताकुम् ॥ १५५ ॥
पथ्याशी पिशितं रसं सैन्धवं सघृतकं सधन्याकम् ।
स्वस्तिकषष्टिकलोहित शालीनति निस्तुषान्मुद्गान् ॥ १५५ ॥
क्रमुकफलानि द्राक्षापक्वाम्रफलानि चैवं शस्तानि ।
स्वादु च परिणति मधुरं कलिकरञ्चापि वाऽऽसवन्तोयम् ॥ १५६ ॥
प्रतिसप्ताहकमेतत् क्रमाद्वा प्रवर्द्धयेद्धीमान् ।
युक्तिविचाराभिज्ञो भेषजस्य पर्य्यन्तं भवति ॥ १५७ ॥
रसायनराजं कुर्वन् मनुजो मनोऽभिलाषं प्राप्नोति
नागार्जुनोपदिष्टं षण्मासोपविहितविधिना च ॥ १५८ ॥
अपगतसकलव्याधिः बलिपलितवर्जितोऽति महातेजाः ।
शूरः प्राज्ञो वाग्मी त्रिवर्गफलभाजनो दक्षः ॥ १५९ ॥

मदमत्तकुञ्जरबलः सौकुमार्य्योत्साहसम्पन्नश्च।
षोड़शवर्षकरो बहु प्रसूतः सुचिरजीवनोपेतः॥ १६० ॥
जीवेद्दर्षसहस्रं सतताभ्यासाच्च सर्वसम्पन्नः।
चन्द्रकमनीयकान्तिः पवनवलो धामसमधामा॥ १६१ ॥
शोषकृदतिसार प्लीहापस्मारसिध्मयक्ष्मणः।
कासश्वासविसर्पग्रहणी गुल्माश्मरीशोथान्॥ १६२ ॥
प्रदरजलोदरभस्मकवमिपामाश्लीपदप्रमेहांश्च।
विबन्धभगन्दरकुष्ठ विषमज्वरपाण्डुरोगांश्च॥ १६३ ॥
श्रुतिवदनोदरलोचन मस्तकरोगान् समूत्रकृच्छ्रांश्च।
आशु रसायनराजः शमयति युक्त्या प्रयुक्तस्तु॥ १६४ ॥

सामं समीरमुपहन्ति कफं सपित्तं
सास्रञ्च पित्तमथ जाठरवह्निमान्द्यम्।
वातप्रकोपजनितान् कफजांश्च सर्वान्
पित्तोद्भवांश्च निखिलान् च गदांस्तथैव॥ १६५ ॥
नागार्जुनोदितरसायनसंहिताया
मालोच्य चात्मनि समस्तरुजाविधाने।
राजानमेनमुपयुज्य रसायनानां
श्रीविश्वरूपमुपसंस्कृतवान् कृतार्थः॥ १६६ ॥

इति महाबलविधानाभ्रकम्।

गगनसुलूखलक्षुण्णं काञ्जिकहस्तीव जलदनादरसैः।
कुलीररसमुनिरसाभ्यां पिष्ट्वा प्रत्येकशः पुटितम्॥ १६७ ॥
सौवीरादिरसेन सम्पन्नं प्राप्य रविकरैः शोष्यम्।
मिलितत्रिफला त्रिकटुकविड़ङ्गचूर्णञ्च पादसमम्॥ १६८॥
घृतमधुसिताविमिश्रं प्रातः कृत्वाष्टमाषपरिमाणम्।
शिशिरसलिलानुपानं भोजनमिह मांसमुद्गादि॥ १६९ ॥
साधितं यः सदा भुङ्क्ते पञ्चभूतमिदं नरः।

अभ्रकमूर्च्छिमस्तत्र जायन्ते ये गुणानथ ॥ १७० ॥
घननिविड़गूढ़सन्धिः श्वसनबलोन्मत्तकुञ्जरप्राणः ।
सर्वद्वन्दसहिष्णुर्हरिष्टवर्षाकृतिश्चैव ॥ १७१ ॥

इति अभ्रकम् ।

रजनीकराक्षयपक्षे प्रशस्ततिथिनक्षत्रकरणयोगेन ।
सितकुसुमाद्यैस्तु बलिं दद्यात्साधुप्रयत्नेन ॥ १७२ ॥
अङ्गारराशिदहनज्वालातिध्मातमग्निवर्णं तत् ।
आकारदोषोत्थितैः पयसि सुवाप्य धारयेत्तदनु ॥ १७३ ॥
असकृत् कृतैकपत्रं मरिचजलेन त्र्यहञ्च पर्युषितम् ।
शुक्लामलमसृणायां शिलायां वर्त्तयेद्बहुशः ॥ १७४ ॥
शुचिभाजनोदरस्थं सम्यक् सितविपुलवस्त्रसञ्छन्नम् ।
परिपीतसकलसलिलं दिनकरकिरणैस्तु कुर्वीत ॥ १७५ ॥
घनरजसः पलमेकं तण्डुलमेकञ्च परिगृह्य ।
त्रिंशत्पलानि पयसो व्योषं सदुग्धघृतमन्नभुक् ॥ १७६ ॥
मासेन गुणगणांश्च स प्राप्नोति नरस्तमाख्यातः ।
घनकुञ्चितनीलकचो दुन्दुभि नादविरहितश्रवणः ॥१७७॥
स नरो वाग्मी श्रुतिवान् शास्त्रविज्जीवेद्ब्रह्मणो दिवसम् ।

इति उमाभाषितमभ्रकम् ।

अभ्रं चतुष्पलं ग्राह्य ममलं धौतशोषितम् ।
पत्रितं लौहपात्रस्थं तण्डुलीयरसाप्लुतम् ॥ १७८ ॥
गोक्षीरसेन सम्मर्द्य मृदुपङ्कसमं कृतम् ।
वचाविड़ङ्गचूर्णेन तुल्यभागेन योजितम् ॥ १७९ ॥
भिण्टीप्रवर्त्तकाकास भृङ्गराजतिलद्रवैः ।
प्रत्येकं क्रमशो दत्त्वा प्रस्थार्द्धं घट्टयेत्ततः ॥ १८० ॥
पिष्टाष्टमासकं दत्त्वा वटिकान् वर्त्तयेद्भिषक् ।
कवर्णाद्यञ्च द्रव्यादि समाहत्रितयं त्यजेत् ॥ १८१ ॥

ततो यथेष्टं कुर्वीत व्यवायाश्रमभोजनम्।
हन्त्येतदम्लपित्तञ्च शूलामवातपाण्डुताः॥
प्लीहाग्निसादशोथार्शो विष्टम्भग्रहणीगदान्॥ १८२॥

इति तृतीयमभ्रकम्।

कृष्णाभ्रकपलमेकं संकुट्योलूखले तु मुसलेन।
अम्लरसायनमेतत् क्षेप्या टङ्कोन्मिता पथ्या॥ १८३॥
आर्द्रकरसेन भाव्यं शुष्कं कृत्वैतत् क्षिपेच्चूर्णञ्च।
त्रिकटुत्रिफलामुस्तकचित्रकपयसाञ्च पिचुमानम्॥१८४॥
कृमिरिपु चात्रद्वितयं प्रक्षेप्यं चात्र गगनमानमयः।
कृत्वा तोयेन वटीं षण्माषोन्मितां भुक्त्वा च॥ १८५॥
अम्लं वार्य्यनुपेयं दधिशुक्तं धार्य्यमनुदिवसम्।
शूलं कफाम्लपित्तं विनिहन्ति वातरुजां सद्यः॥ १८६॥

इति पानीयभक्तवटी।

त्रिफलात्रिकटुकमुस्तविडङ्गभल्लातककेसराणाम्।
करिवर्त्तकदन्ती तण्डुलिकापुनर्नवात्रिवृता॥ १८७॥
चित्रद्विजीरकचूर्णान्येकत्र कर्षमितानि कार्य्याणि।
गन्धशिलाः कर्षार्द्धं गगनपलशोधितं विधिवत्॥ १८८॥
अम्लशुक्त भक्तपयसी दत्त्वा कुर्य्यादर्द्धमाषिकां वटिकाम्।
अम्लं वार्य्यनु पेयं कार्य्यं तदधिविहितपथ्यम्॥ १८९॥
कफातिदुष्टवह्नेर्नातःपरमत्र भेषजं दृष्टम्।
हन्यात्तदामवातं ग्रहणीगदगुल्मशूलरुजः॥ १९०॥

इति द्वितीयपानीयभक्तवटी।

ग्रन्थिकं त्रिफलाचित्रं त्रिवृल्लोहितकुम्भकौ।
एषां कर्षार्द्धकं चूर्णं प्रत्येकं तावदुन्मितम्॥ १९१॥
त्र्यूषणं लवणं पाक्यं विडङ्गं कार्षिकं पृथक्।
पलं कृष्णाभ्रकञ्चैव मत्तदग्ध्वा विनिक्षिपेत्॥ १९२॥

तेनैव पेषणं कृत्वा सर्वमेकत्र योजयेत् ।
शिखर्य्यार्द्रकनिर्गुण्डी नागवल्ल्यस्थिसंहृता ॥ १९३ ॥
रसैर्द्विपलिकैरेषां वटी भाव्याक्षसम्मिता ॥

इति तृतीयपानीयभक्तवटी ।

विड़ङ्गं पिप्पलीमूलं त्रिफला मुनिजं फलम् ।
लोहकं गन्धकं चित्रं पलार्द्धं चूर्णितं पृथक् ॥ १९४ ॥
त्र्यूषणं चूर्णितं ग्राह्यं सार्द्धं द्विपलिकं पृथक् ।
अम्लशुद्धाभ्रकपलं कर्षार्द्धं पारदस्य च ॥ १९५ ॥
अस्थिसंहारनिर्गुण्डी नागवल्ल्यार्द्रकैः शुभैः ।
रसैश्चतुष्पलैरेवं भावयित्वा पृथक् पृथक् ॥ १९६ ॥
यथाग्निं भक्षयेदेतां वटीमनुपिबेज्जलम् ।
वारिभक्तञ्च भुञ्जीत कुर्य्यात् पूर्वोक्तकान् विधीन् ॥ १९७ ॥

इति चतुर्थपानीयभक्तवटी ।

गन्धार्द्रकरसस्तुल्यो विड़ङ्गमरिचार्द्रकैः ।
त्रिफलात्रिवृतावह्निः कणादन्तीपुनर्नवा ॥ १९८ ॥
त्वक्क्षीरं माणिकुलिश यवागूरागखण्डिकाः ।
प्रत्येकैकं पलं चूर्णं सुणपानीयकं हविः ॥ १९९ ॥
अभ्राच्चतुष्पलं चूर्णमेकीकृत्वार्द्रकाम्बुना ।
त्रिफलापयसा भाव्या कोलार्द्धमानकी वटी ॥ २०० ॥
भक्तोदकानुपानेन सेव्या वह्निप्रदीपनी ।
अम्लपित्तामवातादीन् हन्ति पयसान्नभोजनम् ॥ २०१ ॥

इति पञ्चमपानीयभक्तवटी ।

भेकदलावरुणार्द्रैर्दण्डोत्पलखण्डवरुणशिखरिभिः ।
वचाभृङ्गराजमानैस्तण्डुलीयकामरावतीभिः ॥ २०२ ॥
सूरणपुनर्नवाभिः गगनं पृथगेव भावितं नूनम् ।
खरतरणिकरार्पण शोषणशुद्धिर्विधातव्या ॥ २०३ ॥

पलमेकं छिन्नरुहा कृष्णागुडूचीसत्वपलमेकम्।
अभ्रकमानं त्रिफलात्रिकटुरजः पारदानाञ्च ॥ २०४ ॥
प्रथमञ्च मधुसर्पिर्भ्यां मूर्च्छितेन रसेन मर्दयेद्गवाम्।
तदनु त्रिफलारजसा तदनु गुडूच्याः सत्वेन ॥ २०५ ॥
तदनु त्रिकटुरजोभूयिष्ठमवनितलमृदितमादाय।
स्निग्धे निधाय भाण्डे रचन् सुवस्त्रपिहितमुखे ॥ २०६ ॥
खादेद्भोजनादौ मध्ये चान्ते च वारमेकैकम्।
जलमपि पिवेद्रसाम्ल' रक्तीवृद्ध्या द्विगुणमेव ॥ २०७ ॥
क्षीरं दधि चात्र घृतं सपूतमस्थि मांसानि।
नाद्यादशेषशाकं मद्यं जीर्णमन्नञ्च ॥ २०८ ॥
हरति चाम्लपित्त' ग्रहणीदुर्नामकामलादिरुजः।
जनयत्यचिराद्रुधिरं जठरानलपुष्टिदं परम् ॥ २०९ ॥

इति अभ्रकसन्धानम्।

मानकन्दोऽश्वकर्णञ्च त्रिवृता मुस्तकं समम्।
त्रिकटुत्रिफलाभृङ्गमपामार्गश्च दाड़िमम् ॥ २१० ॥
लावीवृहतिकाजाती द्वयञ्च शतपुष्पिका।
सूर्य्यावर्त्तस्तालमूली चूर्णमेषाञ्च कार्षिकम् ॥ २११ ॥
विड़ङ्गचूर्णं द्विगुणं पादहीनञ्च गन्धकम्।
चतुर्गुणाभ्रकं कार्य्यं गुडूचीमपि तद्गुणाम् ॥ २१२ ॥
सुचूर्णमभ्रकं वस्त्रगालितं काञ्जिके क्षिपेत्।
अम्ले पयसि वा पश्चादुद्धरेत्पञ्चमेऽहनि ॥ २१३ ॥
मण्डूरपेषितं पिष्ट्वा वंशपत्ररसेन च।
ततः पुटानि देयानि वक्ष्यमाणैर्महौषधैः ॥ २१४ ॥
वंशपत्ररसैः पूर्वं पुटयेदातपे भिषक्।
मण्डूरपर्णीचित्रञ्च दन्तीरसं पुनर्नवा ॥ २१५ ॥
त्रिवृता तालपटोलं चास्थिसंहार एव च।

आर्द्रकं तालमूली च सूर्य्यावर्त्तञ्च शिम्बिका ॥ २१६ ॥
केशराजो भृङ्गराजः शतमूली च मुस्तकम् ।
ततः प्रक्षिप्य चूर्णानि हिङ्गुनाथ चतुष्टयम् ॥ २१७ ॥
सप्तधा पेषयेद्गाढं त्रिफलाक्काथवारिणा ।
तेनैव गुटिका कुर्य्यान्माषैकैकप्रमाणिका ॥ २१८ ॥
वटिकाद्वितयं भक्ष्यमम्लवार्य्यनुपानतः ।
वयोऽवस्थामग्निबलं व्याधिं प्रकृतिमेव च ॥ २१९ ॥
दृष्ट्वा मात्रां प्रयुञ्जीत यथा क्षेपः प्रदीयते ।
ग्रहणीमम्लपित्तञ्च पित्तश्लेष्माणमेव च ॥ २२० ॥
अर्शांसि वह्निसादञ्च प्लीहानमरुचिन्तथा ।
वटिकेयं निहन्त्याशु नात्र कार्य्या विचारणा ॥ २२१ ॥
निर्वापयेच्च मण्डूरं त्रिफलाया रसे शुभे ।
सूर्य्यावर्त्तरसे वाथ उभयत्र च वा भिषक् ॥ २२२ ॥
तत्तु सुचूर्णितं वस्त्रगालितं स्थापयेद्भिषक् ।
ततः काञ्जिकनिक्षेपं समुद्धारादिसंस्कृतम् ॥ २२३ ॥

इति षष्ठी पानीयभक्तवटिका ।

अथ लौहरसायनमाह ।

सर्वेषां लौहजातीनां कान्तं भवति कान्तिदम् ।
तथा कान्तं विशेषेण भवेत्तद्गुणदं स्मृतम् ॥ २२४ ॥
एकान्ते च पचेल्लौहमादौ शस्ते दिने ततः ।
धात्रीपिण्डारकोद्भूतस्वरसेनार्करश्मिभिः ॥ २२५ ॥
स्थापयेद्यद्ववेच्चूर्णं ग्राहयेत्तु पृथक् पृथक् ।
उच्चटास्वरसेनैव पूर्वोक्तेनैव भावयेत् ॥ २२६ ॥
धात्र्यश्वगन्धयोः पिण्डारकस्यापि रसेन च ।
मिलित्वैवं पुनर्भाव्यं प्रचण्डरविरश्मिभिः ॥ २२७ ॥
काकमाचीरसेनैव स्थापनीयं पुनः पुनः ।

भावनान्ते च सर्वत्र खल्लितव्यं प्रयत्नतः॥ २२८॥
पश्चाच्चूर्णं विधातव्यमप्रमत्तेन धीमता।
इदं सूर्य्यमयूखेन मारणं परिकीर्त्तितम्॥ २२९॥
धात्रीपिण्डारकरजः स्वरसेन प्रकल्पयेत्।
नारिकेलस्य पात्रे तु भावना विधिरिष्यते॥ २३०॥

इति सूर्य्यमयूखेन लौहमारणम्।

एकपत्रीकृतं कृष्णमभ्रकं वज्रसंज्ञिकम्।
भावयेद्दित्रिदिवसं जम्बीररसकाञ्जिकैः॥ २३१॥
त्रिफलाया रसे भाव्यं ततः शिग्रुरसे पुनः।
प्रत्येकशः शोधितव्यं सूक्ष्मं खल्लेन बुद्धिमान्॥ २३२॥
ततो लज्जालुकरसे वाजिगन्धारसे तथा।
भावनं खल्लके कार्य्यमिति चाभ्रकमारणम्॥ २३३॥
भावना नारिकेलस्य पात्रे नान्यत्र शस्यते।

इति सूर्य्यमयूखेनाभ्रकमारणम्।

त्रिवृता चित्रकं मुस्तं त्रिफला त्र्यूषणं तथा।
एकैकशो मतो भागस्तदर्द्धं रसगन्धयोः॥ २३४॥
लोहाभ्रकविड़ङ्गानां भागश्च द्विगुणो भवेत्।
एतत्सकलचूर्णन्तु चूर्णयित्वा विचक्षणः॥ २३५॥
त्रिफलायाः कषायेण गुटिकां कारयेद्भिषक्।
तत्रैकां भक्षयेत्प्रातर्भक्तवारि पिबेदनु॥ २३६॥
पक्तिशूलं त्रिदोषोत्थमम्लपित्तं वमिं तथा।
हृच्छूलं पार्श्वशूलञ्च वस्तिकुक्षिगुदारुजम्॥ २३७॥
कासं श्वासं तथा कुष्ठं ग्रहणीदोषमामजम्।
यकृत्प्लीहोदरं गुल्मं यक्ष्माणं ग्रहमेव च॥ २३८॥
विष्टम्भमामदौर्बल्यमग्निसादं नियच्छति।
सर्वानेतान् शमयति भास्करस्तिमिरं यथा॥ २३९॥

इति सप्तमी पानीयभक्तवटिका।

गव्येन नवनीतेन स्वर्णमाक्षिकद्वयिकी।
निष्पिष्य लेपयेल्लोहं कान्तपाण्ड्यादिसम्भवम् ॥ २४० ॥
ध्मापयेत्कर्म्मकाराग्नौ सिक्त्वा सिक्त्वा पुनः पुनः।
त्रिफलाक्वाथतोयेन ततो निर्वापयेत्सुधीः ॥ २४१ ॥
पश्चात् संपिष्य तत् लोहं दाहयेत् पुटवह्निना।
अग्नेराकृष्य विधिना जलधौतं च कारयेत् ॥ २४२ ॥
श्लक्ष्णचूर्णं ततः कृत्वा बहुघृष्टन्तु कारयेत्।
पलं चतुष्टयं तस्य मधूकस्यापि तत्समम् ॥ २४३ ॥
पथ्याधात्रीविभीतक्या रसस्य त्रिकटोस्तथा।
वचावह्निविड़ङ्गानि कृष्णजीरकजीरके ॥ २४४ ॥
दन्तीपुनर्नवामूली प्रत्येकं पलसंख्यया।
एलायाः कर्षकं दद्यात् कार्षिकं कटुरोहिणी ॥ २४५ ॥
एलार्द्धं गन्धकं देयं पलार्द्धं गुग्गुलुत्वचम्।
चूर्णयित्वा विधानेन सर्वमेकत्र कारयेत् ॥ २४६ ॥
घृतमष्टपलं दत्त्वा क्षीरं चतुःशरावकम्।
चतुर्विंशपलक्वाथ त्रिपलशेषवारिणा ॥ २४७ ॥
वस्त्रपूतेन विधिवत् पाचयेत्ताम्रभाजने।
दार्वीं लोहमयीं गृह्य पाकं कुर्य्याद्विपाकवित् ॥ २४८ ॥
शीतलञ्च ततः कुर्य्यात् स्निग्धे भाण्डे निधापयेत्।
रक्तिकादिक्रमेणैव घृतेन मधुना नरः ॥ २४९ ॥
संमर्द्य लोहदण्डेन लोहपात्रे च भक्षयेत्।
क्षीरानुपानं दातव्यं पित्तदुष्टाय रोगिणे ॥ २५० ॥
तथामकोष्ठिने दद्याद्यवक्षारस्य वारिणा।
मूर्च्छाछर्दिं तृषा रक्तपित्तशूलादिसम्भवे।
क्षीरं शर्करया मिश्रं ह्यनुपानं प्रयोजयेत् ॥ २५१ ॥
चतुर्धा ग्रहणी ज्ञेया वातपित्तकफोद्भवा।

ज्ञात्वा कुक्षौ मनाक् शूल मामगन्धं सलोहितम् ॥२५२॥
कुक्षौ दक्षिणतः शूलं नाभिमण्डलकोपरि।
वातपित्तनिदानं हि लक्षयित्वा प्रदीयते ॥ २५३ ॥
नारिकेलञ्च समधु पानञ्च हितमिच्छता।
रक्तच्छर्दीं विगन्धत्व मौषत्पानन्तु पैत्तिके ॥
क्षीरं शर्करया युक्त मनुपानन्तु दापयेत् ॥ २५४ ॥
कटिशूले त्रिकशूले कुक्षिशूले अरोचके।
आमवातनिदाने च मुखस्रावे प्रकीर्त्तितम् ॥ २५५ ॥
त्रिकशूले पार्श्वशूले नाभिमण्डलकोपरि।
ज्वरे सशूले सामे च वायुमामं निवर्त्तयेत् ॥ २५६ ॥
क्वचिन्नाभेरधः शूले वामपार्श्वे क्वचिद्भवेत्।
शूले वा परिणामि च भ्रमे पृष्ठे क्वचित् क्वचित् ॥ २५७ ॥
शीतलेन यवक्षारमनुपानञ्च वारिणा।
प्रकम्पश्चोर्द्ध्ववायुश्च हस्तकम्पं मुहुर्मुहुः ॥
कुक्षिशूलं मूर्द्ध्नि शूल मूर्द्ध्व धूमश्च नश्यति ॥ २५८ ॥
हरीतकीयवक्षारं सैन्धवं सितशर्करा।
हिङ्गुघृतं नारिकेलजलेन त्वनुपानकम् ॥ २५९ ॥
शुक्राश्मरीशुक्रस्रावे मूर्द्धशूलञ्च पंक्तिकम्।
कुक्षौ नाभौ भवेच्छूलं मेहत्वं परिणामकम् ॥ २६० ॥
रसं कूष्माण्डमज्जाया यवक्षारं सशर्करम्।
एकीकृत्यानुपानन्तु दद्यादश्मरिरोगिणे ॥ २६१ ॥
शर्कराच्छागलं क्षीरं शृङ्गाटककरीरकौ।
त्रिफलाया रसं ग्राह्यं मूलमाम्रातकस्य च ॥
एकीकृत्यानुपानेन शाम्येच्छुक्रप्रमेहकम् ॥ २६२ ॥

इति सर्वतो भद्रलौहः।

त्रिगुणं चायसश्चूर्णं त्रिपलं चाभ्रकाद्रसात्।

द्विरष्टभागिनि वारिख्यष्टशिष्टन्तु कारयेत् ॥ २६३ ॥
तेन पादावशेषेण समेनाज्येन यत्नतः ।
रसेन वहुपुत्नायाः द्विगुणचीरसम्मितम् ॥ २६४ ॥
लोहमय्या क्वतं भव्ये पात्रे चायसि मृन्मये ।
दिव्यौषधहृतं लोहं प्रहर्त्तुं सम्पुटादिभिः ॥ २६५ ॥
पचेत्पाकविधिज्ञस्तु वह्निना मृदुना शनैः ।
अभ्रकं निहतं क्वष्णं सूतकञ्च विमूर्च्छितम् ॥ २६६ ॥
अयसश्चार्द्धभागञ्च त्वादौ पाके प्रयोजयेत् ।
रसेन त्रिफलादन्ती विड़ङ्गं जीरकद्वयम् ॥ २६७ ॥
पलाशबीजं हपुषा चित्रकं द्वेवदारुकम् ।
लतापलाशमूलञ्च द्वहत्पत्रं गुड़त्वचम् ॥ २६८ ॥
व्योषं समं ग्रन्थिकञ्च गुडूचीतालमूलकम् ।
शिग्रुमन्थौ तथा यास स्तथा च चोरकञ्चुकी ॥ २६९ ॥
कापालिकाकलिङ्गाख्यं गन्धनिम्बयवानिकम् ।
चूर्णीक्वत्य चिपेद्यत्नाल्लोहाभ्रकसमं भिषक् ॥ २७० ॥
वातश्लेष्मप्रधानस्य संस्क्वतं नागरेण च ।
निहन्ति वातसन्दिग्धं कफजुष्टं तथैव च ॥ २७१ ॥
सद्यो वह्निकरं ह्येतद्वलपुष्टिकरं तथा ।
रसायनमिदं दिव्य मम्टताख्यं परं शुभम् ॥ २७२ ॥

इति वातश्लेष्मप्रक्वतौ रसायनम् ।

कफपित्तविनाशाय लिख्यते चाधुना पुनः ।
अरुचिं सकलां पुंसां व्यपोहति वरः सदा ॥ २७३ ॥
मधुकं पिण्डखर्जूरं धान्यकं जीरकद्वयम् ।
व्योषं हविष्यमाजेयं शर्करा च पलद्वयम् ॥ २७४ ॥
तिक्तं वकञ्च तालीशं सविड़ङ्गं गुड़त्वचम् ।
मेघाम्बच्छदवीजञ्च चविकञ्चैलकं तथा ॥ २७५ ॥

गुडूची त्रिवृता दन्ती वचा च चविकास्तथा।
बलापलाशशिग्रुञ्च कुङ्कुमं वृद्धदारुकम्॥ २७६॥
ग्रन्थिकं चित्रकं वापि कलिङ्गं भद्रमुस्तकम्।
वृहत्यत्वं पृथुलिकां काकजङ्घां पुनर्नवाम्॥ २७७॥
संचूर्ण्य चूर्णमादाय गगनं द्विगुणं मतम्।
रसायनविधियुक्तं सर्वोपद्रवनाशनम्॥ २७८॥
मन्दाग्निग्रहणीदोषाः कफपित्तभवाश्च ये।
भस्मत्वं यान्ति वै क्षिप्रं काष्ठराशिर्यथाग्निना॥ २७९॥

इति कफपित्तप्रकृतौ रसायनम्।

तस्मिद्धं सिद्धनाथेन निर्मितं सत्वहेतुना।
आमवातादिनाशाय लिख्यते चाधुना रसः॥ २८०॥
धान्यनागरविड़ङ्गं गुडूची जीरकद्वयम्।
पलाशवीजं कोलञ्च पिप्पली मुस्तकन्तथा॥ २८१॥
त्रिवृच्च त्रिफला दन्ती एलका वृहतीद्वयम्।
चविका ग्रन्थिका चित्रं सवचं वृद्धदारुकम्॥ २८२॥
पञ्चायसः पलानाञ्च प्रत्येकं तद्विकार्षिकम्।
आमवातघ्नचूर्णञ्च यथाविधि निषेवितम्॥ २८३॥

इत्यामवातादिव्याधौ रसायनम्।

शिरः शूलमुखश्वास कफपित्तापनुत्तये।
लिख्यते चाधुना दिव्यं रसायनमनुत्तमम्॥ २८४॥
शर्करामधुकं द्राक्षा मूसली त्रायमाणकम्।
वासा गुडूची कालिङ्गः व्योषञ्च त्रिफला त्रिवृत्॥ २८५॥
दन्तक्रमिहरं चूर्णं वृद्धदारं पलोन्मितम्।
मृदुपाके विनिक्षिप्तं क्षिप्रपाकमनाकृति॥ २८६॥
सेवितं हरते नित्यं रक्तपित्तं सुदारुणम्॥

इति श्वासादिव्याधौ रसायनम्।

वातरक्ते महाकुष्ठे जङ्घोर्वोः स्तब्धतां गते ।
सर्वाङ्गके तथा वाते क्रियमाणं रसायनम् ॥ २८७ ॥
अभ्रकेण समं गन्धं नवनीतामलच्छवि ।
मूर्च्छितञ्च तथा सूतं त्रिकटु त्रिफला वचा ॥ २८८ ॥
विड़ङ्गं जीरके द्वे च पलाशबीजमेलकम् ।
वृद्धदारत्वचं कन्दं सविड़ङ्गं सचित्रकम् ॥ २८९ ॥
श्यामाकं शिग्रु दन्ती च त्रिवृता वर्गदूषिका ॥ २९० ॥
प्रत्येकं कार्षिकं मानं पाके खरतरे क्षिपेत् ।

इति वातरक्तादिव्याधौ रसायनम् ।

प्लीहोदरं यकृद्गुल्मं शस्त्रक्षाराग्निभिर्विना ।
विनाशाय प्रयोज्यानि चूर्णानीमानि देहिनाम् ॥ २९१ ॥
कन्दं कापालिका चव्यं विड़ङ्गं सवृहद्दलम् ।
शरपुङ्खा च पाठा च चित्रकं समहौषधम् ॥ २९२ ॥
एषान्तु पलिकां मात्रां क्षिपेल्लोहरसायने ।
लवणानि च सर्वाणि सक्षारं वृद्धदारकम् ॥ २९३ ॥
दीप्यकञ्च प्रयुञ्जीत पाकार्थमभयासुरी ।
प्लीहोदरविनाशाय द्वे पले च पृथक् पृथक् ॥ २९४ ॥
मानेन दण्डकर्णेन सूरणेनाधिकं पुनः ।

इति प्लीहोदरव्याधौ रसायनम् ।

राजयक्ष्मणि श्वासे च कासे रक्तोल्बणे हितम् ।
महौषधं सतालीशं काकणं नागकेशरम् ॥ २९५ ॥
जीवन्तिमभयां स्नुहीं सर्वाभ्यो द्विगुणास्तथा ।
शर्कराश्च क्षिपेत्तत्र गुड़ूचीसत्वमेव च ॥ २९६ ॥

इति राजयक्ष्मादिव्याधौ रसायनम् ।

त्रिफलायाः प्रकुर्वीत प्रत्येकं पलसप्तकम् ।
वारिण्यष्टगुणे पक्त्वा पञ्चभागेन शेषयेत् ॥ २९७ ॥

षट्शरावास्तु दुग्धस्य हविषः पलपञ्चकम्।
पुटितादायसः पञ्च शुद्धाभ्रस्य पलद्वयम्॥ ॥ २९८॥
विडङ्गं त्रिफला जीरद्वयं त्रिकटु चूर्णितम्।
लोहचूर्णं समं ग्राह्यं गुणवृद्ध्यं ततः पचेत्॥ २९९॥
ग्रहणीगदमत्युग्रं हन्त्येतद्वारिसम्भवम्॥

इति वातग्रहण्यां रसायनम्।

बिभीतक्यभया धात्री प्रत्येकं तु पलाष्टकम्।
वारिण्यष्टगुणे साध्यं षड़ङ्गेनावतारिते॥ ३००॥
अतः पलानि पञ्चैव पयसोऽष्टौ शरावकान्।
सर्पिषो दशपलान्यत्र दत्त्वा लोहं विपाचयेत्॥ ३०१॥
त्रिकटु त्रिफलाचूर्णं प्रत्येकं तु द्विकार्षिकम्।
विड़ङ्गं भद्रमुस्तञ्च जीरकं द्वयमेव च॥ ३०२॥
पृथगर्द्धपलं ग्राह्यं कुर्य्यात्पाकन्तु मध्यमम्।
पैत्तिके ग्रहणीरोगे योजयेन्मतिमान् भिषक्॥ ३०३॥

इति पित्तग्रहण्यां रसायनम्।

प्रत्येकं षट्पलं धात्री शिवा वैभीतकत्वचम्।
उदकानां शरावैस्तु षड्‌विंशत्या विपाचयेत्॥ ३०४॥
पञ्चभागावशिष्टेन लोहं पञ्चपलानि च।
तावद्दत्त्वा दधि तस्मिन् खरपाकं विपाचयेत्॥ ३०५॥
त्रिकटु त्रिफलावह्नि विड़ङ्गं भद्रमुस्तकम्।
चूर्णं लोहसमं चात्र प्रक्षिपेदवतारिते॥
श्लैष्मिकं ग्रहणीदोषं हन्यादेतद्रसायनम्॥ ३०६॥

इति श्लेष्मग्रहण्यां रसायनम्।

लोहं पूर्वं पुटेच्छुद्धं गृहीत्वा पलपञ्चकम्।
पुनर्नवावरीमूलं त्रिफलापुटितं पुनः॥ ३०७॥
वराचतुर्गुणं लोहं पचेदष्टगुणे जले।

सप्तभागावशेषेण द्विशरावं पयः क्षिपेत् ॥ ३०८ ॥
शतावरीरसञ्चापि लोहतुल्यं प्रदापयेत् ।
पलानि दश चाज्यस्य मृदुपाकेऽवतारिते ॥ ३०९ ॥
द्विजीरकं विड़ङ्गञ्च पलाशवीजमेव च ।
त्र्यूषणं त्रिफला चव्यं चूर्णमेषां पयः समम् ॥ ३१० ॥

इति वातपित्तग्रहण्यां रसायनम् ।

अष्टादश पलान्यत्र त्रिफलाया विपाचयेत् ।
सलिले द्व्याढ़के चास्मिन्नवभागावशेषितम् ॥ ३११ ॥
विपचेत् पूर्ववल्लोहं पुटितं वक्ष्यमाणकैः ।
वरायाः केशराजस्य चार्द्रकस्य रसेन च ॥ ३१२ ॥
एतत्पञ्चपलं ग्राह्यं सर्पिर्दशपलानि च ।
शतावरीरसस्याष्टौ नारिकेलोदकस्य च ॥ ३१३ ॥
पलार्द्धं मरिचं कृष्णा नागरं पलसम्मितम् ।
षड्विंशमाषकं चूर्णं त्रिफलायाः प्रकल्पयेत् ॥ ३१४ ॥
त्रिचत्वारिंशता माषैरधिकं चूर्णितं पलम् ।
चित्रकस्य विड़ङ्गस्य पचेत्पाकखरं ततः ।
वातश्लेष्मोत्तरे चैव कुक्षिरोगे तथा घृतम् ॥ ३१५ ॥

इति वातश्लेष्मग्रहण्यां रसायनम् ।

मूर्च्छितं पुटितं शुद्धमायसः पलपञ्चकम् ।
शतावरीरसे सम्यक् पुटितं पञ्चधा पुनः ॥ ३१६ ॥
अष्टौ पलानि गृह्णीयात्त्रिफलायाः पृथक् पृथक् ।
सलिलस्यार्मणे पक्वा पादशिष्टेऽवतारिते ॥ ३१७ ॥
द्वात्रिंशञ्च पलान्यत्र सर्पिरष्टादशैव तु ।
मध्यपाकं ततः पक्वा चैषां कर्षद्वयं पृथक् ॥ ३१८ ॥
त्रिकटुं त्रिफलां वह्निं विड़ङ्गं भद्रमुस्तकम् ।
पलाशस्य च वीजानि क्षिप्त्वा कुर्य्याद्रसायनम् ॥

पित्तश्लेष्माधिकञ्चैव निहन्याद् ग्रहणीगदम् ॥ ३१९ ॥

इति पित्तश्लेष्मग्रहण्याम्।

आज्यं चतुष्पलं शुद्धं घनं तान्तवविस्तृतम्।
क्षुद्रार्द्रारिष्टत्वञ्चैव मधूकपर्णिकादिभिः ॥ ३२० ॥
तिग्मांशुकरसं पक्कं पुटिताभ्रचतुष्पलम्।
प्रस्थार्द्धं पयसो दद्यान्नारिकेलोदकस्य च ॥ ३२१ ॥
पचेत्पाकविधानज्ञो वह्निना मृदुना शनैः।
त्रिफलां त्रिकटु वह्निं विड़ङ्गं जीरकद्वयम् ॥ ॥ ३२२ ॥
जातीफलं जातीकोषं लवङ्गं भद्रमुस्तकम्।
कङ्कोलकञ्च सञ्चूर्ण्य शाणमात्रं क्षिपेत् पृथक् ॥ ३१३ ॥
पाकं ज्ञात्वा समुद्धृत्य भ्रामराष्टपलान्वितम्।
रसकादिविधानेन खादेन्माषाष्टकं पुनः ॥ ३२४ ॥
सर्व्वव्याधिनिविनिर्मुक्तो जीवेद्वर्षशतं सुखी।
नागार्जुनेन रचितं रसाख्यमिदमुत्तमम् ॥ ३२५ ॥
विनापि परिहाराद्यैर्लोहोदितफलप्रदम् ॥

इति लोहाभ्रकम्।

शङ्खस्य नाभिचूर्णञ्च सुराक्षारञ्च सैन्धवम्।
टङ्कणञ्च खटीशुभ्रा वराटीभयमाक्षिकम् ॥ ३२६ ॥
शणं गुड़ञ्च यशदं पूर्व्वोक्तं शुभताम्रकम्।
तुरटीधूमसारञ्च नवसारं निशा सिता ॥ ३२७ ॥
सर्व्वं समं गृहीत्वा तु ह्येकविंशतिभिर्दिनैः।
जलोषितञ्च तत्सर्व्वं स्थापयेद्विधिविद्भिषक् ॥ ३२८ ॥
तत उद्धृत्य सङ्कुट्य शिलायां पेषयेन्नरः।
पिष्ट्वा पिष्ट्वा पुनः पिष्ट्वा स्निग्धां पिष्टिं प्रकारयेत् ॥ ३२९ ॥
शरेषु ताञ्च संलेप्य कोष्ठिकायन्त्रगे पचेत्।
तीव्राग्निना दिनैकेन पक्कं पक्कं समाहरेत् ॥ ३३० ॥

एतद्रसायनं दिव्यं खर्पराख्यं महोत्तमम्।
सर्वनेत्रामयान् हन्ति विषमज्वरनाशनम् ॥ ३३१ ॥

इति खर्पराद्यं रसायनम्।

हनुमन्यास्तम्भार्दितशिरः-कम्पभ्रमशङ्खतोदश्रवण-दशनशूलावभेदशयननयनेन्द्रलुप्तघ्राणाढक्ष्वेढवाधिर्य्यपीनस-पूयरक्तप्रतिनाह घ्राणाद्धिग्रीवातिमिराभिष्यन्दलूर्द्धहतानाम्। शिरोवस्तिः प्रधानः अनाश्रये पीठे स्थापयित्वा पादाभ्यङ्गं कार्य्यं पुरा भुक्तवतां वस्तिचर्म गव्यं माहिषं वा कषायमष्टाङ्गुलोच्छ्रितं द्विमुखं शिरःप्रमाणमादाय तं निर्वलीकं कृत्वा ललाटे सूत्रेण बद्धा सुखोष्णाम्बुपरिक्लिन्नमाषपिष्टानुलिप्तमपरिस्रावीकृत्य ततोऽस्य यथाव्याधिदोषहृद्धितभेषजसिद्धमन्यतरं स्नेहमासिञ्चेत्। केशभूमेरुपरि अष्टाङ्गुलं तावच्च धार्य्यो यावत्कर्णमुखनासाभ्यः स्नेहस्रावो वेदनोपशमो वा न भवेत् विशेषतस्तु वातविकारेषु अष्टादशमात्रा सहस्राणि पित्तरक्तजेषु अष्टौ षट्कफजेषु सहस्रमारोग्यं प्रति सर्वकालप्रतिषिद्धः। प्रयोज्यस्तु शिरोवस्ति त्र्यहाणि पञ्चाहानि सप्तदिनानि वा ततः पानीयन्तु स्नेहं विमोच्य वस्तिं शिरः स्कन्धग्रीवापृष्ठललाटादीननुसुखं पाणिभ्यां मृद्नीयात्। ततः सुखोष्णाम्बुपरिषिक्तगात्रं शालिपिष्टकादीनां जाङ्गलानूपरसेन दाडिमाम्लैर्मात्रां भोजयेत्।

सर्वेन्द्रियाणां हि बलं केशानां दृढमूलताम्।
करोति वाग्विशुद्धिञ्च मूर्ध्नि तैलाम्बुसेचनात् ॥ ३३२ ॥

इति शिरोवस्ति प्रकरणम्।

सप्तोत्तरं मर्मशतम्। तानि मर्माणि पञ्चात्मकानि। तद्यथा मांसमर्माणि, शिरामर्माणि, स्नायुमर्माणि, अस्थि-

मर्माणि, सन्धिमर्माणि चेति। तत्रैकादश मांसमर्माणि, एकचत्वारिंशत् सिरामर्माणि। सप्तविंशतिः स्नायुमर्माणि, अष्टौ अस्थिमर्माणि। विंशतिःसन्धिमर्माणि, तदेतत् सप्तोत्तरं मर्मशतम्। तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। उदरोरसोर्द्वादश चतुर्दश पृष्ठे ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत्। तत्र सक्थिमर्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरो गुल्फेन्द्रवस्तिजान्वाण्यूर्वीलोहिताक्षाणि विटपञ्चेति। एतेनेतरसक्थि व्याख्यातम्। उदरोरसस्तु गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति। पृष्ठमर्माणि तु कटिकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलान्यंसौ चेति। बाहुमर्माणि तु क्षिप्रतलहृदयकूर्च कूर्चशिरो मणिबन्धेन्द्रवस्तिकूर्पराण्यूर्वी लोहिताक्षाणि कक्षधरञ्चेति। एतेनेतरो बाहुर्व्याख्यातः। जत्रूर्द्ध्वं मर्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति। तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्माणि। नीलधमनीमातृका शृङ्गाटकापाङ्गस्थपनी फणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिताक्षोर्व्यः शिरामर्माणि। आणिविटपकक्षधरकूर्चकूर्चशिरोवस्ति क्षिप्रांसविधुरोत् क्षेपाः स्नायुमर्माणि। कटिकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्माणि। जानुकूर्परसीमन्ताधिपति गुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्माणि। तान्येतानि पञ्चविकल्पानि मर्माणि भवन्ति। तद्यथा, सद्यः प्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति। तत्र सद्यः प्राणहराण्येकोनविंशतिः कालान्तरप्राण-

हराणि त्रयस्त्रिंशत्, त्रीणि विशल्यघ्नानि चतुश्चत्वारिंशद्वैकल्यकराणि, अष्टौ रुजाकराणीति। उक्ताश्च श्लोकाः।

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्।
हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि च॥ ३३३॥
वक्षोमर्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः।
कटीकतरुणे सन्धी बृहत्यौ ये च पार्श्वयोः॥
नितम्बाविति चैतानि कालान्तरहराणि च॥ ३३४॥
उत्क्षेपौ स्थापनी चैव विशल्यघ्नानि निर्दिशेत्॥ ३३५॥
लोहिताक्षाणि जानूर्वोः कूर्चा विटपकूर्पराः।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके॥ ३३६॥
अंसांसफलकापाङ्गानीले मन्ये फणे तथा।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च॥ ३३७॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्चशिरांसि च।
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्॥ ३३८॥
सद्यः प्राणहरं हन्ति सप्ताहाभ्यन्तरे हितम्।
कालान्तरहरं पक्षान्मासाद्वा हन्ति वै क्वचित्॥ ३३९॥
यथा चानुविशल्यघ्नं वैकल्यञ्च रुजाकरम्।
पूर्वमुद्धतशल्येन मृत्युदं ये रुजाकरे॥ ३४०॥
विद्धमन्ते तु मर्मैतदन्यं यच्चान्तराक्षतम्।
कदाचिद्वैकल्यकरं क्षिप्रं हन्याद्वहिश्चरतम्॥ ३४१॥
इन्द्रियार्थेषु संवित्तिर्मनोबुद्धिविपर्य्ययः।
रुजश्च तीव्रा विविधा भवन्त्याशुहरे हते॥ ३४२॥
हते कालान्तरहरे ध्रुवो धातुक्षये नृणाम्।
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च पीड्यते॥ ३४३॥
हते वैकल्यजनने केवलं वैद्यनैपुणात्।
शरीरक्षयमासाद्य विकलत्वमवाप्नुयात्॥ ३४४॥

विशल्यघ्नेषु विज्ञेयं पूर्वोक्तं यच्च कारणम् ॥ ३४५ ॥
रुजाकराणि मर्माणि चतानि विविधा रुजः ।
कुर्वन्ति तानि वैकल्यं कुवैद्यवशगो यदि ॥ ३४६ ॥
छेदभेदाभिघातेभ्यो दहनाद्दारणात्तथा ।
उपघातं विजानीयान्मर्मणां तुल्यलक्षणम् ॥ ३४७ ॥
अग्निः सोमोऽनिलः सत्वं रजश्च तम एव च ।
प्रायेण मर्मसु नृणां भूतात्मा चावतिष्ठते ॥
तस्मान्मर्मस्वभिहता न जीवन्ति शरीरिणः ॥ ३४८ ॥

छिन्नेषु पाणिचरणेषु सिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ।
प्राप्याऽमितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥ ३४९ ॥
चिप्रेषु तत्र सतलेषु हतेषु चोग्रं
गच्छत्यसृग्बहुरुजं च करोति वायुः ।
एवं विनाशमुपयान्त्विह तत्र विद्धाः
किञ्जल्कपत्रमथनादिव पङ्कजानि ॥ ३५० ॥

मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम् ।
प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरभिसेव्यमानाः ॥ ३५१ ॥

इति मर्मनिर्देशः ।

अशीतिर्वातजा रोगाः स्वरभेदो विपादिकम् ।
पादशूलं पाददाहं पादयोर्भङ्गसुप्तते ॥ ३५२ ॥
गुल्फग्रहं पिड़कार्त्तिर्जानुनोर्भेदनं तथा ।
ऊरुस्तम्भोरुसादौ च पाङ्गुल्यं गुल्फग्रथसौ ॥ ३५३ ॥
गुदभ्रंशो गुदस्यार्त्तिराचेपौ मुष्कयोरपि ।
शिरः स्तम्भो वङ्क्षणार्त्तिः श्रोणिभेदोऽथ खञ्जता ॥ ३५४ ॥
उदावर्तः सविड्भेदः कुब्जत्वं वामनं तथा ।

त्रिकपृष्ठग्रहौ कुक्षौ वेष्टकौ पार्श्वमर्दकः ॥ ३५५ ॥
हृद्भेदो हृद्ग्रहश्चैव हर्षभेदौ च वक्षसः ।
ग्रीवास्तम्भो बाहुशोषो मन्यास्तम्भश्च कम्परुक् ॥ ३५६ ॥
हनुग्रहौष्ठ श्यावौ च दन्तशैथिल्यभञ्जने ।
वाक्सङ्गो मूकता चैव शोषश्चास्य कषायता ॥ ३५७ ॥
रसानामनभिज्ञत्वं गन्धनाशोऽथ कर्णरुक् ।
उच्चैःश्रवणबाधिर्य्ये मशब्दश्रवणं तथा ॥ ३५८ ॥
वर्त्मनोः स्तम्भसङ्कोचौ तिमिरं नेत्रशूलिनम् ।
अक्षिभ्रुवोः स्फुरणञ्च भेदः शङ्खललाटयोः ॥ ३५९ ॥
शिरोऽर्त्तिः केशविस्फोटोऽर्दिताक्षेपप्रदण्डकाः ।
एकसर्वाङ्गरोगौ च स्तम्भः पक्षवधः श्रमः ॥ ३६० ॥
जृम्भणञ्च स्मितत्वञ्च प्रलापो स्वप्नवेपथुः ।
विश्वाचीरौक्ष्यपारुष्यौ ग्लानिः श्यावारुणाभताः ॥ ३६१ ॥
चत्वारिंशच्च पित्तजा ओष्ठशोषोऽथ धूमकः ।
अम्लको वमथुर्दाहो विपाकः प्रवलोष्मता ॥ ३६२ ॥
अन्तर्दाहोऽग्निसादश्च अतिस्वेदोऽग्निगन्धता ।
अथैकदेशदरणं क्लेदो मांसासृजोरपि ॥ ३६३ ॥
त्वग्दाहो रक्तपित्तञ्च दारणं मांसमर्मणोः ।
कोठमण्डलविस्फोटाः रक्तास्यं हरितालता ॥ ३६४ ॥
हरिद्रागुलिकाकारं चक्षुः तृष्णा मकामला ।
तिक्तास्यता पूतिमुख मामगन्धि भवेत्तनु ॥ ३६५ ॥
तमः प्रवेशनं चास्य गुदमेढ्राक्षिपक्तयः ।
हरिद्रमूत्रता वक्त्र जिह्वाधानमतृप्तिता ॥ ३६६ ॥
विंशतिः श्लेष्मजा तन्द्रा तृप्तिर्निद्राङ्गगौरवम् ।
आलस्यं मुखमाधुर्य्यं स्तिमितत्वं मुखस्रवः ॥ ३६७ ॥
श्लेष्मोद्गारो मुखाधिक्यो वलासो धमनीचयः ।

ज्वरःकण्ठप्रलापी च गलगण्डोऽतिनिद्रता॥ ३६८॥
श्वेताभो मूत्रबाहुल्य मुर्द्दः शीतवह्निना।
श्रमी ख्याता समालोक्य अष्टौ च गुणकर्मभिः॥ ३६९॥
इत्यशीतिर्वातजाश्च चत्वारिंशच्च पित्तजाः।
विंशतिः कथितं पूर्वैः श्लेष्मरोगोपदर्शनम्॥ ३७०॥

इति वातपित्तश्लेष्मजरोगाणां गणना।

चिकित्सितं वातहरं पथ्यसाधनमौषधम्।
प्रायश्चित्तप्रशमनं प्रकृतिस्थापनं हितम्॥ ३७१॥
यज्जरा व्याधिविध्वंसि भेषजं तद्रसायनम्।
दीर्घमायुर्धृतिं मेधामारोग्यं तरुणं वयः॥ ३७२॥
प्रभां वर्णं स्वरौदार्य्यं देहेन्द्रियबलप्रदम्।
वाक्सिद्धिं प्रचुरां कान्तिं लभतेऽन्यात्रसायनात्॥ ३७३।
पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत्।
नाविशुद्धशरीरस्य युक्तो रसायनो विधिः॥
न भाति वाससि स्नाने रङ्गयोग इवार्पितः॥ ३७४॥
शीतोदकं पयः चौद्रं घृतमेकैकशो द्विशः।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः॥ ३७५॥
मण्डूकपर्ण्याः स्वरसः प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्पः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥३७६
आयुः प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि मेध्याविशेषेण च शङ्खपुष्पी॥३७७
मधुकेन तुगाक्षीर्य्या पिप्पल्या लवणेन च।
त्रिफलासितया वापि युक्तिसिद्धं रसायनम्॥ ३७८॥
असिततिलसमेतैश्छिन्नपत्रस्य भृङ्गैः
प्रतिदिनमपि युक्तैः स्यान्नरः कामरूपः।
अमृतफलसिताद्यैश्चूर्णितैस्तैर्द्विमासात्

प्रहतगदसमूहः कृष्णकेशश्चिरायुः ॥ ३७९ ॥

चूर्णीकृतं भृङ्गरजस्य पत्रं कृष्णैस्तिलैरामलकैश्च सार्द्धम् ।
सितासमं भक्षयतां नराणां न व्याधयो नैव जरा न मृत्युः ॥३८०

सम्यग् भृङ्गरजः क्षुण्णं वस्त्रपूतः प्रयत्नतः ।
क्षीरन्तु समभागेन मासमेकं नियोजयेत् ॥ ३८१ ॥

वर्षेणान्धो गमनरहितो मत्तमातङ्गगामी
मूको वाग्मी श्रवणरहितो दूरशब्दानुश्रावी ।
षण्डः पुत्री भवति पलितो नीलजीभूतकेशो
जीर्णा दन्ताः पुनरपि दृढ़ा वज्रदेहा भवन्ति ॥ ३८२ ॥

तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्ता वा भोजयेन्नरः ।
पिप्पल्यः किंशुकक्षार भाविता घृतभर्जिताः ॥ ३८३ ॥

प्रयोज्या मधुसर्पिर्भ्यां रसायनगुणैषिणा ।
जेतुं श्वासं क्षयं शोथं हिक्कां कासं गलग्रहम् ॥ ३८४ ॥

अर्शांसि ग्रहणीरोगं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोथं गुल्मवातबलासकम् ॥ ३८५ ॥

सिन्धूत्थशर्कराशुण्ठी कणामधुगुड़ैः क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥ ३८६ ॥

ग्रीष्मे तुल्यगुड़ां ससैन्धवयुतां मेघावनद्धाम्बरे
सार्द्धं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे ।
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिता
राजन् भुङ्क्ष्व हरीतकीं प्रतिदिनं नश्यन्तु ते व्याधयः ॥३८७॥

जरणान्तेऽभयामेकां प्राग्भुक्ते च विभीतकम् ।
भुक्ते तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥ ३८८ ॥

प्रयोजयेत् मासमेकं त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजराव्याधिरेव च ॥ ३८९ ॥

विड़ङ्गासनधात्रीणां चूर्णं लोहरजो घृतम् ।

एतत्संप्राश्य वृद्धोऽपि तारुण्यमधिगच्छति॥ ३९०॥

क्रमिघ्नामलका पथ्या कृष्णालोहरजो घृतम्।

तैलान्वितं रजो लीढ्वा जरया नाभिभूयते॥ ३९१॥

मासं वचाञ्चाप्युपसेव्यमाना क्षीरेण तैलेन घृतेन वापि।

भवन्ति रक्षोभिरधृष्टरूपा मेधाविनो निर्म्मलवर्ण्यवाचः॥३९२॥

तीव्रेण कुष्ठेन परीतमूर्त्तिः यः सोमराजीं नियतश्च खादेत्।

संवत्सरं कृष्णतिलं द्वितीयं स सोमराजीव वपुर्विधत्ते॥ ३९३॥

पुनर्नवस्यार्द्धपलं नवस्य पिष्ट्वा पिबेद्यः पयसार्द्धमासम्।

मासत्रयं तत्त्रिगुणं समं वा जीर्णोऽपि भूयः सः पुनर्नवः स्यात् ३९४

ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम्।

क्षीराशिनस्ते बलवीर्य्ययुक्ताः समाः शतं जीवितमाप्नुवन्ति॥३९५॥

शतावरीमुण्डतिकागुडूची सहस्तिकर्णा सह तालमूली।

एतानि कृत्वा समभागयुक्त्या सर्पिर्मधुभ्यां सततं विलिह्यात् ३९६

जरारुजामृत्युविमुक्तदेहो भवेन्नरः कान्तिबलादियुक्तः।

विभाति देवोपम एव नित्यं शुद्धामयो भूरिविशुद्धबुद्धिः॥३९७॥

पीताऽश्वगन्धा पयसाऽर्द्धमासं घृतेन तैलेन सुखाम्बुना वा।

कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाम्बुवृष्टिः॥३९८

आभाञ्च सोमराजीञ्च समभागविचूर्णिताम्।

नरः क्षीरेण संपीत्वा स कृशः स्थूलतां व्रजेत्॥ ३९९॥

देहकम्पे च शोषे च योगमेतत् प्रयोजयेत्।

मासमात्रोपयोगेन मतिमान् जायते नरः॥

मेधावी स्मृतिमांश्चैव बलीपलितनाशनः॥ ४००॥

अश्वगन्धातसीशुण्ठी निर्गुण्डीमागधी तथा।

षड्वाऽपराजिताश्चैव समभागानि कारयेत्॥ ४०१॥

कर्षैकं भक्षयेन्नित्यं पयसान्नं पिबेदनु।

सन्धिवातं निहन्त्याशु साध्यासाध्यं न संशयः॥

रसायनमिदं प्रोक्तं बलीपलितनाशनम् ॥ ४०२ ॥
वृद्धदारकमूलन्तु योजयेन्मधुसर्पिषा ।
सप्ताहात् चीरभक्ताशी किन्नरैः सह गीयते ॥ ४०३ ॥
हस्तिकर्णरजः खादेत्प्रातरुत्थाय सर्पिषा ।
यथेष्टाहारचारोऽपि सहस्रायुर्नरो भवेत् ॥ ४०४ ॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ ।
मधुना त्वश्ववेगः स्यादरिष्टः स्त्रीसहस्रगः ॥ ४०४ ॥
अयं मन्त्रः प्रयोक्तव्यो भिषजा वाऽभिमन्त्रणे ।

ओं नमो महाविनायकाय अमृतं रक्ष रक्ष मम फलसिद्धिं देहि रुद्रस्य वचनेन स्वाहा ।

गुडूच्यपामार्गविडङ्गशङ्खिनी वचाभयाशुण्ठिशतावरी समा ।
घृतेन लीढ़ा प्रकरोति मानवं त्रिभिर्दिनैश्लोकसहस्रधारिणम्४०६

ब्राह्मीवचाभयावासा पिप्पली मधुसंयुता ।
अस्य प्रयोगात्सप्ताहात् किन्नरैः सह गीयते ॥ ४०७ ॥

पञ्चाङ्गमिन्द्राशनस्तृच्णचूर्णं पलाष्टकं सप्त सितापलानि ।
सिताईमानं मधु तस्य चार्द्धं घृतं क्षिपेत्सर्वमिदं विमिश्रम्॥४०८॥
कृत्वा नरो मासचतुष्टयं यत् पयोऽन्नभक्षी पयसा च भुङ्क्ते ।
विहाय रोगान् समलान्मनीषी जीवेच्चिरं यौवनसंस्थितश्रीः४०९

द्रोणीमार्द्रपलासस्य सपिधानं निरूपितम् ।
धात्रीफलसहस्रेण नीरुजा ब्रह्मदारुणी ॥ ४१० ॥
नीरन्ध्रं निर्दहेन्मन्दं गोमयस्य च वह्निना ।
स्विन्नमामलकं क्षुण्णं पश्चादुद्धृत्य चूर्णकम् ॥
श्रीखण्डीतण्डुलचूर्णानामप्येवाढ़कसंयुतम् ॥ ४११ ॥
तत्तुल्येन शिलार्द्धेन्च विड़ङ्गस्याढ़केन च ।
सर्पिर्माक्षिकतैलानां माढ़कानां पृथक् पृथक् ॥ ४१२ ॥
तत्संस्थाप्य त्रिसप्ताहं सुभाण्डे घृतभाविते ।

ततोऽग्निबलमालोक्य प्रयुञ्जीत यथाविधि ॥ ४१३ ॥
एतद्रसायनं श्रेष्ठं महामुनिनिषेवितम्।
अनेनाब्दशतं पूर्णं वपुस्तिष्ठति निर्जरम् ॥ ४१४ ॥
अङ्गानाञ्च न शैथिल्यं न च लावण्यशून्यता।
जायते न च वैकल्य मिन्द्रियाणां कदाचन ॥ ४१५ ॥
कासश्वासातिसारज्वर पिड़ककटीकुष्ठमेदोविकारान्।
मूत्राघातोदरार्शः श्वयथुगलशिरः स्रावशूलाक्षिरोगान् ॥४१६॥
ये चान्ये वातपित्तश्रमजकफकृता व्याधयः सन्ति जन्तोः।
तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥४१७॥
अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबेत्।
वातपित्तकफान् हत्वा जीवेद्वर्षशतं नरः ॥ ४१८ ॥
व्यङ्गवलीपलितघ्नं पीनस वैस्वर्य कासशोथघ्नम्।
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननञ्च ॥ ४१९ ॥
विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि।
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
बलिपलितविहीनः सर्वरोगैर्विमुक्तः ॥ ४२० ॥
प्रसन्नदृष्टिर्दृढ़दन्तकेशः शशाङ्कवक्त्रः पलितैर्विहीनः।
पिड़ोका विनाशः कमलास्यगन्धो नस्योपसेवी भवतीह मर्त्यः ४२१
तत्त्रिफलाम्बु निशिस्थं वलीपलितहरं दृष्टिजननञ्च।
प्रसृतत्रयं प्रपेयं नासिकरन्ध्रेण नैशिकं तोयम् ॥ ४२१ ॥
दुर्नामश्वासकासज्वरवमथु तृषापाण्डुता नेत्ररोगान्
हिक्काकुष्ठातिसारभ्रममदसहशाजीर्णशूलप्रदोषान्।
तृष्णाशूलास्रपित्तं ज्वरविगतजरारोचकानाह वातान्
हन्यादेतानवश्यं मधुनि परिगता पूतना चाम्लपित्तम् ॥४२२

इति मधुहरीतकी।

अयः पलं गुग्गुलुरत्र योज्यं पलत्रयं व्योषपलानि पञ्च।
पलानि चाष्टौ त्रिफलारजश्च कर्षं लिहन् यात्यमरत्वमेव॥४२४॥

इति लौहगुग्गुलुः।

त्रिकण्टविदारिनिस्तुष तिल बहुपत्री रजश्चतुःप्रस्थम्।
भल्लातकप्रस्थयुतं तत्समानं गुडूच्याश्च॥ ४२५॥
पञ्चत्रिंशन्मधुनो व्योषस्याष्टौ पलानि दशवह्नि।
द्विगुणवाराही सप्त दशगुण शर्करा सघृता च॥ ४२६॥
खादेद्यथाग्निर्हन्तुं रोगानीकं क्षयं कासम्।
अश्मर्युदरकुष्ठवलीपलितपीनसाम्ब्यम्॥ ४२७॥
नरसिंहसदृशविक्रममन्यान्यप्यभिवाञ्छितानि लभते।
बलवर्णस्वरकान्ति पुष्ट्युत्साहसत्वसंयुक्तम्॥ ४२८॥
उपयुञ्ज्य चूर्णमिदं सर्वरोगहरञ्च नरसिंहाख्यम्।
पुत्रान् जनयति वीरान् नरसिंहपराक्रमानरोगान्॥४२९॥
वाराहमूर्धवल्कन्दो वाराहीकन्दसंज्ञितः।
भिषजा तदलाभेऽपि चर्मकारालुको मतः॥ ४३०॥

इति नरसिंहचूर्णम्।

अश्वगन्धापलं त्रिंशच्चूर्णयित्वा विचक्षणः।
वृद्धदारकचूर्णेन समभागन्तु कारयेत्॥ ४३१॥
स्थापयित्वा घटे दिव्ये सर्पिषा परिभाविते।
कर्षमेकं समश्नीयाच्चूर्णस्य पयसा सह॥ ४३२॥
अवाहिकस्य खेदस्य परिहारो न विद्यते।
करीव नित्यं स्रवति सर्वदोषविवर्जितम्॥ ४३३॥
तेजसा प्रभवत्युग्रो रश्मिवानिव भास्करः।
भवत्येव चतुर्मासैर्वलीपलितवर्जितः। ४३४॥

इति अश्वगन्धाद्यं चूर्णम्।

वृद्धदारुचित्रदन्ती कदम्बार्जुनगोक्षुराः।

वाट्यालकाजकर्णौ च वाजिगन्धा शतावरी ॥ ४३५ ॥
कार्पासी पृश्निपर्णी द्वे वह्निश्चैवापराजिता।
कञ्चुकी तालमूली च वृहत्पत्री पलाशिका ॥ ४३६ ॥
ग्रन्थिकं चित्रकं चैव विश्वेदेवा वचामृता।
वाणपुष्पी च पाठा च त्रिश्वीवरुण एव च ॥ ४३७ ॥
शिग्रुः कुलिशभृङ्गी च मुण्डी च कोकिलाख्यकः।
अर्कंचीरं शताह्वा च बचाचव्यफलत्रिकम् ॥ ४३८ ॥
यबानी चाजमोदा च द्विजीरं धान्यतण्डुलाः।
विड़ङ्गमुस्ततालीशं निशि लवणपञ्चकम् ॥ ४३९ ॥
एलापुष्करनागाह्व त्वक्पत्रं हस्तिपिप्पली।
फलीकुष्ठं शटी रेणु जलहिङ्गु सबालकम् ॥ ४४० ॥
पाषाणभेदो वृचाम्ल भद्रोत्कटवितुन्नकः।
पलिका भागतो ग्राह्या गुडूचीविश्वदारुकात् ॥ ४४१ ॥
स्नुहीपलाशमृत्पार्श्वं शिखरीविड़कं कणा।
स्वर्जिका यावशूकाख्या चैषां चारः पलोन्मितः ॥ ४४२ ॥
अभ्रकस्य पलान्यष्टौ चत्वारि गन्धकस्य च।
पलद्वयरसं ग्राह्यं लोहं चाष्टपलं तथा ॥ ४४३ ॥
गवाची भृङ्गकेशी च शालिश्च केशराजकम्।
माणकन्दः कटिल्लश्च दहनो हस्तिकर्णकः ॥ ४४४ ॥
भल्लातमुसलीशुण्ठी त्रिफला वज्रबल्लरपि।
एषां रसे पृथग्लोहं पुटयेन्मर्दयेत्तथा ॥ ४४५ ॥
ग्रन्थिमान्मारिषश्चैव चारं वृहतिका तथा।
उत्कटो लोहितो वह्नि माणो बाणरसैः शुभैः ॥ ४४६ ॥
पुटयेदभ्रकञ्चैव मयसश्च यथाविधिः।
काकमाचिकपिण्डेन पयसा संयुतेन च ॥ ४४७ ॥
यावत्पिण्डो भवेत्तावच्छास्त्रविन्मृदुवह्निना।

एकीकृत्य शुभे भाण्डे स्थापयेत् रसगोपितम् ॥ ४४८ ॥
सर्पिषा मकरन्देन भक्षयेत्प्रत्यहं तु तत् ।
अनुपिबेत्पयः क्षीरं यूषं मांसरसं तथा ॥ ४४९ ॥
भोजनं चाग्निसापेक्षं कार्य्यञ्चैव सहं तथा ।
विहितञ्च मितं चाद्यादौषधे पाकमागते ॥ ४५० ॥
आहारेण समं कार्य्यं नित्यमेवाल्पवह्निना ।
अग्निवृद्धिकरः कार्य्यो रोगाणां चापहारकः ॥ ४५१ ॥
वाते पित्ते कफे शूले हृद्रोगे श्वासकासयोः ।
क्षये च विविधे घोरे शोथे चैवाङ्गसङ्गमे ॥ ४५२ ॥
आमवाते त्रिकशूले सन्धिशूले च सर्वगे ।
अम्लपित्ते सशूले च शोथे सर्वोदरे तथा ॥ ४५३ ॥
अयमेव हितो नित्यं शुक्रवृद्धिकरः परः ॥ ४५४ ॥

इति वृद्धदारुककल्पः ।

जगति ज्योतिष्मती प्रसिद्धगुणिनी, तस्यास्तैलं निष्कासयित्वा जीर्णपुराणशाल्यन्नेन मत्स्यण्डिमधुरेण पाणितलार्द्धं संवृद्ध्या प्रत्यहं भक्षयेच्च वर्द्धयेत्पलं यावत् नातःपरतरं विवृद्धिः कार्य्या मासंस्थितिश्चैषा पलमप्युत्तममात्रा हुतभुग्बलानुरोधेन भिषजा नानुकल्पनीया एवं तैलाढ़कमुपयुज्य महाबलो महाप्राणः षोड़शवर्षाकृति नीरोगो भवति ।

इति ज्योतिष्मतीतैलपानविधिः ।

विड़ङ्गसारो मेघाख्यो रक्तवह्निररुष्करः ।
हस्तिकर्णः सितार्कस्तु श्वेतवर्षासमुद्भवम् ॥ ४५५ ॥
वाकुचीसुण्डिकाभृङ्गो राजको वृद्धदारकः ।
गुडूच्यतिबला रास्ना तालमूली शतावरी ॥ ४५६ ॥
पिण्डारकश्चैड़गजो वैडालः केशराजकः ।

एकैकं पलमेतेषां ग्राह्यं समधुना घृतम् ॥ ४५७ ॥
रसस्यैकं पलं ग्राह्यं लोहस्य पलविंशतिः।
चत्वारिंशत्तथाभ्रस्य शुल्वं चापि चतुष्पलम् ॥ ४५८ ॥
गन्धकस्य पलान्यष्टौ षट्पलानि मनःशिला।
स्वर्णमाक्षिकस्य चत्वारि षट्पलानि शिलाजतोः ॥ ४५९ ॥
त्रिफलात्रिकटूनाञ्च प्रत्येकञ्च पलत्रयम्।
सर्वाण्येतानि संचूर्ण्य घृतेन मधुना सह ॥ ४६० ॥
स्निग्धभाण्डे समालोड्य स्थापयित्वा विचक्षणः।
भक्षयेत् क्रमयोगेन लोहं सर्वरसायनम् ॥ ४६१ ॥

इति लोहरसायनम्।

पारदं विधिना शुद्धं पलद्वितयसम्मितम्।
चतुष्पलं लोहचूर्णं चतुर्विंशपलं सिता ॥ ४६२ ॥
मनोह्वा गन्धपाषाणं हरितालञ्च शुद्धकम्।
कासीसं हिङ्गु कुष्ठञ्च वचोशीररसाञ्जनम् ॥ ४६३ ॥
सारं खदिरवृक्षस्य जातीफलसमन्वितम्।
द्विपलं सूक्ष्मचूर्णन्तु सर्वेषां परिकीर्त्तितम् ॥ ४६४ ॥
गगनाद्द्विपलं कृष्णाल्लोहवत्पुटितात् स्रुतात्।
शस्त्रोक्तपृथगुद्दिष्टैः संयुज्य विधिनोचितम् ॥ ४६५ ॥
त्रिंशच्च त्रैफले तोये प्रस्थेन सर्पिषा सह।
शृङ्गवेररसप्रस्थं निष्क्वाथ्यं वक्ष्यमाणकैः ॥ ४६६ ॥
त्रिवर्णोदितचित्रञ्च चास्थिसंहारसूरणम्।
नागवर्षः सगोधूम भूमिकूष्माण्डतण्डुलाः ॥ ४६७ ॥
सौभाञ्जनं तालमूली मोरटं शङ्खपुष्पिका।
पृथगष्टपलञ्चैषां वारिद्रोणे विपाचयेत् ॥ ४६८ ॥
अष्टभागावशिष्टेन कषायं कारयेत्सुधीः।
मधुनो द्वात्रिंशत्पलं क्षिपेत्तत्र सुशीतले ॥ ४६९ ॥

त्रिकटु त्रिफला सिन्धु विड़ं सौवर्चलं तथा।
टङ्कणो यावशूकश्च सुरदारुपरम्परा: ॥ ४७० ॥
अम्लवेतसमृद्वीका सहार्द्रमधुयष्टिका।
शृङ्गी दुरालभा मुस्तं विड़ङ्गं रक्तचन्दनम् ॥ ४७१ ॥
जीरकञ्च सधन्याकं चूर्णं पलार्द्धकं पृथक्।
दासरसायनं प्रोक्तं नराणां हितकाम्यया ॥ ४७२ ॥
न चात्र परिहारोऽस्ति विहाराहारयन्त्रणे।
अन्नपानानि सर्वाणि भक्ष्यभोज्यानि यानि च ॥ ४७३ ॥
तानि प्रकृतिभेदज्ञो बुद्धिपूर्वं प्रदापयेत्।
सर्वव्याधिहरञ्चैतत् स्वस्थास्वस्थहितं सदा ॥ ४७४ ॥

इति दासरसायनं लौहम्।

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्वक्ष्यामः ॥ ४७५ ॥
मेने मुनिः स्वतन्त्रे भूयः पाकं न पलपञ्चकादर्वाक्।
सुबहुप्रयासदोषादूर्द्धञ्च न पलत्रयोदशकात् ॥ ४७६ ॥
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते।
लोहात्त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका ॥४७७॥
मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः।
त्रिफलाभागद्वितयं ग्रहणीयं लोहपाकार्थम् ॥ ४७८ ॥
सर्वत्रायः पुटने यथैषां सशरावसंख्यानाम्।
प्रतिपलमेव त्रिगुणं पाकार्थं क्वाथमादेयम् ॥ ४७९ ॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावेश्च।
त्र्याद्येकादशकान्तैरधिकं तद्वारि कर्त्तव्यम् ॥ ४८० ॥
तत्राष्टमो विभागः शेषः क्वाथस्य यत्नतः स्थाप्यः।
तेन हि मारणपुटनस्थालीपाका भविष्यन्ति ॥ ४८१ ॥
पाकार्थे तु त्रिफला भागद्वितये शरावसंख्यातम्।

प्रतिपलमम्बुससं स्यादधिकं द्वाभ्यां शरावाभ्याम् ॥ ४८२ ॥
तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतो ग्राह्यः।
अयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः ॥ ४८३ ॥
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते।
दुग्धशरावद्वितयं पादैरेकाधिकैरधिकम् ॥ ४८४ ॥
पञ्चपलादिमात्रा तदलाभे तदनुसारतो ग्राह्यम्।
चतुरादिकमेकान्तं शक्त्यावधिकं त्रयोदशकात् ॥ ४८५ ॥
त्रिफलात्रिकटुकचित्रककान्तक्रामकविड़ङ्गचूर्णानि।
अन्यान्यपि देयानि पलाशस्य च बीजानि ॥ ४८६ ॥
जातीफलजातीकोषैलाकक्कोलकलवङ्गानाञ्च।
सितकृष्णजीरकयोरपि चूर्णान् पयसा समानि स्युः।
त्रिफलात्रिकटुविड़ङ्गा नियता ह्यन्ये यथा प्रकृतिः ॥४८७॥
कालायसदोषहृते जतीफलादेर्लवङ्गकान्तस्य।
क्षेपः शक्त्यनुरूपः सर्वस्योनस्य चैकाद्यैः ॥ ४८८ ॥
कान्तिक्रामकमेकं निःशेषदोषमपहरत्ययसः।
द्विगुणत्रिगुणचतुर्गुणमाज्यं यथा प्रकृति ॥ ४८९ ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वा तथापि चूर्णानाम्।
अयसा साम्यं संख्या भूयोऽल्पत्वेन भूयोऽल्पा ॥ ४९० ॥

इति साध्यसाधनविधिः।

गजकर्णपत्रमूलैः शतावरीभृङ्गकेशराजरसैः।
आद्यस्थालीपाकं दद्यात् प्रत्येकमेकं वा ॥ ४९१ ॥

इति स्थालीपाकभेषजानि।

त्रिफलाम्बुभृङ्गकेशर शतावरिकाकन्दमाणसहजरसैः।
भल्लातककरिकर्ण छदमूलपुनर्नवा स्वरसैः ॥ ४९२ ॥

इति पुटभेषजानि। इति नागार्जुनी लेहः।

समूलपत्रामुत्पाट्य ब्राह्मीं प्रक्षाल्य वारिणा।

उलूखले चोदयित्वा रसं वस्त्रेण गालयेत् ॥ ४९३ ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
भेषजानि च पेष्याणि तत्रेमानि प्रदापयेत् ॥ ४९४ ॥
हरिद्रामलकं कुष्ठं त्रिवृतां सहरीतकीम् ।
एतेषां पलिकान् भागाच्छेषांस्तु कार्षिकान् विदुः ॥४९५॥
पिप्पल्योऽथ विड़ङ्गानि सैन्धवं शर्करं वचा ।
सर्वमेतत्समालोड्य शनैर्मृदग्निना पचेत् ॥ ४९६ ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥ ४९७ ॥
हन्त्याष्टादश कुष्ठानि ह्यर्शांसि षड्विधानि च ।
पञ्चगुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥ ४९८ ॥
वन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम वर्णायुर्बलवर्द्धनम् ॥ ४९९ ॥

इति सारस्वतं घृतम् ।

गुडूच्यपामार्गविड़ङ्गशङ्खिनी वचाशतावर्य्यभयामहौषधैः ।
घृतं विपक्वं पिबतां प्रशस्तं वचस्तु येषां विकलञ्च जातम् ॥५००॥

इति गुडूच्यादि घृतम् ।

यत्कन्दनालदलकेसरवद्विपक्वं
नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ।
सर्पिश्चतुष्कुवलयं सहिरण्यपात्रं
मेध्यं गवामपि भवेत्किमु मानुषाणाम् ॥ ५०१ ॥

इति चतुष्कुवलयघृतम् ।

आजं पयः शृङ्गवेरं वचाशिग्रुहरीतकी ।
पिप्पल्यो मरिचं पाठा सैन्धवं दशमं घृतम् ॥ ५०२ ॥
शृङ्गबेरादयो भागा लवणान्ताः पलाष्टकम् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥ ५०३ ॥

एतत्प्राशितमात्रेण किन्नरैः सह गीयते।
जड़गद्गदमूकत्वं पानादेव प्रशाम्यति॥ ५०४॥
नष्टञ्च स्मरते ग्रन्थं श्रुतिश्चाप्युपजायते।
एतत्सारस्वतं नाम स्मृतिमेधाविवर्द्धनम्॥ ५०५॥

इति द्वितीयसारस्वतं घृतम्।

मण्डूकीं सवचां सशङ्खकुसुमां सब्रह्मसौवर्च्चलाम्।
गुञ्जां श्वेतवतीं शतावरियुतां ब्राह्मीं गुडूचीं तथा॥५०६॥
पिष्ट्वांशैः पलिकैरिमानि विधिवद्द्रव्याणि प्रस्नावयेत्।
सर्पिष्प्रस्थमथाढ़केन पयसा युक्तिं पचेत्पाचनम्॥ ५०७॥
नाम्नाष्टाङ्गमिदं विदेहरचितं ख्यातं पिबेद्यो घृतम्
स श्लोकस्य सहस्रमेकदिवसेनैवाखिलं धारयेत्।
अक्षीणाप्रतिहीनवाचि मधुरस्पष्टाभिधायी सदा
लोके शुक्रबृहस्पतिसमनृणां पूज्यश्च नित्यं सदा॥ ५०८॥

इति अष्टाङ्गमङ्गलं घृतम्।

सतताध्ययनं वादः परतन्त्रावलोकनम्।
सद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः॥ ५०९॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम्।
ब्रह्मचर्य्यमहिंसा च साहसानि च वर्जयेत्॥ ५१०॥
न केवलं दीर्घमथायुरश्नुते रसायनं यो विधिवन्निषेवते।
गतिं स दिव्यां मुनिसेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षयम् ५११

इति वङ्गसेनसङ्कलितः रसायननिदानचिकित्साधिकारः समाप्तः।

---

## अथ वाजीकरणाधिकारमाह।

रक्तेन कुणपं श्लेष्म वाताभ्यां ग्रन्थिसन्निभम्।
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः॥ १॥

कृच्छ्राण्येतान्यसाध्यन्तु त्रिदोषं मूत्रविड्निभम् ।
तेष्वाद्याञ्छुक्रदोषांस्तान् स्नेहस्वेदादिभिर्जयेत् ॥ २ ॥
क्रियाविशेषैर्मतिमां स्तथैवोत्तरवस्तिभिः ।
पाययेत्तद्वजं सर्पिर्भिषक् शोणितशोषिणाम् ॥ ३ ॥
धातकीपुष्पखदिर दाड़िमार्जुनसाधितम् ।
कुणपाख्ये पिबेत्सर्पिः शालिसारादिसाधितम् ॥ ४ ॥
ग्रन्थिभूते पिबेत्सर्पिस्त्रिवकोशीरहिङ्गुभिः ।
स्निग्धं वान्तविरिक्तञ्च निरूहमनुवासितम् ॥ ५ ॥
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना ।
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ॥ ६ ॥
स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु ।
कुर्य्यात्कल्कमिमञ्चापि पथ्यानां वमनानि च ॥ ७ ॥
ग्रन्थिभूते पिबेत्पाठां त्र्यूषणं वृत्तकाणि च ।
दुर्गन्धे पूयसङ्काशे मज्जस्तुल्ये तथार्त्तवे ॥ ८ ॥
पिबेद्भद्रश्रियः क्राथं चन्दनक्राथमेव च ।
शुक्रदोषहराणाञ्च यथास्वमवधारणम् ॥ ९ ॥
योगैः समस्तैः सघृतैस्तैले पूपालिकां पचेत् ।
तां भक्षयित्वा नीत्वाऽनुशर्करामधुना पयः ।
नरश्चटकवद्गच्छेद् शतवारं निरन्तरम् ॥ १० ॥
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम् ॥
सर्पिः क्षौद्रयुतं लीढ्वा दश गच्छेन्नरोऽङ्गनाः ॥ ११ ॥
एवमामलकच्चूर्णं स्वरसेनैव भावितम् ।
शर्करामधुसर्पिर्भ्यां युक्तं लीढ्वा पयः पिबेत् ।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते ॥ १२ ॥
विदारीकन्दकल्कञ्च घृतेन पयसा नरः ।
उदुम्बरसमं खादेद्वृद्धोऽपि तरुणायते ॥ १३ ॥

अश्वत्थफलशुङ्गाग्रमूलं त्वग्भिः शृतं पयः ।
पीत्वा सशर्करञ्चैव वृद्धोऽपि तरुणायते ॥ १४ ॥
स्वयं गुप्ताखुरसयोर्बीजचूर्णं सशर्करम् ।
पयसा च नरः पीत्वा धातो र्न हि क्षयं व्रजेत् ॥ १५ ॥
माषाणां पलमेकन्तु संयुक्तं मधुसर्पिषा ।
तं लीढ्वानुपिबेत् क्षीरं तेन वाजी भवेन्नरः ॥ १६ ॥
कर्षं मधुकचूर्णन्तु घृतक्षौद्रसमन्वितम् ।
पयोऽनुपानं यो लिह्यात् स गच्छेद्दश चाङ्गनाः ॥ १७ ॥
गृष्टीनां वृद्धवत्सानां माषवर्णभृतां गवाम् ।
यत् क्षीरं तत्प्रशंसन्ति बलकामेषु जन्तुषु ॥ १८ ॥
शर्करायास्तुलैकं स्यादेकं गव्यस्य सर्पिषा ।
पक्वा पूपालिकां खादेत् बह्व्यः स्युर्यस्य योषितः ॥ १९ ॥

इति पूपालिका ।

दध्नोऽर्द्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः
प्रस्थं क्षौद्रपलं पलञ्च हविषः शुण्ठ्याश्चतुर्माषकम् ।
अक्षार्द्धं मरिचाद्विडङ्गत इह द्वौ माषकावेकतः
कृत्वा शुक्लपटाच्छनैः करतलेनोन्मथ्य विस्रावयेत् ॥ २० ॥
मृद्भाण्डे मृगनाभिचन्दनरसस्पृष्टेऽगुरुधूपिते
कर्पूरेण सुगन्धितां तदखिलां संलोड्य संस्थापयेत् ।
या पीता मधुरस्वरेण सुरसा सेयं रसाला तथा
ख्याता मन्मथदीपनी सुरचिता कान्तेव नित्यं प्रिया ॥२१॥

इति रसाला ।

शुभेऽह्नि देशसम्भूतं पलशतं सम्यगश्वगन्धायाः ।
पुष्येऽहनि संक्षुण्णं द्रोणेऽम्भसि पचेत् सुविद्वान् ॥ २२ ॥
ज्ञात्वाष्टभागशेषं गृह्णीयात्तद्रसं सुपरिपूतम् ।
द्वे चैवात्र पलशते दद्याच्छागस्य शुद्धमांसस्य ॥ २३ ॥

सर्पिः प्रस्थमथैकं मेध्यं गोपयश्चतुर्गुणं दद्यात् ।
कल्कानक्षसमांश्चानूर्द्धमतः संप्रवक्ष्यामि ॥ २४ ॥
काकोली द्वे मृद्वी द्वे मेदे जीरकं स्वयं गुप्ताम् ।
ऋषभकमेलां मधुकं मृद्वीकां शूर्पपर्णीञ्च ॥ २५ ॥
जीवन्तीं सोपकुल्यां बलां विदारीं शतावरीञ्चापि ।
दत्त्वा सम्यग्विपचेत्सर्पिरथोद्धृत्य पीत्वा च ॥ २६ ॥
मधुशर्करयोः कुड़वं दत्त्वा भाण्डे स्थितं मृदितम् ।
लीढ्वा तत्पाणितलं यथेष्टाहारमश्नीयात् ॥ २७ ॥
क्षीणक्षतशिशुवृद्धाः क्षीणेन्द्रिया हीनमांसाश्च ।
प्राश्य प्राप्नुयुः सद्यो पुष्टिबलारोग्यतेजांसि ॥ २८ ॥
उपयुज्य सर्पिरेतत्सप्ततिवर्षोऽपि युवेव भूत्वा ।
बहुशः स्त्रियोऽभिगच्छेत् न चात्र शुक्रक्षयं लभते ॥ २९ ॥
पुत्रार्थिनी च नारी लभते पुत्रान् वयस्यतीतेऽपि ।
बन्ध्यापि लभते पुत्रं प्रयोगादश्वगन्धायाः ॥ ३० ॥
उपयुंक्ते यः पुरुषस्त्रिमासं सार्द्धमासं वा
नारीशतं स गच्छेन्नैव भजेद्योषितां तृप्तिम् ॥
खालित्यबलीपलितैर्न चास्य देहोऽभिभूयते क्षिप्रम् ॥३१॥
वातव्याधिभिरार्त्तास्तथैव हृद्वस्तिशूलार्त्ताः ।
भुञ्जानाः सर्पिरिदं नरा नीरोगा भवन्तीह ॥ ३२ ॥
एवं जगद्धितार्थं सर्पिरिदं वाजिगन्धायाः ।
श्रेष्ठं वाजीकरणं निर्दिष्टं पूर्वमश्विभ्याम् ॥ ३३ ॥

इति बृहदश्वगन्धाद्यं घृतम् ।

अश्वगन्धाप्रस्थमेकं दुग्धञ्चैवाढ़कं द्वयम् ।
घृतप्रस्थमिदं दद्याच्छनैर्मृद्वग्निना पचेत् ॥ ३४ ॥
त्रिकटुकं चतुर्जातं विड़ङ्गं जातिपत्रकम् ।
बला चातिबला चैव श्वदंष्ट्रा वृद्धदारुकम् ॥ ३५ ॥

पलैकञ्च प्रदातव्यं लोहं वङ्गं तथाभ्रकम्।
प्रस्थार्द्धं माक्षिकं दद्यात् प्रस्थार्द्धं शर्करां शुभाम्॥ ३६॥
सर्वमेतद्विनिक्षिप्य स्निग्धे भाण्डे निधापयेत्।
द्वौ कालौ भक्षयेन्नित्यं समीक्ष्याग्निबलं यथा॥ ३७॥
अर्द्धं वातं हनुस्तम्भं मन्यास्तम्भं कटिग्रहम्।
शोषसन्धिगतं वातमस्थिभङ्गञ्च गृध्रसीम्॥ ३८॥
अग्निदोषञ्च त्वग्दोषं पाददोषं तथैव च।
गर्भप्रसवजान्दोषानामगर्भस्रवाञ्च यत्॥ ३९॥
पाण्डुत्वमामवातञ्च शुक्रदोषञ्च षण्ढताम्।
सर्ववातान्निहन्त्येतद्यथा सिंहो गजानिव॥
अश्वगन्धादिविख्यातं सर्ववातरुजापहम्॥ ४०॥

इति अश्वगन्धादि घृतम्।

घृतं शतावरीगर्भं क्षीरे दशगुणे शृतम्।
रेतः शुद्धिकरं तच्च शस्तं चाप्यार्त्तवार्त्तिषु॥ ४१॥
यद्द्रव्यं पुरुषं कुर्य्याद्वाजीव सुरतक्षमम्।
तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः॥ ४२॥
क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते।
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते॥ ४३॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते।
ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते॥
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम्॥ ४४॥
अन्नैरम्लोष्णलवणैरतिमात्रेण सेवितैः।
सौम्यधातुक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते॥ ४५॥
अतिव्यवायशीलो यो न च वाजीक्रियारतः।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम्॥ ४६॥
महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत्।

वीर्य्यवाहिशिराच्छेदात् मेहनानुन्नतिर्भवेत् ॥ ४७ ॥
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्य्यतः।
षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ॥ ४८ ॥
जन्मप्रभृति यत् क्लैव्यं सहजं तद्धि सप्तमम् ॥ ४९ ॥
असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत्।
साध्यानामवशिष्टानां कार्य्यो वाजीकरो विधिः ॥ ५० ॥
नरो वाजीकरान्धत्ते सम्यक् शुद्धो निरामयः।
आसप्ततिं प्रकुर्वीत वर्षादूर्द्ध्वन्तु षोड़शात् ॥ ५१ ॥
न तु वै षोड़शादर्वाक् सप्तत्याः परतो न च।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥ ५२ ॥
शुष्कं रूक्षं यथा काष्ठं जन्तुकीटविजर्जरम्।
स्पृतमाशु विशीर्य्येत तथा वृद्धः स्त्रियं व्रजन् ॥ ५३ ॥
शोथकासज्वरार्शांसि स्वरकार्श्यातिपाण्डुताः।
अतिव्यवायाज्जायन्ते रोगाश्च क्षयकादयः ॥ ५४ ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥ ५५ ॥
त्रिभिस्त्रिभिरहोभिश्च सेवेत प्रमदां नरः।
सर्व्वर्त्तुषु नरो ग्रीष्मे पक्षाद्योषां भजेद्बुधः ॥ ५६ ॥
ग्लानिः श्रमश्च दौर्बल्यं धात्विन्द्रियबलक्षयः।
क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः ॥
अकालमरणञ्च स्याद्भजतः स्त्रियमन्यथा ॥ ५७ ॥
रजस्वलामकामाञ्च मलिनामप्रियामपि।
वर्णहीनां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ॥ ५८ ॥
हीनाङ्गीं मलिनां द्वेष्यां योनिदोषसमन्विताम्।
स्वगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ॥
सन्ध्ययोः पूर्वकाले च नोपेयात् प्रमदां नरः ॥ ५९ ॥

रजस्वलां गतवतो नरस्यासंयतात्मनः।
दृष्ट्यायुस्तेजसां हानि रधर्मश्च ततो भवेत्॥ ६०॥
लिङ्गिनीं गुरुपत्नीञ्च स्वगोत्रामथ पर्वसु।
वृद्धां वा सन्ध्ययोश्चापि गच्छन् प्राप्नोति संचयम्॥ ६१॥
वयोरूपगुणोपेतां तुल्यशीलगुणान्वयाम्।
अभिकामोऽभिकामाख्यां हृष्टो हृष्टामलङ्कृताम्॥
सेवेत प्रमदां नित्यं वाजीकरणसेवनः॥ ६२॥
स्नानं सशर्करं क्षीरं मांसं भोज्याश्च गौड़काः।
सुजलं स्वप्नसेवा च व्यवायान्ते हितानि तु॥ ६३॥
स्त्रीष्वक्षयं मृगयतां वृद्धानां च रिरंसताम्।
क्लीवानामल्पशुक्राणां योगा वाजीकरा हिताः॥ ६४॥
इक्षुरगोक्षुरकः शतमूली वानरिनागबला च।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति ६५

माक्षीकधातुमधुपारदलोहचूर्णं
पथ्या शिलाजतुविड़ङ्गघृतानि लिह्यात्।
एकाधिविंशति महानि गदार्दितोऽपि
चाशीतिकोऽपि रमयेत्प्रबलो युवेव॥ ६६॥

गवां विरूढ़वत्सानां सिद्धं पयसि पायसम्।
गोधूमैस्तत्सिताक्षौद्र सर्पिर्मिश्रं सुशीतलम्।
भुक्त्वा वाप्यतिजीर्णोऽपि दशदारा व्रजत्यपि॥ ६७॥
पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा।
साधितौ भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम्॥ ६८॥
वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान्।
यः खादेत्स नरो गच्छेत् स्त्रीणां शतमपूर्ववत्॥ ६९॥
कुलीरकूर्मनक्राणा मण्डान्येवं हि भक्षयेत्॥ ७०॥
उच्चाटचूर्णमप्येवं क्षीरेणोत्तममुच्यते।

शतावर्य्युच्चटाचूर्णं पेयमेव सुखाम्बुना ॥ ७१ ॥
घृतलिप्तं माषविदलं दुग्धे सिद्धं सिताज्यसंयुक्तम् ।
भुक्तं तदेव कुरुते रमणशक्तिं शतयोषित्सु ॥ ७२ ॥
त्रिकण्टकात्मगुप्तानां बीजचूर्णं सशर्करम् ।
क्षीरेण यः पिबेन्नच्छेद्दशवारं निरन्तरम् ॥ ७३ ॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते ॥ ७४ ॥

इति शतावरीघृतम् ।

माषाणामात्मगुप्तानां बीजानामाढ़कत्रयम् ।
जीवकर्षभकौ मेदे वीराद्धी शतावरी ॥ ७५ ॥
मधुकं चाश्वगन्धा च साधयेत् कुड़वोन्मितम् ।
तथैवास्मिन् घृतप्रस्थे द्रव्याद्दशगुणं पयः ॥ ७६ ॥
विदारिणो दशप्रस्थं प्रस्थमिक्षुरसस्य च ।
दत्त्वा मृदग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ७७ ॥
शर्करायास्तुगाक्षीर्य्याः क्षौद्रस्य च पृथक् पृथक् ।
भागांश्चतुष्पलांश्चात्र पिप्पल्याश्च द्वयं पलम् ॥ ७८ ॥
पलपूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ।
यदीच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ॥ ७९ ॥

इति माषबलम् ।

गोधूमाच्च पलशतं निःक्वाथ्य सलिलाढ़के ।
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ॥ ८० ॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम् ।
काकोलीक्षीरकाकोली विदारी च शतावरी ॥ ८१ ॥
अश्वगन्धा सखर्जूरा मधूकं त्र्यूषणं सिता ।
भल्लातकं चात्मगुप्ता समभागानि कारयेत् ॥ ८२ ॥
घृतप्रस्थं पचेदेवं क्षीरं दत्त्वा चतुर्गुणम् ।

मृद्वग्निनाथ सिद्धेऽस्मिन् द्रव्याण्येतानि निक्षिपेत् ॥ ८३ ॥
त्वगेला पिप्पलीधान्यं कर्पूरं नागकेसरम्।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥ ८४ ॥
दत्त्वेक्षुखण्डमालोड्य विधिवद्विनियोजयेत्।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥ ८५ ॥
केवलं वा पिबेदस्य पलमात्रं प्रयत्नतः।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥ ८६ ॥
बल्यं परं वातहरं शुक्रसञ्जननं परम्।
परमोजःकरञ्चैव पुष्टिवर्णबलप्रदम् ॥ ८७ ॥
वातपित्तहरं वृष्यं पित्तगुल्महरं परम्।
मूत्रकृच्छ्रप्रशमनं वृद्धानां चापि शस्यते ॥ ८८ ॥
पलद्वयं तदश्नीयाद्दशरात्रमतन्द्रितः।
स्त्रीणां शतं च भजते पीत्वा ह्यनुपिबेत्पयः ॥ ८९ ॥
अश्विभ्यां निर्मितं चैव गोधूमाद्यं रसायनम् ॥ ९० ॥
जलद्रोणे तु गोधूमक्काथे तच्छेषमाढ़कम्।
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम् ॥ ९१ ॥

इति गोधूमाद्यं घृतम्।

जीवन्त्यतिबलामेदा काकोलीद्वयजीरकैः।
साभयातिक्तता कृष्णा काकनासारसायनैः ॥ ९२ ॥
स्वयङ्गुप्ता शटी भृङ्गी जीरकं शारिवाद्वयैः।
सहाचरवराविश्वपिप्पलीमूलभर्जनैः ॥ ९३ ॥
पिष्टैस्तैलं घृतं पक्कं क्षीरेणाष्टगुणेन च।
दत्त्वानुवासनैर्न्नेयं शुक्राग्निबलवर्द्धनम् ॥ ९४ ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम्।
नस्यैः पानैश्च संयुक्त मूर्ध्वजत्रुगदापहम् ॥ ९५ ॥

इति जीवन्तीयमकम्।

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थं च घृततैलस्य तस्मिन् तप्ते निधापयेत् ॥ ६६ ॥
त्वक्पत्रधान्यकव्योष जीरकैलार्द्रकं पलम् ।
षड्ग्रन्थाचव्यमातङ्ग पिप्पलीशृङ्गवेरकम् ॥ ६७ ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् ।
चूर्णीकृतं पलांशञ्च गुड़स्य तु तुलां पचेत् ॥ ६८ ॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत् ।
कफपित्तानिलहरं मन्दाग्नीनां च दीपनम् ॥ ६९ ॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् ।
प्रमदासु प्रसक्तानां ये च स्युः चीणरेतसः ॥ १०० ॥
चयेण च गृहीतानामेतच्च भेषजं मतम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ॥
गुड़कूष्माण्डकं ख्यातमश्विभ्यां समुदाहृम् ॥ १०१ ॥

इति गुड़कूष्माण्डकम् ।

यत्किञ्चिन्मधुरं स्निग्धं जीवनं तर्पणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ १०२ ॥
अभ्यङ्गाच्छादनस्नानगन्धमाल्यविभूषणैः ।
गृहशय्यासनसुखैर्वासोभिर्विदितैः प्रियैः ॥ १०३ ॥
विहङ्गानान्तु तैरिष्टैः स्त्रीणां वाऽऽभरणस्वनैः ।
संवादनैर्वरस्त्रीणा मिष्टानाञ्च वृषायते ॥ १०४ ॥
सुरूपा यौवनावस्था लक्षणैर्वा विभूषिता ।
या वश्या शिक्षिता चैव सा स्त्री वृष्यतमा स्मृता ॥१०५॥
जरया वृत्तया शुक्रं व्याधिभिः कर्मकर्षणात् ।
नराणां मरणं शस्त्र मभिघातादसेवनात् ॥
चयाद्भयादधिस्रावात् शोकात् स्त्रीदोषकर्षणात् ॥१०६॥

दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः।
क्लैव्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम्॥ १०७॥

इति वङ्गसेनसङ्कलितः वाजीकरणनिदानचिकित्साधिकारः समाप्तः।

---

## अथ स्नेहपानाधिकारमाह।

तत्र प्रथमरोगाऽनुत्पादनक्रममाह।

हिताभिर्जुहुयान्नित्यमन्तराग्निं समाहितः।
अन्नपानसमिद्भिर्वा मात्राकालविचारवित्॥ १॥
तत्र नित्यं प्रयुञ्जीत स्वस्थान् न परिहार्य्य च।
अज्ञातानां विकाराणामनुत्पत्तिकरं हितम्॥ २॥
सर्वमन्यत्परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानामभावश्च शरीरिणाम्॥ ३॥
नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
दाता शमी सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥४॥
मतिश्च वै कर्म्मसुखानुबन्धे सत्वं विधेयं विशदा च बुद्धिः।
ज्ञानं तपः सत्यरतोवयोगो यस्यास्ति तन्नाभिभवन्ति रोगाः॥५॥
अर्थेष्वलभ्येषु कृतप्रयत्नः कृतादरो नित्यमुपायवत्सु।
जितेन्द्रियं नानुतपन्ति रोगा स्तत्कालयुक्तं यदि नास्ति दैवम् ७
नागरो नगरस्येव रथस्येव रथी यथा।
स्वशरीरस्य मेधावी कृतेष्ववहितो भवेत्॥ ७॥

इति रोगानुत्पादनप्रकरणम्।

वमनं रेचनं नस्यं निरूहश्चानुवासनम्।
ज्ञेयं पञ्चविधं कर्म्म विधानं तस्य कथ्यते॥
आपो यथा विरुध्यन्ते स्निग्धाप्तान्नादयत्नतः।
तथा संशोधनद्रव्यैः स्निग्धत्कोष्ठात्कफं नयेत्॥ ८॥

मलापहं रोगहरं बलवर्णप्रसादनम्।
पीत्वा संशोधनं सम्यगायुष्मान् पूज्यते चिरम्॥ १०॥
कण्ठूरुजङ्घपादस्थे वाते स्नेहं विशेषतः।
पिबेत्प्राग्भोजनाज्जन्तुः कण्ड्वादीनां मलापहम्॥ ११॥
पिबेत्संशोधनादूर्ध्वं मूर्ध्वजत्रुनिले गदे।
बलितेनेन्द्रियाणाञ्च वैकल्यं चोपजायते॥ १२॥
पक्षाघातं सहृद्रोगं सेव्यमानं निहन्ति च।
सहान्नेनाग्निनः स्नेहो बलवर्णकरः परः॥ १३॥
सोपानल्लघौ कोष्ठे निरामे वीक्ष्य पावकम्।
पाययित्वा भिषक् स्नेहं कटूष्णं वारि पाययेत्॥ १४॥
यथा दोषं यथा कालं यथा व्याधिर्यथा बलम्।
स्नेहं पक्वमपक्वं या पाययित्वा चिकित्सकः॥ १५॥
सर्पिः शरदि पातव्यं वसामज्जा च माधवे।
तैलं प्रावृषि नात्युष्णं शीते स्नेहं पिबेन्नरः॥ १६॥
जलमुष्णं घृते पेयं यूषस्तैलेषु शस्यते।
वसामज्जसि मण्डस्तु सर्वेषूष्णमथाम्बु वा॥ १७॥
ऋते भल्लातकस्नेहात्तत्र तोयं सुशीतलम्।
त्रिकर्षादर्द्धकर्षेण वृद्धिः सार्द्धपलं तथा॥ १८॥
ततः कर्षाभिवृद्धिश्च भवेद्यावत्पलत्रयम्।
ततोऽपि च पलार्द्धेन वृद्धिर्यावच्च षट्पलम्॥ १९॥
मात्रेयं स्नेहपानस्य जघन्यमध्यमोत्तमाः॥ २०॥
एकाहमुत्तमा पेया त्र्यहमेव तु मध्यमा।
स्नेहमात्रा यथायोगं सप्ताहन्तु कनीयसी॥ २१॥
अहोरात्रेण महती जीर्य्यत्यह्नि तु मध्यमा।
दिनार्द्धे चापराः तिस्रः स्नेहमात्राः प्रमाणतः॥ २२॥
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।

देयं बहुकफे तैलं व्योषक्षारसमायुतम् ॥ २३ ॥
शीतकाले दिवास्नेहमुष्णकाले पिबेन्निशि।
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ॥ २४ ॥
पिबेत्पित्तकफे चोष्णं स्नेहमूर्च्छातृषापहम्।
शीतं वातकफार्त्तस्य गौरवारुचिशूलकृत् ॥ २५ ॥
स्युः पच्यमाने तृड्दाहभ्रमोमूर्च्छारुचिस्तमः।
परिषिक्तोऽप्यनुष्णाद्भिर्जीर्णस्नेहो यतो नरः ॥ २६ ॥
यवागूं प्राशयेदुष्णां कृतां षष्टिकतण्डुलैः।
अल्पस्नेहां विलेपीञ्च जीर्णस्नेहे सुखोदनम् ॥ २७ ॥
तृप्तस्य स्नेहसिद्धेन यूषेणाल्पशृतेन वा।
पिबेत्संशमनं स्नेहमन्नकाले प्रकाङ्क्षितम् ॥ २८ ॥
सिद्धयर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः।
स्नेहसात्म्यः क्लेशसहो दृढ़काले च शीतले ॥ २९ ॥
अच्छमेव पिबेत् स्नेह मच्छपानं हि शोभनम्।
द्रव्याढ्यमनभिष्यन्दि भोज्यमन्नं प्रमाणतः ॥ ३० ॥
नातिस्निग्धमसङ्कीर्णं सुस्नेहं पातुमिच्छता।
पिबेत् त्र्यहं चतुरहं पञ्चाहं षड़हानि वा ॥ ३१ ॥
सप्तरात्रात् परं स्नेहं सात्म्यभावाय कल्पते।
मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ॥
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ ३२ ॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यते।
विष्टभ्य वापि जीर्य्येत वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ॥ ३३ ॥
स्नेहाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत्।
तमोद्गारी भवेच्छुद्धो रुचिरन्नं भवेत्प्रति ॥ ३४ ॥
स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः।

एवं चानुप्रशाम्यन्तं स्नेहमुष्णाम्बुनोद्धरेत् ॥ ३५ ॥
स्नेहद्विषः शिशून् वृद्धान् सुकुमारान् कृशानपि ।
तृष्णालुं चोष्णकाले च सहभक्तेन पाययेत् ॥ ३६ ॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ ३७ ॥
प्राश्य मांसरसान् स्नेहान् पेया वा स्नेहभर्जिताः ।
पिबेत्सुखोष्णं मनुजः सद्यः स्नेहन मुच्यते ॥ ३८ ॥
धारोष्णं स्नेहसंयुक्तं पीत्वा सलवणं पयः ।
दध्नो रसं सारगुड़ं पीत्वा स्निह्यति मानवः ॥ ३९ ॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला ।
सुखोष्णा सेव्यमाना तु सद्यःस्नेहन मुच्यते ॥ ४० ॥
शर्कराघृतसंसृष्टे दुह्याद् गां कलसेऽथवा ।
पाययेदच्चमेतद्धि सद्यः स्नेहनमुच्यते ॥ ४१ ॥
विवर्जयेत् स्नेहपान मजीर्णी तरुणज्वरी ।
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीड़ितः ॥ ४२ ॥
छर्द्याभिभूतस्तृषितः श्रन्तःपानक्लमान्वितः ।
वस्तिदत्तो विरिक्तश्च वान्तो यश्चापि मानवः ॥ ४३ ॥
अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् ।
स्नेहपानाद्धवेदेषां नृणां नानाविधो गदः ॥ ४४ ॥
गदा वा कृच्छ्रतां यान्ति न सिध्यन्ति तथा पुनः ।
उष्णोदकोपचारी स्यात् ब्रह्मचारी चपाशयः ॥ ४५ ॥
वेगरोधनव्यायामक्रोधशोकहिमातपान् ।
वर्जयेत्प्रयतो नित्यं सेवयेच्छयनासनम् ॥ ४६ ॥
स्नेहं पीत्वा पुनः स्नेहं प्रतिभुञ्जानमेव च ।
स्नेहपथ्यापचाराद्धि जायन्ते दारुणा गदाः ॥ ४७ ॥
पुरीषं ग्रन्थितं रूक्षं वायुरप्रगुणो विटम् ।

पक्वा खरत्वं रौक्ष्यञ्च गात्रस्यास्निग्धलक्षणम् ॥ ४८ ॥
वातानुलोम्यं दीप्ताग्निर्वर्चः स्निग्धमसंहितम्।
मार्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते ॥ ४९ ॥
पाण्डुता सदनं तन्द्रा पुरीषस्य विपक्वता।
उत्क्लेशो जाड्यमरुचिः स्यादतिस्निग्धलक्षणम् ॥ ५० ॥
मिथ्याहारादिना लोके स्नेहः पीतो ज्वरादिकृत्।
प्रकुर्य्याल्लङ्घनं तत्र मलं ज्ञात्वा विरेचितम् ॥ ५१ ॥
रूक्षस्य स्नेहनं स्नेहैरति स्नेहस्य रूक्षणम्।
श्यामाककोरदूषान्न तक्रपिण्याकसक्तुभिः ॥ ५२ ॥
दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः।
दृढेन्द्रियो मन्दज्वरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः।५३॥
स्नेहमेव परं विद्याद् दुर्बलानलदीपनम्।
बलं स्नेहसमिद्धिश्च समायातः सुदुर्बलः ॥ ५४ ॥
स्नेहे व्यायामसंशीत वेगाघातप्रजागरान्।
दिवास्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्जयेत् ॥ ५५ ॥

इति वङ्गसेनसङ्कलितः स्नेहपानाधिकारः समाप्तः।

---

## अथ स्वेदाधिकारमाह।

येषां नस्यं विधातव्यं वस्तिश्चैवापि देहिनाम्।
शोधनीयाश्च ये केचित् पूर्वं स्वेद्यास्तु ते मताः ॥ १ ॥
पश्चात् स्वेद्या हृते शल्ये मूढगर्भाद्युपद्रवाः।
सम्यक् प्रजाताऽकाले च पश्चात् स्वेद्यैव यत्नतः ॥ २ ॥
स्वेद्यः पूर्वं च पश्चाच्च भगन्दर्य्यर्शसस्तथा।
अश्मर्य्या चातुरो जन्तुः शेषाञ्छास्त्रे प्रचक्ष्महे ॥ ३ ॥
स्नेहक्लिन्नशरीराय तैलाभ्यक्ताय देहिने।

दोषादार्त्तवकालज्ञो घनस्वेदं प्रयोजयेत् ॥ ४ ॥
नानभ्यक्ते नापि चास्निग्धदेहे स्वेदो योज्यः स्नेहवद्भिः कथञ्चित् ।
दृष्टं लोके काष्ठमस्निग्धमाशु गच्छेद्भङ्गं स्वेदयोगैर्गृहीतम् ॥ ५ ॥
मांसमाषतिलादीनां वालुकानामथापि वा ।
कुम्भीपिण्डेष्टकास्वेदान्नायःप्रस्तरसङ्करात् ॥ ६ ॥
वातघ्नै र्दशमूलैर्वा शीतैराच्छाद्य चक्षुषी ।
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा ॥
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः ॥ ७ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।
निवातगृहमायासो गुरुप्रावरणं भयम् ॥ ८ ॥
उपनाहाहवक्रोधभूरिपानक्षुधातपाः ।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥ ९ ॥
सर्वान् स्वेदान्निवाते च जीर्णेऽन्ने वा च कारयेत् ॥ १० ॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः ॥ ११ ॥
सबले रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले ।
कफमेदोवृते वाते सेवेत् कोष्णं गृहं रविम् ॥ १२ ॥

तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ। उपनाहस्वेदो वातघ्नः अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति कफमेदोऽन्विते वायौ निवातगृहातपगुरुप्रावरणादिभिः स्वेदमुत्पादयेदिति ।

स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः स्वस्थानस्था ये च मार्गेषु लिप्ताः ।
सम्यक् स्वेदैर्योजितैस्ते द्रवत्वं प्राप्ताः कोष्ठं यान्ति देहादशेषात् १२

शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
सञ्जाते मार्दवे देहे स्वेदनाद्विरतिर्मता ॥ १४ ॥

अग्नेर्दीप्तिं मार्दवं त्वक् प्रसादं
भक्तश्रद्धां स्रोतसां निर्मलत्वम् ।

कुर्य्यात् स्वेदो हन्ति निद्रां सतन्द्रां
सन्धीन् स्तब्धांश्चेष्टयेदाशु युक्तः ॥ १५ ॥
स्वेदस्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वमार्दवं चातुरस्य ।
सम्यक् स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्यये नैतदेव ॥१६॥
स्फोटोत्पत्तिः पित्तरक्तप्रकोपो मूर्च्छा भ्रान्तिर्दाहतृष्णाक्लमाश्च ।
अतिस्विन्ने सन्धिपीड़ातृषा च क्रियां शीतां तत्र कुर्य्याद्विधिज्ञः१७
अतिस्विन्ननराणाञ्च शीताम्बुप्राशनं हितम् ।
स्नानमुष्णाम्बुना चापि ह्यनभिष्यन्दि भोजनम् ॥ १८ ॥
पाण्डुर्मेहीरक्तपित्ती तृषार्त्तः क्षामो जीर्णो चोदरार्त्तो विषार्त्तः ।
तृट्छर्द्यार्त्तो गर्भिणी पीतमद्यो नैते स्वेद्या यश्च मर्त्त्योऽतिसारी१९
स्वेदादेषां यान्ति देहा विनाशञ्चासाध्यत्वं यान्ति चैषां विकाराः।
स्वेदैः साध्यौ दुर्वलाजीर्णभक्तौ यदि स्यातां स्वेदनीयौ ततस्तौ २०

इति वङ्गसेनसङ्कलितः स्वेदाधिकारः समाप्तः ।

---

## अथ वमनाधिकारः ।

शरत्काले वसन्ते च प्रावृट् काले च देहिनाम् ।
वमनं रेचनं चैव कारयेत् कुशलो भिषक् ॥ १ ॥
कफे कफोल्वणे चापि वमनं सम्प्रशस्यते ॥ २ ॥
वामयेदतिसारार्त्त मधःपित्तास्त्ररोगिणाम् ।
ग्रन्थिमेहापचीकुष्ठश्लीपदोन्मादरोगिणः ॥ ३ ॥
समस्तदोषपरीसर्पं श्वासकासोद्र्ध्वरोगिणः ।
नवज्वरगृहीतञ्च हृल्लासार्त्तं विशेषतः ॥ ४ ॥
न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़िताश्च ॥ ५ ॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्ध्वं रुधिरे च तीव्रे ।

दुष्टे च कोष्ठे कृमिभिर्मनुष्यं वर्चोऽभिघाते न च वामयेत्तु ॥६॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ ७ ॥
अवम्यावमनात् क्रोधात् कृच्छ्रतां यान्ति देहिनः ।
असाध्यतां वा गच्छन्ति नैते वाम्यास्त्वतिस्नुताः ॥ ८ ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्येतु न तेषां पुनरुद्भवः ॥ ९ ॥
योऽखिलैर्विविधैरन्नैर्दोषानुत्क्लिश्य देहिनः ।
स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते ॥ १० ॥
निशि सुप्तञ्च पूर्वाह्णे जीर्णाहारकृते त्तणम् ।
वमनं पाययित्वा तु जानुमात्रासने स्थितम् ॥
कण्ठं गन्धर्वनालेन स्पृशन्तं वामयेद्भिषग् ॥ ११ ॥
ललाटं वमतः पुंसः पार्श्वौ हस्तेन बोधयेत् ॥ १२ ॥
कफञ्च कटुतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्वमेत् ।
सस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥ १३ ॥
पानद्रव्यरसस्योक्तः स्वरसः पलमिष्यते ।
वमनं रेचनं चाद्यं स्नेहादिशमनं परम् ॥ १४ ॥
क्काथ्यद्रव्यस्य कुड़वं श्रपयित्वा जलाढ़के ।
अर्द्धभागावशिष्टञ्च वमनेष्ववचारयेत् ॥ १५ ॥
यष्टीमधु वचा कुष्ठं बीजानां कुटजस्य च ।
कल्कैरालोड्य निम्बस्य कषायं पाययेद्भिषक् ॥ १६ ॥
प्रवृत्तलालाहृल्लासं वामयेत् स्निग्धमातुरम् ।
कृष्णेन्द्रयवसिन्धूत्थ राठकल्कयुतं पिबेत् ॥
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम् ॥ १७ ॥
निम्बकषायोपेतं फलिनीगदमदनमधुसिन्धूत्यम् ।
मधुयुतमेतत्पानं कफपरिपूर्णाशये शस्तम् ॥ १८ ॥

तण्डुलसलिलनिपिष्टं यः पीत्वा वमति नरः पूर्वाह्णे।
फलिनीवल्कलकल्कं हरति गदं कफपित्तमारुजम् ॥ १९ ॥
आटरूषवचानिम्बं पटोलं फलिनीत्वचम्।
क्राथयित्वा पिबेत्तोयं वान्तिकृन्मदनान्वितम् ॥ २० ॥
जीमूतकफलेच्वाकु कुटजाः कृतवेधनः।
धामार्गवश्च संयोज्यः सर्वथा वमनेष्वमी ॥ २१ ॥
मदनफलमज्जसिद्धं क्षीरं दधितां गतं तत्समं वा।
वमनाय कफप्रसेके वमनं कफेषु च प्रयुञ्ज्यात् ॥ २२ ॥

तत्र सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधितक्रयवागूनाम् अन्यतमेनाकण्ठं पाययित्वा वामयेत्।

कफप्रसेकं हृदयाविशुद्धिः कण्डूश्च दुर्वांमितलिङ्गमाहुः।
पित्तातियोगश्च विसंज्ञताश्च हृत्कण्ठपीड़ामपि चातिवान्ते॥२३॥
पित्ते कफस्यानुगुणं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंश्रये च स्थिते सुवान्तं पुरुषं व्यवस्येत्॥२४॥
पित्तान्तमिष्टं वमनं विरेकादूर्द्धं कफान्तञ्च विरेकमाहुः।
द्वित्रीन् सविट्कानपनीय वेगान् ज्ञेयं विरेके वमने तु पीतम्२५

सम्यग्वान्तं चैनमभिवीक्ष्य स्नैहिकवैरेचनिकोपशमनीयानामन्यतमं धूममाकण्ठं सामर्थ्यतः पाययित्वा आचारिकमुपदिशेत्।

वान्त्यर्थमौषधे पीते वान्तिर्भवति नो यदि।
पिबेद्दार्वीकणानिम्बकषायमुष्णवारिणा ॥ २६ ॥
वमनस्यातियोगे तु शीताम्बुपरिसेवनः।
पिबेत्कटुरसैर्मण्डं सघृतक्षौद्रशर्करम् ॥
वमनेऽतिप्रवृद्धे च हृद्यं कार्य्यं विरेचनम् ॥ २७ ॥
सोद्गारायां भृशं छर्द्यां मूर्च्छायां यासमुस्तयोः।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसर्पिषा ॥ २८ ॥

वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहः।
निःश्रिताच्च तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥ २९ ॥
ततोऽपराह्णे सुविशुद्धदेह मुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलत्थमुद्गाढ़कजाङ्गलानां यूषैरसैर्वाप्युपभोजयेत्तम् ॥ ३० ॥
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम्।
क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥ ३१ ॥
धान्यकल्केन संशुद्धा नागरेण समन्विता।
सुलघ्वी दीपनी पेया वातरक्ते च शस्यते ॥ ३२ ॥
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ॥३४॥
कफप्रसेकस्वरभेदनिद्रा तन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।
गुरुत्वकण्डूग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥३४॥
छिन्ने तरौ पुष्पफलप्रवाला यथा विनाशं सहसा व्रजन्ति।
तथा हृते श्लेष्मणि छर्दितेन तज्जा विकारा विलयं व्रजन्ति ॥३५॥
वमनादिविधानेषु यावत्कालस्तु गच्छति।
तावद्धि परिहर्तव्यं शीततोयातिमैथुनम् ॥ ३७ ॥

इति वङ्गसेनसङ्कलितः वमनाधिकारः समाप्तः।

---

## अथ विरेचनाधिकारमाह।

ऋतौ वसन्ते शरदि देहशुद्धौ विरेचयेत्।
अन्यदात्ययिके काले शोधनं शीलयेद् बुधः ॥ १ ॥
पित्ते विरेचनं युञ्ज्यादोषे पित्तोल्बणेऽपि च।
पित्तमत्युल्बणीकृत्य स्नेहे स्वेदे कृते सति ॥ २ ॥
वमने च कृते पूर्वं ततः सम्यग्विरेचयेत्।
अन्यथा योजितं कुर्यान्मन्दाग्निं गौरवारुची ॥ ३ ॥

पित्ताधिको मृदुः कोष्ठः पयसापि विरिच्यते।
वातेन श्लेष्मणा क्रूरो दुर्विरेच्यः स उच्यते॥ ४॥
समदोषो मध्यमः साधारण इति। तत्र मृदौ मृद्वी मात्रा क्रूरे तीक्ष्णा मध्ये मध्यमा कर्त्तव्येति।
मृदुमध्यक्रूरकोष्ठे कर्षमर्द्धपलम्पलम्।
उष्णोदकानुपानन्तु पलं द्वे च पलत्रयम्॥ ५॥
तदर्द्धम्पाययेच्चूर्णमनुपानञ्च तादृशम्।
क्वाथे क्वाथविधिः कार्य्यस्तदर्द्धः स्वरसोऽपि च॥
पित्तं दद्यात्तथा स्नेहं पलार्द्धं पलमेव वा॥ ६॥

इति विरेचनमात्रा।

यथा वमने प्रसेकौषधपित्तानिलाः क्रमेणायान्ति तथा विरेचने पुरीषपित्तौषधकफा इति।
स्नेहस्वेदावकृत्वाग्रे यस्तु संशोधनं पिबेत्।
दारु शुष्कमिवानाम्य तद्देहमतिपातयेत्॥ ७॥
स्नेहस्वेदैः प्रचलिता रसैः स्निग्धैरुदीरिता।
दोषाः कोष्ठगता जन्तोः सुखा हर्त्तुं विरेचनैः॥ ८॥
शारदे सौक्ष्म्यतैक्ष्ण्याद्वा विकाशित्वाद्विरेचनम्।
वमनं च हरेद्दोषं सम्यगुक्तं तथान्यथा॥ ९॥
यात्यधो दोषमादाय पच्यमानं विरेचनम्।
गुणोद्रेकाद्व्रजेदूर्ध्वमपक्वं भेषजं पुनः॥ १०॥
मृदुकोष्ठस्य दीप्ताग्नेर्दत्तं सम्यग्विरेचनम्।
न सम्यग्निर्हरेद्दोषानतिमात्रप्रधावितम्॥ ११॥
त्र्यूषणं सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः।
वातार्दितो विरेकाय जाङ्गलानां रसेन वा॥ १२॥
पित्तोत्तरे त्रिवृच्चूर्णं स्वादुक्वाथादिभिः पिबेत्॥ १३॥
भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिमण्डिजातैः परिवेष्ट्य रज्ज्वा।

पक्वन्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तां पित्तगदी सुशीताम्१४

हरीतकीविड़ङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥ १५ ॥
त्रिवृच्छाणत्रयसमा त्रिफला तत्समानि च ।
क्षारकृष्णाविड़ङ्गानि तच्चूर्णम्मधुसर्पिषा ॥ १६ ॥
लिह्याद्गुड़ेन गुटिकां कृत्वा वाप्युपयोजयेत् ।
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान् ।
हन्त्यन्यानपि चाप्येतन्निरुपायं विरेचनम् ॥ १७ ॥
त्रिफलाक्काथमूत्रैश्च सव्योषं कफपीड़ितः ।
कृष्णाशुण्ठीत्रिवृत्क्षार चूर्णं क्षौद्रेण लेहयेत् ॥ १८ ॥
एतद्विरेचनं मुख्यं सर्वश्लेष्मविकारिणाम् ॥ १९ ॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचान्वितम् ॥ २० ॥
पथ्यासैन्धवकृष्णानां कल्कमुष्णाम्बुना पिबेत् ।
विरिक्तः सर्वदोषघ्नः श्रेष्ठो नाराचसंज्ञितः ॥ २१ ॥
त्रिवृत्पिप्पलिसिन्धूत्थैरन्वितं गुग्गुलुं पिबेत् ।
फलत्रिककषायेण रेचनं सर्वदोषनुत् ॥ २२ ॥
पिप्पलीनागरक्षार श्यामास्त्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम् ॥ २३ ॥
हरीतक्यास्तु कर्षार्द्धं कर्षार्द्धं त्रिवृतस्तथा ।
शीताम्बुना समम्पिष्टा भर्जयेत्सर्पिषा मनाक् ॥ २४ ॥
तद्रव्यं शीतलं ज्ञात्वा सिताकर्षेण योजयेत् ।
भुक्त्वा विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥ २५ ॥

इति एतावत्येकदिनमात्रा ।

हरीतकीभिः क्वथितं सुवीरं दन्त्यग्निकृष्णाविड़चूर्णयुक्तम् ।
विरेचनं वा रुबुतैलमिश्रं निरत्ययं योज्यमथामयघ्नम् ॥२६॥

त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम्।
समृद्वीकारसं चौद्रं वर्षाकाले विरेचनम् ॥ २७ ॥
त्रिवृद्दुरालभामुस्ता शर्करोदीच्यचन्दनम्।
द्राक्षाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये ॥ २८ ॥
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम्।
त्रिवृतां हवुषां दन्तीं सप्तलां कटुरोहिणीम् ॥ २९ ॥
स्वर्णक्षीरीञ्च कम्पिल्लं गोमूत्रे भावयेत्त्र्यहम्।
एष सर्वर्त्तुको योगः स्निग्धानां मलदोषहा ॥ ३० ॥
सक्षौद्रां शर्करां पक्त्वा कुर्य्यान्मृद्भाजने नवे।
दद्याच्छीते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ॥
लिह्यात्तं मात्रया लेहमीश्वराणां विरेचनम् ॥ ३१ ॥
अभयापिप्पलीमूलं मरिचं विश्वभेषजम्।
त्वक्पत्रपिप्पलीमुस्त विड़ङ्गामलकानि च ॥ ३२ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत्।
त्रिवृदष्टगुणा देया षड्गुणा चात्र शर्करा ॥ ४३ ॥
मधुना मोदकान् कृत्वा चाक्षमात्रान् प्रमाणतः।
एकैकं भक्षयेत्प्रातः शीतं चानु पिबेज्जलम् ॥ ३४ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते।
पानाहारविहारेषु भवेन्नियन्त्रणः सदा ॥ ३५ ॥

पाण्डुत्वकासविषमज्वरवह्निसादान्
जङ्घोरुपृष्ठजघनोदरपार्श्वशूलान्।
दुर्नाममण्डलभगन्दरशोफगुल्मान्
यक्ष्मोदरभ्रमविदाहकमूत्रकृच्छ्रान् ॥ ३६ ॥
प्लीहाक्षिरोगयकृदश्मरिकुष्ठमेहान्
हन्याद्रसायनमिदं भिषजा प्रयुक्तम्।
अल्पव्ययं बहुफलं सततं प्रयोज्य-

मायुष्करं पलितनाशनमश्विदृष्टम् ॥ ३७ ॥

इति अभयाद्यो मोदकः ।

विड़ङ्गसारामलकाभयानां पलं पलं स्यात्त्रिवृतस्त्रयञ्च ।
गुड़स्य षड्द्वादशभागयुक्ता मानेन त्रिंशद्गुटिका विधेयाः ॥३८॥
निवारणे यक्षवरेण सृष्टः समाणिभद्रः किल शाक्यभिक्षवे ।
अयं हि कुष्ठक्षयकासनाशनो भगन्दरप्लीहगुदोदरार्त्तिजित्॥३९॥
यथेष्टचेष्टान्नविहारसेवी ह्यनेन वृद्धस्तरुणो भवेच्च ॥

इति माणिभद्रमोदकः ।

गुड़स्याष्टपलं पथ्या विंशतिः स्युः पलानि च ।
दन्तीचित्रकयोः कर्षाः पिप्पलीत्रिवृतोर्दश ॥ ४० ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ।
सङ्घादेदुष्णसेवी चाहारे निर्यन्त्रणास्त्वमी ॥
दोषघ्ना ग्रहणीपाण्डु रोगार्शः कुष्ठनाशनाः ॥ ४१ ॥
विरेकायौषधं पीतं न सम्यग्यदि रेचयेत् ।
पिबेदुष्णाम्भसा तत्र सैन्धवं दोषशान्तये ॥ ४२ ॥

इति गुड़ाद्योमोदकः ।

हृत्कुक्षिशुद्धिः परिदाहकण्डूर्विण्मूत्रसङ्गाश्च न सद्विरिक्ते ।
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥४३॥
गतेषु दोषेषु कफान्वितेषु लालालघुत्वे मनसश्च तुष्टौ ।
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तम्मनुजं व्यवस्येत् ॥४४॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेत्तद्दिवसे यवागूम् ।
क्षीणं तृषार्त्तं सुविरेचितञ्च तन्वीं सुखोष्णां लघु पाययेत्ताम्॥४५
छर्दितोक्तं क्रमं सर्वं धूपं मुक्त्वा प्रयोजयेत् ।
शोणितस्रावसंशुद्धिस्नेहयोजनलङ्घनैः ॥ ४६ ॥
वह्निर्यस्य ततो मन्दः स्याद्वैद्यस्तमुपाचरेत् ।
मद्यपो वातपित्ताढ्यो यो़ऽल्पपित्तकफाश्रयः ॥ ४७ ॥

पेयादिरहितस्तस्य तर्पणादिक्रमं दिशेत्।
आस्थाप्य स्नेहितं तीक्ष्णैः रेचयेद्धीनरेचितम् ॥ ४८ ॥
पद्मकोशीरनागाह्वचन्दनानि प्रयोजयेत्।
अतियोगे विरिक्तस्य पानलेपनसेचनैः ॥ ४९ ॥
सौवीरपिष्टः सहकारकल्को नाभिप्रलेपादतिसारहन्ता ॥ ५० ॥
कल्कं शाल्मलीमूलस्य मस्तुना सह संपिबेत्।
गङ्गाप्रवाहतुल्यं हि नाशयेद् ग्रहणीगदम् ॥ ५१ ॥
अञ्जनं चन्दनोशीरं मज्जास्रं चातियोगनुत्।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ ५२ ॥
दध्यारनालधात्री चूर्णयुताः शक्तवः प्रलेपेन।
सन्तापारुचितृष्णा वमनविरेकातियोगहराः ॥ ५३ ॥
क्षीणक्षयोरःक्षतबालवृद्धा दीनोऽथ शोषी भयशोकतप्तः।
श्रान्तस्तृषार्त्तो परिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक्५४
नवप्रतिश्यायमदात्ययौ च नवज्वरी या च नवप्रसूता।
शल्यार्दितास्थाप्यविरेचनीयाः स्नेहादिभिर्येत्वनुपस्कृतास्च ॥५५॥
अत्यर्थपित्ताभिपरीतदेहा विरेचयेत्तानपि मन्दवीर्य्यैः।
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः ॥ ५६ ॥
नचातिस्निग्धकायस्य दद्यात् स्नेहविरेचनम्।
दोषाः प्रच्याविता भूयो लीयन्ते तेन वर्त्मसु ॥ ५७ ॥
विषाभिघातपिडिका शोफपाण्डुविसर्पिणः।
नातिस्निग्धा विशोध्या स्युस्तथा कुष्ठप्रमेहिणः ॥ ५८ ॥
विरूक्षस्नेहसात्म्यन्तु भूयः संस्नेह्य रेचयेत्।
तेन दोषा हृतास्तस्य भवन्ति श्लथबन्धनाः ॥ ५९ ॥
बुद्धेः प्रसादम्बलमिन्द्रियाणां धातोः स्थिरत्वं ज्वलनाभिवृद्धिम्।
चिराच्च पाकं वयसः प्रकुर्य्याद्विरेचनं सम्यगुपास्यमानम् ॥६०॥
यथोदकानां स्थिरजङ्गमानां जलेऽपनीते ध्रुवमेव नाशः।

पित्ते हृतेत्वेवमुपद्रवाणां पित्तात्मकानां ध्रुवमेव नाशः ॥ ६१ ॥
सव्योषं पिप्पलीमूलं त्रिवृद्दन्ती सचित्रकम् ।
तच्चूर्णं गुड़सम्मिश्रं भक्षयेत् प्रातरुत्थितः ॥ ६२ ॥
एतद्गुड़ाष्टकं चूर्णं बलवर्णाग्निवर्द्धनम् ।
शोथोदावर्त्तगुल्मघ्नं प्लीहपाण्ड्वामयापहम् ॥ ६३ ॥
पश्चाद्विरिक्तो वान्तश्च ततश्चापि निरूहणम् ।
निरूढ़स्त्वनुवास्यः स्यात् सप्तरात्राद्विरेचितः ॥ ६४ ॥
क्षतः शिराव्यधो यस्य क्षतं यस्य च शोधनम् ।
मासं परिहरेज्जन्तुर्यावन्नो बलवान् भवेत् ॥ ६५ ॥
क्रोधायासौ मैथुनञ्च दिवास्वप्नोच्चभाषणे ।
पानं यानासने स्थानं चिरञ्चक्रमणं हिमम् ॥ ६६ ॥
सम्भोगतोययोः सेवा प्रवातातपयोस्तथा ।
विरुद्धाध्यशनासात्म्य भोजनानि विशेषतः ॥ ६७ ॥

इति वङ्गसेनसङ्कलितः विरेचनाधिकारः समाप्तः ।

---

## अथ वस्तिकर्म्माधिकारमाह ।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
संसर्गे सन्निपाते च वस्तिरेव सदा हितः ॥ १ ॥
समुद्धते वायुवेगे नान्या वस्तिमृते क्रिया ।
पवनाविद्धतोयस्य वेला वेगमिवोदधेः ॥ २ ॥
वाते वातोल्वणे व्याधौ वस्तिः शस्तः स च त्रिधा ।
निरूहोन्वासनाख्यश्च लिङ्गे चोत्तरसंज्ञितः ॥ ३ ॥
कषायक्षीरतो वस्तिर्निरूहः स निगद्यते ।
यः स्नेहैर्दीयते स स्यादनुवासनसंज्ञकः ॥ ४ ॥

वस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः।
निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः॥ ५॥
निरूहो दोषहरणाद्रोहणादथवा तनोः।
आस्थापयेद्वयो देहं यस्मादास्थापनः स्मृतः॥ ६॥
निशानुवासनात् स्नेहोऽन्वासनश्चानुवासनः॥ ७॥
विरिक्तसम्पूर्णहिताशनस्य आस्थाप्य शय्यामनुदीयते यत्।
तदुच्यते वाप्यनुवासनञ्च तेनानुवासश्च बभूव नाम॥ ८॥
उत्कृष्टावयवे दानाद्वस्तिरुत्तरसंज्ञितः।
निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरात् परम्॥ ९॥
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट्प्रसृतास्ततः।
प्रसृतं वर्द्धयेदूर्द्धं द्वादशाष्टादशावधि॥ १०॥
आसप्ततेरिदं मानं दशैव प्रसृतं परम्।
यथायथं निरूहस्य पादोमात्रानुवासने॥ ११॥
सुवर्णरूप्यत्रपुताम्ररीति कांस्यायसास्थिद्रुमवेणुदन्तैः।
नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि॥१२
षट्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिर्द्वादशवर्षजानाम्।
स्युर्मुद्गकर्कन्धुसतीनवाहि छिद्राणि वर्त्त्या पिहितानि चापि१३
यथा वयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुटिकामुखानि१४
स्यात्कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे।
जारद्गवो माहिषहारिणौ वा स्याच्छौकरो वस्तिरजस्य वापि१५
दृढ़स्तनुर्नष्टशिरोविगन्धः कषायरक्तः सुमृदुस्तु सिद्धः।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः॥१६॥
नेत्राभावे हिता नाड़ी नलवंशास्थिसम्भवा।
वस्त्यभावे हितं चर्म्म वस्त्रं वापि हितं घनम्॥ १७॥
द्वादशाङ्गुलकं नेत्रं कलाय यवरन्ध्रकम्।

अङ्गुले कर्णिकायुक्तं मुखे वृत्तं समं मृदु ॥ १८ ॥

इति नेत्रपरिमाणविधिः ।

विरेचनाद्दते सप्तरात्रे जातबलाय वै ।
कृताहाराय सायाह्ने वस्तिर्देयोऽनुवासनः ॥ १९ ॥
उत्तमस्य पलैः षड्भिर्मध्यमस्य पलैस्त्रिभिः ।
तदर्द्धेन च हीनस्य त्रिधा मात्रानुवासने ॥ २० ॥
प्रहृतस्य पलार्द्धेन पलस्य पिचुना तथा ।
तदर्द्धस्यार्द्धकर्षेण वृद्धिः कार्य्या यथा क्रमम् ॥ २१ ॥
षट्पलं त्रिपलं सार्द्धम्पलं पूर्णं यथा भवेत् ॥ २२ ॥
देवदारुवचारास्ना शताह्वाकुष्ठसैन्धवैः ।
अवचूर्णम्प्रदातव्यं षट्चतुर्द्वयमाषकैः ॥ २३ ॥
यद्दा सैन्धवचूर्णेन शताह्वेन च संयुतम् ।
चूर्णं माषं पले स्ने हे सिन्धुजन्मशताह्वयोः ॥ २४ ॥
चीरं न चेद्दैतरणं प्रदाय इग्रहेत्रग्रहे वाप्यनुवासनीयः ॥२५॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं निधापयेत् ।
अन्यथा निहितो वस्तिर्नैवान्तः सम्प्रपद्यते ॥ २६ ॥
प्रसुप्तं वामपार्श्वेन कृतान्नमनुवासयेत् ॥ २७ ॥
वामाश्रया हि ग्रहणीगुदञ्च तत्पार्श्वसंस्थस्य गुदोपलब्धिः ।
लीयन्त एवम्बलयश्च तस्मात्सव्ये च पार्श्वे हितवस्तिदानम् ॥२८॥
प्रसारितैकजङ्घेन कार्य्याऽन्योपरिकुञ्चिता ।
वस्तिं सव्ये करे कृत्वा दक्षिणे नावपीड़येत् ॥ २९ ॥
तथास्य नेत्रं प्रणयेत् स्निग्धे स्विन्नमुखं गुदे ।
उच्छ्रास्य वस्तेर्वदनं बद्ध हस्तमकम्पयन् ॥ ३० ॥
पृष्ठवंशम्प्रति ततो नातिद्रुतविलम्बितम् ।
नातिवेगं नातिमन्दं सकृदेव प्रपीड़येत् ॥ ३१ ॥
सावशेषमकुर्वीत वायुः शेषे हि तिष्ठति ।

निरूहदानेऽपि विधिरयमेव समीरितः ॥ ३२ ॥
शीते वसन्ते च दिवानुवास्यो रात्रौ शरद्ग्रीष्मघनागमेषु ॥३३॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः।
स्नेहवीर्य्यन्तथा दत्ते देहं नानुविसर्पति ॥ ३४ ॥
अशुद्धमपि वातेन केवलेनातिपीड़ितम्।
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ ३५ ॥
ततः प्रणिहिते स्नेह उत्तानो वाक्शतं भवेत्।
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं प्रसर्पति ॥ ३६ ॥
आकुञ्चयेच्छनैस्त्रींस्त्रीञ्छक्थिबाहु ततःपरम्।
ताड़येत्तलयोरेनं त्रींस्त्रीन्वारान् शनैः शनैः ॥ ३७ ॥
स्फिजोश्चैनं ततः श्रोणीं शय्यां त्रींस्तूत्क्षिपेद्बुधः।
एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक् ॥ ३८ ॥
स्वास्तीर्णे शयने काम मासीताचारिके ततः।
कूर्परे जानुनी चैव कुर्य्यात्त्रीणि गतागतम् ॥ ३९ ॥
पाणिपादतले चास्य हन्तव्ये मुष्टिना तदा।
त्रिकसञ्चालनं चापि कुर्य्याद्वारत्रयं ततः ॥ ४० ॥
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम्।
यथोचितात्पादहीनं भोजयित्वानुवासयेत् ॥
नित्यमेकान्तरे वापि दोषकायाग्न्यपेक्षया ॥ ४१ ॥
स्नेहेन पार्ष्णग्रङ्गुलिपिण्डिकाद्या ये चापि गात्रावयवा रुगार्त्ताः।
तांश्चावमृद्नीत सुखं ततश्च निद्रामुपासीत कृतोपधानः ॥ ४२ ॥
अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम्।
धान्यशुण्ठीकषायं वा स्नेहव्यापत्तिनाशनम् ॥ ४३ ॥
पित्तोत्तरे कटूष्णाम्भस्तावन्मात्रं पिबेदनु।
स्नेहाजीर्णं शमयति श्लेष्माणं तद्भिनत्ति च ॥ ४४ ॥
प्रवनस्यानुकूलत्वं कुर्य्यादुष्णोदकं नृणाम्।

क्राथार्द्धमात्रया प्रातर्धान्यशूण्ठीजलं पिबेत् ॥ ४५ ॥
यस्यानुवासनो दत्तः सकृदत्र श्रमं व्रजेत्।
अत्युष्णो वातिशीतो वा वायुना वा प्रपीड़ितः ॥ ४६ ॥
अमात्रोऽधिकमात्रो वा गुरुत्वाद्बहुभेषजः।
तस्यान्योऽल्पतरो देयो न हि स्निह्यति तिष्ठति ॥ ४७ ॥
त्रीन्यस्य यामाननुवर्त्तते च स्नेहो नरः स्यात्स विशुद्धदेहः ॥४८॥
अशुद्धमपि वातेन केवलेनातिपीड़ितम्।
स्नेहप्रगाढ़ैर्मतिमान्निरूहैः समुपाचरेत् ॥ ४९ ॥
रूक्षस्य बहुवातस्य द्वौ त्रीन्वाप्यनुवासनान्।
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥ ५० ॥
न चाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन।
सूक्ष्मत्वात् शून्यकोष्ठस्य चिप्रमूर्ध्वमधो नयेत् ॥ ५१ ॥
एकं तथा त्रीन् कफजे विकारे पित्तात्मके पञ्च तु सप्त वापि।
वाते तु चैकादशधा पुनर्वा वस्तीनयुग्मान् कुशलो विदध्यात्५२
सदानुवासयेद्भुक्तं सार्द्रपाणिं नरं भिषक्।
ज्वरं विदग्धभुक्तस्य कुर्य्यात् स्नेहः प्रयोजितः ॥ ५३ ॥
न ह्यातिस्निग्धमशनं भोजयित्वानुवासयेत्।
मन्दं मूर्च्छाञ्च जनये द्विधास्नेहः प्रयोजितः ॥ ५४ ॥
स्नेहवस्तिं निरूहं वा नैकमेवाभ्यसेच्चिरम्।
स्नेहात्पित्तकफोत्क्लेशौ निरूहात्पवनाद्भयम् ॥ ५५ ॥
तस्मान्निरूढ़ोऽनुवास्यो निरूह्यश्चानुवासितः।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥ ५६ ॥
निरूहशोधितैर्मार्गैः स्नेहः सम्यग्विसर्पति।
अपेतसर्वदोषासु नाड़ीष्विव बहिर्जलम् ॥ ५७ ॥
अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति।
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ५८ ॥

यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः।
सर्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः संविजानता ॥ ५९ ॥
अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत्।
स्नेहवस्तावनायाते नान्यः स्नेहः प्रशस्यते ॥ ६० ॥
कुष्ठक्रमुककल्कन्तु पाययेत्तक्रसंयुतम्।
शौण्याक्तैक्ष्ण्यात् सरत्वाच्च वस्तिं तस्यानुलोमयेत् ॥
गोमूत्रेण त्रिवृत्पथ्याकल्कं वातानुलोमनम् ॥ ६१ ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः।
तदाङ्गसदनाध्माने शूलं श्वासश्च जायते ॥ ६२ ॥
पक्वाशयगुरुत्वञ्च तदा दद्यान्निरूहणम्।
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धं चाप्यनुवासनम् ॥ ६३ ॥
भयोन्मादतृषाशोषाजीर्णार्शाचप्रमेहिनः।
मूर्च्छाकुष्ठोदरस्थौल्यकासश्वासक्षयातुराः ॥ ६४ ॥
शोषभ्रममदच्छर्दियुताः वस्त्यसहाऽवलाः।
नास्थाप्या नानुवास्याश्च वातरोगादृते नराः ॥ ६५ ॥
उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः।
अवश्यं स्थापनीयाश्च नानुवास्याः कथञ्चन ॥ ६६ ॥
अनेन विधिना सप्त तथाष्टौ वा नवैव वा।
विधेया वस्तयो नृणामन्तरान्तर्निरूहणम् ॥ ६७ ॥
विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः।
दाहक्लमपिपासार्त्तिकरश्चाप्यनुवासनः ॥ ६८ ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वा।
ओषचोषौ विना शीघ्रं स सम्यगनुवासितः ॥ ६९ ॥
शुद्धस्य दूरानुगते स्नेहे स्नेहस्य दर्शनम्।
मुखे सर्वेन्द्रियाणां वाप्युपलेपोऽवसादनम्। ७० ॥
स्नेहगन्धि मुखञ्चापि कासश्वासावरोचकाः।

अतिपीड़ितवत्तत्र विधिरास्थापनं तथा ॥ ७१ ॥
गले निष्पीड्य तत्राशु कम्पयेत्तं प्रयत्नतः ।
कार्य्यं नस्यं सुतीक्ष्णञ्च तीक्ष्णं वापि विरेचनम् ॥ ७२ ॥
उत्क्लेशो ग्लानिरङ्गस्य सादः पर्वव्यथारुचिः ।
निरेति स्नेहसंमिश्रं पुरीषं बहुशो मृदु ॥ ७३ ॥
ईषत्स्थौल्यं भवेत् कुक्षि गुदवङ्क्षणवस्तिषु ।
स्निग्धस्यैतानि लिङ्गानि जानीयादनुवासने ॥ ७४ ॥
जीर्णान्नमथ सायाह्ने स्नेहप्रत्यागते पुनः ।
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ॥ ७५ ॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ।
सम्यग्दत्तो द्वितीयस्तु कोष्ठस्थमनिलं जयेत् ॥ ७६ ॥
बलवर्णौ च जनयेत्तृतीयस्तु प्रयोजितः ।
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेदपि ॥ ७७ ॥
षष्ठस्तु स्नेहयेन्मांसं मेदः स्निह्यति सप्तमः ।
अष्टमो नवमश्चास्थि तथा मज्जानमेव च ॥ ७८ ॥
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ।
अष्टादशाष्टादशकान् यो वस्तीनां निषेवते ॥
यथोक्तेन विधानेन परिहारक्रमेण तु ॥ ७९ ॥
स कुञ्जरबलोऽश्वस्य जवतुल्योऽमरप्रभः ।
वीतपाप्मा श्रुतधरः सहस्रायुर्नरो भवेत् ॥ ८० ॥
आपादतलमूर्द्धस्थान् दोषान् पक्वाशयस्थितः ।
वीर्य्येण वस्तिरादत्ते मेषादित्यो रसानिव ॥ ८१ ॥
पक्वाशयाद्वस्तिवीर्य्यं स्वदेहमनुसर्पति ।
वृक्षमूले निषिक्ताना मपाम्पूर इव द्रुमम् ॥ ८२ ॥
स चापि वस्तिः सहसा केवलः समलोऽपि वा ।
प्रत्येति वीर्य्यं त्वनिले रपानाद्यैः प्रणीयते ॥ ८३ ॥

मूले निषिक्तो हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवश्च।
काले द्बहत्पुष्पफलानुबन्धस्तथा नरः स्यादनुवासनेन ॥ ८४ ॥
मुग्धाश्च ये सङ्कुचिताश्च केचित् ये पङ्गवो येऽपि च भग्नगात्राः।
येषाञ्च शाखासु चरन्ति वाताः शस्तो विशेषेण हि तेषु वस्तिः८५
आध्मापिते प्राग्ग्रथिते पुरीषे शूले च भक्तानभिनन्दने च।
एवंप्रकाराश्च भवन्ति कुक्षौ य आमयास्तेषु च वस्तिरिष्टः ॥८६॥
याश्च स्त्रियो वातकृतोपसर्गा गर्भन्न विन्दन्ति नृभिः समेताः।
क्षीणेन्द्रिया ये च नरा कृशाश्च वस्तिः प्रशस्तः परमो हि तेषु ८७
उष्णाभिभूतेषु तथातिशीतान् शीताभिभूतेषु तथा सुखोष्णान्।
तत्प्रत्यनीकेऽथ समुक्तयुक्त्या सर्वत्र वस्तीन् प्रविभज्य दद्यात् ॥८८॥
न द्बंहणीयान्विदधीत वस्तीन् विशोधनीयेषु गदेषु वैद्यः।
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ॥ ८९ ॥
क्षीणक्षतानामविशोधितानां न शोषिणां नो कृशदुर्बलानाम्।
न मूर्च्छितानां विदधीत वस्तिं येषाञ्च दोषाः पुनरूर्द्ध्वगाः स्युः९०
शाखागतान् कोष्ठगतांश्च रोगान्मर्म्मेर्द्ध्व सर्वावयवाङ्गगांश्च।
ये सन्ति दोषा न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ९१
विण्मूत्रपित्तादिमलाशयानां वातापहः सौख्यकरश्च यस्मात्।
तस्मान्न वातैकसमाश्रयाणां वस्तिं विना भेषजमन्यदस्ति ॥
तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके॥९२

गुडूच्येरण्डपूतीक भार्गीवृषक रौहिषम्।
शतावरीं सहचरं काकनासा पलोन्मितान् ॥ ९३ ॥
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान्।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ॥ ९४ ॥
पचेत्तैलाढ़कं पेष्यैर्जीवनीयैः पलोन्मितैः।
अनुवासनमेतद्धि सर्ववातविकारनुत् ॥ ९५ ॥

इति गुडूचीतैलम्।

जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
जीवकर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ८६ ॥
स्वगुप्तां चीरकाकोलीं कर्कटाख्यां शटीं वचाम् ।
पिष्ट्वा तैलं घृतं चीरे साधयेत्तु चतुर्गुणे ॥ ८७ ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ।
मूत्ररेतोरजो दोषान् हरेत्तदनुवासनात् ॥ ८८ ॥

इति जीवन्त्याद्यं यमकम् ।　इत्यनुवासनवस्तिविधिः ।

अथ निरूहविधिमाह ।

निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः ।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ ८९ ॥
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे ।
मूत्रकृच्छ्रोदरानाह मूत्रदोषाश्मरीषु च ॥ १०० ॥
वृद्ध्यसृग्दरमन्दाग्नि प्रमेहेषु निरूहणम् ।
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद् बुधः ॥ १०१ ॥
मधुस्नेहनकल्काख्याः कषाया वा मताः क्रमात् ।
त्रीणि षड्द्वादश त्रीणि पलान्यनिलरोगिषु ॥ १०२ ॥
पित्ते चत्वारि चत्वारि द्वे द्वे चैव चतुष्टयम् ।
षट्त्रीणि द्वादशत्रीणि कफे चापि निरूहणम् ॥ १०३ ॥
नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम् ।
प्रधानमृद्वास्तरणोपपन्नं प्राक् शीर्षकं शुक्लपटोत्तरीयम् ॥१०४॥
प्रक्षिप्य वस्तौ मथितं खजेन सुबद्धपुच्छाननिर्वलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय गृह्णीत वैद्यो निजसव्यहस्ते ॥१०५॥
तैलाक्तगात्रं कृतमूत्रविट्कं नातिक्षुधार्त्तं शयने मनुष्यम् ।
समे सुदेशे नतशीर्षकञ्च नात्युच्छ्रितोनास्तरणोपपन्ने ॥ १०६ ॥
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जुदेहञ्च भुजोपपन्नम् ।
निष्कुष्य सव्येतरमस्य सक्थि वामं प्रसार्य्य प्रणयेच्च वस्तिम् १०७

स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धैर्जनैरर्चितपृष्ठवंशम्।
आकम्पनावेपनलाघवादीन् पाण्योर्गुणांश्चापि हि दर्शयद्भिः१०८
प्रपीड्य चैकग्रहणेन दत्ते नेत्रं शनैरेव ततोऽपकर्षेत्।
तिर्य्यक् प्रणीते न गता च धारा गुदं प्रणश्येच्चलिते च नेत्रे॥१०९
दत्तः शनैर्नाशयमेति वस्तिः कण्ठं प्रधावत्यतिपीड़ितस्तु।
शीतस्तु विष्टभ्य करोति दाहं मूर्च्छांञ्च तापन्त्वतिमात्रमुष्णः११०
स्निग्धोऽग्निनाशं पवनं विरूक्षस्तथाल्पमात्रोऽलवणस्त्वयोगम्।
करोति मात्राभ्यधिकोऽतिरोगं क्षामन्तु सान्द्रः सुचिरेण चैति१११
दाहातिसारौ लवणोऽतिकुर्य्यात्तस्मात् सुयुक्त्या सममेव दद्यात्।
विज्ञातवेगञ्च विधार्य्य दत्ते निष्कृष्यमुक्ते प्रणयेच्च शेषम्॥११२॥

अनुवासितमभ्यक्तं स्विन्नं स्नेहैर्निरूहयेत्।
अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत्॥
मध्याह्ने किञ्चिदावृत्ते निरूहन्तु समाचरेत्॥ ११३॥
सव्यं प्रसारयेत् सक्थि दक्षिणञ्चोपकुञ्चयेत्।
मध्याह्ने सुमना जीर्णे निरन्नो वाग्यतो नरः॥ ११४॥
वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्।
एकेनैवावपीडेन न द्रुतं न विलम्बितम्॥ ११५॥

ततो नेत्रमपनीय त्रिंशन्मात्राः पीड़नकालादवेक्ष्योत्तिष्ठ इति आतुरं ब्रूयात्। आतुरमुपवेशयेदुत्कटकं वस्तेरागमनायेति निरूह प्रत्यागमनकालो मुहूर्त्तो भवति।

यावत्प्रत्येति हस्ताग्रं दक्षिणं जानुमण्डलम्।
निमिषोन्मेषकालश्च सा मात्रा परिकीर्त्तिता॥ ११६॥
अनेन विधिना दद्याद्वस्तिं वस्तिविशारदः।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः॥ ११७॥
सम्यग्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत्।
अपि हीनं क्रमं कुर्य्यान्नैव कुर्य्यादतिक्रमम्।

विशेषात् सुकुमाराणां हीन एव क्रमो मतः ॥ ११८ ॥
मृदुर्वस्तिः प्रयोक्तव्यो विशेषाद्बालवृद्धयोः।
तयोस्तीक्ष्णः प्रयुक्तस्तु ध्रुवं हन्याद्बलौजसी ॥ ११९ ॥
मस्नेह एकः पवने निरूहौ द्वौ स्वादुशीतौ पयसा च पित्ते।
त्रयः समूत्राः कटुकोष्णरूक्षाः कफे निरूहा न परे विधेयाः१२०
एकोऽपकर्षत्यनिलं स्वमार्गात्पित्तं द्वितीयस्तु कफं तृतीयः।
प्रत्यागते कोष्णजलावसिक्तः शाल्यन्नमद्यात्तनुना रसेन ॥१२१॥
जीर्णे च सायं लघु चाल्पमात्रं भुक्तानुवास्यः परिबृंहणार्थम्।
निरूहणाद्वागमनेन तैलेनाम्लानिलघ्नौषधसाधितेन ॥ १२२ ॥
दत्त्वा स्फिजौ पाणितलेन ताल्यं स्नेहस्य शीघ्रागमनाय वैद्यः१२३
अल्पाल्पवेगोविड्वातहीनो हीननिरूहणः।
मूर्च्छाशूलकफप्रायो महावेगोऽतिशब्दितः ॥ १२४ ॥
यस्य मूत्रं पुरीषञ्च कफो वायुश्च गच्छति।
क्रमेण लघुता चैव सुनिरूढ़ः स मानवः ॥ १२५ ॥
सुनिरूढ़ं ततो जन्तुं स्नातं भुक्तरसौदनम्।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२६ ॥
तदहस्तस्य पवनाद्भयं बलवदिष्यते।
रसौदनोऽनुशस्तश्च तदहश्चानुवासनम् ॥ १२७ ॥
सम्यङ्निरूढ़ं तैलाक्तं जलेनोष्णेन सेचितम्।
अल्पस्नेहं जाङ्गलेन रसेनाद्यन्तु भोजितम् ॥ १२८ ॥
योजयेदल्पमात्रेण तत्क्षणं स्नेहवस्तिना।
पश्चादग्निबलं ज्ञात्वा पवनस्य विचेष्टितम् ॥
अत्रोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते ॥ १२९ ॥
त्र्यहे त्र्यहे चाप्यथ पञ्चमे च दद्यान्निरूहादनुवासनञ्च॥१३०॥
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः।
आस्थापने स्नेहवस्तौ सम्यग्दत्ते तु लक्षणम् ॥ १३१ ॥

अनायान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् चारमूत्राम्लसंयुतैः॥ १३२॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वराटोपान्मरणञ्च प्रपद्यते॥ १३३॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः।
आमं तदुद्धरेद् भुक्तं छर्दिं वा जनयेद् भृशम्॥ १३४॥
कोपयेत्सर्वदोषान्वा तस्माद्दद्यादभोजिने॥ १३५॥
आवस्थिकं क्रमं चापि मत्वा कार्य्यं निरूहणम्।
मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते॥ १३६॥
अतिप्रपीड़ितो वस्तिः प्रक्रम्यामाशयं गतः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते॥ १३७॥
छर्दिहृल्लासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च।
तत्र तूर्णं गलापीड़ं प्रकुर्य्यादवधूननम्॥ १३८॥
शिरःकायविरेकौ च तीक्ष्णैः सेकांश्च शीतलान्।

अथ द्वादशप्रसृतानाह।

दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम्॥ १३९॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत्।
संमूर्च्छिते कषायन्तु चतुःप्रसृतसम्मितम्॥ १४०॥
वितरेच्च तथा वापमन्ते द्विप्रसृतोन्मितम्।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्॥ १४१॥
धारयेदौषधं पाणिं न तिष्ठत्यवलिप्य च।
न करोति च सीमन्तं सुनिरूहः प्रयोजितः॥ १४२॥

इति निरूहणविधिः।

वातघ्नौषधनिःक्वाथाः सैन्धवप्रसृता युताः।
साम्लाः सुखोष्णा देयाः स्युर्वस्तयः कुपितेऽनिले॥ १४३॥

न्यग्रोधादिगणक्वाथः काकोल्यादिसमायुतः।
विधेया वस्तयः पित्ते सक्षौद्रघृतशर्कराः॥ १४४॥
न्यग्रोधादिगणक्वाथाः पिप्पल्यादिसमायुताः।
सक्षौद्रमूत्रा देयाः स्युर्वस्तयः कुपिते कफे॥ १४५॥
शर्करेक्षुरसक्षौद्र घृतयुक्ताः सुशीतलाः।
क्षीरिवृक्षकषायाढ्याः वस्तयः शोणिते हिताः॥ १४६॥
प्रियङ्ग्वादिगणक्वाथा अम्बष्ठादिसमायुताः।
सक्षौद्राः सघृता वापि वस्तयो ग्राहिणो हिताः॥ १४७॥
विदारीरावतीशेलु शाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः क्षौद्रयुक्ता नाम्ना पिच्छिलवस्तयः॥ १४८॥
वाराहमाहिषौरभ्र वैड़ालैणेयकौक्कुटम्।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु॥ १४९॥
मात्रा पिच्छिलवस्तीनां पलैर्द्वादशभिर्मता॥ १५०॥

इति पिच्छिलवस्तयः।

दद्यादनुत्क्लेशनं पूर्वं मध्यं दोषहरं पुनः।
पश्चात्संशमनीयञ्च वस्तिं दद्याद्विचक्षणः॥ १५१॥
एरण्डमूलं मधुकं पिप्पलीसैन्धवं वचा।
हपुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः॥ १५२॥

इत्युत्क्लेशनवस्तिः।

शताह्वा मधुकं विल्वं कौटजं फलमेव च।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः॥ १५३॥

इति दोषहरवस्तिः।

प्रियङ्गुर्मधुकं मुस्तं तथैव च रसाञ्जनम्।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः॥ १५४॥
शोधनद्रव्यनिःक्वाथास्तत्कल्कैः स्नेहसैन्धवैः।

युक्त्या खजेन मथिता वस्तयः शोधनाः स्मृताः ॥ १५५ ॥

इति शोधनवस्तिः।

त्रिफलाक्काथगोमूत्रैः चौद्रचारसमायुताः।
ऊषकादिप्रतीवापा वस्तयो लेखनाः स्मृताः ॥ १५६ ॥

इति लेखनवस्तिः।

वृंहणद्रव्यनिःक्काथाः कल्कैर्मधुरकैर्युताः।
सर्पिर्मांसरसोपेताः वस्तयो वृंहणाः स्मृताः ॥ १५७ ॥

इति वृंहणवस्तिः।

शताह्वा शिग्रु सिद्धार्थ वक्राक्रौञ्चवचाघनैः।
राठेन्द्रयवसिन्धूत्थैः पिष्टैर्वस्तिः प्रकल्पितः ॥ १५८ ॥
दशमूलीरसचौद्र तैलकाञ्जिकयोगतः।
शोधनो दोषनाशाय पुष्टिवर्णाग्निवर्द्धनः ॥ १५९ ॥
चत्वारो मदनाः पिष्टाः चौद्रतैलचतुष्पलम्।
कुड़वं मांसनिर्य्यासाद्दत्त्वार्द्धं रुचकाद्भवेत् ॥ १६० ॥
बलवर्णकरो वस्तिर्वृष्यो मांसबलप्रदः।
वातशोषितदेहानां वृंहणः स्थैर्य्यकारकः ॥ १६१ ॥
पटोलनिम्बभूनिम्ब रास्नासप्तच्छदाम्भसः।
चत्वारः प्रसृता ह्येको घृतात्सर्षपकल्कतः ॥
निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दनाशनः ॥ १६२ ॥
विड़ङ्गत्रिफलादन्ती मुस्ताखुपर्णिकास्तथा।
कषायाः प्रसृताः पञ्च तैलादेको विमथ्य तान् ॥
विड़ङ्गादिकषायेण निरूहः कफनाशनः ॥ १६३ ॥

इति विड़ङ्गादिनिरूहः।

मधुतैलात् प्रकुञ्चाः षट् षट् चैरण्डकषायतः।
युक्तः सैन्धवकर्षेण शताह्वार्द्धपलेन च ॥ १६४ ॥
बल्यो वृष्यो निरूहोऽयं मलघ्नन्मधुतैलिकः।

गुल्मोदावर्त्तवृद्ध्यर्शो मेहहन्ता निरत्ययः ॥ १६५ ॥
एरण्डक्वाथतुल्यांशं मधुतैलपलाष्टकम् ।
शतपुष्पापलार्द्धेन सैन्धवाक्षेण संयुतः ॥ १६६ ॥
बलवर्णकरो वस्तिर्वृष्यो दीपनबृंहणः ।
मेदो गुल्मक्रिमिप्लीह गुदोदावर्त्तनाशनः ॥ १६७ ॥
मधुतैले समे स्यातां क्वाथश्चैरण्डमूलजः ।
पलार्द्धं शतपुष्पाया स्ततोऽर्द्धं सैन्धवस्य च ॥ १६८ ॥
पलेनैकेन संयुक्तः खजेन तु विलोड़ितः ।
देयः सुखोष्णो भिषजा मधुतैलिकसंज्ञकः ॥ १६९ ॥
तदेव मधुतैलञ्च क्वाथः सरससैन्धवः ।
पिप्पलीफलसंयुक्तो वस्तिर्युक्तरथः स्मृतः ॥ १७० ॥
चतुष्पलं तु मधुनः तैलस्यापि चतुष्पलम् ।
एरण्डमूलक्वाथस्य तथा देयं पलाष्टकम् ॥ १७१ ॥
पलार्द्धं शतपुष्पाया स्ततोऽर्द्धं सैन्धवस्य च ।
मदनस्य पलञ्चैकं योज्यं युक्त्या विमर्दयेत् ॥ १७२ ॥
रसञ्चौराम्लमूत्राणा माज्यञ्च पलमात्रकम् ।
खजेनालोड़ितः कोष्णो मधुतैलिकसंज्ञितः ॥ १७३ ॥
पादहीनोऽपि देयः स्याद्वस्तिर्लेखनबृंहणः ।
दीपनो गाढ़विट्कघ्नः क्रमीणां नाशनः परः ॥ १७४ ॥
पाचनो निष्परिहारः सुखदो निरुपद्रवः ।
पुटकैकप्रदानेन सिद्धोऽयं वस्तिरुत्तमः ॥ १७५ ॥

इति मधुतैलिकनिरूहवस्तयः ।

क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत् ।
हपुषासैन्धवाक्षांशो वस्तिः स्याद् यापनः परः ॥ १७६ ॥

इति यापनवस्तिः ।

गोमूत्रस्य पलान्यष्टौ गुड़ात्यम्लकयोः पलम् ।

शताह्वासैन्धवे स्याता मक्षमात्रे प्रमाणतः॥ १७७॥
देय आमेऽनिले रूक्षस्तद्वत्तैलपलान्वितः।
उदावर्त्ते वातकोष्ठे सिद्धवस्तिरिति स्मृतः॥ १७८॥

इति सिद्धवस्तिः।

सैन्धवाक्षं समादाय शताह्वाक्षसमन्वितम्।
गोमूत्रस्य पलान्यष्टावम्लिकायाः पलद्वयम्॥ १७९॥
गुड़स्य तु पले द्वे तु सर्वमालोड्य यत्नतः।
वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः॥ १८०॥
शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्।
क्रिम्युदावर्त्तवातादीन् सद्यो हन्यात्प्रयोजितः॥ १८१॥

इति क्षारवस्तिः।

अष्टौ पलानि मूत्रस्य रुवुक्काथाच्चतुष्पलम्।
पलद्वयं तु तैलस्य माक्षिकप्रसृतं तथा॥ १८२॥
रसकक्षीरसौवीर तिन्तिड़ीकं पलम्पलम्।
गुड़ादेकं पलं दद्यान्मदनस्य पलं तथा॥ १८३॥
शतपुष्पा वचा रास्ना कुष्ठदारु घनं निशा।
सिद्धार्थकं विल्वपेशीयवानी सैन्धवं बला॥ १८४॥
कर्षान्वितं श्लक्ष्णपिष्टं खजेनाशु प्रमथ्य च।
युञ्ज्यान्निरूहवत्प्राज्ञो निरपायं महद्गुणम्॥ १८५॥
मूत्रवस्तिरिति ख्यातः सर्वव्याधिहरः परः।

इति मूत्रवस्तिः।

सिन्धूद्भवस्य कर्षमम्लिकायाः पलं गुड़ार्द्धपलम्।
सुरभीपयसः कुड़वः सर्वैरेतैः कृतो वस्तिः॥ १८६॥
ईषत्तैलयुतोऽयं भुक्ते दत्ते निहन्ति रोगगणम्।
कट्युरुपृष्ठशोथं शूलं चामानिलं घोरम्॥ १८७॥
चिरभवमूरुस्तम्भं गृध्रसिरोगं च जानुसङ्कोचम्।

विषमज्वराणि घोरं क्लैव्यञ्च विनाशयत्याशु ॥ १८८ ॥
वस्तिर्वैतरणोक्तो गुणगणयुक्तः सुविख्यातः ॥ १८९ ॥
भोजयित्वा च सायाह्ने सर्वस्यायं प्रशस्यते।
अथ चेद्बलवान् जन्तु रभुक्तापि तदा क्वचित् ॥ १९० ॥

इति वैतरणवस्तिः।

दशमूलीकषायस्य पलान्यष्टौ पलद्वयम्।
तैलस्य मधुनश्चाथ शताह्वाक्षं प्रयोजयेत् ॥ १९१ ॥
अक्षञ्च सैन्धवस्येष्टं वस्तिरेभिर्महागुणः।
आत्रेयानुमतो ह्येष भुक्ते योज्यो विचक्षणैः ॥ १९२ ॥
नित्यमेकान्तरं वापि परिहारविवर्जितः।
सुकुमारेषु वृद्धेषु स्त्रीषु यन्त्रणभीरुषु ॥
दीयमानो निहन्त्याशु दोषानीकान् सुदुस्तरान् ॥ १९३ ॥
वातरक्तं क्षयं कासं कुष्ठञ्च विषमज्वरम्।
अश्मरीम्मूत्रकृच्छ्रञ्च गुल्मप्लीहहलीमकम् ॥ १९४ ॥
वातपित्तभवान्रोगान् कफजान् सान्निपातिकान्।
तान् सर्वान्नाशयत्याशु बलवर्णाग्निवर्द्धनः ॥ १९५ ॥
नैरूहिकेषु सर्वेषु वस्तिषु प्रवरो मतः।
शुक्रसञ्जननो वृष्यश्चार्द्धमात्रिकसंज्ञकः ॥ १९६ ॥
शतशः सन्ति निरूहाः सुश्रुतचरकादिमुनिगदिताः।
भिषजां पुनरमुनैव व्यवहारश्चार्द्धमात्रेण ॥ १९७ ॥

इति अर्द्धमात्रिकनिरूहः।

एरण्डमूलं त्रिफला पलांशा ह्रस्वानि मूलानि पलानि पञ्च।
रास्नाश्वगन्धा सबलागुडूचीपुनर्नवारग्बधदेवदारु ॥ १९८ ॥
भागाः पलांशा मदनाष्टयुक्ता जले द्विकंसे क्वथिताष्टशेषे।
पेष्या शताह्वा हपुषा प्रियङ्गु सपिप्पलीकं मधुकं वचा च १९९
रसाञ्जनं वासकवीजमुस्तमक्षप्रमाणं लवणांशयुक्तम्।

समाक्षिकस्तैलयुतः समूत्रो वस्तिर्नृणां लेखनदीपनीयः॥२००॥
जङ्घोरुपादत्रिकपृष्ठशूलं कफावृतं मारुतविग्रहञ्च।
विण्मूत्रवातग्रहणं सशूलमाध्मानकं साश्मरिशर्कराञ्च॥ २०१॥
आनाहमर्शोग्रहणीप्रदोषानैरण्डवस्तिः शमयेत् प्रयुक्तः।

इति एरण्डाद्यो निरूहः।

स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवञ्च।
एतान्यनुक्तान्यपि दापयेच्च निरूहयोगे मदनात् फलञ्च॥२०२॥
लवणं कार्षिकं दद्यात् पलमेकन्तु मादनम्।
वाते गुडः सिता पित्ते कफे सिद्धार्थकादयः॥ २०३॥
विट्श्लेष्मपित्तानिलमूत्रकर्षोद्दीप्त्यग्निवहः शुक्रबलप्रदश्च।
विट्कं स्थितं दोषचयं निरस्य सर्वान् विकारान् शमयेन्निरूहः:२०४
ज्वरे छर्दामतीसारे गूढ़शल्यार्दितेषु च।
हृद्रोग्रहे कृताहारे दुर्बले व्याधिकर्षिते॥ २०५॥
क्षीणे रक्तातिसारे च तथा मूर्च्छातिकर्षिते।
प्रथितानां नराणाञ्च निरूहो न प्रशस्यते॥ २०६॥
पीतस्नेहस्य वान्तस्य विरिक्तस्य सुतास्त्रजः।
निरूहितस्य कायाग्निर्मन्दीभवति देहिनः॥ २०७॥
स चाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्द्धते।
काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः॥ २०८॥
युक्तेऽग्नौ जीवति चिरं रोगी स्याद्विकृतिं गते।
शान्ते पञ्चत्वमायाति देहे रक्ष्योऽनलः सदा॥ २०९॥
कालस्तु वस्तिष्वनुयाति यावत्तावद्भवेद्दे परिहारकालः।
अत्याशनस्थानवचांसि पानं स्वप्नं दिवामैथुनवेगरोधान्॥
शीतोष्णवातातपशोकरोषांस्त्यजेदकालाहितभोजनञ्च॥२१०॥

इति निरूहकल्पनाविधिः।

अथ उत्तरवस्तिविधिमाह ।

वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम् ।
द्वित्रास्थापनतः शुद्धौ निदध्याद्वस्तिमुत्तरम् ॥ २११ ॥
आतुराङ्गुलिमानेन नेत्रन्तु द्वादशाङ्गुलम् ।
वृत्तं गोपुच्छवन्मूलं मध्ययोः कृतकर्णिकम् ॥ २१२ ॥
सिद्धार्थवाहिच्छिद्राग्र हेमरूप्यादिनिर्मितम् ।
चतुर्दशाङ्गुलं नेत्रं तत्र कार्य्यं विजानता ॥ २१३ ॥
मालतीपुष्पवृन्ताभं कर्त्तव्यं छिद्रमेव च ।
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥ २१४ ॥
स्नेहप्रमाणं परमं प्रकुञ्चं चात्र कीर्त्तितम् ॥ २१५ ॥
पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी ।
तदूर्ध्वम्पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ॥ २१६ ॥
निविष्टकर्णिकं मेढ्रे नारीणां चतुरङ्गुलम् ।
मूत्रस्रोतः परीणाहं मुद्गवाहि दशाङ्गुलम् ॥ २१७ ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानां त्वेकमङ्गुलम् ।
विधेयञ्चाङ्गुलञ्चासां विधिवद्वक्ष्यते यथा ॥ २१८ ॥
स्नेहस्य प्रसृतं चात्र स्वाङ्गुलीमूलसम्मितम् ।
एवं प्रमाणं विहितमर्थात् बुद्धिविकल्पितम् ॥ २१९ ॥
औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः ।
तदलाभे नियुञ्जीत गलचर्म च पक्षिणाम् ॥ २२० ॥
अथातुरमुपस्निग्धं सुस्विन्नं प्रथिताशयम् ।
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥ २२१ ॥
निषण्णमाजानुसमे पीठे स्थानाश्रये समे ।
स्वभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन युक्तितः ॥ २२२ ॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितः ।

पूर्वं शलाकयान्विस्य मार्गं नेत्रमनन्तरम् ॥ २२३ ॥
शनैःशनैर्घृताभ्यक्तं निदध्यादङ्गुलानि षट्।
ततोऽवपीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् ॥ २२४ ॥
ततः प्रयोजितस्नेहमपराह्णे विचक्षणः।
पयसा भोजयेदेनं यूषैर्मांसरसेन च ॥ २२५ ॥
अनेन विधिना दद्याद्वस्तीं स्त्रींश्चतुरोऽपि वा।
ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः ॥ २२६ ॥
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्य्याद्दशाङ्गुलम्।
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम् ॥ २२७ ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी।
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥ २२८ ॥
उत्तानायै स्त्रियै दद्यादूर्द्ध्वजानु वै समाहितः।
कन्येतरस्यै कन्यायै तद्वस्त्यग्निपीड़येत् ॥ २२९ ॥
त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति।
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ॥ २३० ॥
अप्रत्यागच्छति भिषग्वस्तावुत्तरसंज्ञके।
भूयो वस्तिं निदध्यात्तु संयुक्तं शोधनौषधैः ॥ २३१ ॥
पायौ वस्तिं निदध्यात्तु प्रोक्तं गुल्मचिकित्सिते।
प्रवेशयेद्वा मतिमान् फलवर्त्तिं तु योनिगाम् ॥ २३२ ॥
सूत्रैर्विशिष्टान्तां स्निग्धां शोधनद्रव्यसंयुताम्।
पीड़येद्वाप्यधो नाभेर्वस्तेरुपरि वेष्टिताम् ॥ २३३ ॥
आरग्बधस्य पत्रेण निर्गुण्ड्याः स्वरसेन च।
कुर्य्यात् गोमूत्रपिष्टेन वर्त्तिञ्चापि ससैन्धवाम् ॥ २३४ ॥
मुद्गैलासर्षपसमां प्रविभिद्य वयांसि च।
वस्तेरागमनार्थाय तां निदध्याच्छलाकया ॥ २३५ ॥
आगारधूमबृहतीफलपिप्पलीसैन्धवैः।

विद्दताश्चक्षगोमूत्रसुरापिष्टैः सनागरैः ॥ २३६ ॥
दह्यमाने भिषग्वस्तौ पायौ वस्तिं प्रदापयेत् ;
चीरिवृत्तकषायेण पयसा शीतलेन च ॥ २३७ ॥
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना ।
वस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजा रुजः ।
हन्यादुत्तरवस्तिस्तु नोचितो मेहिनां क्वचित् ॥ २३८ ॥
शुक्रं दुष्टं शोणितं चाङ्गनानां कष्टं शान्तिं याति चासृग्दरश्च ।
मूत्राघातं मूत्रदोषान् प्रवृद्धान् योनेर्दोषांश्चापराऽपातसंग्रम् २३९
शुक्राघातं शर्करामश्मरीञ्च शस्तं वस्तौ वङ्क्षणे मेहने च ।
घोरानन्यान् वस्तिजातांश्च रोगांश्चार्त्तेमेहादुत्तरो हन्ति वस्तिः २४०
सम्यग्दत्तस्य लिङ्गञ्च व्यापदः क्रम एव च ।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना ॥ २४१ ॥
घृताभ्यक्ते गुदे क्षेप्या श्लक्ष्णा स्वाङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता ॥ २३६ ॥

इत्युत्तरवस्तिविधिः ।

इति वङ्गसेनसङ्कलितः वस्त्यधिकारः समाप्तः ।

---

## अथ धूमपानाधिकारमाह ।

प्रायोगिकः कासहरश्च धूमो वैरेचनः स्नैहिकवामनीयौ ।
पञ्चप्रकारा गदितास्च धूमाः सिद्धान्तविद्भिर्मुनिभिश्च वैद्यैः ॥१॥
पलादिना कुष्ठनतोज्झितेन चौमं प्रलिप्याङ्गुलकाष्टमाना ।
प्रायोगिके वर्त्तिरियञ्च नेत्रमष्टाङ्गुलं षड्गुणितं प्रशस्तम् ॥ २ ॥
वृहत्यौ त्रपणं शृङ्गी सेङ्गुदी त्वङ्मनःशिला ।
एषा कासहरा वर्त्तिर्नेत्रं षोड़शकाङ्गुलम् ॥ ३ ॥
शिरोविरेचनैर्वर्त्तिर्नेत्रं हस्तमितं मतम् ॥ ४ ॥

स्निग्धसंज्ञैर्मधूच्छिष्टस्नेहगुग्गुलुसर्षपैः।
स्नैहिके वर्त्तिरेभिस्तु नेत्रं द्वात्रिंशदङ्गुलम्॥ ५॥
वामनीये तु वल्लूरस्नायुस्थिखुरचर्मभिः।
वर्त्तिर्दशाङ्गुलं नेत्रं धूमः पञ्चविधो मतः॥ ६॥

अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिः अतन्द्रितः स्नेहाक्तां प्रदीप्ताग्रां वर्त्तिं स्रोतसि प्रणिधाय धूमं पिबेत्।

मुखेन तं पिबेत् पूर्वं नासिकाभ्यां पुनः पिबेत्।
मुखपीतं मुखेनैव वमेत्पीतञ्च नासया ७॥
यो वमेन्नस्यतो धूमं नस्यपीतं मुखेन वा।
स नेत्रकर्णनासास्यसंश्रयान् लभते गदान्॥ ८॥

तत्र प्रायोगिकं त्रींस्त्रीनुच्छ्वासान् आददीत मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति। मुखनासाभ्यां पीतं स्नैहिकं यावदश्रुप्रवृत्तिरिति। नासिकाभ्याञ्च पीतं वैरेचनिकमादोषदर्शनात्। मुखेनैव कासान्तकरो श्वासान्तरेषु च। वामनीयञ्च मुखेनैव तिलतण्डुलक्तां यवागूं पीत्वा वामनीयो यथायोगम्।

हृत्कण्ठेन्द्रियसंशुद्धिर्लाघवं शिरसः शमः।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम्॥ ९॥
बाधिर्य्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम्।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान्॥ १०॥
तत्रेष्टं सर्पिषः पानं विरेको रक्तमोक्षणम्॥ ११॥

तस्य योगातियोगौ विज्ञातव्यौ। तत्र योगे रोगोपशमनमिति। अतियोगे तालुशोषपरिदाहपिपासामदमूर्च्छाकर्णक्ष्वेडदौर्बल्यमिति।

स्नैहिकं धूमकं दोषे वायौ पित्तानुगे यदि।
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम्॥ १२॥

न विरिक्तः पिबेद्धूमं न कृते वस्तिकर्मणि।
न रक्ते न विषे नार्त्तो नायक्तो न च गर्भिणी ॥ १३ ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥ १४ ॥
न मद्यदुग्धे पीत्वा च न वा स्नेहञ्च माक्षिकम्।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥ १५ ॥
न तालुशोषे तिमिरे शिरस्यऽभिहते न च।
न शङ्के न रोहिण्यां न रोगे च महात्यये ॥ १६ ।
एषु धूममकाले च मोहात्पिवति यो नरः।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात् ॥ १७ ॥

तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाह-पिपासा पाण्डुरोगतालुशोषच्छर्दिमूर्द्धाभिघातोद्गारमेहोदराध्मा-नोर्ध्ववातार्त्त बाल-वृद्धदुर्बलविरिक्तास्थापित-जागरित-गर्भिणी-रूक्षक्षतक्षीण-मधु-घृतदधि-दुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च धूमं न सेवेरन्निति।

गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ १८ ॥
दन्तदौर्बल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः।
पूतिघ्राणास्य च्छर्दिश्च दन्तशूलमरोचकः ॥ १९ ॥
हनुमन्याग्रहः कण्डूः क्रमयो मुखपाण्डुता।
श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्युपजिह्विका ॥ २० ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनं तथा।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥ २१ ॥
धूमपानात्प्रशाम्यन्ति बलं भवति चाधिकम्।
शिरोरुहकपालानामिन्द्रियाणां रसस्य च ॥ २२ ॥
न च वातकफात्मानो बलिनोऽप्यूर्ध्वजत्रुजाः।

धूमरिक्तकपालस्य व्याधयः स्युः शिरोगताः ॥ २३ ॥
धूमप्रयोगात्पुरुषः प्रसन्नेन्द्रियवाग्मनाः।
दृढ़केशद्विजश्मश्रुः प्रसन्नविशदाननः ॥ २४ ॥
प्रयोगपाने तस्याष्टौ कालाः सम्परिकीर्त्तिताः।
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान्निघृष्य च ॥ २५ ॥
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत्।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥ २६ ॥
अङ्गुष्ठपरिणाहेन मध्ये स्थूलोऽन्तयोस्तनुः।
षड्भागो धूमनेत्रस्य वर्त्त्या मानं प्रशस्यते ॥ २७ ॥
ऋजु त्रिकोषकलितकोलास्थ्यग्रप्रमाणितम्।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥ २८ ॥
शरावसम्पुटच्युतं व्रणधूमं नयेद्व्रणे।
धूमनेत्रेण मतिमान् वेदना स्रावशान्तये ॥ २९ ॥

इति वङ्गसेनसङ्कलितः धूमपानाधिकारः समाप्तः।

---

## अथ कवलाधिकारमाह।

चतुर्द्धा कवलः स्नेही प्रसादी शोधिरोपणौ।
स्निग्धोष्णः स्नेहिको वाते स्वादुशीतैः प्रसादनः ॥ १ ॥
पित्ते कट्वम्ललवणैः रूक्षः संशोधनः कफे।
कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे ॥ २ ॥
वचा त्रिकटुकैश्चैव सिद्धार्थैः कल्कपेषितैः।
तैलमूत्रसुरायुक्तैर्मधुनाम्लतमेन च ॥ ३ ॥
सहितैः स्विन्नमृदितस्निग्धभालकपोलकः।
मुखे गृहीत्वा कवलं मात्रयाऽनन्यमानसः ॥ ४ ॥

तिष्ठेद्यावन्मुखं पूर्णं स्रावश्च घ्राणचक्षुषोः ।
ततस्त्यक्त्वाऽपरो ग्राह्यो यावदाऽऽदोषसंक्षयः ॥ ५ ॥
एवं स्नेहपयः क्षौद्ररसमूत्राम्लसंयुताः ।
कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः ॥ ६ ॥
मुखं सञ्चार्य्यते यातु सा मात्रा कवले स्मृता ।
असञ्चार्य्या तु सा मात्रा गण्डूषे सा प्रकीर्त्तिता ॥ ७ ॥

तावद्धारयितव्योऽनन्यमनसाऽनुन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिप्लवश्च भवति तदा विमोक्तव्यः । पुनश्चान्यो ग्रहीतव्य आशुद्धिलिङ्गमिति ।

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ ८ ॥
हीने जाड्यकफोत्क्लेशा वरसज्ञानमेव च ।
अतियोगे मुखे पाकः शोषस्तृष्णारुचिः क्लमः ॥ ९ ॥
शोधनीये विशेषेण भवन्त्येतत्तु लक्षणम् ॥ १० ॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥ ११ ॥
कवलस्य विधिर्ह्येष समासेन प्रकीर्त्तितः ।
विभज्य भेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ॥ १२ ॥
कल्कोरसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम् ।
अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिषु ॥ १३ ॥
तस्य योगातियोगञ्च कवलोक्तं विभावयेत् ।
तान्येव शमयेद् व्याधीन् कवलोऽयं प्रयोजितः ॥ १४ ॥
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ १५ ॥

इति वङ्गसेनसङ्कलितः कवलाधिकारः समाप्तः ।

---

## अथ नस्याधिकारमाह।

प्रतिमर्शोऽवपीड़श्च नस्यं प्रधमनं तथा।
शिरोविरेचनं पञ्च नस्यभेदाः प्रकीर्त्तिताः ॥ १ ॥
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति तान् ॥ २ ॥

औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्। नस्यं तद्‌द्विविधं शिरोविरेचनं स्नेहनञ्च तद्‌द्विविधमपि पञ्चधा। तद्यथा,—प्रतिमर्शो विरेचन विकल्पोऽवऽवपीड़ः प्रधमनं चेति।

ये तु वातात्मका रोगाः शिरःकम्पार्दितादयः।
शिरसस्तर्पणं तेषु नस्यकर्म्म प्रशस्यते ॥ ३ ॥
स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः।
शिरोविरेचनं तेषु नस्यकर्म्मप्रशस्यते ॥ ४ ॥
शर्करेक्षुरसक्षीर घृतमांसरसान् पृथक्।
क्षीणानां नस्यतो दद्याद्रक्तपित्तगदेषु च ॥ ५ ॥
वातपैत्तिकेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति।
यथा दोषोदये काले रोगिणो नावनं भिषक्।
शरद्वसन्तयोः स्वस्थे पूर्वाह्णे संप्रयोजयेत् ॥
वर्षासु शिशिरे ग्रीष्मे सायं मध्यन्दिनेऽथवा ॥ ६ ॥

भुक्तवानपतर्पितोऽत्यर्थतरुणप्रतिश्यायी गर्भिणी स्नेहोदकमद्यद्रवपीतोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्त्तस्तृषाभिभूतोबालोवृद्धः श्रान्तोवेगावरोधितः शिरःस्नातः स्नातुकामश्च न नस्यकर्म्मार्हं इति। तस्य स्नेहननस्यस्य प्रमाणमष्टौ विन्दवः प्रदेशिनी पर्वद्वयनिःसृता प्रथममात्रा द्वितीयाशुक्ति स्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथावलं प्रयोज्याः। तत्रोच्चारितवातमूत्रपुरीषाय भुक्तवते व्यभ्रे काले पाणितापोपस्वेदितगलकपोलललाटप्रदेशाय वातातप-

रजोहीनवेश्मनि उत्तानशायिने प्रसारितकरचरणाय किञ्चि-
प्रलम्बितशिरसे वस्त्राच्छादितनयनाय वामहस्तप्रदेशिन्यग्रो-
न्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णानु
तप्त रजत-सुवर्ण-ताम्र-मृत्पात्र-शुक्तीनामन्यतमस्थं शुक्त्या
पिचुना वा सुखोष्णमद्रुतं विच्छिन्नधारया सिञ्चेत्। यथा
नेत्रेन प्राप्नोति तथा प्रयतेत इति।

स्नेहेन सिञ्चति शिरो न कथञ्चन कम्पयेत्।
न भाषेत न कुप्येत न ब्रूयान्न हसेत्तथा ॥ ७ ॥
एवं हि विहितः स्नेहो नैवान्तः प्रतिपद्यते।
ततः कासप्रतिश्याय शिरोऽक्षिगदसम्भवः ॥ ८ ॥
शृङ्गाटकमभिप्लाव्य स्थापयेन्न गिलेत् द्रवम्।
पञ्चसप्तदशैव स्युर्मात्रा नस्यविधारणे ॥ ९ ॥
उपविश्याथ निष्ठीवेन्नासावक्त्रात्तगं द्रवम्।
वामदक्षिणपार्श्वाभ्यां निष्ठीवेत्सम्मुखं न हि ॥ १० ॥
ललाटस्वेदनं कुर्य्याद्यदि नो वहिराव्रजेत् ॥ ११ ॥
नीते नस्ये मनस्तापं रजः क्रोधादिकं त्यजेत्।
शयीत निद्रां त्यक्त्वा च प्रोक्ता नो वाक्शतं नरः ॥ १२ ॥
तथा वैरेचनस्यान्ते धूमो वा कवलो हितः।
व्यवभुक्तवते नस्यं करस्विन्नाय दापयेत् ॥ १३ ॥
स्नेहस्य विन्दवो ह्यष्टौ प्रदेया नस्यकर्मणि।
शुक्तिश्च पाणिशुक्तिश्च तिस्रो मात्राः प्रकीर्त्तिताः ॥ १४ ॥
द्वात्रिंशद्विन्दवश्चापि शुक्तिरित्यभिधीयते।
द्वे शुक्ती पाणिशुक्तिश्च ज्ञेया तु कुशलैर्नरैः ॥ १५ ॥
चत्वारो विन्दवः षड् वा तथाष्टौ वा यथा बलम्।
शिरोविरेचने योज्या ऊर्द्ध जत्रुविकारिणाम् ॥ १६ ॥
शिरोऽभिघाते त्वरुचौ स्वरभङ्गे गलग्रहे।

कासे नासामयेऽपच्यां नस्यं देयं विरेचनम् ॥ १७ ॥
शिरीषशिग्रुसिन्धूत्थ रुचकत्रूषणादयः।
हिंग्वार्द्रकरसाश्चैव प्रयोज्या नस्यकर्मणि ॥ १८ ॥
लाघवं शिरसो योगे सुखस्वप्नावबोधनम्।
विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥ १९ ॥
लाघवं शिरसः शुद्धिः स्रोतसां व्याधिसंक्षयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ॥ २० ॥
कण्डूप्रदेहौ गुरुता स्रोतसां कफसंस्रवः।
हीने विशुद्धे शिरसि लक्षणं सम्प्रकीर्त्तितम् ॥ २१ ॥
मस्तुलुङ्गागमो वातदुष्टिरिन्द्रियविभ्रमः।
शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते ॥ २२ ॥
हीने विशुद्धे शिरसि कफवातघ्नमाचरेत्।
सम्यङ्नियोजिते वापि सर्पिर्नस्ये नियोजयेत् ॥ २३ ॥

प्रतिमर्शस्तु चतुर्दशसु कालेषूपादेयो भवति। तद्यथा, तल्पोत्थितेन प्रक्षालितमुखेन गृहान्निर्गच्छता व्यवायव्यायामाध्वपरिश्रान्तेन मूत्रोच्चारकबलाञ्जनान्ते भुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायं चेति।

ईषदुत्सिञ्चितः स्नेहो यदा वक्त्रं प्रपद्यते।
नस्ये निषिक्तं तं विद्यात्प्रतिमर्शं प्रमाणतः ॥ २४ ॥
उत्सिञ्चन्न पिबेत् स्नेहं निष्ठीवेन्मुखमागतम्।
क्षीणे तृष्णास्य शोषार्त्ते बाले वृद्धे च युज्यते ॥ २५ ॥
तेन रोगाः प्रशाम्यन्ति नराणामूर्ध्वजत्रुजाः।
इन्द्रियाणाञ्च वैमल्यं कुर्य्यादास्यं सुगन्धि च ॥ २६ ॥
हनुदन्तशिरोग्रीवा त्रिकबाहूरसां बलम्।
वलीपलितखालित्य व्यङ्गानां चाप्यसम्भवः ॥ २७ ॥
तैलं कफे सवाते च केवले पवने वसाम्।

दद्यात्वस्तः सदा पित्ते सर्पिर्मज्जानमेव च ॥ २८ ॥
चतुर्विधस्य स्नेहस्य विधिरेष प्रकीर्त्तितः।
श्लेष्मस्थानां विरोधित्वात्तेषु तैलं प्रशस्यते ॥ २९ ॥
अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ।
शिरोविरेचनस्यात्र तौ तु देयौ यथायथम् ॥ ३० ॥
कल्कीकृतादौषधाद्यः पीड़ितो निःसृतो रसः।
अवपीड़ः स निर्दिष्ट स्तीक्ष्णद्रव्यसमुद्भवः ॥ ३१ ॥
षड़ङ्गुलादिद्विवक्त्राया नाड़ीचूर्णं तया धमेत्।
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हितम् ॥ ३२ ॥
ऊर्ध्वजत्रुगते रोगे कफजे स्वरसङ्क्षये।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥ ३३ ॥
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम्।
भीरुस्त्रीकृशबालानां नस्यं स्नेहनमिष्यते ॥ ३४ ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे।
मनोविकारे कृमिषु युज्यते चावपीड़नम् ॥ ३५ ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते।
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः ॥ ३६ ॥

वैरेचनं नस्यं यथा।

नस्यं स्यान्नागरशुण्ठीभ्यां पिप्पल्या सैन्धवेन वा।
जलपिष्टेन तेनाशु कर्णनासाशिरोगदाः॥
मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्ठजाः ॥ ३७ ॥
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः।
नस्यं कोष्णजलैः पिष्टं दद्यात् संज्ञाप्रबोधनम् ॥ ३८ ॥
रोहितमत्स्यपित्तेन भावितं मरिचं वचाः।
कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः ॥ ३९ ॥

इति वङ्गसेनसङ्कलितः नस्याधिकारः समाप्तः।

## अथ स्वस्थवृत्ताधिकारमाह ।

उत्थायायात्मवता ब्राह्मे स्वस्थेनारोग्यमिच्छता ।
धीमता यदनुष्ठेयं तत्सर्वं सम्प्रवक्ष्यते ॥ १ ॥
प्रतिपद्दर्शषष्ठीषु नवम्येकादशीषु च ।
दन्तानां काष्ठसंयोगो दहत्याऽऽसप्तमं कुलम् ॥ २ ॥
कनिष्ठाग्रसमस्थूलमायतं द्वादशाङ्गुलम् ।
प्रातरुत्थाय मतिमान् भक्षयेद्दन्तधावनम् ॥ ३ ॥
करञ्जकरवीरार्क मालतीककुभाशनाः ।
खदिराम्रातकौ शुद्धौ सहकारकपित्थकौ ॥ ४ ॥
शस्यन्ते दन्तधावना ये चाप्येवंविधा द्रुमाः ॥ ५ ॥
आयुर्यशोबलं वर्णं प्रजापशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते ॥
इत्यादि श्रुतिवाक्येन गृह्णीयात् सुवनस्पतिम् ॥ ६ ॥
द्वादशाङ्गुलमाद्यानां क्षत्रियाणां दशाङ्गुलम् ।
अष्टाङ्गुलन्तु वैश्यानां शूद्राणान्तु षड़ङ्गुलम् ॥ ७ ॥
दन्तकाष्ठन्तु नारीणां विधिवच्चतुरङ्गुलम् ।
तदग्रेण शनैर्दन्तान् घर्षयेत्तानपीड़यन् ॥ ८ ॥
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम् ।
निरस्य शुचिमाधत्ते सद्यो दन्तविशोधनम् ॥ ९ ॥
मुखवैरस्य वैगन्ध्य शोषजाड्यापहं सुखम् ।
दृढ़ीकरञ्च दन्तानां स्नेहगण्डूषधारणम् ॥ १० ॥
विण्मूत्राखिलदोषधातुशमनाकाङ्क्षान्नपाने रुचिः
भुक्तं जीर्य्यति पुष्टये परिणतिः स्वप्नावधौते सुखम् ।
गृह्णीते विषयान् यथास्वमुचितान् वृत्तानतो वृत्तितः
स्वस्थस्याभिहितं चतुर्दशविधं जन्तोरिदं लक्षणम् ॥ ११ ॥

दध्याज्यादर्शसिद्धार्थविल्वगोरोचनास्रजाम् ।
दर्शनं स्पर्शनं कार्य्यं प्रवृत्तमशुभापहम् । १२ ॥
पञ्चरात्रान्नखश्मश्रु केशलोमानि कर्त्तयेत् ।
केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम् ॥
पौष्टिकं धन्यकायुष्यं शौचकान्तिकरं परम् ॥ १३ ॥
उत्पाटयेन्न लोमानि नासायास्तु कथञ्चन ।
दृष्टिदौर्बल्यतिमिरमभीक्ष्णोद्धरणाद्भवेत् ॥ १४ ॥
ताम्बूलपत्रसत्कारं पूगाद्यञ्च कफापहम् ।
चूर्णं कफानिलहरं खदिरः कफपित्तनुत् ॥ १५ ॥
संयोगतो दोषहरं कान्तिसौष्ठवकारकम् ।
पथ्यं सुप्तोत्थिते भुक्ते वान्ते श्रान्ते च मानवे ॥ १६ ॥
ताम्बूलञ्च विषार्त्तानां मूर्च्छाक्षयास्रपित्तिनाम् ।
रूक्षदुर्बलमत्तानामहितं चास्यशोषिणाम् ॥ १७ ॥
देहदृक्केशदन्ताग्नि श्रोत्रवर्णबलक्षयः ।
शोषः पित्तानिलास्रं स्यादतिताम्बूलभक्षणात् ॥ १८ ॥
पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ १९ ॥
आयुरग्रे यशोमूले मध्ये लक्ष्मीर्व्यवस्थिता ।
तस्मादग्रञ्च मध्यञ्च मूलं पर्णे विवर्जयेत् ॥ २० ॥
केशभूमिगतान्रोगाञ्छिरोऽभ्यङ्गोऽपकर्षति ।
केशानां मृदुतां स्नेहमक्षिशान्तिं करोति च ॥ २१ ॥
करोति शिरसस्तृप्तिं केशानां दृढ़तामपि ।
तर्पणं चेन्द्रियाणाञ्च दत्तोऽभ्यङ्गस्तु मूर्ध्वनि ॥ २२ ॥
केशप्रसाधनी केश्या रजो जन्तुमलापहा ।
हनुमन्या शिरः कर्णशूलघ्नं कर्णपूरणम् ॥ २३ ॥
अभ्यङ्गो मार्दवकरः कफवातविनाशनः ।

धातूनां पुष्टिजननो मृजावर्णबलप्रदा ॥ २४ ॥
पादप्रक्षालनं पादमलरोगश्रमापहम्।
दृष्टिप्रसादनं हृद्यं रक्षोघ्नं प्रीतिवर्द्धनम् ॥ २५ ॥
निद्राप्रदो देहसुखश्चक्षुष्यः पादरोगहा।
पादत्वग्मृदुकर्त्ता च पादाभ्यङ्गः प्रशस्यते ॥ २६ ॥
उद्वर्त्तनं वातहरं कफमेदोविलायनम्।
स्थिरीकरणमङ्गानां त्वक् प्रसादकरं तथा ॥ २७ ॥
तन्द्रापाप्मोपशमनं तुष्टिदं पुष्टिवर्द्धनम्।
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् ॥ २८ ॥
तच्चातिसारज्वरितकर्णशूलार्दितादिषु।
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् ॥ २९ ॥
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम्।
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ॥ ३० ॥
सौमनस्य मलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥ ३१ ॥
पक्ष्मलं विशदं कान्त्य मक्ष्णोरञ्जितमञ्जनम्।
नेत्रमञ्जनसंयोगाद्भवेन्निर्मलताकरम् ॥ ३२ ॥
चक्षुष्यं स्पर्शनार्हञ्च पदयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ ३३ ॥
घर्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते ॥ ३४ ॥
सुखस्थानप्रतिष्ठानं शत्रूणाञ्च निषेधनम्।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ ३५ ॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपनः ॥ ३६ ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारकः।
शक्त्यायुः शुक्रसत्त्वौजस्तेजसां च विवर्द्धकः ॥ ३७ ॥
अपि शाकं जलस्विन्नं लवणस्नेहभर्जितम्।

बुभुक्षितस्य कल्पं स्यात् स्वादु स्याद्धृदयं तथा ॥
तत्तु षड् रससम्पन्नं मन्दाग्नेर्भोजनञ्च यत् ॥ ३८ ॥
क्षुत्सम्भवति जीर्णेषु मलदोषरसेषु च ।
उचितोऽनुचितो वापि सोऽन्नकाल उदाहृत: ॥ ३९ ॥
य: प्रसाद: परोऽन्नस्य परं जीर्णस्य सर्वश: ।
रसस्याञ्जलयस्तत्र नव देहेषु देहिन: ॥ ४० ॥
रक्तस्याञ्जलयस्त्वष्टौ शकृत: सप्त सर्वश: ।
पित्तस्याञ्जलय: पञ्च षट्कफस्य प्रचक्षते ॥ ४१ ॥
मूत्रस्य विद्याच्चत्वारो वसायाश्चाञ्जलित्रयम् ।
द्वावञ्जली मेदसस्तु मज्जश्चैवाञ्जलिर्मत: ॥ ४२ ॥
शुक्रस्याप्यञ्जलिर्ज्ञेयो मस्तिष्कस्यौजसस्तथा ।
चत्वारोऽञ्जलय: स्त्रीणां रजस: प्रकृतिस्थिति: ॥ ४३ ॥
द्वावञ्जली प्रसूतायास्तन्यस्यापीह योषिताम् ।
एवं तस्य परं मान मनिर्देश्यं प्रचक्षते ॥ ४४ ॥
प्रमाणमेतद्धातूनामदुष्टानामुदाहृतम् ।
हीना: स्वेन प्रमाणेन विविधाश्चापि धातव: ॥
योजयन्ति विकारैश्च दोषा वृद्धा: क्षयप्रदा: ॥ ४५ ॥
बालव्यजनमोजस्यं मक्षिकादीन् व्यपोहति ॥ ४६ ॥
सेवेत विषयान् काले मुक्त्वा तत्परतां वशी ।
नातिजागरणं निद्रां सर्वभूतहितैषिताम् ॥ ४७ ॥
देवगोब्राह्मणाभ्यर्थ्यगुरुवृद्धान् सदार्चयेत् ॥ ४८ ॥
चतुष्पथनमस्कर्त्ता दाता यष्टा प्रियंवद: ।
क्रुद्धानामनुनेता च दीनानामनसूयक: ॥ ४९ ॥
आश्वासकश्च भीतानां बन्धुवत्सर्वदेहिनाम् ।
रागद्वेषनिदानानां हन्ता धर्मपरायण: ॥ ५० ॥
नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्त: ।

दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥५१॥
पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम्।
स्वामिनं सर्वभावेन पुण्यश्लोकममायया ॥ ५२ ॥
भुंक्ष्व वास्तूकशाकेन तक्रं सलवणं पिब।
राजन्! हरीतकीं भुंक्ष्व नश्यन्तु भवतो गदाः ॥ ५३ ॥
न वेगान्धारयेद्धीमान् वातविण्मूत्ररेतसाम्।
जृम्भाकासक्षवोद्गार श्वासतृष्णावमीक्षुधाम् ॥ ५४ ॥
धारितेष्वेषु जायन्ते तन्मार्गस्थानजा गदाः।
धार्य्यो वेगस्तु शस्तानां मनोवाक्कायकर्मणाम् ॥ ५५ ॥
न पीड़येदिन्द्रियाणि न चैतान्यतिलालयेत्।
अनुजायात्प्रतिपदं सर्वधर्मेषु तुल्यताम् ॥ ५६ ॥
स्त्रियं श्रियं धनञ्चापि परस्याभिलषेन्न हि।
न कुर्य्याच्चञ्चलं चेतो न कालमतिवाहयेत् ॥ ५७ ॥
प्रणयेनापि नो वाच्यं वचनं परतापि यत्।
अहिंसा सततं कार्य्या धार्य्या चेतस्यऽनित्यता ॥ ५८ ॥
हिताभिर्जुहुयान्नित्य मन्त्रैरग्निं समाहितः।
अन्नपानसमिद्भिर्वा मात्राकालौ विचारयन् ॥ ५९ ॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत् ॥ ६० ॥
सर्वमन्यत्परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥ ६१ ॥
मतिर्वचः कर्म सुखानुबन्धि सत्त्वं विधेयं विशदा च बुद्धिः।
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ६२
अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु।
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ६३
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे।

शस्यते त्रिष्वपि हितो व्यायामो दोषपाचनः ॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति ॥ ६४ ॥
अशाकभोजी घृतमत्ति योऽम्भसा पयोरसान् सेवति नातियोऽम्भः ।
निरामभुग्वातकृतां विदाहिनां न च प्रभुग्जीर्णभुगल्परुक्सः ६५
नगरी नगरस्येव रथस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ ६६ ॥

इति वङ्गसेनसङ्कलितः अनागतामयप्रतिषेधाधिकारः समाप्तः ।

---

## अथ द्रव्यगुणाधिकारमाह ।

चक्षुष्यो मधुरो वृष्यो बल्यो धातुविवर्द्धनः ।
अम्लोरसोमतो हृद्यः क्लेदी दीपनपाचनः ॥ १ ॥
दीपनो ज्वरतृष्णाघ्न स्तिक्तः शोधनरोपणः ।
पीडनो लेखनः स्तम्भी कषायो ग्राहिरोपणः ॥ २ ॥
रसवीर्य्यविपाकानामाश्रयाद्द्रव्यमुत्तमम् ।
उत्तरोत्तरसंश्लेषादितरेषां प्रधानता ॥ ३ ॥
सतिक्तलवणं कुष्ठं स्वल्पवातविषापहम् ।
स्वादुपाकरसो ज्ञेय स्तगरः कुष्ठवद्गुणैः ॥ ४ ॥
वल्याश्वगन्धा वातघ्नी कासश्वासक्षये हिता ।
देवदारु भवेत्तद्वत्कासश्वासमयापहम् ॥ ५ ॥
सोणं लघु च शीतञ्च सुगन्धि कटुकं गुरु ।
वातपित्तहरा बल्या वृष्या संग्राहिणी बला ॥ ६ ॥
श्रीफलैरण्डमूलानि शूले वातकफोल्वणे ।
पृश्निपर्णी स्थिरा चैव पित्तश्लेष्मातिसारिणाम् ॥ ७ ॥
वातभोजनसंस्कारे शस्यते वातभूयसाम् ।
चक्षुष्यं वातपित्तघ्नं बल्यं लोहितचन्दनम् ॥ ८ ॥

ह्रीवेरं छर्दिहृल्लास तृष्णातीसारनाशनम्।
पाचनं दीपनं वृष्यं शूलघ्नं विश्वभेषजम्॥ ९॥
वातश्लेष्महरं हृद्यं मुस्तं पित्ताऽविरोधि च।
पिप्पली प्लीहगुल्मार्शो जठरेषु विधीयते॥ १०॥
दीपनी पाचनी हृद्या नात्युष्णा कटुका मता।
मरिचं नातिशीतोष्णं पित्तलं कफवातजित्॥ ११॥
संग्राहि रोचनं मुस्तं दीपनं दोषपाचनम्।
सतिक्तातिविषा सोष्णा संग्राहिण्यामपाचनी १२॥
गुडूची वातपित्तघ्नी मेहघ्नी पाचनी सरा।
छर्दिकुष्ठज्वरश्वास कासारोचकनाशिनी॥ १३॥
किराततिक्तकस्तिक्तो रक्तपित्तज्वरापहः।
यावद्गुणैरसैस्तिक्ता प्रोक्ता भूनिम्बवत्सरा॥ १४॥
किराततिक्तवत् ज्ञेये त्रायमाणादुरालभे।
कफवातज्वरच्छर्दि कम्परोचकनाशने॥ १५॥
कफपित्तहरौ तिक्तौ वरिष्टखदिरद्रुमौ।
तृष्णारोचकवीसर्प कण्डूकुष्ठविनाशनौ॥ १६॥
वासकः कासवैस्वर्य्य रक्तपित्तकफापहः।
सेव्यः पित्तकफस्वेद दाहदौर्गन्ध्यनाशनः॥ १७॥
कफवातहरी पथ्या बुद्ध्यायुः स्वरवर्द्धिनी।
विबन्धश्वासकासास्रहिक्कामारुचिनाशिनी॥ १८॥
कफवातहरं केश्यमचक्षमक्षिबलप्रदम्।
वयसः स्थापनं वृष्यं शस्तमामलकं त्रिषु॥ १९॥
ककुभो भग्नरुग्घाती कदरो दन्तदार्ढ्यकृत्।
कण्डूरोगापचीपिल्ले विशेषाद्रजनी हिता॥ २०॥
तद्वद्दार्वी विशेषेण कफाभिष्यन्दनाशिनी।
पार्श्वरुक्कासश्वासार्त्ति हिक्काघ्नं पौष्करम्मतम्॥ २१॥

मूलं कर्कटकस्यापि शृङ्गीकुच्च्यनिले हिता।
जीरकैलाद्वयं पृथ्वी चव्या दीपनपाचनी॥ २२॥
भेदनं पिप्पलीमूलं दीपनं शूलनाशनम्।
कट्फलो मुखरोगघ्नः कासश्वासकफापहः॥ २३॥
कर्पूरः शीतलः पाके चक्षुष्यः कफनाशनः।
सुगन्धिः कटुको हृद्यः कंकोलः कफवातजित्॥ २४॥
तद्वाज्जातीफलं प्रोक्तं लवङ्गकुसुमानि च।
चक्षुष्यं मधुरं सेव्यं पुण्डरीकं च शस्यते॥ २५॥
कुङ्कुमं तूष्णवीर्य्यं स्याद्वातघ्नं विषनाशनम्।
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम्॥ २६॥
कण्डूघ्नं रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम्।
स्निग्धं तीक्ष्णं कटुरसं शूलाजीर्णविबन्धजित्॥ २७॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम्।
कटुश्लेष्मानिलहरं गन्धाढ्यं जीरकं हितम्॥ २८॥
आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम्।
सा शुष्का मधुरा पाके तृष्णादाहरुजापहा॥ २९॥
जम्बीरः पाचनस्तीक्ष्णः क्रमिवातकफापहः।
सुरभिर्दीपनो हृद्यो मुखवैशद्यकारकः॥ ३०॥
कफानिलविषश्वास कासदौर्गन्ध्यनाशनः।
पित्तहृत्पार्श्वशूलघ्नः सुरसः समुदाहृतः॥ ३१॥
कफघ्ना लघवस्तीक्ष्णा वीर्य्योष्णाः पित्तवर्द्धनाः।
कटुतिक्तरसाश्चैव सुमुखार्जकभूस्तृणाः॥ ३२॥
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽतिपिच्छिलः।
मधुशिग्रुः परस्तिक्तः शोषघ्नो दीपनः कटुः॥ ३३॥
हेमः स्वादुरसं प्रोक्तं वर्णायुर्बलवर्द्धनम्।
अम्लस्तिक्तरसः प्रोक्तो रजतोऽम्लरसः पुनः॥ ३४॥

कृष्णायः पाण्डुरोगघ्नं पित्तलं चापि तद्गुणम्।
स्रोतोजं रक्तपित्तघ्नं तद्वत्काञ्चनगैरिकम्॥ ३५॥
सौवीरमञ्जनं पथ्यं परं दृष्टिप्रसादनम्।
विलायनं विशेषेण चक्षुष्यं त्रपुसीसकम्॥ ३६॥
रक्तपित्ते क्षतोरस्के शस्तं खर्जूरमस्तकम्।
विदारिकन्दो वृष्यश्च वातपित्तहरस्तथा॥ ३७॥
माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम्।
सकन्दलसुनोऽत्युष्णः शूरणो गुदकीलहा॥ ३८॥
चक्षुष्यं सैन्धवं वृष्यं विशेषात् शमनं स्मृतम्।
सौवर्चलं विबन्धघ्न मुष्णं हृच्छूलनाशनम्॥ ३९॥
उष्णं शूलहरं तीक्ष्णं विड़ं वातानुलोमनम्।
रुचकं वह्निकृत्तीक्ष्णं सामुद्रं क्लेदनं गुरु॥ ४०॥
हृत्पाण्डूदररोगघ्नो यवक्षारोऽतिदीपनः।
दहनो दीपनस्तीक्ष्णः स्वर्जक्षारोऽतिदीपनः॥ ४१॥
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते॥ ४२॥

या गन्धं केतकीनां बहति परिमलं वर्णतः पिञ्जराभा।
स्वादे तिक्ता कटुर्वा परिलघुतुलिता मर्दिता चिक्कणाभा॥
भस्मत्वं नैति दग्धा छिमिछिमि कुरुते चर्मगन्धाहुतान्ते।
सा शुद्धा शोभनीया वरतनुमृगजाराजयोग्यप्रशस्ता॥ ४३॥

करनलजलमध्ये स्थापयित्वा महद्भिः
पुनरपि तदवश्यं चिन्तनीयं महद्भिः।
भवति यदि सरक्तं तज्जलं पीतवर्णं
न भवति मृगनाभिः कृत्रिमोऽसौ विकारः॥ ४४॥

सौवर्चलन्तु काचाभं सैन्धवं स्फटिकप्रभम्।
करमर्दफलाकारा द्राक्षा सा मध्यमा स्मृता॥ ४५॥
उत्तमा सैव विज्ञेया या भवेद्गोस्तनाकृतिः।

रक्तचन्दनमत्यन्तं लोहितं चोत्तमं मतम् ॥ ४६ ॥
हरिद्राकुङ्कुमाभा तु श्रेष्ठा पीता तु मध्यमा।
अतिपीता प्रशस्ता तु ज्ञेया दारुनिशा बुधैः ॥ ४७ ॥
खण्डञ्च विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम्।
रुद्रपुष्पसुसङ्काशा मनोज्ञा चोत्तमा मता ॥ ४८ ॥
श्वेतचन्दनमत्यन्तं श्रेष्ठं गुरु सुगन्धि च।
सुवर्णच्छविकं ज्ञेयं धातुमाक्षिकमुत्तमम् ॥ ४९ ॥
श्रेष्ठं शिलाजतु ज्ञेयं यत्क्षिप्रं न विशीर्य्यति।
तोयपूर्णे कांस्यपात्रे प्रतानेन विवर्द्धते ॥ ५० ॥
स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः।
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः ॥ ५१ ॥
शुष्को दुर्गन्धिकश्चैव वर्णान्यत्वमुपागतः।
गुग्गुलुः स तु विज्ञेयः पुराणो वीर्य्यवर्जितः ॥ ५२ ॥
शशिकान्तनिभं श्रेष्ठं तथा स्फटिकसन्निभम्।
कर्पूरं स्निग्धमत्यर्थं मुद्गतुल्या हरेणुका ॥ ५३ ॥
समं शुभ्रं गुरु स्निग्धं फलं जात्याः प्रशस्यते।
एलाः सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डुरा ॥ ५४ ॥
मुरा पीता वरा प्रोक्ता मुस्तमानूपसम्भवम्।
अविकारा लघुदीर्घा लताकस्तूरिका मता ॥ ५५ ॥
सरलत्वक् छविर्ज्ञेया नलिकाश्वत्थपिच्छिला।
सुगन्धि गुरु रूक्षञ्च सुरदारु प्रकीर्त्तितम् ॥ ५६ ॥
सरलं स्निग्धमत्यर्थं सुगन्धि च मनोहरम्।
मृगशृङ्गनिभं कुष्ठं शिरोच्छेदे वचारुणा ॥ ५७ ॥
कनिष्ठाङ्गुलिसङ्काश मुत्तमं ग्रन्थिपर्णकम्।
सुसूक्ष्मकेसरा स्निग्धा मांसी पिङ्गजटाकृतिः ॥
काकतुण्डनिभः स्निग्धः श्रेष्ठः स्यादगुरुर्गुरुः ॥ ५८ ॥

वर्त्तुला मांसला स्वच्छा श्रेष्ठा पूतिः प्रकीर्त्तिता।
सुगन्धि शीतं चोशीरं कीर्त्तितं गन्धकर्मणि ॥ ५९ ॥
वराहमूर्ध्वंवल्कन्दो वाराहीकन्दसंज्ञितः।
भिषजा तदलाभे तु चर्मकारालुको मतः ॥ ६० ॥
सूक्ष्मास्थिमांसला पथ्या सर्वकर्मणि सम्मता।
क्षिप्ताम्भसि च या मज्जेद्भल्लातक्यभया च सा ॥ ६१ ॥
एतेषामपरेषाञ्च नवता प्रवरो गुणः ॥ ६२ ॥
अक्षोड़कञ्च वातामं मुञ्जातो भिषुकस्तथा।
पारावतं पीलुफलं लवलीफलमेव च ॥
नामान्येतानि सर्वाणि प्रसिद्धान्युक्तनामभिः ॥ ६३ ॥

## अथ प्रतिनिधिद्रव्याधिकारमाह।

शक्रद्रसो गोमये स्याच्चन्दने रक्तचन्दनम्।
सिद्धार्थे सर्षपः प्रोक्तः सैन्धवं लवणे मतम् ॥ ६४ ॥
मधु यत्र न विन्देत तत्र जीर्णगुड़ो मतः।
क्षौराभावे भवेन्मौद्गो रसो मासूर एव वा ॥ ६५ ॥
वराहकान्तकाभावेस्तम्भने विकसा मता।
चित्रकाभावतो दन्तीक्षारः शिखरिजोऽथवा ॥ ६६ ॥
दद्यात्कङ्कुष्ठकं वैद्यः सुवर्णक्षौर्य्यभावतः।
अभावादम्लवेतस्य पक्कं चुक्रं प्रयोजयेत् ॥ ६७ ॥
अर्कपर्णादिपयसो ह्यभावे तद्रसो मतः।
रसाञ्जनस्याभावे तु सम्यग्दार्वी प्रयुज्यते ॥ ६८ ॥
नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते।
रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः ॥ ६९ ॥
श्रीखण्डचन्दनाभावे देयं कर्पूरमिष्यते।
कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः ॥ ७० ॥

रुचकाभावतो दद्याल्लवणं विड़मुत्तमम् ।
शल्लक्यभावतो देयं शिखिपिच्छञ्च तद्गुणम् ॥ ७१ ॥
अभावे हिङ्गुपत्रास्तु हिङ्गु तद्गुणकारकम् ।
ऊषरा भावतो देयं लवणं पांशु पूर्वकम् ॥ ७२ ॥
अन्योन्याभावतोऽन्योऽन्यं देयं वैद्येन जानता ।
सिताभावे भवेत् खण्डः शाल्यभावे च षष्टिकः ॥ ७३ ॥
सुवर्णमथवा रूप्यं योगे यत्र न लभ्यते ।
तत्र लौहेन कर्माणि भिषक्कुर्य्याद्विचक्षणः ॥ ७४ ॥
तालीशपत्राभावे तु स्वर्णताली प्रशस्यते ।
अभावान्नागपुष्पस्य पद्मकेसर मुच्यते ॥ ७५ ॥
सौराष्ट्राभावतो ज्ञेया कठिनी गुणकारिणी ।
अभावे लक्षणायास्तु नीलकन्दशिखा मता ॥ ७६ ॥
यूथिकाभावतो ज्ञेया जाती तद्गुणकारिणी ।
मयूराभावतो दद्याच्छशहंसाखुकानपि ॥ ७७ ॥
कक्कोलाभावतो जाती शस्ता तस्या अभावतः ।
लवङ्गकुसुमं देयं यतो दृष्टं तदर्थकृत् ॥ ७८ ॥
बन्धूकाभावतो देयं पुष्पं पुन्नागसम्भवम् ।
वकुलाभावतो देयं कह्लारोत्पलपङ्कजम् ॥ ७९ ॥
माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम् ।
अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतम् ॥ ८० ॥
दारुहरिद्राभावे तु हरिद्रा दीयते बुधैः ।
अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः ॥ ८१ ॥
तुम्बुरुतैलाभावे तु हितमारुष्करं तथा ।
यदा न पौष्करं मूलं कुष्ठं योज्यं तदा बुधैः ॥ ८२ ॥
लाङ्गल्यभावतो वह्निपत्रीं दद्याद्भिषग्वरः ।
असम्भवे तु द्राक्षायाः काश्मर्य्याः फलमिष्यते ॥ ८३ ॥

तयोरभावे पुष्पन्तु मधूकस्य समीरितम्।
न भवेद्दाड़िमं यत्र वृक्षाम्लं तत्र योजयेत्॥ ८४॥
चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृते।
अभावे पृश्निपर्ण्यास्तु सिंहपुच्छी विधीयते॥ ८५॥
मूलाभावे त्वचं ग्राह्यं लता जिङ्गिन्यसम्भवे।
नते तगरपादौ स्यादभावे कुष्ठमिष्यते॥ ८६॥
युञ्जातः पश्चिमे ख्यातं ग्राह्यं तालस्य मस्तकम्।
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते॥ ८७॥
रसवीर्य्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च।
युञ्ज्यात्तद्विधमन्यत्तु द्रव्यज्ञानविशारदः॥ ८८॥

इति द्रव्यस्य भावाभावौ।

पयः सर्पिः प्रयोगे च गव्यमेव प्रशस्यते।
मूत्रे गोमूत्रमप्येवं विशेषो यत्र नेरितः॥ ८९॥
सारः स्यात् खदिरादीनां निम्बादीनां त्वचस्तथा।
फलन्तु दाड़िमादीनां पटोलादेश्छदस्तथा॥ ९०॥
महान्ति यानि मूलानि काष्ठगर्भाणि यानि च।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः॥ ९१॥
कूर्मपृष्ठवदाकारा मध्ये निम्ना समा चला।
दुर्गन्धा शब्दसंयुक्ता शिला नेष्टा तु पेषणे॥ ९२॥

इति वङ्गसेनसङ्कलितः प्रतिनिधिद्रव्याधिकारः समाप्तः।

---

## अथ द्रव्यगणपाठाधिकारमाह।

स्थिरापुनर्नवैरण्ड शङ्खसर्षपजीवकाः।
श्वदंष्ट्राभीरुलाङ्गूली विदारीहंसपादिकाः॥ १॥
वृहत्यौ पृश्निपर्णी च विश्वे देवा महाबला।

महाश्वगालविन्ना च वृश्चिकाली महासहा ॥
शोषगुल्मानिलश्वासकासपित्तहरो गणः ॥ २ ॥
आरग्वधो निशास्वष्ठा करकस्तापसद्रुमः ।
चुद्रश्वेता महाश्वेता वृश्चिकालीत्ययं गणः ॥
व्रणकुष्ठविषश्वास क्रमिमेदः कफापहः ॥ ३ ॥
सुरसाकासमर्दश्च फणिज्जार्जकभूस्तृणम् ।
निर्गुण्डीसुरसाफञ्जी कुलाहलसुगन्धिका: ॥ ४ ॥
चवकः कालमालश्च चवपुष्टिः प्रचीवलः ।
विड़ङ्गः काकमाची च मरिचो मूषिकर्णिका ॥ ५ ॥
सुपर्णी चेति वर्गोऽयं क्रमिश्लेष्मविनाशनः ।
कासारुचिप्रतिश्याय श्वासहा व्रणशोधनः ॥ ६ ॥
कुष्ठकं त्रिफलाराठं वृश्चिकाग्निः स्नुहीपयः ।
वातारिरप्यपामार्गो मेदोऽर्शोऽश्मरिमेहहा ॥ ७ ॥
पिप्पल्यग्निवचावासा कालग्रन्थिकमुस्तकम् ।
भार्गीमूर्वा महानिम्बं पाठायष्टी च सर्षपाः ॥
हिङ्गुतिक्ता विड़ङ्गश्च वातश्लेष्महरो गणः ॥ ८ ॥
एलाचक्राह्वकौन्तीत्वक् पत्ररोमाह्वरोचकाः ।
चण्डाश्वफलपुन्नाग दारुसर्जरसो नतम् ॥ ९ ॥
शङ्कशुक्तिदधिध्याम कुन्दुरुव्याघ्रहस्तजाः ।
एलादिः पिड़काकण्डूविषानिलकफान्तकृत् ॥ १० ॥
वचाजलजदेवाह्वा नागरातिविषाभयाः ।
हरिद्राद्वययष्ट्याह्व कलशीकुटजोद्भवा ॥ ११ ॥
वचाहरिद्रादिगणौ वातातीसारनाशनौ ।
मेदः कफाढ्यपवन स्तन्यदोषनिवर्हणौ ॥ १२ ॥
मूर्वाघण्टामृताराठ पाठाभूनिम्बकूलकाः ।
करञ्जवरशैरीय सुषवी सकटिल्लकाः ॥

मेहकुष्ठज्वरच्छर्दि विषश्लेष्महरो गणः ॥ १३ ॥
सालस्यन्दनकालीय धवसर्जार्जुनासनाः।
शिरीषशिंशपाभूर्ज खदिरं चन्दनद्वयम् ॥ १४ ॥
कदरो वाजिकर्णश्च करञ्जः केम्बुकोऽगुरु।
गणोऽयं कफपाण्डुत्व कुष्ठमेहविनाशनः ॥ १५ ॥
वारुणीतगराभीरुविल्वजातीविषाणिकाः।
मैरेय वृहतीयुग्म दर्भपूतीकशिंशपाः ॥ १६ ॥
जयाग्निमन्थविल्वाग्नि नक्तमालाग्निमोरटाः।
वर्गोऽन्तर्विद्रधिश्लेष्म मेदो गुल्मशिरोऽर्त्तिनुत् ॥ १७ ॥
वीरवृचोऽग्निमन्थश्च काशवृचादनीकुशाः।
मोरटेन्दीवरीसूर्य्यभक्तादण्डकगोचुराः ॥ १८ ॥
वसुको वसिरो दर्भ मैरेयाश्मकभेदकाः।
अश्मरीशर्कराकृत्स्न मारुतार्त्तिहरो गणः ॥ १९ ॥
रोध्रद्वयप्लवाशोक जम्बशैलेय वालुकाः।
कदम्बो जिङ्गिणी चैव श्रीपर्णी च बहुस्रवा ॥ २० ॥
वर्गो लोध्रादिको नाम्ना कफमेदोविशोषणः।
पानदोषहरो बल्यः स्तम्भीसर्वविषापहः ॥ २१ ॥
अर्कालर्केन्दुपुष्पी च करञ्जो नागदन्तिका।
रास्नामधुकमायूरपाद एष गणः शुभः ॥
मेदः कफाढ्यपवन स्तन्यदोषविनाशनः ॥ २२ ॥
श्यामादन्तीद्रवन्ती च यवाश्यामामृतामृताः।
सप्तला शङ्खिनी श्वेता राजवृचः सतिल्वकः ॥ २३ ॥
कम्पिल्लकः करञ्जश्च हेमचीरीत्ययं गणः।
उदावर्त्तोदरानाह विषगुल्मविनाशनः ॥ २४ ॥
वृहतीधातकीपाठा यष्टीमधुकलिङ्गकाः।
दीपनीयो ह्यत्यादिः कृच्छ्रदोषत्रयापहः ॥ २५ ॥

पटोलं चन्दनं मूर्वा पाठातिक्तामृताघनः ।
पित्तश्लेष्मानिलच्छर्दि ज्वरकण्डुविषापहः ॥ २६ ॥
काकोल्यौ मधुकं शृङ्गी मेदे द्वे जीवकर्षभौ ।
प्रपौण्डरीकमृद्वीका ऋद्धिवृद्धी तुगासहा ॥ २७ ॥
पयस्या पद्मकं छिन्नेत्येष वर्गोऽतिबृंहणः ।
स्तन्यश्च जीवनीयश्च: पित्तास्रानिलनाशनः ॥ २८ ॥
ऊषसैन्धवकासीस द्वयहिङ्गुशिलाजतु ।
तुत्थकं चेति मेदोघ्नः शर्कराश्मरिहृद्गणः ॥ २९ ॥
सारिवापद्मकोशीर मधुकं चन्दनद्वयम् ।
काश्मरीमधुकं चेति सारिवादिरयं गणः ॥ ३० ॥
रक्तपित्तं विहन्त्याशु तृष्णां चातिप्रमाथिनीम् ।
तीव्रपित्तज्वरामर्द सर्वदाहविनाशनः ॥ ३१ ॥
अञ्जनं फलिनीमांसी पद्मोत्पलरसाञ्जने ।
एलामधुकनागाह्वा विषान्तर्दाहपित्तनुत् ॥ ३२ ॥
परूषो दाड़िमं द्राक्षा काश्मरी काकजं फलम् ।
राजादनं सधात्रीकं कतकेन समन्वितम् ॥ ३३ ॥
परूषकादिको नाम्ना गणो वातामयापहः ।
हृद्यो रुचिप्रदस्तृष्णा मूत्रदोषविनाशनः ॥ ३४ ॥

प्रियङ्गु-समङ्गा-धातकीलोध्रपुन्नागचन्दनकुचन्दनमोचरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ।

अम्बष्ठाधातकीलोध्र समङ्गापद्मकेसरम् ।
मधुकारलुबिल्वञ्च गणौ मुनिभिरीरितौ ॥ ३५ ॥
प्रियङ्ग्वम्बष्ठकादी च पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानां चातिरोपणौ ॥ ३६ ॥
न्यग्रोधोदुम्बराश्वत्थ मधुकप्लक्षतिन्दुकाः ।
प्रियालबदरीपार्थ नन्दीवृक्षाम्रजम्बुलाः ॥ ३७ ॥

पलाशोऽरुष्करः श्वेतं लोध्रं जम्बूरयं गणः।
पित्तासृग्मेहनुद् ब्रण्यो योनिदाहनिवारणः॥ ३८॥
गुडूचीनिम्बधान्याक मधुकं चन्दनान्वितम्।
तृष्णादाहारुचिच्छर्दि सर्वज्वरहरो गणः॥ ३९॥
उत्पलं कुमुदं पद्मं कह्लारं लोहितोत्पलम्।
मधुकं चेति पित्तास्र विषच्छर्दिहरो गणः॥ ४०॥
मुस्ता पाठा हरिद्रे द्वे तिक्ता हैमवतीव चा।
द्रवन्त्यतिविषा कुष्ठं भल्लातकफलत्रयम्॥ ४१॥
साम्बष्ठं चेति वर्गोऽयं कफरोगनिषूदनः।
शोधनः पाचनः स्तन्यो योनिदोषहरो गणः॥ ४२॥
अक्षधात्र्यभया हन्ति त्रिफला विषमज्वरम्।
चक्षुष्या दीपनी पित्त कुष्ठमेहकफान्तकृत्॥ ४३॥
आमलक्यभयाकृष्णा चित्रकश्चेत्ययं गणः।
सर्वज्वरकफघ्नश्च भेदी दीपनपाचनः॥ ४४॥
त्रपुताम्रमयः सीसं हेमरूप्यश्च तन्मयः।
वर्गश्च शूलहृद्रोगपाण्डुमेहगदापहः॥ ४५॥

लाक्षारेवतकुटजाऽश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति।

कषायतिक्तमधुरः कफपित्तार्त्तिनाशनः।
कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः॥ ४६॥
बिल्वोऽग्निमन्थः श्योनाकः श्रीपर्णीपाटलामहत्।
दीपनं कफवातघ्नं पञ्चमूलमिति स्मृतम्॥ ४७॥
पृश्निपर्णी स्थिरा चैव बृहतीद्वयगोक्षुरम्।
बृंहणं कफवातघ्नं पञ्चमूलं कनिष्ठकम्॥ ४८॥
विदारीसारिवाक्काग शृङ्गीवत्सादनी निशा।
कृच्छ्रपित्तानिलहरं वल्लीजं मूलपञ्चकम्॥ ४९॥

गृध्रनखी श्वदंष्ट्रा च गैरेय करमर्द्दिका।
एतच्छ्लेष्मानिलौ हन्ति कण्टकं मूलपञ्चकम् ॥ ५० ॥
कुशः काशद्वयं दर्भो नलश्चेति तृणोद्भवम्।
पित्तकृच्छ्रहरं पञ्च मूलं वस्तिविशोधनम् ॥ ५१ ॥
एतैस्तैलानि सर्पींषि प्रलेपं पानकान्यपि।
गणैर्विभज्य कुर्वीत यथाविधि भिषग्वरः ॥ ५२ ॥
एकद्विद्रव्यहीनोऽपि क्रियायोग्यो बृहद्गणः।
हृत्वा तु तत्समं द्रव्य मथ योज्योऽल्पभेषजः ॥ ५३ ॥

इति वङ्गसेनसङ्कलितः द्रव्यगणाधिकारः समाप्तः।

---

## अथ संशोधनसंशमनरसद्रव्यादीनां वर्गाधिकारमाह।

मदन-कुटज-जीमूतेच्वाकुधामार्गवलोध्र-कृतवेधन-सर्षप-विड़ङ्ग-पिप्पली-करञ्जप्रपुन्नाटकोविदारपीलुकर्चूरनतकटुभ्नरारिष्टाश्वगन्धाजगन्धाविदुलबन्धुजीवकश्वेता शतपुष्पाविम्बीवचैर्वारुकचित्रा चेत्यूर्ध्वभागहराणीति। तत्र कोविदारपूर्वाणां फलानि कोविदारादीनां मूलानि। तिव्रच्छ्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाचीछगलान्त्रीस्नुहीसुवर्णचीरीचित्रककिणिहीकुशकाशतिल्वक-कम्पिल्लकचम्पकरम्यक-पाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलपूतीकारग्वधमहावृक्षसप्तच्छदार्कज्योतिष्मती चेत्यधोभागहराणि। तत्र तिल्वकपूर्वाणां मूलानि तिल्वकादीनां पाटलान्तानां त्वचः। कम्पिल्लकफलरज इति। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां चीराणीति। कोशातकीसप्तलाशङ्खिनीदेवदालीकारवेल्लिका चेत्युभयतो

भागहराणि एषां स्वरसा इति। पिप्पलीविड़ङ्गापामार्ग-शिग्रुशिरीष-सिद्धार्थकमरिचकरवीरविम्बीगिरि-कर्णिकाकिण्वि-हीवचा-ज्योतिष्मती-करञ्जार्कालर्कलसुनातिविषा-शृङ्गवेरताली सतमाल-सुरसार्जकेङ्गुदीमेष-शृङ्गी-मातुलुङ्गीमुरुङ्गी-पीलुजाती-सालतालमधूकलाचाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणि चेति शिरोविरेचनानि। तत्र करवीरपूर्वाणां फलानि करवीरादीनामर्कान्तानां मूलानि तालीसपूर्वाणां कन्दाः। तालीसादीनामर्जकान्तानां पत्राणि। इङ्गुदीमेषशृङ्ग्योस्त्वक् मातुलुङ्गीमुरुङ्गीपीलुजातीनां पुष्पाणि। सालतालमधूकानां साराः। लाचाहिङ्गुनिर्य्यासौ। लवणानि पार्थिवविशेषाः। मद्यमासवसंयोगाः। गोशकृद्रसमूत्रे मलाविति।

संशमनानि अत ऊर्ध्वं वक्ष्यामः।

तत्र भद्रदारुकुष्ठहरिद्रा वरुणमेषशृङ्गीबलातिबलातगरार्त्तगलकच्छुराशल्लकीकुवेराचीवीरतरुसहचराग्निमन्थ-वत्सादनीश्वदंष्ट्राश्मभेदकालर्काकशतावरी-पुनर्नवावसुकवसिरकवूर-भार्गीकार्पासीवृश्चिकालीपत्तूरवदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः। चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवालकह्लारकोकनदोत्पलकदलीदूर्वाप्रभृतीनि काकोल्यादिः सारिवादिर्न्यग्रोधादिरुत्पलादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः। कालीयकागुरुतैलपर्णीकुष्ठ-हरिद्राशीतशिवशतपुष्पासरलरास्नाप्रकीर्य्योदकीर्य्येङ्गुदीसुमनः काकादनीलाङ्गलकीहस्तिकर्णमुञ्जाततालमामज्जक-प्रभृतीनि वल्लीकण्टकपञ्चमूली पिप्पल्यादिर्बृहत्यादिर्वचादिर्मुष्ककादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः। काकोल्यादिः चीरघृतवसामज्जाशालिषष्टिकयवगोधममाष-

शृङ्गाटक-कशेरुकत्रपुसैर्वारुकालावुकालिन्दक-कर्कारुककतको-द्दालुकप्रियाल-पुष्कर-बीजकाश्मर्य्यमधूकद्राक्षाखर्जूरतालनारिकेलेक्षुविकार-वलाति-बलात्मगुप्ताविदारीपयस्यागोक्षुरक-क्षीरकक्षीरमोरटमधूलिकाकूष्माण्डकप्रभृतीनि समासेन मधुरो-वर्गः। दाड़िमामलकमातुलुङ्गाम्रातककपित्थकरमर्दवदरकोलप्राचीनामलकतिन्तिड़ीककोशाम्रभव्यपारावतवेत्रफलल-कुचाम्लवेतसदन्तशठदधितक्रसुराशुक्त-सौवीरकतुषोदक-धान्याम्लप्रभृतीनि समासेनाम्लो वर्गः। सैन्धवसौवर्चलविड़पाक्यरोमकसामुद्रकपक्लिमयवक्षारोषरसुवर्चिकाप्रभृतीनि समासेन लवणो वर्गः। पिप्पल्यादिः सुरसादिर्मधुशिग्रुमूललसुनसुपुष्पशीतशिव-कुष्ठदेवदारुहरेणुकावल्गुजफल-चण्डागुग्गुलुमुस्ताला-ङ्गलकीशुकनाशापीलुप्रभृतीनि शालसारादिश्च प्रायशः कटुको वर्ग। आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णीवेत्रकरीरहरिद्राद्वयेन्द्रयववरुणस्वादुकण्टकसप्तपर्णवृहतीद्वयशङ्खिनी द्रवन्तीत्रिवृत्कृतवेधनकर्कोटककारवेल्लकवार्त्ताककरीरकरवीरसुमनःशङ्खपुष्पापमार्गत्रायमाणाऽशोकरोहिणीवैजयन्तीपुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः। न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादिर्लोध्रादिस्त्रिफलाशल्लकीजम्बाम्राश्वित्थतिन्दुकादीनि कतकशाकफलपाषाणभेदकवनस्पतिफलानि आमलक्यादिः शालसारादिश्च प्रायशः कोविदारकुरुवकजीवन्तीचिल्लीपालङ्कीसुनिषण्णप्रभृतीनि नीवारचणकादयो मुद्गादयश्च समासेन कषायो वर्गः। पिप्पलीपिप्पलीमूलचव्यचित्रक-शृङ्गवेराम्लवेतसमरिचाजमोदा-भल्लात-कास्थिहिङ्गुनिर्य्यासा इति दशेमानि दीपनीयो वर्गः।

इति वङ्गसेनसङ्कलितः संशोधनसंशमनरसद्रव्यादीनां वर्गाधिकारः समाप्तः।

---

## अथ ऋतुचर्य्याधिकारमाह।

भूवाष्पान्मेघनिःस्यन्दात्पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥ १ ॥
तस्मात्साधारणः सर्वो विधिर्वर्षासु वक्ष्यते।
उदमन्थं दिवास्वापमवश्यायं नदीजलम् ॥ २ ॥
व्यायाममातपं चैव व्यवायं चात्र वर्जयेत्।
दिव्यं क्वथितकूपोत्थं वाप्यं सारसमेव वा ॥ ३ ॥
प्रावृषि व्याकुले वह्नौ भोज्यमक्लेदि वातजित्।
परिशुष्कं लघु स्निग्ध मुष्णाम्ललवणञ्च यत् ॥ ४ ॥
प्रायोऽन्नपानं सक्षौद्रं संस्कृतञ्च घनोदये।
पुनः संरक्षता चाग्निं यवगोधूमशालयः ॥ ५ ॥
पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः।
पिबेत् क्षौद्रान्वितं चाल्पं माध्वीकारिष्टमेव वा ॥ ६ ॥
सविषप्राणिविण्मूत्र लालानिष्ठीवनादिभिः।
सदाप्लुतं तदा तोयं नवकं विषसन्निभम् ॥ ७ ॥
वायुना विषजातेन तत्पूर्वेण च धर्षितम्।
वर्ज्यं सर्वोपयोगेषु तस्मिन् काले विपश्चिता ॥ ८ ॥
सोपदंशं निषेवेत माध्वीकारिष्टमाधवम्।
पिबेत्प्रावृषि धीरोऽल्पं रात्रौ तदपि वर्जयेत् ॥ ९ ॥
निरूहैर्वस्तिभिश्चान्यै रथान्यैर्मारुतापहैः।
कुपितं शमयेद्वातं वार्षिकं वा चरेद्विधम् ॥ १० ॥
भूयो वर्षासु संयोगो गङ्गाया दक्षिणे तटे।
ततः प्रावृष्य वर्षाख्या वृतू तेषां प्रकीर्त्तितौ ॥ ११ ॥
तस्मा एवोत्तरे देशे बहुशो हिमसङ्कुले।
भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ ॥ १२ ॥

ततो व्यतीते वर्षर्त्तौ नीलमेघावगुण्ठिते ।
व्योम्नि प्रसन्नदिङ्मार्गे लब्धप्रसरभास्करे ॥ १३ ॥
शक्रस्खलब्धसन्दर्शे जातमाममदस्ततः ।
आक्रामति रवेर्लक्ष्मीं तिरस्कृत्य घनाम्बलान् ॥ १४ ॥
द्राक्षेक्षुक्षीरसेवी च भवेत्तत्र नराधिपः ।
वर्षासूपचितं पित्तं निर्हरेच्च विरेचनैः ॥ १५ ॥
तिक्तसर्पिः प्रयोगैर्वा शिराणां चापि मोक्षणैः ।
दिवासूर्य्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम् ॥
कालेन पक्कं निर्दोषमगस्त्येनाविषीकृतम् ॥ १६ ॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि ।
स्नानपानावगाहेषु हितमम्बु यथामृतम् ॥ १७ ॥
शारदानि च माल्यानि वासांसि विविधानि च ।
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः ॥ १८ ॥
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ १९ ॥
हेमन्ते शिशिरे चाग्र्यं विसर्गादनयोर्बलम् ।
शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ २० ॥
शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली ।
पक्ता भवति हेमन्ते मात्रा द्रव्यगुरुक्षमः ॥ २१ ॥
स यदा नेन्धनं युक्तं लभते देहजं तदा ।
रसं हिनस्त्यतो वायुः शीते शीतः प्रकुप्यति ॥ २२ ॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान् ।
औदकानूपमांसानाम्मेध्यानामुपयोजयेत् ॥ २३ ॥
विलेशयानां मांसानि प्रसहानां स्तानि च ।
भक्षयेन्मदिरां सीधु मधुरान्नं पिबेन्नरः ॥ २४ ॥
गोरसानिक्षुविकृतीर्वसातैलं नवौदनम् ।
हेमन्ते भजतस्तोय मुष्णमायुर्न हीयते ॥ २५ ॥

शस्ता रसाला हेमन्ते पीतधूमो मदोत्कटः ।
चौलकौशेय संवीत स्वाशये कुथकास्तृते ॥ २६ ॥
कुङ्कुमागुरुदिग्धाङ्गो निर्वाते भूमिगह्वरे ।
शयीत शयने चापि सुविस्तीर्णे मनोरमे ॥ २७ ॥
तत्रापनीतदारास्तु प्रिया नार्य्यः स्वलङ्कृताः ।
रमयेत्तु यथाकामं बलादपि मदोत्कटाः ॥ २८ ॥
प्रवातं प्रमिताहारं मुदमन्थं हिमागमे ।
वर्जयेच्छीतसंस्पर्शं शीतान्युपवनान्यपि ॥ २९ ॥
एष एव विधिः कार्य्यः शिशिरेऽपि सदा बुधैः ।
हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम् ॥ ३० ॥
रौच्यमादानजं शीतं मेघमारुतवर्षजम् ।
तस्माद्धैमन्तिकः सर्व्वः शिशिरे विधिरिष्यते ॥ ३१ ॥
निवातमुष्णं त्वधिकं शिशिरे गृहमाश्रयेत् ।
कटुतिक्तकषायाणि वातलानि लघूनि च ॥
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ ३२ ॥
वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगां स्ततः प्रकुरुते बहून् ॥ ३३ ॥
तस्माद्वसन्ते कर्म्माणि वमनादीनि कारयेत् ।
गुर्व्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ ३४ ॥
यष्टिकान्वा नवाञ्छालीन् मुद्गनीवारकोद्रवान् ।
लावादिविष्किररसैर्द्दग्याङ्गूष्टैश्च युक्तितः ॥ ३५ ॥
पटोलनिम्बवार्त्ताकैस्तिक्तैश्चान्यैर्हिमात्यये ॥ ३६ ॥
शुचिशुक्लाम्बरधरश्चन्दनागुरुधूपितः ।
पीनस्तनोरुजघनां रूपयौवनशालिनीम् ॥ ३७ ॥
काननेषु विचित्रेषु सर्व्वालङ्कारभूषिताम् ।
कामयेद्यावदुत्साहं सुमनाः कुसुमागमे ॥ ३८ ॥

व्यायाममञ्जनं धूपं तीक्ष्णञ्च कवलग्रहम्।
तैक्ष्ण्ययुक्तांश्च सर्वान् वा सेवेत कुसुमागमे ॥ ३९ ॥
मयूखैर्जगतस्तेजो ग्रीष्मे यत् पीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥ ४० ॥
शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः।
घृतम्पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥ ४१ ॥
व्यायाममुष्णमायासं मैथुनं परिदाहि च।
रसांश्चापि गुणोद्रिक्तान्विशेषेण विवर्जयेत् ॥ ४२ ॥
सर्पिः खण्डगुड़ाक्तांश्च सहकारसमन्वितान्।
प्रातराशं पिबेत्तक्रं न च शीतोत्तरं ततः ॥ ४३ ॥
यवगोधूमविकृतीच्छालींश्च विविधानपि।
प्रसहानूपमांसानि हृष्याण्यन्यानि यान्यपि ॥ ४४ ॥
मद्यमल्पं न वा योज्यमथवा सुबहूदकम्।
लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत् ॥ ४५ ॥
दिवा शीतगृहे निद्रां निशि सोमांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवातं हर्म्यमस्तके ॥ ४६ ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः।
सेव्यमानो भजेदस्यां मुक्तामणिविभूषितः ॥ ४७ ॥
काननानि च शीतानि जलानि कुसुमानि च।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ४८ ॥
व्यायाममातपं यासं व्यवायं चात्र वर्जयेत्।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत् ॥ ४९ ॥
सरांसि वाप्यः सरितो वनानि रुचिराणि च।
चन्दनानि जलार्द्राश्च स्रजश्च कमलोज्ज्वलाः ॥ ५० ॥
तालवृन्तानि नीहारास्तथा शीतगृहाणि च।
घर्मकाले निषेवेत वासांसि सुलघूनि च ॥ ५१ ॥

ऋत्वोरन्त्यादिसप्ताहात् ऋतुसन्धिरिति स्मृतः।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयः परः क्रमात्॥ ५२॥
सतां वृत्तोपपन्नेन विधिना वर्त्तते च यः।
घोरान् ऋतुकृतान् दोषान्नाप्नुयात् स कदाचन॥ ५३॥
कार्त्तिकस्य दिनान्यष्टौ तथाग्रहायणस्य च।
यमदंष्ट्रा इति प्रोक्ता स्वल्पाहार्य्येव जीवति॥ ५४॥
वर्षासु मद्यमल्पं वा समन्तादुदकं पिबेत्।
उष्णमेव वसन्ते च कामं ग्रीष्मेषु शीतलम्॥ ५५॥
हेमन्ते च वसन्ते च शीतमिष्टं पिबेन्नरः।
शृतशीतपयो ग्रीष्मे प्रावृट्काले रसं पिबेत्॥ ५६॥
नित्यं वर्षागमस्यान्ते प्रपिबेच्छीतलं जलम्।
अतिस्निग्धकटुप्रायं हितमम्भो घनक्षये॥ ५७॥
समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते॥ ५८॥

इति वङ्गसेनसङ्कलितः ऋतुचर्य्याधिकारः समाप्तः।

---

## अथ धान्यवर्गाधिकारमाह।

रूक्षः शालिस्त्रिदोषघ्नस्तृष्णामेदो निवारणः।
महाशालिः परं वृष्यः कलमः श्लेष्मपित्तहा॥ १॥
शीतो गुरुस्त्रिदोषघ्नो मधुरो गौरयष्टिकः।
किञ्चिद्धीनो सितस्तस्मात्परोऽयं रसपाकतः॥ २॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः।
कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः॥ ३॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः।
किञ्चित्सतिक्तमधुराः पवनानलवर्द्धनाः॥ ४॥

कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः ।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ ५ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
विदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥ ६ ॥
शालयो दग्धरूढ़ा ये रूक्षास्ते बद्धवर्चसः ।
श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ॥ ७ ॥
तद्वत्प्रियङ्गुनीवाराः कोरदूषाः प्रकीर्त्तिताः ।
बहुमूत्राः कफहराः कषाया वातकोपनाः ॥ ८ ॥
सूपानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः ।
हरितास्तेष्वपि वरा आढ़की कफपित्तनुत् ॥ ९ ॥
रूक्षः कषायो विषदोषशुक्र बलासदृष्टिक्षयकृद्विदाही ।
कटुर्विपाके मधुरस्तु शिम्बिः प्रभिन्नविण्मारुतपित्तलश्च ॥१०॥
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ।
कुष्ठाश्मरीगुल्मनिषूदनश्च संग्राहकः पीनसकासहन्ता ॥ ११ ॥
आनाहमेदो गुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ।
बलासहन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ १२ ॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्रः स्तन्योऽथ केश्योऽनिलहा गुरुश्च।
तिलेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये ॥१३॥
पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी ।
स्निग्धोष्णतीक्ष्णः कफवातहन्ता तथागुणश्चासितसर्षपोऽपि ॥१४॥
माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोऽतिवृष्यो मधुरोऽनिलघ्नः ।
सन्तर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥ १५ ॥
अवृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्त्तिकृत् ।
अवल्गुजः सैडगजो निष्पावा वातपित्तलाः ॥ १६ ॥
काकाण्डीमात्मगुप्तानां माषवत् फलमादिशेत् ।
मसूरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ॥ १७ ॥

मकुष्ठकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु।
चणकाश्च मसूराश्च खण्डीकाः सहरेणवः॥ १८॥
गुरवः शीतमधुराः सकषाया विरूक्षणाः।
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च॥ १९॥
यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी।
व्रणेऽतिपथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्चाः॥ २०॥
स्थैर्य्याग्निमेधास्वरवर्णकृच्च सुपिच्छिलः स्थूलविलेपनश्च।
मेदोमरुत्तृट्शमनोऽथ रूक्षः प्रसादनः शोणितपित्तयोश्च॥२१॥
एतैर्गुणैर्हीनतरांश्च किञ्चिद्विद्याद्यवेभ्योऽतियवानशेषैः॥ २२॥
गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च।
स्निग्धोऽतिशीतोऽनिलपित्तहारी सन्धानकृच्छ्लेष्महरः सरश्च॥२३
तेषां मसूरः संग्राही कलायो वातलः परम्।
अनार्त्तवव्याधिहरमपर्य्यागतमेव च॥ २४॥
अभूमिजं नवं चापि धान्यं न गुणवत् स्मृतम्।
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्॥ २५॥
विदाहि गुरु विष्टम्भि विरूढ़ं वातकोपनम्॥ २६॥

इति वङ्गसेनसङ्कलितः शिम्बिधान्यशूकधान्यवर्गाधिकारः समाप्तः।

---

## अथ मांसवर्गाधिकारमाह।

संग्राही दीपनः शीतः कषायो मधुरो लघुः।
लावः कटुविपाकश्च सन्निपाते च पूजितः॥ १॥
ईषद्गुरुस्तु मधुरो वृष्यो मेधाग्निवर्द्धनः।
तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः॥ २॥
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः।
कफोत्थेषु च रोगेषु मदे वाते च शस्यते॥ ३॥

वातपित्तहरा वल्या मेधाग्निबलवर्द्धनाः ।
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥ ४ ॥
कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः ।
मयूरः स्वरमेधाग्नि दृक्श्रोत्रेन्द्रियदार्ढ्य कृत् ॥ ५ ॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ।
वृंहणः कुक्कटो वन्यस्तद्वद्ग्राम्यो गुरुर्मतः ॥ ६ ॥
मृगाः सर्वप्रकाराश्च पित्तश्लेष्महराः स्मृताः ।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः ॥ ७ ॥
कषायो मधुरो हृद्यः पित्तासृक् कफवातहा ।
संग्राही रोचनो वल्यस्तेषामेणो ज्वरापहः ॥ ८ ॥
मधुरोऽमधुरः पाके दोषघ्नोऽनलदीपनः ।
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ९ ॥
कषायः स्वादुलवणो गुरुः काणकपोतकः ।
रक्तपित्तप्रशमनो विशदोऽपि कषायकः ॥ १० ॥
कषायो मधुरश्चापि गुरुः पारावतः स्मृतः ।
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः ॥
सन्निपातहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ ११ ॥
प्रमहाःशोषगुल्मार्शो ग्रहणीदोषिणां हिताः ।
सर्वदोषहरास्तेषां मेदस्तु बलदूषकम् ॥ १२ ॥
वृषसिंहकपिव्याघ्र भासमार्जारमूषिकाः ।
तरक्षु कुररश्येन शशघ्नीजम्बुकादयः ॥ १३ ॥
गुहाशया वातहरा गुरूष्णा मधुराश्च ते ।
स्निग्धा वल्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ १४ ॥
नकुलः शल्लकीगोधा शशश्चापि भुजङ्गमाः ।
श्वासकासानिलहरा भूशयाः कफपित्तलाः ॥ १५ ॥
कषायमधुरस्तेषां शशः पित्तकफापहः ।

नातिशीतलवीर्य्यत्वाद्वातसाधारणो मतः ॥ १६ ॥
महिषो गवयः खड्गो वराहश्चमरो रुरुः।
आनूपाः मधुरा बल्या गुरुस्निग्धाः कफप्रदाः ॥ १७ ॥
नातिस्निग्धाश्चमर्य्यस्तु मदपित्तकराः स्मृताः।
छगलस्त्वनभिष्यन्दी तथा पीनसनाशनः ॥ १८ ॥
वृंहणं मांसमौरभ्रं पित्तश्लेष्मकरं गुरु।
मेदः पुच्छोद्भवं वृष्यं मौरभ्रसदृशं गुणैः ॥ १९ ॥
श्वासकासप्रतिश्यायविषमज्वरनाशनम्।
गव्यं श्रमात्यग्निहितं दुष्पाकमनिलापहम् ॥ २० ॥
औरभ्रवत्सलवणं मांसमेकशफोद्भवम्।
हंसकारण्डवक्रौञ्च मद्गुभल्लाह्वसारसाः।
नन्द्यावर्त्ता बलाकाश्च श्लेष्मला गुरवः प्लवाः ॥ २१ ॥
मत्स्यः कर्कटकः कूर्मः शिशुमारोऽथ शुक्तयः।
शङ्खाश्च गुरवः स्निग्धाः शीता वृष्या जलेशयाः ॥ २२ ॥
सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः।
उष्णा वातहरा वृष्या वर्चश्लेष्मविवर्द्धनाः ॥ २३ ॥
बलावहा विशेषेण मत्स्याशित्वात्समुद्रजाः।
समुद्रजेभ्यो नादेया वृंहणत्वाद् गुणोत्तराः ॥ २४ ॥

इति वङ्गसेनसङ्कलितः मांसवर्गाधिकारः समाप्तः।

---

## अथ फलवर्गमाह।

पाठामूर्वाशटीशाकं वास्तूकं सुनिषण्णकम्।
विद्याद् ग्राहि त्रिदोषघ्नं मार्कवं चिल्लिवास्तुकम् ॥ १ ॥
संग्राही चवकः प्रोक्तः स्निग्धः पञ्चाङ्गुलः सरः।
झिण्टी वत्सादनी फञ्जी वातघ्नी लघुदीपनी ॥ २ ॥

काकमाची त्रिदोषघ्नी स्तन्या वृष्या कलम्बिका।
चाङ्गेरी कफवातघ्नी सार्षपं सर्वदोषकृत्॥ ३॥
सार्षपं च सकौसुम्भं राजिकैकान्तपित्तला।
नाड़ीकः कफवातघ्नः कटुर्मधुरशीतलः॥ ४॥
सतीनशाकं श्लेष्मघ्नं त्रैपुटं वातकृन्मतम्।
श्रीहस्तिनी सपत्तूरा मूत्रलाश्मरिभेदिनी॥ ५॥
कालशाकन्तु कटुकं दीपनं कफशोथजित्।
वृष्या स्निग्धा च शीता च मृत्युघ्नी चाप्युपोदिका॥ ६॥
रूक्षो विषमदघ्नश्च प्रशस्तो रक्तपित्तिनाम्।
मधुरोऽमधुरः पाके शीतलस्तण्डुलीयकः॥ ७॥
वर्षाभ्वौ कफवातघ्नौ हितौ शोफोदरेऽर्शसि॥ ८॥
कटुतिक्तरसा हृद्या रोचना वह्निदीपनी।
सर्वदोषहरी लघ्वी कण्ठ्या मूलकपोतिका॥ ९॥
महत्तद्गुरुविष्टम्भि तीक्ष्णमामञ्च दोषलम्।
तदेव स्नेहसिद्धन्तु वातनुत्कफपित्तजित्॥ १०॥
शुष्कन्तु शोथशमनं गरदोषहरं लघु।
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात्॥ ११॥
पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरन्ते लघवः प्रदिष्टाः।
तेषान्तु पुष्पं कफवातहन्तृ फलं निहन्यात्कफमारुतौ च १२
रक्तपित्तहरी शोषकुष्ठघ्नी हिलमोचिका।
कफापहं शाकमुक्तं वरुणप्रपुनाटयोः॥ १३॥
स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसोऽथ बल्यः।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः॥ १४॥
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोषान्।
दुर्नामकुष्ठानिलसादजन्तु समीरणश्वासकफांश्च हन्ति॥ १५॥
नात्युष्णवीर्य्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च।

बलावहः पित्तहरोऽथ किञ्चित्पलाण्डुरग्नेश्च विवृद्धिकारी ॥१६॥
स्निग्धोऽथ रुच्यः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिदाता।
स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः चीरपलाण्डुरुक्तः ॥१७
न्यग्रोधोदुम्बराश्वत्थ प्लक्षपद्मादिपल्लवाः।
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ॥१८॥
स्रंसनं कटुकं पाके कफघ्नमनिलापहम्।
शोथघ्नमुष्णवीर्य्यञ्च पत्रं पूतिकरञ्जजम्। १९ ॥
वेणोः करीराः श्लेष्मघ्नाः कटुका रसपाकतः।
विदाहिनो नातिबलाः सकषाया विरूक्षणाः ॥ २० ॥
कफशोणितपित्तघ्नं रोचनं कारवेल्लकम्।
कारवेल्लकवज्ज्ञेयं फलं कर्कोटकस्य च ॥ २१ ॥
पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम्।
फलं त्रिदोषशमनं मूलं तस्य विरेचनम् ॥ २२ ॥
पित्तनुत्तेषु कूष्माण्डं बालं मध्यं कफापहम्।
शुष्कं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ॥ २३ ॥
सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम्।
बालं सनीलं त्रपुसं तत्तु पित्तहरं स्मृतम् ॥ २४ ॥
तत्पाण्डुकफकृज्जीर्णमम्ल वातविनाशनम्।
एर्वारुकं सकर्कारुसंपक्कं कफवातजित् ॥ २५ ॥
सक्षारं मधुरं रुच्यं तच्चोक्तं नातिपित्तलम्।
सक्षारमधुरं भेदि शीर्णवृन्तं कफापहम् ॥ २६ ॥
कण्डूकुष्ठकृमिघ्नानि कफपित्तहराणि च।
फलानि बृहतीनान्तु कटुतिक्तलघूनि च ॥ २७ ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु।
वार्त्ताकुदीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥ २८ ॥
अत्यर्थमधुरा रुच्या पित्तघ्नी मधुकर्कटी।

कर्कन्धुकोलवदरमम्लं वातविनाशनम् ॥ २९ ॥
पक्कं पित्तानिलहरं स्निग्धं समधुरं सरम् ।
पुराणं तृट्प्रशमनं श्रमघ्नं दीपनं परम् ॥ ३० ॥
सौवीरं वदरं स्निग्धं मधुरं वातपित्तजित् ।
आमं कपित्थं वैस्वर्य्यं ग्राहि मधुरवातलम् ॥ ३१ ॥
कफानिलहरं पक्कं मधुरानुरसं गुरु ।
दोषलं पित्तकृत्पाण्डु जम्बीरमतिपित्तलम् ॥ ३२ ॥
गुल्मवातकफश्वासकासघ्नं वीजपूरकम् ।
केसरं मातुलुङ्गस्य दीपनं कफवातजित् ॥ ३३ ॥
वातपित्तहरं मांसं त्वक्स्निग्धोष्णानिलापहा ।
अत्यर्थमधुरा रुच्या पित्तघ्नी मधुकर्कटी ॥ ३४ ॥
पित्तमारुतकृद्बालं पित्तलं बद्धकेशरम् ।
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥ ३५ ॥
कषायानुरसं स्वादु वातघ्नं वृंहणं गुरु ।
पित्ताविरोधिसम्पक्कमाम्रं शुक्रविवर्द्धनम् ॥ ३६ ॥
वृंहणं मधुरं वल्यं गुरु विष्टभ्य जीर्य्यति ।
आम्रातकफलं वृष्यं सस्नेहं कफवर्द्धनम् ॥ ३७ ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ।
अम्लं तृष्णाहरं रुच्यं पित्तकृत्करमर्दकम् ॥ ३८ ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ।
गरदोषहरं नीपं प्राचीनामलकं तथा ॥ ३९ ॥
वातापहं तिन्तिड़ीकमामं पित्तबलासकृत् ।
ग्राहि सन्दीपनं हृद्यं सम्पक्कं कफवातनुत् ॥ ४० ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ।
अम्लिकायाः फलं तद्वत् पक्कं भेदि तु केवलम् ॥ ४१ ॥
अम्लं समधुरं हृद्यं वृष्यमेतत्तु रोचनम् ।

वातघ्नं दुर्जरं प्रोक्तं नागरङ्गफलं गुरु ॥ ४२ ॥
कषायानुरसं चैषां दाड़िमं नातिपित्तलम्।
दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥ ४३ ॥
द्विविधं तत्तु विज्ञेयं मधुरं वाम्लमेव च।
त्रिदोषघ्नन्तु मधुरमम्लं वातकफापहम् ॥ ४४ ॥
अश्वत्थोदुम्बरप्लक्ष न्यग्रोधानां फलानि च।
कषायमधुराम्लानि वातलानि गुरूणि च ॥ ४५ ॥
हृत्तमायुष्करं स्वादु पित्तघ्नं शोषवह्निकृत् ॥ ४६ ॥
अत्यम्लं वातलं ग्राहि जाम्बवं कफवातजित् ॥ ४७ ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम्।
विपाके गुरु सम्पक्वं मधुरं कफपित्तजित् ॥ ४८ ॥
मधुरं च कषायञ्च स्निग्धं संग्राहि चालुकम्।
स्थिरीकरञ्च दन्तानां वाकुलं फलमुच्यते ॥ ४९ ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु।
वातघ्नं पित्तजननमामं विद्यात्परूषकम् ॥ ५० ॥
तदेव मधुरं पक्वं वातपित्तनिवर्हणम्।
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥ ५१ ॥
पौष्करं स्वादु विष्टम्भि बल्यं कफहरं परम्।
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ॥ ५२ ॥
कटुतिक्तकषायोष्णं बालं विल्वमुदाहृतम्।
तदेव विद्यात्सम्पक्वं मधुरानुरसं गुरु ॥ ५३ ॥
विदाहि विष्टम्भकरं दोषकृत्पूतिमारुतम्।
पनसं सकषायन्तु स्निग्धं स्वादु हिमं गुरु ॥ ५४ ॥
मौचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम्।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ ५५ ॥
फलं स्वादुरसं चैव तालजं गुरुपित्तजित्।

तद्बीजं स्वादुपाकञ्च मूत्रलं वातपित्तजित् ॥ ५६ ॥
हृद्यं मूत्र विबन्धघ्नं पित्तासृग्वातनाशनम् ।
केश्यं रसायनं मेध्यं काश्मर्य्यफलमुच्यते ॥ ५७ ॥
क्षतक्षयापहं हृद्यं वृंहणं तर्पणं गुरु ।
स्निग्धं वृष्यं समधुरं खर्जूरं रक्तपित्तजित् ॥ ५८ ॥
वृंहणीयमहृद्यञ्च मधूककुसुमं गुरु ।
वातपित्तप्रशमनं फलं तस्योपदिश्यते ॥ ५९ ॥
कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम् ।
हृद्यं सुगन्धि साम्लञ्च लवलीफलमुच्यते ॥ ६० ॥
शमीफलं गुरु स्वादु रूक्षोष्णं कफनाशनम् ।
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ ६१ ॥
करञ्जकिंशुकारिष्ट फलं जन्तू प्रमेहनुत् ।
प्रियालमज्जामधुरो वृष्यः पित्तानिलापहः ॥ ६२ ॥
वैभीतको मदकरः कफवातविनाशनः ।
कषाय मधुरो मज्जा कोलानां पित्तनाशनः ॥ ६३ ॥
तृष्णाक्कर्द्यनिलघ्नश्च तद्वदामलकस्य च ।
बी[illegible]पूरकसम्पाको मज्जाकोशाम्रसम्भवः ॥ ६४ ॥
स्वादुपाकोऽग्निबलदः स्निग्धः पित्तानिलापहः ।
शीतं कषायमधुरं टङ्कं मारुतकृद् गुरु ॥ ६५ ॥
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत् ॥ ६६ ॥
धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमपि प्रमोहात् ।
आस्वादतो भूतगुणैश्च हीत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ६७ ॥

इति वङ्गसेनसङ्कलितः फलवर्गाधिकारः समाप्तः ।

---

## अथ व्यञ्जनमांसव्यञ्जनयोरधिकारमाह ।

वातश्लेष्महरश्चैव रक्तपित्तप्रदूषणम् ।
अग्निसन्दीपनं हृद्यमुष्णान्नन्तु प्रशस्यते ॥ १ ॥
धौतः सुविमलः शुद्धो मनोज्ञः सुरभिः समः ।
स्विन्नः सुप्रस्रुतस्तूष्णो विशदश्चौदनो लघुः ॥ २ ॥
शीतलं तर्पणं हृद्यं मधु श्रमहरं परम् ।
लघुद्रुतविपक्वन्तु सद्योऽन्नं वारिभावितम् ॥ ३ ॥
त्रिदोषकोपणं रूक्षं मलकृन्मूत्रशोधनम् ।
स्वादुमेदः कफोत्क्लेदि वार्य्यन्नं निशि संस्थितम् ॥ ४ ॥
मधुरं शीतलं साम्लं तृष्णाघ्नं दीपनं परम् ।
आमघ्नन्तर्पणं हृद्यं घोलभक्तं रुचिप्रदम् ॥ ५ ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ ६ ॥
वातश्लेष्महरं रुच्यं दीपनं पाचनं परम् ।
विशेषादामवातघ्नं लवणं काञ्जिकार्द्रकम् ॥ ७ ॥
दीपनं तर्पणं रुच्यमामघ्नमनुलोमनम् ।
मन्दाग्नीनां सदा पथ्यं विल्वं काञ्जिकसंस्थितम् ॥ ८ ॥
कषाय मधुरो रूक्षः शीतः पाके कटुर्लघुः ।
श्लेष्मपित्तप्रशमनो मुद्गयूषोत्तमो मतः ॥ ९ ॥
सुस्विन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्मतः ।
माषः समधुरो रुच्यो विदाही चाम्लपित्तकृत् ॥ १० ॥
वातघ्नो दीपनश्चैव चाम्लमाषो गुरुः सरः ।
स्विन्नं निष्पीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम् ॥ ११ ॥
वातपित्तहरं वृष्यं पुष्टिकृद्बलवर्द्धनम् ।
कफमेदोऽनिलहरं सरं सुलघु दीपनम् ॥ १२ ॥

वार्त्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम्।
हितं ततो गुरुतरं सतैलं लवणान्वितम्॥ १३॥
वृद्धं कूष्माण्डकं स्विन्नं घृतभृष्टं सुपाचितम्।
पक्वं चिञ्चाफलं तक्रगुड़युक्तं सुभावितम्।
त्रिकटुत्रिसुगन्धिभ्यां मोदितं दोषनाशनम्॥ १४॥
सुस्विन्नमग्नौ घृतपाचितञ्च गुड़ान्वितं क्षीरविलोड़ितञ्च।
त्रिजातयुक्तं च सकेसरं च दुग्धाम्रमितत्परिकीर्त्तितञ्च॥ १५॥
वृष्यञ्च पुष्टिञ्च करोति कान्तिं निषेव्यमाणं बलमादधाति॥१६॥
लघवो वृंहणा रुच्याश्छर्दिघ्ना रागखाण्डवाः।
रसाला पाचनी वृष्या वातहृत् सगुड़ं दधि॥ १७॥
गुरवः पैष्टिका भक्ष्या वृंहणा वातनाशनाः।
वातपित्तहरो वृष्यो घृतपूरोऽग्निनाशनः॥ १८॥
वृंहणा ससिता भक्ष्या बल्याः पित्तानिलापहाः।
पिशितैर्वेशवाराद्यैः सम्पूर्णा गुरुतर्पणाः॥ १९॥
वैदला श्लेष्मला ज्ञेया गुरवो भिन्नवर्चसः।
वातपित्तहरा वर्ण्या दृष्टिदा घृतपाचिताः॥ २०॥
भक्ष्यास्तैलकृता दृष्टिवातघ्नाः पित्तकोपनाः।
तोयेनालोड़िता भक्ष्याः स्विन्नाश्चाम्भसि दुर्जराः॥ २१॥
गुरवो वृंहणा वृष्या ये च क्षीरोपसाधिताः।
अत्युष्णा मण्डलाः पथ्याः शीतला गुरवो मताः॥ २२॥
लाजाश्छर्दिहराः शीता वृष्या गुर्वी च शष्कुली।
पिष्टकं गुरुविष्टम्भि विदाहि कफपित्तलम्॥ २३॥
कपालाङ्गारपक्वाः स्युः किञ्चिल्लघुतराश्च ते।
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः॥ २४॥
शक्तवो वातला रूक्षा बातवर्चोऽनुलोमिनः।
तर्पयन्ति नरं शीघ्रं पीताः सद्यो बलाय ते॥ २५॥

मधुरा लघवः शीताः शक्तवः शालिसम्भवाः।
ग्राहिणो रक्तपित्तघ्नास्तृष्णाछर्दिज्वरापहाः॥ २६॥
पूपका वा यवैर्धानमोदकाः पित्तनाशनाः।
विष्टम्भी पयसा बल्यो मेदःकफकरो गुरुः॥ २७॥
कफपित्तकरा बल्या कृशरानिलनाशिनी।
पाचनो दीपनः पथ्यो मण्डः स्याद्भृष्टतण्डुलैः॥ २८॥
लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः।
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः॥ २६॥
वातानुलोमनी लघ्वी सोष्णा तन्वी ज्वरापहा।
ग्राहिणी तर्पिणी हृद्या विलेपी बलवर्द्धिनी॥ ३०॥
शाकमांसफलैर्युक्ता विलेप्योऽम्लाश्च दुर्जराः।
दाड़िमामलकैर्यूषो वह्निकृद्वातपित्तहा॥ ३१॥
श्वासकासप्रतिश्याय कफघ्नो मूलकैः कृतः।
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः॥ ३२॥
कपित्थतक्रचाङ्गेरीमरिचाजाजिचित्रकैः।
कफवातहरो ह्येष खण्डो दीपनपाचनः॥ ३३॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः।
रक्तपित्तश्रमहरो हृद्यो मांसरसः स्मृतः॥ ३४॥
रोचनी पाचनी हृद्या साम्ला वातकफापहा।
जम्बीरसाधिता चैव कलम्बी च निगद्यते॥ ३५॥
अम्लं सुमधुरं हृद्यं रोचनं वातकोपनम्।
वार्त्ताकं दीपनं हृद्यं तिन्तिड़ीगुड़साधितम्॥ ३६॥
रक्तपित्तहरं रुच्यं स्नेहेन परिभावितम्।
वातपित्तहरं बल्यं रोचनं वह्निदीपनम्॥ ३७॥
संग्राहि पुष्टिदं ज्ञेयं कदलीमूलसाधितम्।
कृमिकुष्ठहरं रुच्यं हरिद्रानाड़िकायुतम्॥ ३८॥

सुगन्धि मधुरं साम्लं दुर्जरं तक्रभावितम् ।
रुच्यं वातहरञ्चैव नागरङ्गस्य केसरम् ॥ ३९ ॥
ईषत्तिक्तं सुमधुरं हृद्यं रोचनदीपनम् ।
वार्त्ताकं कटुकं पाके सतीनदलसाधितम् ॥ ४० ॥
वातलं रोचनं हृद्यं कलायदलसाधितम् ।
अम्लं सुमधुरं हृद्यं रोचनं कण्ठशोधनम् ॥
वातघ्नं दुर्जरं चैव नष्टक्षीरप्रसाधितम् ॥ ४१ ॥
दुर्जरा मधुरा रुच्या वटका माषकादिभिः ।
चिञ्चाफलेन संसिद्धा रोचनाश्च विशेषतः ॥ ४२ ॥
कफवातहरं रुच्यं दीपनं चानुलोमनम् ।
ज्वरितानां हितं मांसं पटोलफलसाधितम् ॥ ४३ ॥
रक्तपित्तविसर्पघ्नं कुष्ठमेहज्वरापहम् ।
रोचनञ्च विशेषेण वेत्राग्रपरिसाधितम् ॥ ४४ ॥
वातश्लेष्महरं रुच्यं दीपनं चानुलोमनम् ।
ज्वरकुष्ठहरं मांसं ह्रस्ववार्त्ताकुसाधितम् ॥ ४५ ॥
कफपित्तप्रशमनं ज्वरकुष्ठविनाशनम् ।
क्रिमिमेहहरं हृद्यं मांसं केम्बुकसाधितम् ॥ ४६ ॥
कफवातहरं हृद्यं तृष्णारोचकनाशनम् ।
श्रमघ्नं तर्पणं मांसं सिद्धं वदरशुण्ठकैः ॥ ४७ ॥
आर्द्रामामलकैः सिद्धं त्रिदोषशमनं लघु ।
ज्वरहृच्छ्वासमेदोघ्नं मांसं वह्निप्रदीपनम् ॥ ४८ ॥
वातश्लेष्महरं हृद्य मनुलोम्यग्निदीपनम् ।
गलरोगप्रशमनं शुष्काम्रफलसाधितम् ॥ ४९ ॥
रुच्यं प्रीतिकरं हृद्यं मांसमाम्रेण साधितम् ।
कफपित्तप्रशमनं व्रणशोधनरोपणम् ॥ ५० ॥
अग्निसन्दीपनं मांसं कारवेल्लकसाधितम् ।

कफवातहरं हृद्यं दीपनं चानुलोमनम् ॥ ५१ ॥
रोचनं बलकृन्मांसं बालमूलकसाधितम्।
प्रक्षीणबलमांसस्य वातेनाभिहतस्य च ॥ ५२ ॥
रुच्यं पुष्टिकरं हृद्यं मृगमांसं हितं नृणाम्।
वातहृद्गलगण्डास्यरोगशोथविनाशनम् ॥ ५३ ॥
स्नेहनं रोचनं दीप्यं मांसं दाधिकमुच्यते।
मांसन्तु कफपित्तघ्नं तोड़कादिकसाधितम् ॥ ५४ ॥
कासश्वासहरं हृद्यं चक्षुष्यं स्वरवर्णदम्।
हृद्यं वातहरं रुच्यं वृष्यं पुष्टिबलप्रदम् ॥ ५५ ॥
श्रेष्ठं पथ्यतमं मांसं करमर्दकसाधितम्।
शूलघ्नं दीपनं मांसं सिद्धं चिञ्चाफलेन तु ॥
कफपित्तहरं रुच्यं बालचिञ्चाकसाधितम् ॥ ५६ ॥
रुच्यं कफानिलहरं विबन्धानाहभेदनम्।
शूलघ्नं दीपनं हृद्यं पक्वचिञ्चाफलेन तु ॥ ५७ ॥
वातश्लेषहरं हृद्यमर्शः कुष्ठविनाशनम्।
विबद्धमीषन्मधुरं मूलकैः सह जाङ्गलम् ॥ ५८ ॥
वातश्लेष्मानिलहरं मेहकुष्ठविषापहम्।
धातूनां बृंहणं वृष्यं करीरैः सह साधितम् ॥ ५९ ॥
गुरुर्विपाके मधुरो रुच्यो मांसवटः स्मृतः।
उदावर्त्तानिलहरो हृद्यो मूलकसाधितः ॥ ६० ॥
कफपित्ताविरोधी स्याद्वार्त्ताकेन प्रसाधितः।
पिष्टः सिद्धः पटोलस्य पत्रैः जीर्णज्वरापहः ॥ ६१ ॥
कफपित्तहरो रुच्यो ग्रीष्मसुन्दरसाधितः।
त्रिदोषकोपनं सर्वं पूतिमांसं प्रकीर्त्तितम् ॥ ६२ ॥
कफपित्तहरं हृद्यं दीपनं कृमिनाशनम्।
मांसं वह्निकरं विद्यादार्द्रकेण प्रसाधितम् ॥ ६३ ॥

## अथ समत्स्यव्यञ्जनगुणाधिकारमाह ।

गुरवो बृंहणाः सर्वे मत्स्याः शुक्रबलप्रदाः ।
विपाके मधुराश्चोष्णा कफपित्तविवर्द्धनाः ॥ १ ॥
दीप्ताग्नीनां हिताः पुंसां मैथुनप्रतिषेविनाम् ।
मत्स्यादं नाभिबाधन्ते रोगा वातसमुद्भवाः ॥ २ ॥
मधुरो बृंहणो वृष्यो वातहा वह्निदीपनः ।
दग्धमत्स्यो रुचिकरो जम्बीरपरिभावितः ॥ ३ ॥
दग्धमत्स्यो भवेच्छ्रेष्ठो बलपुष्टिविवर्द्धनः ।
क्षतक्षीणाश्च ये केचित् ये भग्ना जर्जरीकृताः ॥
दग्धमत्स्या हितास्तेषां सतैललवणान्विताः ॥ ४ ॥
हृद्यः प्रीतिकरो रुच्यो वातहृज्जर्जरास्रकः ।
वातानुलोमनो हृद्यः पुष्टिकृत् बलवर्द्धनः ॥
अत्यग्नीनां नृणां शस्तः सस्नेहः शाकमत्स्यकः ॥ ५ ॥
विपाके मधुरो हृद्यो विष्टम्भी वातकोपनः ।
रोचनस्तु विशेषेण मूलकेन प्रसाधितः ॥ ६ ॥
आरवेतैः सिद्धमत्स्य आमवातविनाशनः ।
कटीशूलहरः सम्यग्विड्विबन्धोऽर्शसां हितः ॥ ७ ॥
कफवातहरो हृद्यो दीपनो भक्तरोचनः ।
आरनालशृतो मत्स्यो हृद्यश्चैव गुणोत्तरः ॥ ८ ॥
वातश्लेष्महरो हृद्यो दीपनो भक्तरोचनः ।
अम्लैस्तु संस्कृतो मत्स्यो विबन्धानिलनाशनम् ॥ ९ ॥
विष्टम्भी रोचनो हृद्यो राजमाषप्रसाधितः ।
कफघ्नः पित्तशमनो हृद्यः पथ्योऽग्निवर्द्धनः ॥ १० ॥
शोथसंशमनश्चैव मत्स्यो वार्त्ताकुसाधितः ।
अम्लीकया शृतो मत्स्यो विबन्धानाहशूलनुत् ॥ ११ ॥

दधितक्रारनालैश्च सिद्धा मत्स्या रुचिप्रदाः॥ १२॥
त्रिदोषशमनी हृद्या रुच्या पुष्टिविवर्द्धिनी।
मधुरा कटभी प्रोक्ता सतीनदलसाधिता॥ १३॥
वातहा रोचनो हृद्यः पालङ्क्येन प्रसाधितः।
वातघ्नो गुरुरुच्यस्तु मत्स्यघण्टो बलप्रदः॥ १४॥
विष्टम्भी भिन्नवर्चास्तु शाकघण्टो बलप्रदः।
रोचनो मधुरो हृद्यः पित्तघ्नः शीर्णवृन्तयुक्॥ १५॥
मूत्रलो गुरुपाकश्च कथितो दधिमत्स्यकः।
कफपित्तहरो रुच्यः कर्कोटेन प्रसाधितः॥ १६॥
कर्कटी मधुरा हृद्या रुच्या मत्स्येन साधिता।
कफपित्तहरी रुच्या निम्बेन परिपाचिता॥ १७॥
मधुरो रोचनो हृद्यो मत्स्यः कूष्माण्डघण्टितः॥ १८॥
मूत्रला भिन्नविट्का च गुर्वी रुच्या कफापहा।
अलावूर्मधुरा प्रोक्ता निर्गुण्डीसाधिता बुधैः॥ १९॥
रोचनः कफपित्तघ्नः केम्बुनाड़ीप्रसाधितः।
रोचनः कफहृत् ज्ञेयः कूष्माण्डाग्रप्रसाधितः॥ २०॥
कषाय ईषन्मधुरो रुच्यो हृद्यः कफापहः।
तृष्णाघ्नो गुरुपाकश्च कदलीनाड़िका स्मृतः॥ २२॥
कफघ्नः कटुकः पाके पिच्छिलो दीपनः परम्।
रुच्यः पित्तहरो ज्ञेयः पिप्पलीनाड़िका स्मृतः॥ २३॥
मधुरो रोचनो हृद्यो दृष्टिवह्निविनाशनः।
ज्ञेयः सिद्धफलेनैव साधितः क्रमिवर्द्धनः॥ २४॥
वातघ्नो मधुरो वृष्यो रोचनः शिम्बिसाधितः॥ २५॥
कफपित्तहरस्तिक्तो रोचनस्तु विशेषतः।
शुष्कपत्रेण मत्स्याम्लः सर्वेषां परिकीर्त्तितः॥ २६॥
अर्शोघ्नो दीपनो ग्राही रुच्यो मधुरपाकतः।

कफवातामशूलघ्नश्चाङ्गेरीतक्रसाधितः ॥ २७ ॥
संग्राही दीपनो हृद्यो रुच्यो वातानुलोमनः ।
कफवातहरः साम्लस्तिन्तिड़ीकप्रसाधितः ॥ २८ ॥
कफपित्तहरो रुच्यः स्वादुकृद्वातकोपनः ।
विपाके दुर्जरः प्रोक्तो राजिका परिसाधितः ॥ २९ ॥
अम्लः सुमधुरो हृद्यो रोचनश्चाग्निवर्द्धनः ।
वातानुलोमनश्चैव मत्स्यशुक्तेण साधितः ॥ ३० ॥
मधुरो दुर्जरः प्रोक्तो मत्स्यः कूष्माण्डशुण्ठकैः ।
गुर्वी विपाके मधुरा वटिका वा कृता स्मृता ॥ ३१ ॥
वातश्लेष्महरो हृद्यो बलकृत्पित्तकारकः ।
क्षये क्षीणे मद्यपाने विषु मत्स्यः सदा हितः ॥ ३२ ॥
संग्राही दीपनो हृद्यः शूलघ्नो रक्तनाशनः ।
वातघ्नो मधुरः प्रोक्तो मत्स्यः कच्चटसाधितः ॥ ३३ ॥
कषायो मधुरो हृद्यः पित्तघ्नो रोचनस्तथा ।
दीपनो वातहा ग्राही हृद्यः कच्चटघण्टिकः ॥ ३४ ॥
शूलघ्नो दीपनो हृद्यः कफवातामनाशनः ।
संग्राही च विशेषेण पाठापत्रेण साधितः ॥ ३५ ॥
संग्राही दीपनो हृद्यः कासमर्दकसाधितः ।
कफपित्तहरो हृद्यो मूलिकाशुण्ठिसाधितः ॥ ३६ ॥

इति वङ्गसेनसङ्कलितः समत्स्यव्यञ्जनगुणाधिकारः समाप्तः ।

---

## अथ द्रवद्रव्याधिकारमाह ।

तत्रादौ तोयवर्गमाह ।

पानादिष्वव्यक्तरसं सुशीतं तर्षनाशनम् ।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥ १ ॥

नादेयं वातलं रूक्षं दीपनं लघुलेखनम्।
नदेऽभिष्यन्दि मधुरं सान्द्रं गुरुकफावहम्॥ २॥
तृष्णाघ्नं दीपनं हृद्यं कषायं मधुरं गुरु।
ताड़ागं वातलं स्वादु कषायं कटुपाकि च॥ ३॥
वातश्लेष्महरं वाप्यं सक्षारं कटुपित्तलम्॥ ४॥
चौड्यमग्निकरं रूक्षं मधुरं कफपित्तकृत्।
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम्॥ ५॥
सक्षारं पित्तलं कौपं श्लेष्मघ्नं वह्निदीपनम्।
मधुरं पित्तशमनमविदाह्यौद्भिदं मतम्॥
वैकिरं लघु सक्षारं कफघ्नं वह्निदीपनम्॥ ६॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम्।
तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत्॥ ७॥
सामुद्रमुदकं क्लिष्टं लवणं सर्वदोषकृत्।
अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम्॥ ८॥
परिदोषैरसंयुक्तन्निरवद्यं तु जाङ्गलम्।
पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम्॥ ९॥
दीपनं स्वादु शीतञ्च तोयं साधारणं लघु॥ १०॥
नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः।
गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः॥ ११॥
प्रायेण नद्यो मरुषु सुतिक्तलवणान्विताः।
लघ्व्यः सुमधुराश्चैव पौरुषेयावलेहिताः॥ १२॥
दिवार्ककिरणैर्जुष्टं जुष्टमिन्दुकरैर्निशि।
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना॥ १३॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततःपरम्॥ १४॥
मूर्च्छापित्तास्रदाहेषु विषे रक्ते मदात्यये।

क्लमभ्रमपरीतेषु तमके वमथौ तथा ॥
ऊर्द्ध्वंगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ १५ ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ।
आध्माने स्तिमिते कोष्ठे सद्यः शुद्धौ नवज्वरे ॥
हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ १६ ॥
कफमेदोऽनिलघ्नञ्च दीपनं वस्तिशोधनम् ।
कासश्वासज्वरहरं पथ्यमुष्णोदकं निशि ॥ १७ ॥
अरोचके प्रतिश्याये प्रमेहे श्वयथौ क्षये ।
मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ १८ ॥
चन्द्रकान्तमणिः स्पृष्टः शुभ्रैश्चन्द्रांशुभिर्निशि ।
यन्मुञ्चेन्निर्मलं वारि तद्विद्यादमृतोपमम् ॥ १९ ॥
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ।
वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ॥ २० ॥

इति तोयवर्गः ।

अथ क्षीरवर्गमाह ।

अल्पाभिष्यन्दि गोक्षीरं गुरु स्निग्धं रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ २१ ॥
अल्पाम्बुपानव्यायाम कटुतिक्ताऽशनैर्लघु ।
आजं शोषज्वरश्वास रक्तपित्तातिसारनुत् ॥ २२ ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहादूनमनिद्राणामत्यग्नीनाञ्च तद्धितम् ॥ २३ ॥
रूक्षोष्णमीषल्लवणमौष्ट्रं सन्दीपनं लघु ।
शस्तं वातकफानाह कृमिशोथोदरार्शसाम् ॥ २४ ॥
नारीणां मधुरं क्षीरं कषायानुरसं हिमम् ।
नस्याश्चोतनयोः पथ्यं जीवनं लघु दीपनम् ॥ २५ ॥

कषायतिक्तानुरसं कासशोथज्वरापहम्।
औरभ्रं मधुरं स्निग्ध मुष्णं पित्तकफापहम्॥ २६॥
पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्त्तितम्।
तदेवोष्णं लघुतरं तदभिष्यन्दि चाशृतम्॥ २७॥
वर्जयित्वा स्त्रियाः स्तन्यमामं तद्धि गुणोत्तरम्।
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा॥ २८॥
अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च तत्।
वर्ज्यं सलवणं क्षीरं यच्च पर्य्युषितं भवेत्॥ २९॥

इति क्षीरवर्गः।

अथ दधिवर्गमाह।

स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम्।
वातापहं पवित्रञ्च गव्यं दधि रुचिप्रदम्॥ ३०॥
दध्याजं कफवातघ्नं लघु पाके क्षयापहम्।
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम्॥ ३१॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम्।
बलासवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम्॥ ३२॥
विपाके कटु सक्षारमम्लं भेद्यौष्ट्रिकं दधि।
वातमर्शांसि कुष्ठानि क्रमीन् हन्त्युदराणि च॥ ३३॥
चक्षुष्यमग्निदोषघ्नं दधि नार्य्या गुणोत्तरम्।
लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम्॥ ३४॥
रसे पाके च मधुरं कषायं वातपित्तनुत्।
कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि॥ ३५॥
पीनसे चातिसारे च शीतके विषमज्वरे।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते॥ ३६॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते॥ ३७॥

वातघ्नं कफकृत् स्निग्धं बृंहणं वातपित्तकृत् ।
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम् ॥ ३८ ॥
शृतक्षीरात्तु यत् जातं गुणवद्दधि तत् स्मृतम् ।
वातपित्तहरं वृष्यं धात्वग्निबलवर्द्धनम् ॥ ३९ ॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ।
वह्नेर्विवर्द्धनश्चापि कफशुक्रविवर्द्धनः ॥ ४० ॥
दधित्वसारं रूक्षन्तु ग्राहि विष्टम्भि वातलम् ।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥ ४१ ॥
तृष्णाक्लमहरं मस्तु लघु स्रोतो विशोधनम् ॥ ४२ ॥

इति दधिवर्गः ।

अथ तक्रवर्गमाह ।

ग्रहणीदोषशोफार्शो ग्रहातीसारगुल्मनुत् ।
त्रिदोषशमनं तक्रमुद्धृतस्नेहमादिशेत् ॥ ४३ ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ४४ ॥
वातेऽम्लं सैन्धवोपेतं पित्ते स्वादु सशर्करम् ।
पिबेत्तक्रं कफे वापि व्योषक्षारसमायुतम् ॥ ४५ ॥
न तु तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ ४६ ॥
ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका ।
गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राबलप्रदः ॥ ४७ ॥
मधुरौ बृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥ ४८ ॥

इति तक्रवर्गः ।

अथ नवनीतवर्गमाह ।

नवनीतं नवं ग्राहि हृद्यं रोचनदीपनम् ।
क्षयारुच्यर्दितप्लीह ग्रहण्यर्शो विकारनुत् ॥ ४९ ॥

क्षीरोद्भवं हिमं ग्राहि रक्तपित्ताक्षिरोगनुत् ।
स्मृतिबुद्ध्यग्निशुक्रौजः कफमेदो विशोधनम् ॥ ५० ॥
विपाके मधुरं सर्पिर्वातपित्तविकारनुत् ।
गव्यं मेध्यञ्च चक्षुष्यं तत्संस्काराच्चिदोषनुत् ॥ ५१ ॥
अपस्मारगरोन्माद मूर्च्छाघ्नमनवं घृतम् ।
अजावीनान्तु सर्पींषि विद्यात् स्वक्षीरवद्गुणैः ॥ ५२ ॥

इति घृतवर्गः ।

अथ तैलवर्गमाह ।

छिन्नभिन्नच्युतोत्पिष्ट मथितक्षतपिच्चिते ।
भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥ ५३ ॥
तथाभिहतनिर्भुग्न मृगव्याघ्रादिभिः क्षते ।
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥ ५४ ॥
तद्वद्वस्तिषु पाने च नस्ये कर्णाक्षिपूरणे ।
अनुपानविधौ चापि प्रयोज्यं वातशान्तये ॥ ५५ ॥
क्रमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ।
कफमेदोऽनिलहरं लेखनं कटुदीपनम् ॥ ५६ ॥
विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत् ।
क्षौमं तैलमचक्षुष्यं पित्तकृद्वातनाशनम् ॥ ५७ ॥
फलोद्भवानि तैलानि यान्यनुक्तानि तानि च ।
गुणात्कर्म च विज्ञाय फलैस्तान्यपि निर्दिशेत् ॥ ५८ ॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्त्तिताः ।
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥ ५९ ॥

इति तैलवर्गः ।

अथ मधुवर्गमाह ।

त्रिदोषघ्नं मधु प्रोक्तं मेध्यं शंसन्ति वातलम् ।
हिक्काश्वासक्रमिच्छर्दि मेहतृष्णा विषापहम् ॥ ६० ॥

मेदः स्थौल्यापहं ग्राहि पुराणमतिलेखनम् ।
दोषत्रयहरं पक्कमाममम्लञ्च दोषलम् ॥ ६१ ॥

इति मधुवर्गः ।

अथेक्षुवर्गमाह ।

इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ।
स्वादुपाकरसाः स्निग्धाः गुरवो मूत्रला हिमाः ॥ ६२ ॥
अविदाही कफकरो वातपित्तनिवर्हणः ।
वक्त्रप्रह्लादनो हृद्यो दन्तनिष्पीड़ितो रसः ॥ ६३ ॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः ॥ ६४ ॥
मूलाग्रजन्तु जग्धादिपीड़नान्मलसङ्करात् ।
किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः ॥ ६५ ॥
फाणितं गुर्वभिष्यन्दि बलकृन्मूत्रशोधनम् ।
नातिश्लेष्मकरः स्निग्धः सृष्टमूत्रशकृद्गुड़ः ॥ ६६ ॥
पित्तघ्नो मधुरः स्निग्धो वातहासृक्प्रसादनः ।
स पुराणोऽधिकगुणो गुड़ः पथ्यतमो मतः ॥ ६७ ॥
खण्डं वृष्यं सरं स्निग्धं स्वादसृक् पित्तवातजित् ।
वातपित्तप्रशमनी रक्तपित्तहरी सिता ।
छर्द्यतीसारहृच्छोक्ताह्लादिनी मधुशर्करा ॥ ६८ ॥

इतीक्षुवर्गः ।

अथ मद्यवर्गमाह ।

सर्वम्पित्तकरं मद्यमम्लं रोचनदीपनम् ।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥ ६९ ॥
कासार्शो ग्रहणीरोग मूत्राघातानिलापहा ।
स्तन्यरक्तक्षयहिता सुरा दीपनबृंहणी ॥ ७० ॥
रक्तपित्तकरास्तीक्ष्णाः सुक्तसौवीरजातयः ।

पित्तदाहनुदो वाह्ये स्थिताः शीतकराः स्मृताः ॥ ७१ ॥

इति मद्यवर्गः।

अथ मूत्रवर्गमाह।

गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम्।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥ ७२ ॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ ७३ ॥
हृल्लासोदरगुल्मेषु कुष्ठमेहविशुद्धिषु।
आनाहशोथाष्ठीलासु पाण्डुरोगेषु माहिषम् ॥ ७४ ॥
कासश्वासापहं शोथकामलापाण्डुरोगनुत्।
कटुतिक्तान्वितं छाग मीषन्मारुतकोपनम् ॥ ७५ ॥
प्लीहोदरहरं श्वासशोथवर्चोग्रहे हितम्।
सक्षारतिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ ७६ ॥
दीपनं कटु तीक्ष्णोष्णं वातरेतोविकारनुत्।
आश्वं कफहरं रूक्षं क्रिमिदद्रुविनाशनम् ॥ ७७ ॥
सतिक्तलवणं भेदि वातघ्नं पित्तकोपनम्।
तीक्ष्णं क्षारे किलासे च नागमूत्रं प्रयोजयेत् ॥ ७८ ॥
गररेतोविकारघ्नं तीक्ष्णं जठररोगनुत्।
दीपनं गार्दभं मूत्रं क्रिमिवातकफापहम् ॥ ७९ ॥
शोथकुष्ठोदरोन्माद मारुतक्रिमिनाशनम्।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥ ८० ॥

इति मूत्रवर्गः।

इति वङ्गसेनसङ्कलितः द्रवद्रव्याधिकारः समाप्तः।

---

## अथारिष्टाधिकारमाह ।

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ।
ख्यापयन्ति भविष्यत्वं तथारिष्टानि पश्यताम् ॥ १ ॥
तानि सौक्ष्म्यात्प्रमादाद्वा तथैवाशु व्यतिक्रमात् ।
अज्ञानाच्च न गृह्यन्ते मुमूर्षोर्न त्वसम्भवात् ॥ २ ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणञ्चापि तन्नास्ति यन्नारिष्टं पुरःसरम् ॥ ३ ॥
ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत्किलामलैः ।
रसायनपरैर्जाप्यं तत्परैर्वा निवार्य्यते ॥ ४ ॥
असिद्धिं प्राप्नुयाल्लोके प्रतिकुर्वन् गतायुषः ।
तस्माद्यत्नेनारिष्टानि लक्षयेत् कुशलो भिषक् ॥ ५ ॥
वैद्यारिष्टानि सिद्ध्यर्थं भविष्यं मरणं स्फुटम् ।
कथयन्त्यातुरगतं शुभञ्चाशुभमेव च ॥ ६ ॥
नक्षत्रोद्भवपीड़ा च यथाकालं विपच्यते ।
अरिष्टपाकन्तु तथा ब्रुवते बहवो जनाः ॥ ७ ॥

### अथ दूतलक्षणमाह ।

दूतस्य गच्छतो वैद्य मानेतुं रोगिणः कृते ।
प्रदीप्तं शोभनं प्रोक्तं सौम्यं न शकुनं शुभम् ॥ ८ ॥
उत्तमस्यापि नीचोऽपि नीचस्याप्युत्तमो जनः ।
नरो विकृतवेषश्च न दूतः शुभसूचकः ॥ ९ ॥
पाषण्डाश्रमवर्णानां सवर्णः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १० ॥
नपुंसकः स्त्रीबहवोऽनेककार्य्याभिसूचकाः ।
पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ११ ॥
आर्द्रजीर्णापसव्यैकमलिनोद्धतवाससः ।

रूक्षनिष्ठुरवक्तारस्त्वमङ्गल्याभिधायिनः ॥ १२ ॥
न्यूनाधिकाङ्गा उद्विग्ना विकला रौद्ररूपिणः।
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकास्तनम् ॥ १३ ॥
वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १४ ॥
कपालोपलभस्मास्थि तुषाङ्गारकराश्च ये।
विलिखन्तो महीं केचिन्मुञ्चतो लोष्ट्रभेदिनः ॥ १५ ॥
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः।
फलं पक्वमसारं वा गृहीत्वान्यच्च तद्विधम् ॥ १६ ॥
नखैर्नखान्तरं वापि करेण चरणौ तथा।
काष्ठोपानच्चर्महस्ता विकृता व्याधिपीड़िताः ॥ १७ ॥
वामाचारा रुदन्तो वा श्वासिनो विकृतेक्षणाः।
याम्यां दिशि प्राञ्जलयो विषमैकपदस्थिताः ॥ १८ ॥
दैन्यमाङ्गल्यचिह्नानि दधतश्चापराण्यपि।
दक्षिणाभिमुखं देशे मलिने क्रूरकर्मणि ॥ १९ ॥
ज्वालयन्तं पठन्तं वा क्षुरकर्मणि चोद्यतम्।
भूमौ शयानं नग्नं वा वेगोत्सर्गेषु वा शुचिम् ॥ २० ॥
प्रकीर्णकेशमभ्यक्तं क्लिन्नं क्लान्तमथापि वा।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ २१ ॥
पित्र्ये चाहुतिकार्य्ये वा तथा चोत्पातदर्शने।
मध्याह्ने चार्द्धरात्रे च सन्ध्ययोः कृत्तिकासु च ॥ २२ ॥
आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च।
चतुर्थ्याञ्च नवम्याञ्च षष्ठ्यां सन्धिदिनेषु च ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ २३ ॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः।
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २४ ॥

ते वातकफरोगेषु कर्म्मसिद्धिकरा मताः ।
रक्तपित्तातिसारेषु प्रमेहेषु विशेषतः ॥
पूजिता गलरोगे च वैद्यं दूता उपागताः ॥ २५ ॥
शुक्लवासो गौरशुचि श्यामा वा प्रियदर्शनाः ।
स्वस्यां जातौ स्वगोत्रे वा दूताः कार्य्यकराः स्मृताः ॥ २६ ॥
अव्यङ्गाः पटवो दूताः शुभ्रलेपाम्बरस्रजः ।
वृषवाजिसमारूढाश्चारुचेष्टाः सुजातयः ॥ २७ ॥
भिषजः समये प्राप्ताः सजीवदिशमाश्रिताः ।
ऊनसंख्याः प्रशस्ताः स्याद् रोगिणः सुखहेतवः ॥ २८ ॥
यस्यां प्राणानिलो वाति सा नाड़ी जीवसंयुता ।
दिग्विभागोऽपि तस्यायुः सजीवः स निगद्यते ॥ २९ ॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ।
उपसर्पन्ति ये वैद्यं ते च कार्य्यकराः स्मृताः ॥ ३० ॥

इति दूतलक्षणानि ।

अथ शकुनलक्षणमाह ।

वैद्यस्य गच्छतः कर्त्तुं चिकित्सां रोगिणो भवेत् ।
सिद्धिदं शकुनं सौम्यं दीप्तं नैव प्रशस्यते ॥ ३१ ॥
मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ ३२ ॥
स्त्रीपुत्रिणी सवत्सा गौर्वर्द्धमानाः स्वलङ्कृताः ।
कन्या मत्स्याः फलं चामं स्वस्तिको मोदका दधि ॥ ३३ ॥
हिरण्याक्षतदूर्वाश्च रत्नानि सुमनो नृपः ।
अप्रशान्तोऽनलो वाजी चाषो हंसः शिखी तथा ॥ ३४ ॥
भवन्ति दर्शनादेव भिषजः कार्य्यसिद्धिदा ।
ब्रह्मदुन्दुभिनिर्घोषः शङ्खवेणुरथस्वनाः ॥ ३५ ॥
सिंहगोवृषनादोऽश्वक्ष्वेषितं गजबृंहितम् ।

शस्तं हंसरुतं नृणां वाचश्च हृदयप्रियाः ॥ ३६ ॥
पत्रपुष्पफलोपेताः सक्षीरा नीरुजो द्रुमाः।
आश्रिता वा नभो वेश्म ध्वजतोरणवेदिकाः ॥ ३७ ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः।
वामा वा दक्षिणा वापि शकुनाः कर्मसिद्धये ॥ ३८ ॥
दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोः।
भासकौशिकयोश्चैवं नोभयं शशसर्पयोः ॥ ३९ ॥
दर्शनं वा रुतं वापि न गोधाकृकलासयोः।
शस्त्रार्बुदादिषु सदा छेदशब्दः प्रशस्यते ॥ ४० ॥
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च।
रक्तपित्तातिसारेषु रुद्धशब्दश्च पूजितः ॥ ४१ ॥
दौर्मनस्यञ्च वैद्यस्य यात्रायां नैव पूजितम्।
वैद्यासनावसादोवा आतुरो वाप्यधोमुखः ॥ ४२ ॥
वैद्यसम्भाषणाङ्गानि कुड्यमास्तरणानि च।
प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा ॥ ४३ ॥
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि।
न स सिद्ध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ ४४ ॥
वैद्यं यश्चोन्मुखं पृच्छेत्पार्ष्णिं वा स्वाङ्गमातुरः।
भूयः संपूज्यते यस्य गृहे वैद्यः स सिद्ध्यति ॥ ४५ ॥
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च।
आतुरस्य ध्रुवं तस्माद् दूतादींल्लक्षयेद्भिषक् ॥ ४६ ॥

इति शकुनलक्षणानि।

अथ दुःस्वप्नानाह।

स्वप्नाध्यायं प्रवक्ष्यामि मरणाय शुभाय च।
पश्यन्ति सुहृदो यांस्तु स्वप्नान् स्वयमथापि वा ॥ ४७ ॥
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः।

मार्जारकपिशार्दूल सृगालैर्नारकेण च ॥ ४८ ॥
तरक्षोहास्मृगाभ्याञ्च भल्लूकेन शुनापि वा ।
वराहैर्महिषैर्वापि यो यायाद्दक्षिणामुखः ॥ ४९ ॥
कृष्णा रक्ताम्बरधरा हसन्ती रक्तमूर्द्धजा ।
यं चाकर्षति बद्धा स्त्री नृत्यन्ती दक्षिणामुखम् ॥ ५० ॥
अन्त्यावसायिभिर्यो वा कृष्यते दक्षिणामुखः ।
परिष्वजेयुर्यं वापि प्रेताः प्रव्रजितास्तथा ॥ ५१ ॥
आघ्रायते यस्य मुहुः श्वापदैर्विकृताननैः ।
पिबेन्मधु च तैलं वा यो वा पङ्केऽवसीदति ॥ ५२ ॥
पङ्कप्रलिप्तगात्रो वा नृत्येद्वापि हसेत्तथा ।
निरम्बरश्च यो रक्तां शिरसा धारयेत् स्रजम् ॥ ५३ ॥
यस्य वंशोनलो वापि तालो वोरसि जायते ।
यं मत्स्यादिर्ग्रसेत् यो वा नीरेऽग्नौ वा विलीयते ॥ ५४ ॥
उच्चादधः पतेद्यस्तु श्वापदैर्वा निहन्यते ।
ह्रियते स्रोतसा यो वा यो वा मोहमवाप्नुयात् ॥ ५५ ॥
पराजीयेत बध्येत काकाद्यैर्वाभिभूयते ।
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ॥ ५६ ॥
यः पश्येद्देवतानां वा प्रकम्पमवनेस्तथा ।
यस्य छर्दिर्विरिक्तो वा दशनाः प्रपतन्ति वा ॥ ५७ ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ।
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ॥ ५८ ॥
कर्पासतैलपिण्याक लोहानि लवणं तिलान् ।
लभेताश्नाति वा पक्कं मांसं यश्च पिबेत्सुराम् ॥ ५९ ॥
यः स्वप्नेषु नरः पश्येत् रक्तकृष्णाम्बरावृतान् ।
कृष्णांश्च विकृतान्व्यङ्गान्दण्डपाशधरानपि ॥ ६० ॥
कुर्वतो भर्त्सनं त्रासं दक्षिणाशां समाश्रितान् ।

स स्वस्थो लभते रोगं व्याधितो मृत्युमृच्छति ॥ ६१ ॥
यथास्वं प्रकृति स्वप्नो विस्मृतो विहितस्तथा।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ ६२ ॥
ज्वरितानां शुना सख्यं शोषिणां कपिभिस्तथा।
उन्मादे राक्षसैः प्रेतै रपस्मारे प्रवर्त्तनम् ॥ ६३ ॥
मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम्।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्ध्नि शिरोरुजि ॥ ६४ ॥
पिपासा श्वासयोश्छर्द्यां शष्कुल्याश्चैव भक्षणम्।
हरिद्राभक्षणं वापि यद्भवेत्पाण्डुरोगिणः ॥
रक्तपित्ती पिवेद्यस्तु शोणितं स विनश्यति ॥ ६५ ॥
क्रव्यादाक्रमणं श्मशानगमनं पातस्तथोच्चादधो-
रक्तस्रग्वसनं विवाहकलहौ चौरं विरेको वमिः।
वन्धं लौहकपर्दलाभनटनं पङ्काम्भसोर्मज्जनं
दन्ताक्षिग्रहपादचर्मपतनं स्वप्ने गदादिप्रदम् ॥ ६६ ॥
स्वप्नानेवं विधान् दृष्ट्वा प्रातरुत्थाय यत्नवान्।
दद्यान्माषांस्तिलांल्लौहं विप्रेभ्यः काञ्चनं तथा ॥ ६७ ॥
जपेद्वापि शुभान्मन्त्रान् गायत्रीन्त्रिपदीं तथा।
दृष्ट्वा तु प्रथमे यामे स्वप्नान्ध्यायेत्पुनः शुभम् ॥ ६८ ॥
जपेद्वान्यतमं वेदं ब्रह्मचारी समाहितः।
नचाऽऽचक्षीत कस्मैचिद् दृष्ट्वा स्वप्नमशोभनम् ॥ ६९ ॥
देवतायतने चैव वसेद्रात्रित्रयं तथा।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात्परिमुच्यते ॥ ७० ॥
अत ऊर्द्धं प्रवक्ष्यामि प्रशस्तस्वप्नदर्शनम्।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ ७१ ॥
समिद्धमग्निं साधूंश्च निर्मलानि जलानि च।
पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥ ७२ ॥

युद्धे चात्मजयं दृष्ट्वा नरः सुखमवाप्नुयात्।
तुरगो वृश्चिको भृङ्गो मक्षिकाश्च जलौकसः॥
स्वप्ने दशन्ति यं तस्य धनारोग्ये विनिर्दिशेत्॥ ७३॥
मांसं मद्यं स्रजः श्वेत वासांसि च फलानि।
लभेत् कल्याणलाभाय व्याधेरपगमाय च॥ ७४॥
वीणाद्यादर्शशुभ्रश्वेतवसनातपवारणम्।
गुर्वङ्गणादिभोगो यः सोऽर्थदो गदनाशनः॥ ७५॥
विषस्यापक्वमांसस्य गवादीनां विशेषतः।
भक्षणं विड्विलेपश्च रोदनं मरणं निजम्॥
दृष्ट्वा जागरणं कुर्य्यादर्थलाभाय रोगहृत्॥ ७६॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान्।
तरेत् कल्याणलाभाय व्याधेरपगमाय च॥ ७७॥
वृषाश्वगजसौधाग्र नौ शैलार्द्रवनस्पतीन्।
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च॥ ७८॥
इत्यादिकान् शुभान् स्वप्नान् दृष्ट्वा फलसमृद्धये।
स्तुत्वा देवान् द्विजातिभ्यो दद्यात् स्वर्णं च भोजनम्॥७९॥
भूयो दृष्टश्रुतध्याताऽनुभूतेष्टैकगोचराः।
स्वप्नो निरर्थकाजीर्णोच्छिष्टभावादिसम्भवः॥ ८०॥

इति स्वप्नकथनम्।

अथ कालज्ञानम्।

अकस्माच्छीलविकृतिरकस्माद्दपुरुत्तमम्।
अकस्मादिन्द्रियोत्पत्तिः सन्निपाताग्रलक्षणम्॥ ८१॥
शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्।
तदरिष्टं समासेन व्यासतश्च निबोध मे॥ ८२॥
व्यञ्जनानि सुतो विद्या बुद्धिर्मेदो धनं यशः।
स्वल्पे वयसि यस्यैतत् न स जीवेच्चिरन्नरः॥ ८३॥

भक्तिः शीलं स्मृतिस्त्यागो मेधाबलमनुत्तमम्।
भजन्ति वा निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः॥ ८४॥
शृणोति विविधान् शब्दान् यो दिव्यानसतो बहून्।
समुद्रपुरमेघानामसम्पत्तौ च निष्ठुरान्॥ ८५॥
तान् स्वरान्नावगृह्णीते गृह्णीते चान्यशब्दवत्।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोति च॥ ८६॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति।
यश्चाकस्मान्न शृणुते स गतायुरिति स्मृतः॥ ८७॥
यस्तूष्णसमये शीत मुष्णं जानाति शीतके।
सञ्जातशीतपिटको यश्च दाहे न पीड्यते॥
दाहार्त्तो यश्च रोमाञ्ची पञ्चत्वं तस्य निश्चितम्॥ ८८॥
उष्णगात्रोऽतिमात्रञ्च यश्च शीतेन वेपते।
प्रहारं नाभिजानाति स यायाद्यममन्दिरम्॥ ८९॥
पांशुनेवावकीर्णानि यस्तु गात्राणि मन्यते।
नानावर्णाश्च राज्यो वा यस्य गात्रे भवन्ति हि॥ ९०॥
स्नानानुलिप्तं यं वापि सेवन्ते नीलमक्षिकाः।
सुगन्धिर्वाति चाकस्मात्तं ब्रुवन्ति गतायुषम्॥ ९१॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धं सुरभिं तथा।
विपरीते न गृह्णाति भावान्यश्चोपसेवितान्॥ ९२॥
क्रमोपयुक्ताश्च रसा यस्य दोषाभिवृद्धये।
यस्य दोषाग्निसात्म्यञ्च कुर्युर्मिथ्योपयोजिताः॥
यो वा रसान्न संवेत्ति तं वदन्ति गतायुषम्॥ ९३॥
शृणोत्या पीड़िते कर्णे न यो धुकधुकध्वनिम्।
यो वा गन्धं न गृह्णाति शान्तदीपस्य मानवः॥ ९४॥
दिवाज्योतींषि यश्चापि ज्वलितानीव पश्यति।
चन्द्रं सूर्य्यमिवाचष्टे सूर्य्यं वा चन्द्रवर्चसम्॥ ९५॥

अमेघोपप्लवे चापि शक्रचापतड़िद्गुणान्।
तड़िद्वन्तो सितान् वापि निर्मले गगने घनात्॥ ९६॥
विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम्।
यश्चानिलं मूर्त्तिमन्त मन्तरिक्षे च पश्यति॥ ९७॥
उष्णशीतादिकान् भावान् कालावस्थादिशस्तथा।
विपरीते न गृह्णाति भावानन्यांश्च यो नरः॥ ९८॥
धूमनीहारवासोभिरावृतामिव मेदिनीम्।
प्रदीप्तमिव चाकाशं यो वाप्लुतमिवाम्भसि॥
भूमिमष्टादशाकारां रेखाभिर्यश्च पश्यति॥ ९९॥
अरुन्धतीं ध्रुवञ्चैव विष्णोरपि पदत्रयम्।
न पश्येत् स गतायुः स्याच्चतुर्थम्मातृमण्डलम्॥ १००॥
रसनारुन्धती ज्ञेया घ्राणाग्रं च ध्रुवं विदुः।
भ्रुवोर्मध्यं पदं विष्णोस्तारकामातृमण्डलम्॥ १०१॥
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति।
पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्वजाम्॥ १०२॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्।
पिशाचोरगनागानां भूतानां विकृतामपि॥ १०३॥
ह्रीश्रियौ नश्यतो यस्य बुद्धिर्मेधा स्मृतिस्तथा।
अकस्मात् यं भजन्ते च स परासुरसंशयम्॥ १०४॥
यस्याधरौष्ठः पतितः क्षिप्तश्चोर्द्ध्वस्तथोत्तरः।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम्॥ १०५॥
आरक्ता दशना यस्य श्यावा वाथ पतन्ति च।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत्॥ १०६॥
अकस्माद्वदनं यस्य कुङ्कुमाभं प्रजायते।
अङ्गकम्पो गतिभ्रंशो यदि वा स न जीवति॥ १०७॥
पीड्यते कुण्डली यस्य नाभिस्थाहारबन्धना।

दृश्यते यस्य चाहारः स वर्षेण मृतिं व्रजेत्॥ १०८॥
अकस्माद्यः कृशः स्थूलो भवेत् स्थूलोऽथवा कृशः।
प्रकृतिं वा त्यजेच्छीघ्रमष्टमासान् स जीवति॥ १०९॥
कृष्णास्तच्चावलिप्ता च जिह्वाशूना च यस्य वै।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून्॥॥ ११०॥
कुटिला स्फुटिता वापि प्रसुप्ता यस्य नासिका।
भग्ना विस्फुरिता वापि स परासुरसंशयम्॥ १११॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ।
लुनन्ति चाक्षिपक्ष्माणि स परासुरसंशयम्॥ ११२॥
न धारयति यः शीर्षन्नाहरत्यन्नमास्यगम्।
नखाङ्गुलित्रयं चापि दन्ताः शुष्यन्ति यस्य च॥
एकाग्रदृष्टिर्मूढात्मा स परासुरसंशयम्॥ ११३॥
बलवान् दुर्बलो वापि सम्मोहं योऽधिगच्छति।
उत्थाप्यमानो बहुशः स परासुरसंशयम्॥ ११४॥
उत्तानः सर्वदा शेते पादौ विकुरुते च यः।
विप्रसारणशीलो वा स परासुसंशयम्॥ ११५॥
शीतपादकरोच्छासश्छिन्नोच्छासश्च यो भवेत्।
काकोच्छासश्च यो मर्त्यः स परासुरसंशयम्॥ ११६॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्वदा।
मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता॥ ११७॥
खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते।
पुरुषस्या विषार्त्तस्य स परासुरसंशयम्॥ ११८॥
अनन्योपद्रवकृतः शोथः पादसमुद्भवः।
पुरुषं हन्ति नारीन्तु गुह्यजो मुखजो द्वयम्॥ ११९॥
अतीसारो ज्वरो हिक्का छर्दिः शूलाङ्गभेदनम्।
कासिनः श्वासिनो वापि यस्य तं परिवर्जयेत्॥ १२०॥

स्वेदोदाहश्च बलवान् हिक्का श्वासस्तथैव च।
बलवन्तमपि प्राणैर्वियुञ्जीत न संशयः ॥ १२१ ॥
श्यावा जिह्वा भवेद्यस्य सव्यञ्चाक्षि निमज्जति।
मुखं च जायते पूति यस्य तं परिवर्जयेत् ॥ १२२ ॥
वक्त्रमापूर्य्यतेऽश्रुभ्यः खिद्यते चरणौ तथा।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ १२३ ॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च।
यस्याकस्मात् स विज्ञेयो गन्ता वै यमशासनम् ॥ १२४ ॥
पङ्कमत्स्यवसातैलघृतगन्धाश्च ये नराः।
पूतिगन्धाश्च ये चाति गन्तारस्ते यमालयम् ॥ १२५ ॥
ज्वरातिसारशोथाः स्युर्यस्यान्योऽन्यावसादिनः।
प्रक्षीणबलमांसस्य स न शक्यश्चिकित्सितुम् ॥ १२६ ॥
यूकाललाटमायान्ति बलिं नाश्नन्ति वायसाः।
येषां चापि रतिर्नास्ति गतास्ते यममन्दिरम् ॥ १२७ ॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा।
अन्नपाने न शाम्येते तस्य मृत्युरुपस्थितः ॥ १२८ ॥
प्रवाहिकाशिरःशूलं कोष्ठशूलञ्च दारुणम्।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ १२९ ॥
निवर्त्तते महाव्याधिः सहसा यस्य देहिनः।
उत्पद्यते च वा यस्य सहसा स विनश्यन्ति ॥ १३० ॥
न चाहारबलं यस्य दृश्यते स विनश्यति।
नासाभङ्गो भवेद्यस्य सप्तरात्रं स जीवति ॥ १३१ ॥
चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते।
प्रक्षीणबलमांसस्य लक्षणन्तद्गतायुषः ॥ १३२ ॥
यस्याण्डे निर्गते मेढ्रमुत्सिक्तमथवान्यथा।
अचिरान् म्लानम्लानं माल्यं मूर्ध्नि चिरादपि ॥ १३३ ॥

भामण्डलं न पश्येद्यो मार्जिते नयने नरः ।
विकृतं वाथ सम्पश्येत् स गतायुरिति ध्रुवम् ॥ १३४ ॥
भ्रुवौ केशाः ससीमन्ताः सावर्त्ता अपि मृत्यवे ।
कपोतो वायसो गृध्रः काकोलो यस्य मूर्द्धनि ॥
क्रव्यादो वापि लीयेत षण्मासायुः स उच्यते ॥ १३५ ॥
व्याप्यते पांशुवर्षेण काकपक्षैश्च ताड्यते ।
स्वप्नेऽपि यो नरस्तस्य मृतिर्मासचतुष्टयात् ॥ १३६ ॥
यस्याभिषिक्तमात्रस्य हृदि नीरं प्रशुष्यति ।
पिबतोऽपि जलं शोषः स्याद्दशाहं स जीवति ॥ १३७ ॥
स्थापयित्वा करं भूमौ निरुन्ध्यान्मध्यमाङ्गुलिम् ।
प्रहरेण भवेन्मृत्युर्यद्युत्तिष्ठेदनामिका ॥ १३८ ॥
मध्याह्ने विमलेऽम्बरे दिनमणेर्बिम्बं जले निर्मले
पश्येत्पात्रगते यदा गदयुतः पूर्णन्तदा स्याच्छुभम् ।
हीनं दक्षिणपश्चिमोत्तरपुरोभागेषु मासैः क्रमात्
षट्त्रिद्व्येकमितैर्दिनैश्च दशभिश्छिद्रं सधूमं दिनात् ॥१३९॥
हस्तयोः पादयोश्चापि कनिष्ठायाश्च सन्धयः ।
चत्वारो यस्य भिद्यन्ते तुल्यं मासात्स मृत्युभाक् ॥ १४० ॥
कपोलमांसविच्छेदो मृत्युः स्यात्पञ्चरात्रतः ।
चक्षुर्नासिकयोर्मध्ये स्पन्दाभावेन पञ्चमे ॥ १४१ ॥
मृत्युः स्यादथ गात्राणां स्तब्धत्वादेकवासरे ।
ललाटस्य त्रिरेखाणां नाशान्मृत्युरहस्त्रये ॥ १४२ ॥
सप्ताहान्मृत्युरङ्गस्य शीततार्द्धस्य चोष्णता ।
अकस्माद्वृषणं छिन्नं पक्षान्मृत्युप्रदं भवेत् ॥ १४३ ॥
ग्रीवायाः स्कन्धयोर्नाड्योर्विच्छेदादपि पक्षतः ।
अकस्मात् कृष्णरेखा स्याज्जिह्वाया यदि मध्यतः ॥
दृढो वा दन्तसन्दंशस्तदा मृत्युस्त्रिरात्रतः ॥ १४४ ॥

रात्राविन्दुवधं पश्येद्दिवा नक्षत्रमण्डलम् ।
अमेघे विद्युतं पश्यन् स्फुरन्तीं दक्षिणाश्रिताम् ॥
जले चेन्द्रधनुर्जीवेद् द्वित्रिमासान् स मानवः ॥ १४५ ॥
दिवाच्छायां न यः पश्ये दुल्कायाः पतनं तथा ।
हंसकाकमयूराणां पश्येदेकत्र मेलनम् ॥ १४६ ॥
चन्द्रद्वन्द्वं द्विसूर्य्यं वा स्वशिरोज्वलनं तथा ।
गन्धर्वनगरं वापि वृक्षाग्रे शिखरे गिरौ ॥ १४७ ॥
पश्येत्तत्र पिशाचानां रूपमन्यच्च भीषणम् ।
प्रकम्पितो भृशं चैव मूर्च्छितो वा भवेन्मुहुः ॥ १४८ ॥
छर्दिन्मूत्रं पुरीषं वा सुवर्णरजतप्रभम् ।
प्रत्यक्षं यदि वा स्वप्ने दशमासान् स जीवति ॥ १४९ ॥
कण्ठौष्ठतालुरसना दन्तं यस्य पृथक् पृथक् ।
शुष्यत्यभीक्ष्णं षण्मासात्तस्य मृत्युं विनिर्दिशेत् ॥ १५० ॥
सप्तर्षिचन्द्रनक्षत्रदिशां रात्रावदर्शनात् ।
कलङ्करहितं चन्द्रं सूर्य्यं रश्मिविवर्जितम् ॥ १५१ ॥
अग्निं तेजोविहीनञ्च सोमञ्चाप्यपरश्मिकम् ।
रात्रौ सूर्य्यं दिवा चन्द्रं स्वनेत्रे ज्वलनं तथा ॥ १५२ ॥
नाभौ हिक्कां गुदे राजीं वर्णम्पद्मोपमं मुखे ।
गण्डेऽतिरिक्तपिड़कां गात्रे वर्णविचित्रताम् ॥ १५३ ॥
हृदये स्फुरणं चाशु प्रकम्पमथ तालुनि ।
चन्द्रच्छिद्रं रविच्छिद्रं पश्येद्भूमौ तथाम्बरे ॥
आत्मनैव हि यः पश्येत्पश्येन्मृत्युं त्रिपक्षतः ॥ १५४ ॥
मूत्रशुक्रपुरीषाणि तुल्यकालं पतन्ति चेत् ।
वर्षान्मृत्युर्भवेत्तस्य भेषजादिक्रिया वृथा ॥ १५५ ॥
कर्णयोर्यदि नो शब्दस्तर्जनीभ्यां निरुद्धयोः ।
जायते प्राप्तकालस्य लक्षणं तत्समादिशेत् ॥ १५६ ॥

सर्वाङ्गशीतलत्वञ्च दशाहान्मरणं वदेत् ॥ १५७ ॥
कर्दमे पांशुदेशे वा पुरतः पृष्ठतोऽपि वा।
खञ्जपादोदये नूनं मृत्युर्मासचतुष्टयात् ॥ १५८ ॥
श्रुतिबाधिर्य्यतो मृत्युश्चतुर्मासान्तरे भवेत्।
स्वस्थेन्द्रियस्य पततो मृत्युर्मासत्रयाद्भवेत् ॥ १५९ ॥
भ्रूमध्ये ज्योतिषो दृष्टौ द्विमासाद्यमदर्शनम्।
एकमासात्तथा मृत्युर्घर्षणे गोलकक्षयात् ॥ १६० ॥
जिह्वाया अपवृत्तौ च दशाहान्मृत्युसङ्गमः।
दक्षिणाशां गतां छाया मात्मनो यदि पश्यति ॥
अद्यैव मृत्युरस्माकमिति पश्येदनित्यताम् ॥ १६१ ॥
स्वस्थस्य स्थूलजिह्वा चेन्निःस्पर्शा रसवर्जिता।
यावत्पञ्चदिनं मृत्युः पञ्चाशद्दिवसेऽथ वा ॥ १६२ ॥
अम्लादित्वञ्च रसतो नीलादित्वञ्च वर्णतः।
विकारे शुक्रमूत्राणां षण्मासाद्यमदर्शनम् ॥ १६३ ॥
युगत्रिपञ्चधारं वा वक्रावर्त्तिसुगन्धि वा।
मूत्रं यस्य भवेत्तस्य मृत्युः षण्मासमध्यतः ॥ १६४ ॥
स्थिरत्वेऽपि स्वदेहस्य तच्छाया चञ्चला यदि।
चतुर्मासात् भवेन्मृत्युरित्यागमविदो विदुः ॥ १६५ ॥
ज्वरो यस्य तु पूर्वाह्णे शुष्ककासश्च दारुणः।
बलमांसविहीनस्य दुर्लभन्तस्य जीवितम् ॥ १६६ ॥
ज्वरो यस्याऽपराह्णे तु श्लेष्मकासश्च दारुणः।
प्रक्षीणबलमांसस्य दुर्लभन्तस्य जीवितम् ॥ १६७ ॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना।
स घोरं ज्वरमासाद्य सद्यः प्राणैर्विमुच्यते ॥ १६८ ॥
सहसा ज्वरसन्ताप स्तृष्णामूर्च्छा बलक्षयः।
विश्लेषणं च सन्धीनां मुमूर्षुरुपजायते ॥ १६९ ॥

गोसर्गे वदनात् यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम् ॥ १७० ॥
देवद्विजसुहृद्वैद्यगुरून् यो द्वेष्टि यस्य वा ।
मज्जन्त्यप्सु शकृच्छ्लेष्मरेतांसि स न जीवति ॥ १७१ ॥
इत्यादिलक्षणैर्ज्ञात्वा मरणं समुपस्थितम् ।
लोकद्वयसुखप्राप्त्यै धर्ममेव समाचरेत् ॥ १७२ ॥
सौम्याकारेन्द्रियः श्रोता द्रष्टा वक्ता च विन्दति ।
सम्यक् स्पर्शं रसं गन्धं रोगी रोगात्प्रमुच्यते ॥ १७३ ॥
स्वल्पो ज्वरो भवेद्यस्य जिह्वा भवति कोमला ।
उष्णौ पादौ तथा पाणी स रोगी सुखमाप्नुयात् ॥ १७४ ॥
ज्वरः स्वेदविहीनः स्यात् कण्ठः कफविवर्जितः ।
नासामार्गगतिः प्राणो यस्य रोगी स जीवति ॥ १७५ ॥
भवेन्निद्रासुखं यस्य स्मृतिभ्रंशो न जायते ।
नाकारवर्णहानिः स्यात् स रोगी जीवति ध्रुवम् ॥ १७६ ॥
यस्यादरो भवेद्वैद्ये प्रीतिर्भैषज्यकर्मणि ।
पथ्ये रुचिः स्पृहा धर्मे स रोगी जीवति ध्रुवम् ॥ १७७ ॥
इत्यादिलक्षणैर्वैद्यः साध्यं विज्ञाय रोगिणम् ।
आयुर्वेदोक्तमार्गेण चिकित्सां सम्यगाचरेत् ॥ १७८ ॥

इति कालज्ञानम् ।

अथ नेत्रपरीक्षामाह ।

रौद्रे रूक्षे च धूम्राभे नयने स्तब्धचञ्चले ।
तथाभ्यन्तरकृष्णाभे भवतो वातरोगिणः ॥ १७९ ॥
पित्तरोगे तु पीताभे नीले वा रक्तवर्णके ।
सन्तप्ते भवतो दीपं सहेते नावलोकितुम् ॥ १८० ॥
ज्योतिर्हीने च शुक्लाभे जलपूर्णे सगौरवे ।
मन्दावलोकने नेत्रे भवतः कफकोपतः ॥ १८१ ॥

तन्द्रामोहाकुले श्यामे निर्भुग्ने रूक्षरौद्रके।
रक्तवर्णे च भवतो नेत्रे दोषत्रयोदये॥ १८२॥
दोषत्रये भवेच्चिह्नं नेत्रयोस्तु त्रिदोषजम्।
दोषद्वयप्रकोपे तु भवेद्दोषद्वयोद्भवम्॥ १८३॥
एकदृष्टी यदा नेत्रे स्वाधीने न च रोगिणः।
उन्मीलिते च भवतः क्षणादेव निमीलिते॥ १८४॥
सततोन्मीलिते नेत्रे यद्वा नित्यं निमीलिते।
विलुप्तकृष्णतारे च भ्रमद्भ्रूश्चोग्रतारके॥ १८५॥
बहुवर्णे च भवतो विकृतानेकचेष्टिते।
नेत्रे मृत्युं कथयतो रोगिणो नात्र संशयः॥ १८६॥
सौम्यदृष्टी प्रसन्नाभे प्रकृतिस्थे मनोरमे।
नेत्रे कथयतः शीघ्रं रोगशान्तिञ्च रोगिणः॥ १८७॥

इति नेत्रपरीक्षा।

अथ मुखपरीक्षा।

वातकोपे मुखं रूक्षं स्तब्धं वक्रं गतप्रभम्।
पित्तकोपे भवेद्रक्तं पीतं वा परितप्तकम्॥ १८८॥
कफकोपे गुरु स्निग्धं भवेच्छूनमिवाननम्।
त्रिलिङ्गञ्च त्रिदोषे स्यात् द्विलिङ्गञ्च द्विदोषके॥ १८९॥

इति मुखपरीक्षा।

अथ जिह्वापरीक्षा।

वातकोपे प्रसुप्तेव स्फुटिता मधुरा भवेत्।
स्तब्धावर्णेव हरिता जिह्वा लालां प्रमुञ्चति॥ १९०॥
पित्तकोपे तु रक्ताभा तिक्ता दग्धेव जायते।
जिह्वा दाहान्विता विद्वा कण्टकैरिव सर्वतः॥ १९१॥
कफोदये भवेज्जिह्वा स्थूला गुर्वी विलेपनी।
सुस्थूलकण्टकोपेता क्षारा बहुकफावहा॥ १९२॥
दोषद्वये द्विदोषोक्तलक्षणा रसना भवेत्।

सर्वचिह्ना त्रिदोषे स्याद्दिह्वतानेकलक्षणा ॥ १९३ ॥

इति जिह्वापरीक्षा ।

अथ मूत्रपरीक्षा ।

रात्रेश्चतुर्थयामस्य घटिकानां चतुष्टये ।
उत्थाप्य रोगिणं वैद्यो मूत्रोत्सर्गन्तु कारयेत् ॥ १९४ ॥
आद्यन्तधारां सन्त्यज्य मध्यमां काचभाजने ।
कारयेत्कांस्यपात्रे वा कुर्य्यात्पात्रं पटावृतम् ॥ १९५ ॥
ततः सूर्य्योदये जाते प्रकाशे सति भाजने ।
स्थितं मूत्रं समालोक्य कुर्य्यात्तस्य परीक्षणम् ॥ १९६ ॥
वाते तोयसमं मूत्रं रूक्षं बहुतरं भवेत् ।
रक्तवर्णं भवेत्पित्ते पीतं वा स्वल्पमेव च ॥ १९७ ॥
कफे श्वेतं घनं मूत्रं स्निग्धं सञ्जायते तथा ।
द्विदोषे द्वन्द्वचिह्नं स्यात् सर्वलिङ्गं त्रिदोषजे ॥ १९८ ॥
सुलक्षितं गृहीतं यन्मूत्रं घर्मे निधाय तत् ।
तैलविन्दुं क्षिपेत्तत्र निश्चले वैद्यसत्तमः ॥ १९९ ॥
जायन्ते बुद्बुदा यत्र विकारः सोऽस्ति पित्तलः ।
रूक्षञ्च श्यामलच्छायं वाते मूत्रं प्रजायते ॥ २०० ॥
तरीमुपरि बध्नाति तैलविन्दुस्तथात्र वै ।
मूत्रं श्लेष्मणि जायेत समं पल्वलवारिणा ॥ २०१ ॥
मूत्रेण सार्द्धम्मिलितस्तैलविन्दुः प्रजायते ।
सिद्धार्थतैलसदृशं मूत्रं वै पित्तमारुते ॥ २०२ ॥
श्वेतधारा महाधारा पीतधारा तदा ज्वरः ।
रक्तधारा ज्वरे दीर्घे कृष्णा च मरणाय वै ॥ २०३ ॥
श्लेष्मवाते भवेन्मूत्रं काञ्जिकेन समन्तथा ।
पाण्डुरं श्लेष्मपित्ते च पीतञ्चैव परीक्षयेत् ॥ २०४ ॥
सन्निपाते च यन्मूत्रं कृष्णं तल्लक्षयेद् बुधः ।

काञ्जिकेन समं मूत्रं मातुलुङ्गसमप्रभम् ॥ २०५ ॥
पानीयेन समं मूत्रं सुपाकसहितं भवेत्।
रक्तवातेन रक्तं स्यात् कौसुम्भं रक्तपित्ततः ॥ ॥ २०६ ॥
तैलतुल्यं भवेन्मूत्रं नित्यं सहजपित्ततः।
कफप्रकृतितो मूत्रं तुल्यं पल्वलवारिणा ॥ २०७ ॥
वातप्रकृतितो मूत्रं नीराभं बहुलं भवेत्।
अधो बहुलमारक्तं मूत्रमालोक्यते यदा ॥
वदन्ति तदतीसारलिङ्गं तल्लिङ्गवेदिनः ॥ २०८ ॥
जलोदरसमुद्भूतं मूत्रं घृतकणोपमम्।
आमवातवशान्मूत्रं तक्रतुल्यं प्रजायते ॥ २०९ ॥
मलेन पीतवर्णञ्च बहुलञ्च निगद्यते।
पीतवर्णं यदा मूत्रं तैलतुल्यं सबुद्बुदम् ॥
तदप्यसाध्यमादिष्टं सद्भिर्वैद्यकवेदिभिः ॥ २१० ॥
अजीर्णेन भवेन्मूत्रं श्वेतञ्चापि तथारुणम्।
अजामूत्रसमं मूत्रमजीर्णत्वाच्च जायते ॥ २११ ॥
मूत्रन्तु कृष्णतां याति क्षयरोगे तथा किल।
क्षयरोगे यदा श्वेतमसाध्यं तद्विनिर्दिशेत् ॥ २१२ ॥
पीतमच्छञ्च जायेत मूत्रं पित्तोदये सति।
समधातोः पुनः कूपजलतुल्यञ्च कथ्यते ॥ २१३ ॥
ऊर्द्ध्वं नीलमधोरक्तं रुधिरेण प्रजायते ॥ २१४ ॥
प्रवर्त्तते यदा मूत्रं स्निग्धं तैलसमप्रभम्।
आहारादुदरं तस्य वृद्धिं याति तदा किल ॥ २१५ ॥
ऊर्द्ध्वं पीतमधोरक्तं मूत्रं चेद्रोगिणस्तदा।
पित्तप्रकृतिसम्भूतं सन्निपातं वदेद्भिषक् ॥ २१६ ॥
यस्येक्षुरससङ्काशं मूत्रं नेत्रे च पिञ्जरे।
रसाधिक्यं विजानीयाल्लङ्घनं तस्य निर्दिशेत् ॥ २१७ ॥

रक्तं स्वच्छञ्च यन्मूत्रं तज्ज्वराधिक्यलक्षणम् ।
धूम्रवर्णं यदा मूत्रं ज्वराधिक्यं तदादिशेत् ॥ २१८ ॥
कृष्णमच्छञ्च जानीयात् सन्निपातज्वरोद्भवम् ।
उपरिष्टात्पीतवर्णमधःकृष्णं सबुद्बुदम् ॥
मूत्रं प्रभूतदोषेण संशयो नात्र कश्चन ॥ २१९ ॥
आपीतफेनरक्ताद्यमसितेक्षुरसोपमम् ।
पित्ते कफेऽनिले मूत्रे निरामे च ज्वरे भवेत् ॥ २२० ॥
यदा प्रसारमाप्नोति तैलं क्षेमं तदादिशेत् ।
विन्दुरूपं यदा तैलमसाध्यत्वाय रोगिणः ॥ २२१ ॥
प्रसरित्पूर्वदिग्भागे पश्चिमे वा तथोत्तरे ।
तैलविन्दुस्तदा रोगविमुक्तिं रोगिणो दिशेत् ॥ २२२ ॥
दक्षिणस्यामथैशाने आग्नेये नैरृते तथा ।
वायव्ये चापि दिग्भागे प्रसरन्मृत्युसूचकः ॥ २२३ ॥
निमज्जति यदा मूत्रे भ्रमद्वा नैव सर्पति ।
तदारिष्टं विजानीयाद्रोगिणो नात्र संशयः ॥ २२४ ॥
तैलप्रसारणान्मूत्रे विकृताकारमूर्त्तयः ।
हलकूर्मखरोष्ट्रादेर्भवन्ति मृतिसूचकाः ॥ २२५ ॥
यदि मूत्रगते तैले हंसछत्रादिकं भवेत् ।
रोगी रोगविमुक्तः स्यात्तदायुश्चाप्नुयाच्चिरम् ॥ २२६ ॥

इति मूत्रपरीक्षा ।

इति वङ्गसेनसङ्कलितः अरिष्टाधिकारः समाप्तः ।

---

## अथ दीपनपाचनद्रव्यलक्षणाधिकारमाह ।

पचेन्नामं वह्निकृच्चदीपनं तद्यथा मिसिः ।
पचत्यामन्न यत् कुर्यादनलं तद्धि पाचनम् ॥

नागकेसरवद्विद्याच्चित्रो दीपनपाचनः॥ १॥
न शोधयति न द्वेष्टि समान्दोषांस्तथोद्धतान्।
समीकरोति यत् ज्ञेयं शमनन्तद्यथामृता॥ २॥
कृत्वा पाकम्मलानां यद्भित्वा बन्धमधो नयेत्।
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी॥ ३॥
पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम्।
नयत्यधः स्रंसनन्तद्यथा स्यात् कृतमालकः॥ ४॥
मलादिकमबद्धं यद्बद्धं वा पिण्डितम्मलैः।
भित्वाधः पातयति तद्भेदनं कटुको यथा॥ ५॥
विपक्वं यदपक्वं वा मलादि द्रवतान्नयेत्।
रेचयत्यपि तत् ज्ञेयं रेचनं त्रिवृता यथा॥ ६॥
अपक्वपित्तश्लेष्माणं बलादूर्ध्वं नयेत्तु यत्।
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा॥ ७॥
स्थानाद्बहिर्नयेदूर्ध्वमधो वा मलसञ्चयम्।
देहे संशोधनन्तत्स्याद्देवदालीफलं यथा॥ ८॥
श्लिष्टान् कफादिकान्दोषानुन्मूलयति यद्बलात्।
छेदनन्तद्यथा क्षारो मरिचानि शिलाजतु॥ ९॥
धातून्मलान्वा देहस्य विशोष्योल्लेखयेच्च यत्।
लेखनन्तद्यथा क्षौद्रनीरमुष्णं वचा यवाः॥ १०॥
दीपनं पाचनं यत्स्या दुष्णत्वाद्द्रवशोषकम्।
ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली॥ ११॥
रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्।
स्तम्भकृत् स्तम्भनन्तत्स्याद्यथा टुण्टुकवत्सकौ॥ १२॥
रसायनञ्च तज्ज्ञेयं यज्जराव्याधिनाशनम्।
यथामृता रुदन्ती च गुग्गुलुश्च हरीतकी॥ १३॥
यस्माद्द्रव्याद्भवेत् स्त्रीषु हर्षो वाजीकरञ्च तत्।

यथा नागबलाद्याः स्युरोजश्च कर्म कारकुजम् ॥ १४ ॥
तस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलञ्च तदुच्यते ।
यथाश्वगन्धामुशली शर्करा च शतावरी ॥ १५ ॥
प्रवर्त्तकानि कथ्यन्ते जनकानि च रेतसः ।
दुग्धं माषाश्च भल्लात फलमज्जाऽऽमलानि च ॥ १६ ॥
प्रवर्त्तनी स्त्रीशुक्रस्य रेचनं वृहतीफलम् ।
जातीफलं स्तम्भनं स्यात् कालिन्दं क्षयकारि ॥ १७ ॥
देहस्य सूक्ष्मछिद्रेषु विशेत्तत्सूक्ष्ममुच्यते ।
तद्यथा सैन्धवं चौद्रं निम्बस्तैलं रुवूद्भवम् ॥ १८ ॥
पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति ।
व्यवायि तद्यथाभङ्गा फेनं चाहिसमुद्भवम् ॥ १९ ॥
सन्धिबन्धांस्तु शिथिलान् यत्करोति विकाशि तत् ।
विश्लेष्यौजश्च धातुभ्यो यथाक्रमुककोद्रवौ ॥ २० ॥
बुद्धिं लुम्पति यद्द्रव्यं मदकारि तदुच्यते ।
तमोगुणप्रधानञ्च यथा मद्यसुरादिकम् ॥ २१ ॥
व्यवायि च विकाशि स्यात् सूक्ष्मछेदि महावहम् ।
आग्नेयं जीवितहरं योगवाहि स्मृतं विषम् ॥ २२ ॥
निजवीर्य्येण यद्द्रव्यं स्रोतोभ्यो दोषसञ्चयम् ।
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा ॥ २३ ॥
पैच्छिल्याद्गौरवाद्द्रव्य रुद्ध्वा रसवहाः शिराः ।
धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि ॥ २४ ॥

इति वङ्गसेनसङ्कलितः दीपनपाचनादिलक्षणाधिकारः समाप्तः ।

---

समाप्तोऽयं ग्रन्थः ।

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिण:
श्रीजीवानन्दविद्यासागर-भट्टाचार्यस्य सकाशात् लभ्यानि ।

